# VAISHESHIKA DARSHANA

BY

KANADA MUNI

WITH

UPASKARA, VIVRITTI, AND BHASHYA

Edited by

MAHADEVA GANGADHARA BAKRE

Printed and Published by Manilal Itcharam Desai at

THE GUJARATI PRINTING PRESS

SASSOON BUILDINGS, CIRCLE, FORT,

BOMBAY

V. S. 1969 A. D. 1913

Price Rs. 2-0-0

श्रीकणादमुनिप्रणीतं

# वैशेषिकदर्शनम् ।

शंकरमिश्रकृतवैशेषिकसूत्रोपस्कार-जयनारायणतर्कपञ्चान-
नभट्टाचार्यकृतकणादसूत्रविवृति-चन्द्रकान्तभट्टा-
चार्यप्रणीतवैशेषिकभाष्य-समलंकृतम् ।

बाक्रेइत्युपाह्वगङ्गाधरभट्टसुतमहादेवशर्मणा
संशोधितम् ।

'गुजराती' मुद्रणालयाधिपतिना स्वीये मुद्रणयन्त्रालये मुद्रयित्वा
प्रकाशितम् ।

विक्रमसवत् १९६९ खिस्ताब्द ११९३

मूल्यं रूपकद्वयम् ।

# विज्ञापनम् ।



श्रीसद्गुरुचरणारविन्दाभ्यां नमः ।

अथ प्रकाश्यते वैशेषिकं दर्शनमुपस्कार–विवृति–भाष्येतिव्याख्यात्रयोपेतम् ।

इदं कणादमुनिप्रणीतं पदार्थतत्त्वविवेकशास्त्रम् । नच 'अथातो धर्मं व्याख्यास्यामः' इति शास्त्रारम्भसूत्रे धर्मनिरूपणप्रतिज्ञानाद्धर्मशास्त्रमिदमिति शङ्क्यम् । मानवयाज्ञवल्क्यादिष्विवात्र आचारसंस्कारव्यवहारप्रायश्चित्तादेरनिरूपणात्, अध्वरमीमांसायामिव वा तद्बोधकप्रमाणेषु प्रमाणान्तरविरोधप्रयुक्तसंशयनिराकरणौपयिकन्यायाप्रदर्शनाच्च । तत्प्रतिज्ञानं चात्र पदार्थतत्त्वज्ञाननिमित्ततया तच्छेषत्वेन तन्निरूपणार्थं नतु प्रधानतया । अत एव 'धर्मविशेषप्रसूतात्' 'तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति सूत्रे पदार्थतत्त्वज्ञानस्यैव निःश्रेयससाधनत्वाभिधानेन फलवत्ताप्रदर्शनं संगच्छते प्रधानतया निरूप्यस्यैव फलवत्त्वबोधनस्योचितत्वात् ।

द्विविधास्य शास्त्रस्य व्याख्यानश्रेणी–पदार्थसंग्रहाभिधप्रशस्तदेवप्रणीतवैशेषिकसूत्रभाष्यस्य साक्षात्परंपरया वा व्याख्यानरूपैका, अपरा सूत्रव्याख्यानरूपा । तत्र प्रथमश्रेण्यां प्रशस्तपादभाष्यस्य साक्षाद्व्याख्यानानि व्योमशिवाचार्य( शिवादित्य )विरचिता व्योमवती, श्रीधराचार्यविरचिता न्यायकन्दली, उदयनाचार्यप्रणीता किरणावली, श्रीवत्साचार्यविरचिता लीलावती, जगदीशभट्टाचार्यकृता भाष्यसूक्तिः, शङ्करमिश्रकृतं कणादरहस्यम्, पद्मनाभमिश्रकृतः सेतुः, मल्लिनाथसूरिकृतो भाष्यनिकषः; परंपराव्याख्यानानि उदयनाचार्यप्रणीतकिरणावल्या वर्धमानोपाध्यायकृतः प्रकाशः, पद्मनाभमिश्रकृतः किरणावलीभास्करः, किरणावलीप्रकाशस्य व्याख्या भगीरथठक्कुरविरचिता प्रकाशिका, रुचिदत्तकृता विवृतिः, रघुनाथशिरोमणिकृता किरणावलीप्रकाशविवृतिः; मथुरानाथकृतं गुणकिरणावलीप्रकाशविवृतिरहस्यम्, रुद्रन्यायवाचस्पतिभट्टाचार्यविरचिता किरणावलीप्रकाशविवृतिभावप्रकाशिका, रामकृष्णकृता जयरामभट्टाचार्यप्रणीता च काचिट्टीका, न्यायकन्दल्याश्च

राजशेखरजैनाचार्यविरचिता पञ्जिका, पद्मनाभमिश्रविरचितः कन्दलीसारः इत्यादीन्यन्तर्भवन्ति । द्वितीयायां तु रावणप्रणीतं भाष्यं, भारद्वाजीया वृत्तिः इति द्वे प्राचीनतरे, शंकरमिश्रकृत उपस्कारः प्राचीनः, जयनारायणभट्टाचार्यविरचिता कणादसूत्रविवृतिः, चन्द्रकान्तभट्टाचार्यविरचितं वैशेषिकभाष्यं च । कणादसंग्रहाख्योऽपि कश्चिद्वैशेषिकदर्शने निबन्धोऽस्तीति श्रूयते स भाष्यव्याख्यानरूप उत सूत्रव्याख्यानरूप इत्युपलब्ध्यभावान्न निर्धार्यते ।

एवं व्याख्यातृभिरतिप्रपञ्चितस्यास्य शास्त्रस्य प्रथमा श्रेणी त्वतिविस्तृता श्रीमदुदयन–वर्धमान–रघुनाथशिरोमणिप्रभृतीनामतिगभीरवचोभिर्दुरवगाहाऽपि विदुषा पाण्डित्यप्रकर्षनिकषायमाणतया नितान्तसमादरभूमिर्भूत्वापि केनापि कारणेन विलुप्तपठनपाठनप्रचारतया लोकैस्तत्पुस्तकानामभिनवप्रतिच्छन्दककरणविरमात्प्राचीनपुस्तकानां तु निर्घृणस्य सर्वघस्मरस्य कालस्य दंष्ट्रालग्नत्वादत्यन्तं दुरवस्थामापद्यमाना दिष्ट्या कैश्चित्कियतांशेनोद्ध्रियमाणा दृश्यते । वयमपि प्राचीनपुस्तकसंपादनेन यथासंभवं तदुद्धरणे यत्नमातिष्ठामहे ।

द्वितीयायां तु रावणभाष्यस्य सद्भावः किरणावलीभास्करकृत्कृतनाममात्रनिर्देशादवगम्यते न तु तत्संमतत्वेन कस्यचिदर्थस्यानुवादात्, प्रागेव तत्पुस्तकदर्शनात् । भारद्वाजीयवृत्तेस्तु वृत्तिकृतस्त्वित्यादिनोपस्कारकृता तन्मतानुवादादुपस्कारकृत्समये उपलब्धिर्निर्णीयते । उपस्कारकृतस्तु वर्षाणां चतुःशत्या अनतिप्राचीनत्वादस्ति बलवती प्रत्याशा तदुपलब्धौ । अवशिष्टं व्याख्यानत्रयं पूर्वं कालिकातायाम् 'आसिआटिक सोसायटी' मण्डल्या मुद्रितमप्यधुना दुर्लभत्वात् गुजरातीमुद्रणालयाधिपतिना मुद्रितुमारब्धम् । तत्र तच्छोधनेऽधिकृतोहम् ' बॉम्बे रायल आसिआटिक सोसायटी ' ग्रन्थसंग्रहालयस्थप्राचीनलिखितपुस्तकसाहाय्येनोपस्कारमवशिष्टं च व्याख्यानद्वयं तत्प्रणेतृभ्यामेव स्वयं संशोधनपूर्वकं मुद्रितमिति तस्यादर्शान्तरलाभासंभवादक्षरयोजकादिकृता अशुद्धीः सावधानेन मनसैव संमार्ज्य संस्कृतवान् । तद्यदत्र प्रमादात् किंचित्स्खलितं तत्सुधीभिः संशोधनीयमिति विज्ञापयति–

बाक्रेइत्युपाह्वो महादेवशर्मा.

चन्द्रकान्तीया

# वैशेषिकभाष्यभूमिका।

वैशेषिकदर्शनमिदं कणादमहर्षिप्रणीतम्। स चायं महर्षिः कश्यपस्य गोत्रापत्यम् "विरुद्धासिद्धसंदिग्धमलिङ्गं काश्यपोऽब्रवीत्"—इत्यादौ काश्यपतयाऽस्योल्लेखात्। अपि चायं उलूक इति वा औलूक्य इति वा आख्यायते। सर्वदर्शनसंग्रहादावौलूक्यदर्शनतया वैशेषिकदर्शनस्योल्लेखात्। स चायं धान्यानामेकैकगुलिकोच्चयनरूपेणोञ्छेन वर्तनात् कणादनाम्ना प्रसिद्धः।

सोऽयं मुनिः अतिप्राचीन इति शक्यमवगन्तुम्। महाभारते तावत् उलूकनाम्नो मुनेरुल्लेखो दृश्यते भीष्मस्तवराजे। "न वयं षट्पदार्थवादिनो वैशेषिकादिवत्" इति सांख्यसूत्रात् सांख्यदर्शनात् प्राचीनत्वमस्य ग्रन्थस्य तावदवगम्यते। एवम् "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" इत्यादि ब्रह्मसूत्रपर्यालोचनया व्याससूत्राणामपि पूर्वमेतद्दर्शनं प्रणीतमिति शक्यमवगन्तुम्। अपि च अस्मिन् दर्शने न्याये च शब्दानां उत्पत्तिविनाशवत्त्वं सिद्धान्तितम्। स चायं सिद्धान्तः "कर्मैके तत्र दर्शनात्" इत्यादिसूत्रैरुद्धृत्य महता यत्नेन निराकृतो जैमिनिना अध्वरमीमांसायाम्। अतस्तस्मादपि दर्शनात् अस्य दर्शनस्य प्राचीनत्वमवगम्यते। रावणेनास्य दर्शनस्योपरि भाष्यं रचितमिति रत्नप्रभादौ दर्शितम्।

न्यायवैशेषिकयोस्तु समानतन्त्रयोः वैशेषिकस्यैव प्राचीनत्वं संभाव्यते। यतः अस्मिन् दर्शने अनुमानप्रणाली संक्षेपेणैव उपवर्णिता। न्याये तु महता प्रबन्धेन विस्तरेण सोपदिष्टा। समर्चीना च सा तत्रोपलभ्यते। अपि चात्र "अप्रसिद्धोऽनपदेशोऽसन् संदिग्धश्चानपदेशः" इत्यादिना त्रय एव हेत्वाभासा उपदिष्टाः, न्याये तु पञ्च हेत्वाभासाः सप्रपञ्चं सोपपत्तिकं चोपवर्णिताः। यदि न्यायदर्शनप्रचारात् परतो दर्शनमिदं प्रचारितं स्यात्, तदाऽवश्यमेव हेत्वाभासानां पञ्चत्वं खण्डितं त्रित्वं च सहेतुकं व्यवस्थापितमभविष्यत्। तथा, शब्दानित्यत्वमात्मपरीक्षादिकं च अत्र नातीव समीचीनतया व्युत्पादितम्। न्याये तु विपरीतम्। अतोऽनुमीयते, कणादेनैव रीति-

रेषा समुद्भाविता, उत्तरकालमक्षपादेन विस्तारिता परिशोधिता समीचीनतया निबद्धा चेति ।

वैशेषिकसूत्राणा सारल्यातिशयेनापि प्राचीनताऽस्य दर्शनस्य संभाव्यते । दर्शनशास्त्राणां सूत्रेषु यादृशं काठिन्यमुपलभ्यते, तादृशं किमपि काठिन्यमत्र नास्ति । यद्यपि सांख्यषडध्यायीसूत्राणां प्रायेण सारल्यमस्ति, तथापि तदपेक्षया अस्यातिप्राचीनत्वं यथाऽवगम्यते तथा पूर्वमेव निवेदितम् ।

दर्शनान्तरकारैरनङ्गीकृतस्य विशेषपदार्थस्य अङ्गीकरणात् अस्य वैशेषिकतया प्रसिद्धिः । दर्शनेऽस्मिन् दश अध्याया वर्तन्ते । प्रत्यध्यायं च द्वे आह्निके ।

अस्य किमपि भाष्यमिदानी नोपलभ्यते । शङ्करमिश्रकृत उपस्कारः जयनारायण-तर्कपञ्चानन-कृता विवृतिश्चास्याटिकसमाजैर्मुद्रिता वर्तते । प्रशस्तपादाचार्यकृतं पदार्थधर्मसंग्रहमस्य भाष्यतया केचिद्व्यवहरन्ति । तदसङ्गतम् । "सूत्रार्थो वर्ण्यते येन पदैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः"—इति भाष्यलक्षणस्य तत्रानुपलम्भात् । तेन हि संग्रहरूपतयैव स ग्रन्थो निर्मितः । परन्तु क्वचित् क्वचित् स्वोक्तिप्रमाण्यार्थं सूत्रसंवादः प्रदर्शितः । तस्मात् नासौ भाष्यमिति स्फुटम् । प्रशस्तपादाचार्योऽपि स्वनिर्मितं ग्रन्थं संग्रहरूपतयैव निर्दिदेश, न भाष्यतया । तथा च तस्याद्यः श्लोकः—

"प्रणम्य हेतुमीश्वरं मुनि कणादमादरात् ।
पदार्थधर्मसंग्रहः प्रवक्ष्यते महोदयः"—इति ॥

व्याख्यातं चैतदुदयनाचार्येण किरणावल्याम् । "पदार्था द्रव्यादयस्तेषा धर्माः साधर्म्यवैधर्म्यरूपास्त एव परस्परं विशेषणभूतास्ते अनेन संगृह्यन्ते शास्त्रे नानास्थानेषु वितता एकत्र सङ्कलय्य कथ्यन्ते इति संग्रहः । स प्रकृष्टो वक्ष्यते । प्रकरणशुद्धेः संग्रहपदेनैव दर्शितत्वात् । वैशद्यं लघुत्वं कृत्स्नत्वं च प्रकर्षः । सूत्रेषु वैशद्याभावात् भाष्यस्य च विस्तरत्वात्"—इति । तथा च पदार्थधर्मसंग्रहो न भाष्यमिति निर्व्यूढम् ।

तथाचास्य भाष्याभावमाकलयता मया यथामति भाष्यमिदमकारि । अत्र चास्याटिकमुद्रितसूत्रपाठ एवादृतः प्रायः । परंतु कालवशात् भाष्यादेरसौलभ्याच्च सूत्रपाठस्यातीवान्यथात्वं जातमित्यत्र न संदेहः (इदमप्यस्य

प्राचीनत्वे प्रमाणम् । ) संभावयामः, पदार्थधर्मसंग्रहनिर्माणात् परमेव सूत्राणामध्ययनाध्यापनारीतिः विरलतामासाद्य क्रमशो विलोपमेवापेदे । पदार्थधर्मसंग्रहो हि विशदः लघुः कृत्स्नशास्त्रार्थबोधकश्च । संभवति तु लघावुपाये को नाम गुरुमुपायमुररीकरोति इति । प्रकृतसूत्रपाठलाभे च व्याख्याकौटिल्यं न स्थास्यतीत्यस्माकमवगतिः । सूत्राणां सरलव्याख्याकरणायैव ममायमुद्यमः । परं सूत्रपाठस्यायथाभूतत्वात् क्वचित् क्वचित् अकामेनापि कौटिल्यमनुसृतम् । सरलव्याख्यालालसया प्राचीननिबन्द्धृसंमत-प्रचलित-मतस्यापि वैपरीत्यमत्र संजातम् । परमत्र यद्यदसङ्गतं लक्ष्यते, तत्तदहं विद्वद्भिः पत्रेणापदेक्ष्ये चेदतीवोपकृतो भविष्यामि । पूर्वमस्मन्निर्मितायां तत्त्वावलौ तु प्रचलित-वैशेषिकमतस्यैव संग्रह आसीदिति तयाऽपि सममस्य मतवैषम्यं स्फुटम् ।

# वैशेषिकदर्शनस्य विषयानुक्रमणिका।

इति वैशेषिकदर्शनस्य विषयानुक्रमणिका ।



श्रीकणादमुनिप्रणीतं

# वैशेषिकदर्शनम् ।



शंकरमिश्रकृतवैशषिकसूत्रोपस्कार–जयनारायणकृतकाणादसूत्र-विवृति–चन्द्रकान्तप्रणीतवैशेषिकभाष्य–समलंकृतम् ।

## प्रथमाध्याये प्रथमाह्निकम् ।

श्रीगणेशाय नमः ।

अथातो धर्मं व्याख्यास्यामः ॥ १ ॥

( वैशेषिकसूत्रोपस्कारः । )

ऊर्ध्वबद्धजटाजूटक्रोडक्रीडत्सुरापगम् ।
नमामि यामिनीकान्तकान्तभालस्थलं हरम् ॥ १ ॥
याभ्यां वैशेषिके तन्त्रे सम्यग्व्युत्पादितोऽस्म्यहम् ।
कणादभवनाथाभ्यां ताभ्यां मम नमः सदा ॥ २ ॥
सूत्रमात्रावलम्बेन निरालम्बेऽपि गच्छतः ।
खे खेलवन्ममाप्यत्र साहसं सिद्धिमेष्यति ॥ ३ ॥

तापत्रयपराहता विवेकिनस्तापत्रयनिवृत्तिनिदानमनुसंदधाना नानाश्रुतिस्मृतीतिहासपुराणेष्वात्मतत्त्वसाक्षात्कारमेव तदुपायमाकलयाम्बभूवुः । तत्प्राप्तिहेतुमपि पन्थानं जिज्ञासमानाः परमकारुणिकं कणादं मुनिमुपसेदुरथ कणादो मुनिस्तत्त्वज्ञानवैराग्यैश्वर्यसंपन्नः षण्णा पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानमेवात्मतत्त्वसाक्षात्कारप्राप्तये परमः पन्था इति मनसि कृत्वा तच्च निवृत्तिलक्षणाद्धर्मादेतेषामनायासेन सेत्स्यतीति लक्षणतः स्वरूपतश्च धर्ममेव प्रथममुपदिशाम्यनन्तरं षडपि पदार्थानुद्देशलक्षणपरीक्षाभिरुपदेक्ष्यामीति हृदि निधाय तेषामवधानाय प्रतिजानीते–अथात इति । अथेति शिष्याकाङ्क्षानन्तर्यमाह । अत इति । यतः श्रवणादिपटवोऽनसूयका-

श्चान्तेवासिन उपसेदुरित्यर्थः । यद्वा अथशब्दो मङ्गलार्थः । तदुक्तम्–'ओ-ङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तेन मा-ङ्गलिकावुभौ ॥' इति । युक्तं चैतत् । कथमन्यथा सदाचारपरंपरापरिप्राप्तकर्तव्यताकस्य मङ्गलस्य वैशेषिकशास्त्रं प्रणयतो महामुनेरनाचरणं संभाव्यते । नच कृतमङ्गलस्यापि फलादर्शनादकृतमङ्गलस्यापि फलदर्शनादननु-ष्ठानम् । नहि निष्फले प्रेक्षावान् प्रवर्तत इति वाच्यम् । अकरणस्थले जन्मा-न्तरीयस्य करणस्थले चाङ्गवैगुण्यस्य कल्पनया सफलत्वनिश्चयात् । नहि शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकस्यापातत: फलादर्शनमात्रेणाकार-णत्वशङ्कापि । न चैहिकमात्रफलकत्वान्न जन्मान्तरीयानुमानं पुत्रे-ष्टिवदैहिकमात्रफलकत्वानुपपत्तेः । कारीर्यादौ तु तथाकामनयैवानुष्ठा-नादैहिकमात्रफलकत्वम् । अत्र च समाप्तिकामोऽधिकारी स्वर्गकाम इव यागे । तत्रापूर्वं द्वारमिह तु विघ्नध्वंस इति विशेषः । निर्विघ्न-मारब्धं समाप्यतामिति कामनया प्रवृत्तेः । नच विघ्नध्वंसमात्रं फलं, समाप्तिस्तु स्वकारणादेवेति वाच्यम् । तस्य स्वतोऽपुरुषार्थत्वात्समाप्तेस्तु सुखसाधनतया पुरुषार्थत्वादुपस्थितत्वाच्च । किंच दुरितध्वंसमात्रं न फलं तस्य प्रायश्चित्तकीर्तनकर्मनाशापारगमनादिसाध्यतया व्यभिचारात् । प्रार-ब्धपरिसमाप्तिप्रतिबन्धकदुरितध्वंसत्वेन फलत्वे समाप्तेरेव फलत्वोचितत्वात् । तत्रापि च हिरण्यदानप्रयागस्नानादिजन्यत्वेन व्यभिचारात् । तेषामपि मङ्गलत्वाभिधानं साहसम् । किंच मङ्गले सति समाप्तेरावश्यकत्वमित्येवं मङ्गलस्य कारणता । तदुक्तम् 'श्रौतात्साङ्गात्कर्मणः फलावश्यंभावनियमात्' इति । अत एव विकल्पितमपि कारणं कारणमेव फलानन्तर्यनियमस्यैव वैदिककारणत्वात् । विकल्पे तु वैजात्यकल्पनं वैजात्यमेव । यत्रान्वयव्य-तिरेकगम्या कारणता तत्र फलपूर्वभावनियमो ग्राह्यो न तु वेदेऽपि । तत्र व्यतिरेकभानस्य गुरुत्वेनानुपस्थितेः । तथा च साङ्गे मङ्गले समाप्तिराव-श्यकीति न व्यभिचारः । समाप्तिस्तु यस्मिन्ननुष्ठिते संपूर्णमिदं कर्मेति प्रमा । सा च ग्रन्थादौ चरमवाक्यलिखने, यागादौ चरमाहुतौ, पटादा-वन्त्यतन्तुसंयोगे, ग्रामगमनादौ ग्रामचरणचरमसंयोगे । एवं तत्र तत्रोह-नीयमिति । मङ्गलजन्यसमाप्तौ वैजात्यकल्पनेऽपि नोभयथा व्यभिचारः । मङ्गलं च विघ्नध्वंसद्वारकसमाप्तिफलकं कर्म । तच्च देवतानमस्कारादिरूप-मेव । स्वतःसिद्धविघ्नाभावस्थलेऽपि सामान्यतो गृहीतस्य विघ्नध्वंसद्वारक-

त्वस्यानपायात् । नमस्कारादीनां तादूप्येणैव विघ्नध्वंसद्वारकत्वप्रतिपत्तेर्नाव्याप्तिरिति दिक् ॥ १ ॥

(कणादसूत्रविवृतिः ।)

उत्पत्तिस्थितिसंहृतीर्वितनुते विश्वस्य यः स्वेच्छया
तद्विष्टभ्य परिस्फुरन्नपि न यः प्राज्ञेतरैर्ज्ञायते ।
यत्तत्त्वं विदुषां न संसृतिसरित्पूरे पुनर्मज्जनं
सोऽयं वः स्थिरभक्तियोगसुलभो भूयाद्भवो भूतये ॥ १ ॥
मेघाङ्गीमपि संभृतांशुनिकरैर्ध्वान्तौघविध्वंसिनीं
भक्तानां भवभेदिनीमपि भवप्रेम्णा सदानन्दिनीम् ।
माहेशी कुलकामिनीमपि दिशो वासो वसानां शनै-
र्गन्त्रीमप्यगजां शिवामपि शवासीनां भवानी भजे ॥ २ ॥
प्रणम्य श्रीगुरूञ्छ्रीमाञ्जयनारायणो द्विजः ।
कणादसूत्रविवृतिं तनोतीश्वरतुष्टये ॥ ३ ॥

इह खलु जन्मजरामरणादिजनिततापकलापं जिहासवः सर्व एवान्तेवासिनस्तद्धाननिदानमात्मतत्त्वदर्शनमाकर्णयन्ति श्रुतिस्मृतीतिहासपुराणादिषु । तथा हि—श्रुतिः, 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्चैतावदरे खल्वमृतत्वम्' इति । 'यदात्मानं विजानीयादहमस्मीति पूरुषः । किमिच्छन् कस्य कामाय संसारमनुसंसरेत् ॥' इत्यादि । स्मृतिश्च, 'आगमेनानुमानेन ध्यानाभ्यासरसेन च । त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम्' ॥ इति । अथ केचिदन्तेवासिनो विधिवदधीतवेदवेदाङ्गा अनसूयकाः संपन्नश्रवणा मननार्थं भगवन्तं कणादमहर्षिं विधिवदुपसेदुः । ततः परमकारुणिकः स मुनिर्दशाध्यायीतन्त्रं तानुपदिदेश । तत्र प्रथमाध्याये समवेताशेषपदार्थकथनम् । द्वितीयाध्याये द्रव्यनिरूपणम् । तृतीयाध्याये आत्मान्तःकरणलक्षणम् । चतुर्थाध्याये शरीरतदुपयोगिविवेचनम् । पञ्चमाध्याये कर्मप्रतिपादनम् । षष्ठाध्याये श्रौतधर्मविवेचनम् । सप्तमाध्याये गुणसमवाययोः प्रतिपादनम् । अष्टमाध्याये ज्ञानोत्पत्तितन्निदानादिनिरूपणम् । नवमाध्याये बुद्धिविशेषप्रतिपादनम् । दशमाध्याये आत्मगुणभेदप्रतिपादनम् । उद्देशो लक्षणं परीक्षा चेति त्रिविधाऽस्य शास्त्रस्य प्रवृत्तिः । विभागस्तु, विशेषोद्देश एवेति नाधिक्यम् । यद्यप्यत्र तन्त्रे पदार्थनिरूपणस्यैव प्राचुर्यं तथापि पदार्थतत्त्वज्ञाननिदानतया धर्मस्यैव प्राधान्यात्तन्निरूपणमेव प्रथमं प्रतिजानीते—अथात

इति । अथशब्दस्यानन्तर्यमर्थः शिष्यजिज्ञासानन्तरमित्यर्थः । यतः श्रवणादिपटवोऽनसूयकाश्चान्तेवासिन उपसन्नाः । अतः कारणाज्ज्ञानानिदानं धर्मं व्याख्यास्यामो निरूपयिष्याम इत्यर्थः । केचित्तु अथशब्दो मङ्गलार्थः । 'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ ॥' इति स्मरणात् । एतेन शास्त्रं प्रणयता महर्षिणा शिष्टाचारपरंपरापरिप्राप्ताभिमतकर्मारम्भसमयकर्तव्यताकं मङ्गलाचरणं कथं न कृतमित्याक्षेपोऽपि निरस्त इत्याहुः । अन्ये तु योगजधर्मेण विघ्नाभावनिश्चयान्मुनिना मङ्गलाचरणं न कृतं, कृतं वा किंतु ग्रन्थादौ तन्न निबद्धमित्याहुः । नव्यास्तु गौतमीये भगवन्नामगणान्तःपातिप्रमाणशब्दोच्चारणवदत्र शास्त्रे तथाविधधर्मशब्दोच्चारणरूपमेव मङ्गलमित्याहुः । अत्र धर्मस्य ज्ञानोपयोगिता चित्तशुद्धिविविदिषादिद्वारिकैव 'विविदिषन्ति यज्ञेन' इत्यादिश्रुतेः । 'कषाये कर्मभिः पक्के ततो ज्ञानं प्रजायते' इत्यादि स्मृतेश्चेति मन्तव्यम् ॥ १ ॥

## (वैशेषिकभाष्यम् ।)

सर्वे वै प्राणभृतां व्यवहाराः प्रयोजनाश्रयाः । नान्तरेण प्रयोजनं प्रवृत्तिनिवृत्ती । पश्वादयोऽप्यभिसंधाय प्रयोजनं प्रवर्तन्ते निवर्तन्ते च । विवेकिनस्तु प्राणभृद्भेदानधिकृत्य शास्त्रप्रवृत्तिः । यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम् । अपरिसंख्येयश्चार्थः । कस्मात्? प्राणभृद्भेदस्यापरिसंख्यानात् । संक्षेपतस्तु चतुर्विधं सुखं दुःखनिवृत्तिस्तदधिगमोपायश्चेति । तत्र प्रथमयोः प्रधानः प्रयोजनशब्दः परयोर्गौणः । शास्त्रेणाधिकुर्वतां तु प्राणभृद्भेदानां पुनश्चतुर्धा भिद्यते धर्मोऽर्थः कामोऽपवर्गश्चेति । ते इमे पुरुषार्था इत्याचक्षते । तत्रापवर्गः परमः पुरुषार्थः । कस्मात् ? अपुनरावृत्तिश्रुतेः । क्रियाकारकोपरमाच्च । अपवर्गं खल्वधिगतः पुरुषो न पुनरावर्तते संसारवर्त्मसु । क्रियाकारकव्यवहारश्च सर्वोऽप्यपवर्गमधिगतस्योपरमति, तदवसानोऽयं व्यवहारकलाप इति । अर्थः कामश्चाश्रेयानपि समनन्तरफलभावादभीप्सितो भवति, प्रणाल्या चान्यत्रोपयुज्यते । सर्व एवैते पुरुषार्थाः साक्षात्परंपरया वा धर्मादेवाभिनिष्पद्यन्ते । धर्ममन्तरेण नार्थकाममोक्षाणामधिगमः । धर्ममनुतिष्ठन् खल्वयमर्थं कामं चाधिगच्छति । अपवर्गोऽपि परमं प्रयोजनं निवृत्तिलक्षणाद्धर्मादशुद्ध्युपरमे मनसः प्रसत्तौ सत्यां तत्त्वज्ञानान्निष्पद्यमानः प्रणाल्या धर्मसाधन एव । तस्मादस्मिंस्तत्त्वज्ञानार्थे शास्त्रे,—*अथातो

धर्मं व्याख्यास्यामः । तत्र लोके येष्वर्थेषु यानि प्रसिद्धानि पदानि तानि सति संभवे तदर्थान्येव सूत्रेष्वपि मन्तव्यानि । न त्वध्याहारादिभिरेषामर्थः परिकल्पनीयः परिभाषितव्यो वा । कस्मात् ? अभिप्रायभेदापत्तेः । एवं खल्वन्योऽभिप्रायस्तन्त्रकर्तुरभिप्रायात्प्रवक्तुरापद्येत । तच्चानिष्टम् । प्रतिकूलवेदनीयेन दुःखजालेनानिशमुपतप्यमाना विवेकिनस्तज्जिहासवस्तत्त्वज्ञानमर्थयमानास्तदर्थमुपासदन्नन्तेवासिनः, अथेदानीं धर्मं व्याख्यास्यामः । कस्मात् ? तत्साधनभावादिति पदानां सामर्थ्यम् । धर्मात्खल्वयं पुरुषो विशुद्धसत्त्वस्तत्त्वज्ञानायोपकल्पते । तत्त्वं च जानन्निःश्रेयसमधिगच्छति । यथोक्तम्—'धर्मविशेषप्रसूतात् तत्त्वज्ञानान्निःश्रेयसम्' इति । तन्त्रान्तरसमाचाराच्च । तन्त्रान्तरे चायमर्थोऽनुशिष्यते । नचैतदिह प्रतिषिद्धम् । अप्रतिषिद्धं च परमतमनुमतं भवति । विशेषाभिधित्सया तु शास्त्रारम्भः । यदिदं वैशेषिकं नाम शास्त्रमारब्धं तत्खलु तन्त्रान्तराद्विशेषस्यार्थस्याभिधानायेति ॥ १ ॥

**यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ॥ २ ॥**

(उप०) अथ प्रतिज्ञातार्थमाह—यत इति। अभ्युदयस्तत्त्वज्ञानं निःश्रेयसमात्यन्तिकी दुःखनिवृत्तिः तदुभयं यतः स धर्मः । अभ्युदयद्वारकं निःश्रेयसमिति मध्यपदलोपी समासः, पञ्चमीतत्पुरुषो वा । स च धर्मो निवृत्तिलक्षणो वक्ष्यते । यदि तु निदिध्यासनादियोगसाध्यो धर्मोऽदृष्टमेव तदा विधिरूपः । वृत्तिकृतस्तु अभ्युदयः सुखं निःश्रेयसमेककालीनसकलात्मविशेषगुणध्वंसः प्रमाणं च धर्मे देवदत्तशरीरादिकं भोक्तृविशेषगुणप्रेरितभूतपूर्वकं कार्यत्वे सति तद्भोगसाधनत्वात्तन्निर्मितस्रग्वदित्याहुः । तदेतद्व्याख्यानं प्रत्येकसमुदायाभ्यां न व्यापकमित्यर्वाचीनैरुपेक्षितम् । वस्तुतस्तु को धर्मः किंलक्षणश्चेति सामान्यतः शिष्यजिज्ञासायां यतोऽभ्युदयनिःश्रेयससिद्धिरित्युपतिष्ठते । तथा च यतोऽभ्युदयसिद्धिर्यतश्च निःश्रेयससिद्धिस्तदुभयं धर्मः । एवं पुरुषार्थसाधारणकारणं धर्म इति वक्तव्ये परमपुरुषार्थयोः सुखदुःखाभावयोर्विशेषतः परिचयार्थमभ्युदयनिःश्रेयससिद्धिरित्युक्तम् । स्वर्गापवर्गयोरेवान्येच्छानधीनेच्छाविषयत्वेन परमपुरुषार्थत्वात् । साधयिष्यते च दुःखाभावस्यापि पुरुषार्थत्वम् ॥ २ ॥

(विवृ०) ननु धर्मस्याकिंचित्करत्वेन तन्निरूपणं व्यर्थमतो धर्मस्य परमपुरुषार्थसाधनत्वं दर्शयंस्तल्लक्षणमाह—यत इति । अभ्युदयः स्वर्गः निःश्रेयसं मोक्ष-

स्तयोः सिद्धिरुत्पत्तिर्यतः कारणात्स धर्मः । तथा च स्वर्गापवर्गरूपपरमपुरुषार्थसाधनतया बुभुक्षूणां मुमुक्षूणा चोपादेयत्वाद्धर्मस्य व्याख्यानं युक्तमेव। अत्र च धर्मस्य स्वर्गसाधनता साक्षादेव । अपवर्गसाधनता तु तत्त्वज्ञानद्वारेति विशेषः । अत्र सुखजनकतावच्छेदकतया सिद्धा धर्मत्वजातिर्धर्मपदवाच्यत्वं वा धर्मस्य लक्षणमभिप्रेतमिति ध्येयम् ॥ २ ॥

( भाष्यम् ) त्रिधा चास्य शास्त्रस्य प्रवृत्तिरुद्देशो लक्षणं परीक्षा चेति। विभागोऽपि तेन तेन रूपेणोद्देश एव। तत्रोद्देशो नाम नामधेयेन वस्तुनोऽभिधानम् । तेन हि सामान्येन भवत्युपदेशो वस्तूनामिति । कियन्तः कतिविधाश्चेत्युपसंख्यानं विभागः । ततो हि विशेषतो भक्तिरिति । येन पुनरुद्दिष्टं वस्तु लक्ष्यते इदमित्थंभूतमिति तल्लक्षणम्। समानासमानजातीयव्यवच्छेदो लक्षणार्थः । उद्दिष्टस्य लक्षितस्य च विनेयबुद्धिमारूढस्य परमतनिराकरणेन न्यायेन यदुपपादनं सा परीक्षा । तेन हि परित ईक्षा भवति । ईक्षा पुनरीक्षणमवधारणं निश्चय इति । कस्मात्पुनरेतादृशी शास्त्रप्रवृत्तिः? सुखेनार्थग्रहणोपपत्तेः । उपदिष्टस्य खल्वर्थस्यैवं सति सुखेन ग्रहणमुपपद्यते नान्यथा । प्राणभृद्वेदानामनुग्रहार्थं च शास्त्रारम्भः । तस्मादेतादृशी शास्त्रप्रवृत्तिरिति । तत्रोद्दिष्टस्य प्रविभक्तस्य च लक्षणवचनं द्रव्यादेरर्थस्य । धर्मस्य प्रविभागः सन्नपि नोक्तः । अनधिकारात् । तत्त्वज्ञानार्थं हि शास्त्रस्यारम्भ इति तन्त्रान्तरोपदेशाच्च । तन्त्रान्तरे चायमर्थो विस्तरेणोपदिष्टः । संक्षेपतस्त्वाचार्यः सूचयिष्यति । तस्मादुद्दिष्टस्य लक्षणवचनम्—*यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः । अभ्युदयो मङ्गलं श्रेय इत्यनर्थान्तरम् । तत्खल्वाभिमुख्येनाप्तुं यतते पुरुषः, यतमानश्चाप्नोति । निःशेषं श्रेयो निःश्रेयसमपवर्गः । तत्र हि निःशेषं श्रेयः । अपवर्गे खल्वधिगते सर्वमन्यच्छ्रेयः परिसमाप्यते कृतकृत्यश्च पुरुषो भवति, नास्य किंचित्करणीयं किंचिच्चाप्रव्यमवशिष्यते। अभ्युदयस्य सतो निःश्रेयसस्याभ्यर्हितत्वात्पृथग्वचनम्। यस्मादभ्युदयनिश्रेयसयोः सिद्धिर्निष्पत्तिः स धर्मः। कस्मादभ्युदयनिःश्रेयसयोर्निष्पत्तिः ? योऽ( ये ? )यं प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः, तस्माद(स्या अ?)भ्युदयनिःश्रेयसयोर्निष्पत्तिः। तत्र, वाचा सत्यं हितं प्रियं स्वाध्यायं च, मनसा दयामस्पृहां श्रद्धां च, शरीरेण दानं परिचरणं परित्राणं चाचरन्पुरुषो धर्ममाचरतीत्युच्यते । "यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि" इति चाम्नायो यजतिशब्दवाच्यं धर्ममाह । अनवस्थानात्फलानु-

पपत्तिरिति चेन्न, मृगमदवासनावदुपपत्तेः । यजतिः खल्वयं भङ्गी, न फलकालमवतिष्ठते । तावत्कालमनवस्थिताच्च तस्मादभ्युदयनिःश्रेयसयोर्निष्पत्तिर्नोपपद्यते । नायं दोषः । कस्मात्? मृगमदवासनावदुपपत्तेः । यथा खलु मृगमदवासनावासितः पटो मृगमदापगमेऽपि मृगमदगन्धवानेवोपलभ्यते । अतिशयाधानोपपत्तेः । तथा विलीनोऽपि यजतिः कर्तर्यतिशयं कमप्यादधान एव विलीयते । सोऽयमतिशयः संस्कारोऽपूर्वं धर्मः पुण्यं नियोगः कार्यमित्युच्चावचनामभिर्व्यपदिश्यते । लोकेऽपि पथ्यापथ्योपयोगादिभिः कर्षणादिभिश्चानवस्थितैरपि कालान्तरे तत्तत्फलमुत्पद्यते, अतिशयाधानोपपत्तेः । एवं धर्मोऽप्यतिशयमादधान एव विलीयते । सोऽयं शक्तिविशेषो दृष्टादृष्टानामविशेषेण कर्मणामाधेयः । तन्त्रान्तरे चैतच्चिन्तितमित्युपरराम भगवान्सूत्रकारः । सोऽयमपरो धर्मस्तत्त्वज्ञानार्थत्वात् । परश्च धर्मस्तत्त्वज्ञानं, निःश्रेयसहेतुत्वात् ॥ २ ॥

## तद्वचनादाम्नायस्य प्रामाण्यम् ॥ ३ ॥

( उप० ) ननु निवृत्तिलक्षणो धर्मस्तत्त्वज्ञानद्वारा निःश्रेयसहेतुरित्यत्र श्रुतिः प्रमाणं, श्रुतेरेव प्रामाण्ये वयं विप्रतिपद्यामहे—अनृतव्याघातपुनरुक्तदोषेभ्यः । पुत्रेष्टौ कृतायामपि पुत्रानुत्पादादनृतत्वम् । 'उदिते जुहोति,' 'अनुदिते जुहोति', 'समयाध्युषिते जुहोति' इति विधेः प्राप्त एवोदितादिकाले होमो व्याहन्यते 'श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति शबलोऽस्याहुतिमभ्यवहरति योऽनुदिते जुहोति श्यावशबलावस्याहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति' इत्यादिना । तथा 'त्रिः प्रथमामन्वाह त्रिरुत्तमामन्वाह' इत्यनेन प्रथमोत्तमसामिधेन्योस्त्रिरुच्चारणाभिधानात्पौनरुक्त्यमेव । न चाम्नायप्रामाण्यप्रतिपादकं किञ्चिदस्ति नित्यत्वे विप्रतिपत्तौ नित्यनिर्दोषत्वमपि संदिग्धम् । पौरुषेयत्वे तु भ्रमप्रमादविप्रत्तिपत्तिकरणापाटवादिसंभावनया आप्तोक्तत्वमपि संदिग्धमेवेति न निःश्रेयसं न वा तत्र तत्त्वज्ञानं द्वारं न वा धर्म इति सर्वमेतदाकुलमत आह—तद्वचनादिति । तदित्यनुपक्रान्तमपि प्रसिद्धिसिद्धतयेश्वरं परामृशति यथा 'तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः' इति गौतमीयसूत्रे तच्छब्देनानुपक्रान्तोऽपि वेदः परामृश्यते । तथा च तद्वचनात्तेनेश्वरेण प्रणयनादाम्नायस्य वेदस्य प्रामाण्यम् । यद्वा तदिति संनिहितं धर्ममेव परामृशति । तथाच धर्मस्य वचनात् प्रतिपादनाद् आम्नायस्य वेदस्य प्रामाण्यम् । यद्धि वाक्यं प्रामाणिकमर्थं

प्रतिपादयति तत्प्रमाणमेव यत इत्यर्थः । ईश्वरस्तदाप्तत्वं च साधयिष्यते । यच्चोक्तम्—' अनृतव्याघातपुनरुक्तदोषेभ्यः ' इति । तत्रानृतत्वे जन्मान्तरीयफलकल्पनं कर्मकर्तृसाधनवैगुण्यकल्पनं वा, श्रौतात्साङ्गात्कर्मणः फलावश्यंभावनिश्चयात् । नच कारीरीवदैहिकमात्रफलकत्वं, तत्र हि शुष्यच्छस्यसंजीवनकामस्याधिकारः, पुत्रेष्टौ पुत्रमात्रकामस्येति विशेषात् । न च व्याघातोऽपि उदितादिहोमं विशेषतः प्रतिज्ञाय तदन्यकाले होमानुष्ठाने ' श्यावोऽस्याहुतिमभ्यवहरति ' इत्यादिनिन्दाप्रतिपादनात् । नच पुनरुक्तादोषोऽपि । एकादशसामिधेनीना प्रकृतौ पाठात् ' पञ्चदशावरेण वाग्वज्रेणावबाधे तमिमं भ्रातृव्यम् ' इत्यत्र सामिधेनीनां पञ्चदशत्वस्य प्रथमोत्तमसामिधेन्योस्त्रिरभिधानमन्तरेणानुपपत्तेस्तथाभिधानात् ॥ ३ ॥

( विवृ० ) ननु धर्मे तस्य तत्त्वज्ञानादिसाधनत्वे च किं मानम्? वेद एव मानमिति चेत् । न । तत्प्रामाण्यस्यापि संदिग्धत्वात् । तथा चाक्षचरणसूत्रं ' तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः ' इतीत्याशङ्कां निरस्यति—तद्वचनादिति । तेनेश्वरेण वचनात्कथनादाम्नायस्य वेदस्य प्रामाण्यमवश्यं स्वीकार्यमिति शेषः । ईश्वरस्याप्रक्रान्तत्वेऽपि प्रसिद्धार्थकेन तच्छब्देन परामर्शो भवत्येव यथा ' कला च सा कान्तिमती कलावतः ' इति कुमारसंभवे तच्छब्दस्याप्रक्रान्तवाचित्वं, यथा वा तदप्रामाण्यमित्यादिगौतमसूत्रेऽप्रक्रान्तस्य वेदस्य तच्छब्देन परामर्शः । यद्वा ईश्वरवाचकमेवात्र तत्पदम्, ' ओं तत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृतः । ' इति वचनात् । तथा च नित्यसर्वज्ञनिर्दोषपुरुषप्रणीतत्वाद्वेदस्य प्रामाण्यमवश्यमेवाभ्युपेयमित्यर्थः ॥ ३ ॥

( भाष्यम् ) योऽयं लक्षितो धर्मः—* तद्वचनादाम्नायस्य प्रामाण्यम् । आम्नायो वेदः आचार्यसकाशादभ्यासात् । प्रामाण्यं प्रमाणभावः । साध्यत्वादनपदेशः । ननु खलु भोः धर्मस्य वचनादाम्नायस्य प्रमाणभावः साध्यते । तच्चैतदनुपपन्नम् । कस्मात् ? साध्यत्वात् । धर्मवचनात्प्रमाणभाव इति साध्यमेतत् । न वै धर्मवचनप्रमाणभावयोः प्रसिद्धिरस्ति । तस्मात्तद्वचनादित्ययमनपदेशोऽहेतुः । प्रसिद्धिपूर्वकत्वादपदेशस्य । प्रसिद्धेः खल्वभावे यादृगिदं भवति; स्पर्शवत्त्वात्पृथिव्यां जलभाव इति, तादृगेतद्भवति तद्वचनादाम्नायस्य प्रमाणभाव इति । दृष्टान्ताभावाच्च । लौकिकपरीक्षकानां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः । साध्य-

साधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् । तद्विपर्ययाद्वा विपरीतम् । उदाहरणसाधर्म्यात्तद्वैधर्म्याद्वा साध्यसाधनं हेतुः । तत्र धर्मवचनात्प्रमाणभावे साधनीये न खल्वपि साधर्म्याद्दृष्टान्तोऽस्ति, न वैधर्म्यात् । दृष्टान्ताभावाच्च तद्वचनादित्यनपदेशः । दृष्टान्तसमाधिना हि स्वपक्षः स्थापनीयो भवति नान्यथा । इतरेतरापेक्षसिद्धेश्च । योऽयं धर्मस्य वचनादाम्नायस्य प्रमाणभावः, तत्रेतरदितरदपेक्ष्य सिध्यति । कथम् ? आम्नायस्य प्रमाणभावे सिद्धे तत्प्रमितो धर्मः प्रमाणम् । सिद्धे च धर्मस्य प्रमाणभावे तद्वचनादाम्नायस्य प्रमाणभावः । तस्मादितरस्येतरदपेक्ष्य सिद्धेस्तयोरेकस्य सिद्ध्यभावे नापरोऽपि सेद्धुमर्हतीति । अस्य प्रतिषेधप्रपञ्चस्योत्तरम् । प्रमाणभावोपपत्तेरप्रतिषेधः । अपदेशप्रतिषेधो नोपपद्यते । कस्मात् ? धर्मस्य प्रमाणभावोपपत्तेः । धर्मः खल्वयं प्रामाणिकोऽर्थः । बाह्यानामपि संप्रतिपत्तेः । बाह्यतरादिषु चाविशेषात् । येऽपि नास्ति परलोक इति प्रतिपन्नास्तेषामपि संप्रतिपत्तिरेव धर्मे । अथाप्येतदाहुः । 'अहिंसा परमो धर्मः पापमात्मप्रपीडनम्' इति । विशेषे तु विप्रतिपत्तिरिति । सेयमज्ञाननिमित्ता विप्रतिपत्तिर्न खल्वपि सर्वलोकप्रसिद्धं धर्मं प्रतिषेद्धुं क्षमते । यं वै सर्वे लोकाः स्वरसेनानुभवन्ति, नासौ निर्मूलो भवितुमर्हति । तस्मान्मूलेन भवितव्यम् । देहात्मवादस्त्वन्यथोपपन्नो बलीयसा प्रमाणेन विरोधाद्बाध्यते । सोऽपि नैकान्ततो निर्मूलः । कस्मात् ? तत्संबन्धात्ताच्छब्द्योपपत्तेः । आत्मसंबन्धात्खल्वात्मशब्दो देहे उपपद्यते इति । तदेवं कोऽसौ कीदृशश्चेत्यत्र विप्रतिपत्तिर्न वस्तुनि । तस्मात्प्रसिद्धिसद्भावात्तद्वचनादित्ययमपदेशो नानपदेशः । प्रामाणिको हि धर्मः । प्रामाणिकवचनानां च प्रमाणभावो लोके दृष्टः । तस्मादुपपन्नस्तद्वचनादाम्नायस्य प्रमाणभाव इति । एतेनेतरेतरापेक्षसिद्धिः प्रत्युक्ता । पूर्वे खल्वृषयः साक्षात्कृतधर्माणो हिताहितविभागं विद्वांसो भूतदयया लोकमुपादिशन् । न चैषामुपदिष्टोऽर्थो मिथ्येति । यश्चायं प्रतिनियतो भोगः, यच्च जगतो वैचित्र्यं, नैतदाकस्मिकं भवितुमर्हति । कस्मात् ? उपजनधर्मकाणां हेतुनियमात् । ये वै केचिदुपजनधर्माणस्तेषां नियमतो हेतुभिर्भवितव्यम् । तत्र चासंभवन् लौकिको हेतुः प्रत्यनीकभावादलौकिकं हेतुं कल्पयति । तदेवं प्रमाणावगतो धर्मस्तद्वचनादाम्नायस्य प्रामाण्यम् । प्रमाणमिति खल्वयं करणाभिधायी शब्दः । प्रमाणभावः पुनः प्रमाणेन योऽर्थः प्रमीयते, तस्य तथाभावे भवति नान्यथा । तथाभावस्तु येन रूपेणार्थः

प्रतीयते, तस्य तेन रूपेण भवनं सत्ताविपर्यय इति । धर्मश्चाम्नायार्थः । तस्य च तथाभावस्य प्रमाणादवगतेस्तद्वचनात्प्रामाण्यमाम्नायस्येति । अस्मादृशांश्चान्तेवासिनोऽधिकृत्यैतत्प्रामाण्यवचनमाम्नायस्य, येषां न खल्वपि विप्रतिपत्तिर्धर्मे । आम्नायप्रामाण्ये त्वमीषामपि विमर्श उपपद्यते । कस्मात् ? प्रमाणगम्यत्वादर्थस्य । योऽयमाम्नायस्यार्थः, स खलु प्रमाणान्तरावगम्यः । प्रमाणमपेक्षमाणस्य शब्दस्य प्रमाणभावाभिमानात् । तस्मात्प्रमाणगम्यस्यार्थस्य वचनादाम्नायस्य प्रमाणभाव इति । नचायं नियमः विमृश्यैवार्थस्यावधारणमिति । किंतु विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं लोके, शास्त्रे वादे च विमर्शवर्जमपि । स खल्वयं धर्मः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च । तत्र योऽयं निवृत्तिलक्षणो धर्मः, स किल्बिषोपरमादिभिस्तत्त्वज्ञानं प्रसूते ॥ ३ ॥

**धर्मविशेषप्रसूताद्द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् ॥ ४ ॥**

(उप०)शिष्याकाङ्क्षानुरोधेन स्वरूपतो लक्षणतश्च धर्मं व्याख्यायाभिधेयसंबन्धप्रतिपादनाय सूत्रम्—धर्मविशेषप्रसूतादिति । एतादृशं तत्त्वज्ञानं वैशेषिकशास्त्राधीनमिति तस्यापि निःश्रेयसहेतुत्वं दण्डापूपायितम् । तत्त्वं ज्ञायतेऽनेनेति करणव्युत्पत्त्या शास्त्रपरत्वे धर्मविशेषप्रसूतादित्यनेनानन्वयापत्तेः । सर्वपदार्थप्रधानो द्वन्द्वश्चात्र समासः। सर्वपदार्थतत्त्वज्ञानस्य निःश्रेयसहेतुत्वात् । तदत्र शास्त्रनिःश्रेयसयोर्हेतुहेतुमद्भावः शास्त्रतत्त्वज्ञानयो(र्व्यापार?)व्यापारिभावः, निःश्रेयसतत्त्वज्ञानयोः कार्यकारणभावः, द्रव्यादिपदार्थशास्त्रयोः प्रतिपाद्यप्रतिपादकभावः संबन्धोऽवगम्यते । एतेषां च संबन्धानां ज्ञानान्निःश्रेयसार्थिनामिह शास्त्रे प्रवृत्तिः । मोक्षमाणाश्च मुनेर्गृहीतात्मभावा एव शास्त्रे प्रवर्तन्ते । निःश्रेयसमात्यन्तिकी दुःखनिवृत्तिः । दुःखनिवृत्तेश्चात्यन्तिकत्वं समानाधिकरणदुःखप्रागभावासमानकालीनत्वं युगपदुत्पन्नसमानाधिकरणसर्वात्मविशेषगुणध्वंससमानकालीनत्वं वा । अशेषविशेषगुणध्वंसावधिकदुःखप्रागभावो वा मुक्तिः । नचासाध्यत्वान्नायं पुरुषार्थः कारणविघटनमुखेन प्रागभावस्यापि साध्यत्वात् । नच तस्य प्रागभावत्वक्षतिः प्रतियोगिजनकाभावत्वेन तथात्वात् । जनकत्वं च स्वरूपयोग्यतामात्रम्, नहि प्रागभावश्चरमसामग्री येन तस्मिन्सति कार्यमवश्यं भवेत् तथा सति कार्यस्याप्यनादित्वप्रसङ्गात् । तथाच यथा सहकारिविरहादियन्तं कालं

नाजीजनत्तथाग्रेऽपि तद्विरहान्न जनयिष्यति हेतूच्छेदे पुरुषव्यापारात् इत्यस्यापि प्रागभावपरिपालन एव तात्पर्यात्, अत एव गौतमीयद्वितीयसूत्रे 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इत्यत्र कारणाभावात्कार्याभावाभिधानं दुःखप्रागभावरूपामेव मुक्तिं द्रढयति । नहि दोषापाये प्रवृत्त्यपायः, प्रवृत्त्यपाये जन्मापायः, जन्मापाये दुःखापाय इत्यपायो ध्वंसः, किंत्वनुत्पत्तिः । सा च प्रागभाव एव नच प्रतियोग्यप्रसिद्धिः, सामान्यतो दुःखत्वेनैव प्रतियोगिप्रसिद्धेः । प्रायश्चित्तवत्तत्रापि प्रत्यवायध्वंसद्वारा दुःखानुत्पत्तेरेवापेक्षितत्वात् लोकेऽप्यहिकण्टकादिनिवृत्तेर्दुःखानुत्पत्तिफलकत्वदर्शनात् दुःखसाधननिवृत्त्यर्थमेव प्रेक्षावतां प्रवृत्तिः । केचित्तु दुःखात्यन्ताभाव एव मुक्तिः । स च यद्यपि नात्मनिष्ठस्तथापि लोष्टादिनिष्ठ एवात्मनि साध्यते । सिद्धिश्च तस्य दुःखप्रागभावासहवर्तिदुःखध्वंस एव तस्य तत्संबन्धतयोपगमात् । तस्मिन् सति तत्र दुःखात्यन्ताभावप्रतीतेः । एवं च सति 'दुःखेनात्यन्तं विमुक्तश्चरति' इत्यादिश्रुतिरप्युपपादिता भवतीत्याहुः । तन्न । दुःखात्यन्ताभावस्यासाध्यत्वेनापुरुषार्थत्वात्, दुःखध्वंसस्य च न तत्र संबन्धत्वं परिभाषापत्तेः "दुःखेनात्यन्तं विमुक्तश्चरति" इति श्रुतेर्दुःखप्रागभावस्यैव कारणविघटनमुखेनात्यन्ताभावसमानरूपत्वतात्पर्यकत्वात् । नन्वयं न पुरुषार्थः निरुपाधीच्छाविषयत्वाभावाद् दुःखकाले सुखं तावन्नोत्पद्यते इति सुखार्थिनामेव दुःखाभावार्थं प्रवृत्तेरिति चेन्न । वैपरीत्यस्यापि सुवचत्वात् । सुखेच्छापि दुःखाभावौपाधिकीत्येव किं न स्यात् । शोकाकुलानां सुखविमुखानामपि दुःखाभावमात्रमभिसंधाय विषभक्षणोद्बन्धनादौ प्रवृत्तिदर्शनात् । ननु पुरुषार्थोऽप्ययं ज्ञायमान एव । मुक्तेस्तु दुःखाभावस्य ज्ञायमानतैव नास्ति । अन्यथा मूर्च्छाद्यवस्थार्थमपि प्रवर्तेति चेन्न । श्रुत्यनुमानाभ्यां ज्ञायमानस्यावेद्यत्वानुपपत्तेः । अस्ति हि श्रुतिः—'दुःखेनात्यन्तं विमुक्तश्चरति', 'तमेव विदित्वाऽति मृत्युमेति' इत्यादिका । अनुमानमप्यस्ति दुःखसंततिरत्यन्तमुच्छिद्यते संततित्वात्प्रदीपसंततिवदित्यादि चरमदुःखध्वंसस्य दुःखसाक्षात्कारेण क्षणं विषयीकरणात्प्रत्यक्षवेद्यताऽपि । योगिना योगजधर्मबलेनागामिनो दुःखध्वंसस्य प्रत्यक्षोपगमाच्च । तथापि तुल्यायव्ययतया नायं पुरुषार्थो दुःखवत्सुखस्यापि हानेः, द्वयोरपि समानसामग्रीकत्वादिति चेत् । उत्सर्गतो वीतरागाणां दुःखदुर्दिनभीरूणा सुखखद्योतिकामात्रेऽलम्प्रत्ययवतां तत्र प्रवृत्तेः । ननु तथापि दुःखनिवृत्तिर्न पुरु-

षार्थः, अनागतदुःखनिवृत्तेरशक्यत्वादतीतदुःखस्यातीतत्वाद्वर्तमानदुःखस्य पुरुषप्रयत्नमन्तरेणैव निवृत्तेरिति चेन्न । हेतूच्छेदे पुरुषव्यापारात्प्रायश्चित्तवत्।तथाहि—सवासनं मिथ्याज्ञानं संसारहेतुस्तदुच्छेदश्चात्मतत्त्वज्ञानात्। तत्त्वज्ञानं च योगविधिसाध्यमिति तदर्थं प्रवृत्त्युपपत्तेः। ननु नित्यसुखाभिव्यक्तिरेव मुक्तिर्नतु दुःखाभाव इति चेन्न। नित्यसुखे प्रमाणाभावात्, भावे वा नित्यं तदभिव्यक्तेर्मुक्तसंसारिणोरविशेषापातात्, अभिव्यक्तेरुत्पाद्यत्वेन तन्निवृत्तौ पुनः संसारापत्तेश्च । ब्रह्मात्मनि जीवात्मलयो मुक्तिरिति चेन्न । लयो यद्येकीभावस्तदा बाधात् । नहि द्वयमेकं भवति लिङ्गशरीरापगमो लयो लिङ्गं चैकादशेन्द्रियाणि तेषां शरीरस्य च विगमो लय इति चेन्न । एतावता दुःखसामग्रीविरहस्योक्तत्वात् । तथाच दुःखाभाव एव मुक्तिरिति पर्यवसानात् । एतेनाविद्यानिवृत्तौ केवलात्मस्थितिर्मुक्तिरात्मा च विज्ञानसुखात्मक इत्येकदण्डिमतमपास्तम् । आत्मनो ज्ञानत्वे सुखत्वे च प्रमाणाभावात् । न च 'नित्यं विज्ञानमानन्दं ब्रह्म' इति श्रुतिर्मानं, तस्या ज्ञानवत्त्वानन्दवत्त्वप्रतिपादकत्वात्। भवति हि अहं जाने अहं सुखीतिप्रतीतिः नत्वहं ज्ञानमहं सुखमिति । किंच ब्रह्मण इदानीमपि सत्त्वान्मुक्तसंसारिणोरविशेषापत्तिः । अविद्यानिवृत्तेश्चापुरुषार्थत्वात्, ब्रह्मणश्च नित्यत्वेनासाध्यत्वात्, तत्साक्षात्कारस्य तदात्मकत्वेनासाध्यत्वात् । एवमानन्दस्यापि तदात्मकत्वेनासाध्यत्वमेवेति तदर्थं प्रवृत्त्यनुपपत्तिरेव । निरुपप्लवा चित्तसंततिर्मुक्तिरिति चेन्न । दुःखादिरूपस्य उपप्लवस्य विगमो यदि निरुपप्लवत्वं तदा तन्मात्रस्यैव पुरुषार्थत्वेन चित्तसंततेरनुवृत्तौ प्रमाणाभावः, तदनुवृत्तेरपि शरीरादिसाध्यत्वेन संसारानुवृत्तेरावश्यकत्वादिति सिद्धं दुःखनिवृत्तिरेवोक्तरूपा निःश्रेयसमिति। तत्त्वस्य ज्ञानमिति कर्मणि षष्ठी। साधर्म्यवैधर्म्याभ्यामिति प्रकारे तृतीया। तत्र साधर्म्यमनुगतो धर्मः, वैधर्म्यं च व्यावृत्तो धर्मः । यद्यपि कचित्साधर्म्यमपि कुतश्चिद्वैधर्म्यं कुतश्चिद्वैधर्म्यमपि केषांचित्साधर्म्यं तथापि ताद्रूप्येण ज्ञानं विवक्षितम् । अत्र च द्रव्यादिपदार्थानामुद्देश एव विभागः पर्यवसन्नः। स च न्यूनाधिकसङ्ख्याव्यवच्छेदफलकस्तेन षडेव पदार्था इति नियमः पर्यवस्यति । सचानुपपन्नः। व्यवच्छेद्यस्य पदार्थान्तरस्य प्रतिपत्तौ नियमानुपपत्तिः अप्रतीतौ व्यवच्छेदानुपपत्ति । ननु नायमन्ययोगव्यवच्छेदः किंत्वयोगव्यवच्छेदः । पदार्थेषु षड्लक्षणायोगो व्यवच्छिद्यत इति चेन्न । पदार्थपदेन प्रसिद्धपदार्थमात्रोपसंग्रहे सिद्धसाधनात्, अन्यस्य चाप्रतीतेरेव । किंच लक्षणानां

मिलितानामयोगो व्यवच्छेद्यः प्रत्येकं वा । आद्ये मिलितायोगः सर्वत्रेति व्यवच्छेदानुपपत्तिः, अन्त्येऽपि प्रत्येकायोगः परस्परं सर्वत्रेति व्यवच्छेदानुपपत्तिरेवेति चेन्न । शक्तिसङ्ख्यासादृश्यादिषु पदार्थेषु पराभिमतेषु षड्लक्षणायोगः परैरुच्यते । तद्व्यवच्छेदो नियमार्थः । तथाच षडेव पदार्था इत्यस्य प्रतीयमानेषु षण्णां लक्षणानां मध्येऽन्यतमलक्षणयोगोऽस्त्येव नत्वयोग इत्यर्थः । तत्र विशेष्यसंगतस्यान्ययोगव्यवच्छेदः, विशेषणसंगतस्यायोगव्यवच्छेदः, क्रियासंगतस्य चात्यन्तायोगव्यवच्छेदस्तावत्प्रतीयते । तत्र शक्तित्रयमेवकारस्येत्येके । व्यवच्छेदमात्रे शक्तिरयोगान्ययोगादयस्तु व्यवच्छेद्याः समभिव्याहारलभ्या इत्यपरे । धर्मविशेषप्रसूतादिति तत्त्वज्ञानादित्यस्य विशेषणं, तत्र धर्मविशेषो निवृत्तिलक्षणो धर्मः । यदि तु तत्त्वं ज्ञायतेऽनेनेति तत्त्वज्ञानं शास्त्रमुच्यते तदा धर्मविशेष ईश्वरनियोगप्रसादरूपो वक्तव्यः । श्रूयते हीश्वरनियोगप्रसादावधिगम्य कणादो महर्षिः शास्त्रं प्रणीतवानिति । तत्त्वज्ञानमात्मतत्त्वसाक्षात्कार इह विवक्षितस्तस्यैव सवासनमिथ्याज्ञानोन्मूलनक्षमत्वात् ‘ तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ’ इत्यत्र ‘ द्वे ब्रह्मणी वेदितव्ये ’ इत्यत्र च वेदनपदस्य साक्षात्कारपरत्वात् ‘ पश्यत्यचक्षुः ’ इत्यत्रापि तथा । स च शास्त्रान्मनननिदिध्यासनादिपरंपरयेति हेतुपञ्चम्या तथैवाभिधानात् ॥ ४ ॥

(विवृ०) इदानी प्रेक्षावतां प्रवृत्तये शास्त्रस्य प्रयोजनाभिधेयसंबन्धान्प्रदर्शयन्पदार्थानुद्दिशति–धर्मविशेषप्रसूतादिति । धर्मविशेषः ऐहिको जन्मान्तरीयो वा सुकृतविशेषः । तत्प्रसूतात् तज्जन्यादित्यर्थः।इदं च तत्त्वज्ञानादित्यस्य विशेषणम् । साधर्म्यं समानो धर्मः वैधर्म्यं विरुद्धो धर्म इति मुक्तावलीकारः । तृतीया प्रकारे तत्त्वज्ञानादित्यत्र पञ्चम्यर्थः प्रयोज्यत्वं तथाच सुकृतविशेषेण द्रव्यादिपदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं जायते, तत आत्ममननमनन्तरं निदिध्यासनेनात्मसाक्षात्कारो जायते, तदनन्तरं मिथ्याज्ञानादिनाशक्रमेण मोक्षो भवतीत्यर्थः । उपस्कारकारास्तु सूत्रस्थतत्त्वज्ञानपदमात्मसाक्षात्कारपरं करणव्युत्पत्त्या तादृशसाक्षात्कारकरणशास्त्रपरं वा । तत्राद्ये धर्मविशेषपदं निवृत्तिलक्षणधर्मपरम्, अन्त्ये ईश्वरनियोगप्रसादरूपधर्मविशेषपरम् । कणादो महर्षिरीश्वरनियोगप्रसादावधिगम्य एतच्छास्त्रं प्रणीतवानिति किंवदन्ती । आत्मसाक्षात्कारश्च शास्त्रान्मनननिदिध्यासनादिपरंपरयेति हेतुपञ्चम्याः प्रयोज्यत्वार्थकत्वात् ‘ तमेव विदित्वातिमृ-

त्युमेति', 'द्वे ब्रह्मणी वेदितव्ये' इत्यादि श्रुतौ वेदनपदं साक्षात्कारपरं, तस्यैव सवासनमिथ्याज्ञानोन्मूलनक्षमत्वादित्याहुस्तच्चिन्त्यम्। सूत्रस्थतत्त्वज्ञानपदस्य सवासनमिथ्याज्ञानविरोधिस्वात्मसाक्षात्कारपरत्वे साधर्म्यवैधर्म्याभ्यामित्यस्य पदार्थानामिति षष्ठ्यन्तार्थस्य चानन्वयापत्तेः। नह्यात्मसाक्षात्कारे साधर्म्यवैधर्म्यप्रकारकत्वं षट्पदार्थविशेष्यत्वं वास्ति देहादिभिन्नत्वेनात्मसाक्षात्कारस्यैव देहाद्यभेदवासनाद्युन्मूलनक्षमत्वेन तत्र तदभावात्। नच योगजधर्मेणात्मनीतरभेदसाक्षात्कारदशायां तादृशसन्निकर्षेण साधर्म्यवैधर्म्याभ्यां द्रव्यादिषट्पदार्थज्ञानमपि जायते तत्सामग्रीसत्त्वादिति वाच्यम्। तादृशसाक्षात्कारस्य तादृशोदासीनसाधर्म्यादिविषयकत्वेऽपि तस्य प्रकृतानुपयोगितया मुनीनां तदभिधानस्योन्मत्तप्रलपितत्वापत्तेः। यत्तूपस्कारकारैरात्मसाक्षात्कारस्य मोक्षहेतुतायाम् 'तमेव विदित्वा' इत्यादिश्रुतिः प्रमाणतयोपन्यस्ता तदप्यसङ्गतम् 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्' इत्यनेन परमात्मन एवोपक्रान्तत्वेन तच्छब्दस्य तत्परतयाऽनुपक्रान्तजीवात्मपरत्वासंभवादिति संक्षेपः। अत्र षट्पदार्थकीर्तनं भावाभिप्रायेण वस्तुतोऽभावोऽपि पदार्थान्तरतया मुनेरभिप्रेतः। अत एव द्वितीयाह्निके 'कारणाभावात्कार्याभावः' इति सूत्रस्य, नवमाध्याये 'क्रियागुणव्यपदेशाभावात्' इत्यादिसूत्राणां च नासङ्गतिः। अत एव न्यायलीलावत्याम्—'अभावश्च वक्तव्यो निःश्रेयसोपयोगित्वाद्भावप्रपञ्चवत्कारणाभावेन कार्याभावस्य सर्वसिद्धत्वादुपयोगित्वसिद्धेः' इत्यभिहितम्। न्यायाचार्यैरपि द्रव्यकिरणावल्याम्—'एते च पदार्थाः प्रधानतयोद्दिष्टाः अभावस्तु स्वरूपवानपि नोद्दिष्टः प्रतियोगिनिरूपणाधीननिरूपणत्वान्न तु तुच्छत्वात्' इत्यन्तेनाभावस्य सप्तमपदार्थत्वमङ्गीकृतम्। तथाच सप्तानामेव पदार्थानां साधर्म्यवैधर्म्यज्ञानं निःश्रेयसोपयोगि तदुपयोगिता चात्मनीतरभेदसाधने लिङ्गज्ञानादिविधयेति मन्तव्यम्। पदार्थविभाजकाश्च द्रव्यत्वादयः सप्तधर्माः। तत्र द्रव्यत्वगुणत्वकर्मत्वानि जातयः। नित्यत्वे सत्यनेकसमवेतत्वं सामान्यत्वम्। जातिमद्भिन्नत्वे सत्येकमात्रसमवेतत्वं विशेषत्वम्। नित्यसंबन्धत्वं समवायत्वम्। द्रव्यादिषट्कभिन्नत्वमभावत्वमिति। अत्र प्रयोजनं निःश्रेयसम् अभिधेयाः पदार्थाः, संबन्धश्च शास्त्रनिःश्रेयसयोः पदार्थतत्त्वज्ञाननिःश्रेयसयोश्च प्रयोज्यप्रयोजकभावः, शास्त्रपदार्थतत्त्वज्ञानयोः कार्यकारणभावः, पदार्थतत्त्वज्ञानयोर्विषयविषयिभावः,

पदार्थशास्त्रयोः, प्रतिपाद्यप्रतिपादकभावश्च । निःश्रेयसं च न्यायवैशेषिक-साङ्ख्यमतेष्वात्यन्तिकदुःखनिवृत्तिरूपं स्वसमानाधिकरणदुःखासमानका-लीनदुःखध्वंसपर्यवसितम् । भवति हि चरमदुःखध्वंसः स्वसमाना-धिकरणदुःखासमानकालीनः । तदानीं मुक्तात्मनि कस्यापि दुःखस्यानुत्प-त्तेः । न्यायैकदेशिमते आत्यन्तिकदुरितनिवृत्तिरेव मोक्षस्तस्यैव साक्षादा-त्मसाक्षात्कारसाध्यत्वात् 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति श्रुतेः । एकदण्डिवेदान्तिमते अविद्यानिवृत्तिर्मोक्षः । अविद्या च पदार्थान्तरम् । त्रिदण्डिमते परमात्मनि जीवात्मनो लयो मोक्षः । स च जीवोपाधिलिङ्गशरीरनिवृत्तिपर्यवसितः । लिङ्गशरीरं च 'पञ्चप्राणमनोबु-द्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्' इति प्रतिपादितम् । भट्टास्तु नित्यसुखसाक्षात्कारो मोक्षः । नित्यसुखं च श्रुतिसिद्धं सर्वजीवगतमपि संसारदशायामव्यक्तमात्मतत्त्वसाक्षा-त्कारानन्तरमेव साक्षात्कृतं भवतीति प्राहुः । एषु मतेषु संभवन्तोऽपि दोषा ग्रन्थगौरवभयान्नोद्भाविताः । किंतु सर्वेषु मतेषु मुक्तताद्शायामा-त्यन्तिकदुःखनिवृत्तिर्निराबाधैवेति दिक् । ननु शक्तिसादृश्यादयोऽप्यति-रिक्ताः सन्ति पदार्थाः कथमन्यथा मण्यादिसंनिधाने दहनेन दाहो न ज-न्यते जन्यते च तदसंनिधावतो मण्यादिर्दहने दाहानुकूलां शक्तिं नाशयति, उत्तेजकं मण्याद्यपसरणं च पुनरुत्पादयतीत्यवश्यं कल्पनीयम् । एवं सादृ-श्यमपि पदार्थान्तरम् । तद्धि षट्सु भावेषु नान्तर्भवति सामा-न्येऽपि सत्त्वात् । यथा गोत्वं नित्यं तथाश्वत्वमपीति सादृश्यप्रतीतेः । नाप्यभावः भावत्वेन प्रतीयमानत्वादिति चेन्न । मण्याद्यसमवहितवह्न्यादेः स्वातन्त्र्येण मण्यभावादेर्वा दाहादिकं प्रति हेतुताकल्पनेनैव सामञ्जस्येऽनन्त-शक्तितत्प्रागभावतद्ध्वंसकल्पनानौचित्यात् । न चोत्तेजकसमवहितमणिस-त्त्वेऽपि कथं दाह इति वाच्यम् । उत्तेजकासमवहितमणिसामान्याभाव-स्यैव तथात्वकल्पनात् । एवं सादृश्यमपि न पदार्थान्तरं किं तु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् । यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादि-मत्त्वं मुखे चन्द्रसादृश्यमिति संक्षेपः ॥ ४ ॥

( भाष्यम् ) तस्माच्च—*धर्मविशेषप्रसूताद्द्रव्यगुणकर्मसामान्यविशेषस-मवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् । चार्थे

द्वन्द्वसमासः । यथावचनं विग्रहः । पदार्थानामिति शैषिकी षष्ठी । तत्त्वस्य ज्ञानमिति कर्मणि । साधर्म्यवैधर्म्याभ्यामिति इत्थंभावे तृतीया । द्रव्यविशेषः खल्वात्मा निःश्रेयसमधिगच्छति, तदाश्रया गुणास्तदुभयनिमित्तं कर्मेति क्रमवचनम् । एतावन्तो विद्यमानार्थाः । अमीषामविपरीतज्ञानार्थमुपदेशः । सोऽयमल्पेन सूत्रेण कृत्स्नस्य तन्त्रस्यार्थ उद्दिष्टो वेदितव्यः । तत्र, सामान्यादीनां पृथग्वचनमनर्थकमव्यतिरेकात् । सामान्यादयो हि द्रव्यादिष्वन्तर्भवन्तो न व्यतिरिच्यन्ते इति । प्रस्थानभेदोपपत्तेस्तु पृथग्वचनम् । पृथक्प्रस्थानानि वै तन्त्राणि प्राणभृद्भेदानामनुग्रहायोपदिश्यन्ते । तदिदं वैशेषिकं नाम तन्त्रं, यस्य पृथक्प्रस्थानाः सामान्यादयः पदार्थाः । यथा तन्त्रान्तरे प्रमाणप्रमेययोर्यथायथमन्तर्भवन्तोऽपि संशयादयः । तस्मात्सामान्यादिभिः पदार्थैः पृथक् प्रस्थाप्यते । तथा च शास्त्रमिदं वैशेषिकं भवति । अन्यथा त्वध्यात्मविद्यामात्रमुपनिषद इवैतत्स्यात् । तत्र, समानस्य भावः सामान्यम् । कश्च समानः ? यस्तद्धर्मवानपि न तद्भवति सोऽयं समानः, तस्य भावः सामान्यम् । तच्चैतत्सामान्यं साधर्म्ययोगः । तदुक्तम् ‘ द्रवत्वमद्भिः सामान्यम् ’ इति । समानश्च धर्मः क्वचिद्व्यवस्थितो गोत्वादिः, क्वचिच्चाव्यवस्थित आरोहपरिणाहादिर्यथाविषयं वेदितव्यः । सामान्याद्धि विशेषाविवेकाद्यथास्वं संशयविपर्ययौ भवतः । स्थाणुपुरुषयोः समानं धर्ममारोहपरिणाहौ पश्यन् विशेषं चाजानानः संशेते, स्थाणुर्वा भवेत्पुरुषो वेति । विपर्ययः खल्वपि सामान्यमेव धर्ममुपलभ्य दोषाद्विपर्येस्यति स्थाणौ पुरुष इति; शुक्तौ रजतमिति । मिथ्याबुद्धिस्तु दुःखभूमिः । तदिदं सामान्यं द्रव्यादिष्वन्तर्भवदेवमर्थं पृथगुच्यते । येन विशेषेण शिष्यते स विशेषः । सामान्येन या मिथ्याबुद्धिरुदेति सेयं विशेषविवेकेनापोद्यते । तत एव यथार्थबुद्धिर्भवति । या तत्त्वज्ञानमित्याख्यायते । यथोदाहृते स्थाण्वादौ यो विशेषः, तद्विवेकात्तत्त्वज्ञानं भवति स्थाणौ स्थाणुरिति शुक्तौ शुक्तिरिति । सोऽयं विशेषो द्रव्यादिष्वन्तर्भवन्नेवमर्थं पृथगभिधीयते अथापि खल्वेको भावस्तेन तेन विशिष्यमाणः सामान्यविशेषव्यपदेशं भजते, गुणे तदानीमन्तर्भाव इति । यदि नाम परिभाषामात्रमेतौ, नैवातिरिच्येते इति । समवायस्तु सम्यगवाप्तिरेकीभावः । अथाप्येतदुक्तम् । समवायोऽपृथग्भाव इति । सोऽयं पृथक्त्वप्रतिद्वन्द्वी गुण इति । यथा खलु संयोगप्रतिद्वन्द्वी विभागः पृथक्त्वं चायोगो नाम गुणान्तरम्, तथैव वैलक्षण्यलक्षणस्यानेकत्वलक्षणस्य वा पृथक्त्वस्य प्रतिद्वन्द्वी गुणः समवायो

नाम । द्रव्यं खल्वयमाश्रयति न चासौ गुणवान् न खल्वपि कर्मेति । यश्च अपूर्वशरीरेन्द्रियवेदनाभिः संयोगविशेषो जन्म, ततः शरीरादिभिरपृथग्भावमात्मनोऽभिमन्यते । यतः खल्वयं पुरुषः संसरन् दुःखराशिमनुभवति, तदुपरमे च प्रहीणदुःखसंतानोऽपवृज्यते । सोऽयं समवाय एवमर्थं पृथगुच्यते गुणान्तर्भूतोऽपि । अथापि खल्ववाप्तिरुपश्लेषविशेषः स्यात्, गुण एवान्तर्भवति । अपरो ह्युपश्लेषो न चिरमवतिष्ठते, अयं तूत्पत्तेः प्रभृत्याविनाशमनुवर्तते तदपगमाच्चोपरमो भावस्येति । सोऽयमयुतसिद्धानामुपश्लेषः समवायो युतसिद्धानां च संयोगः । सन्त्यन्येऽपि पदार्थाः प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानाख्यास्ते चात्रैवान्तर्भवन्ति इति । साधर्म्यं सामान्यं, वैधर्म्यं विशेषः । आत्मादेः खलु तत्त्वज्ञानान्निःश्रेयसम् । अन्येषां तत्त्वज्ञानस्य तत्रोपयोग इति । तत्रात्मादौ मिथ्याज्ञानमनेकप्रकारं भवति, आत्मनि तावदनात्मेति अनात्मन्यात्मेति । एवं जुगुप्सितादौ यथाविषयं वेदितव्यम् । तत्त्वज्ञानं च खलु मिथ्याज्ञानविपर्ययेण व्याख्यातम् । आत्मन्यात्मेति अनात्मन्यनात्मेति । एवं शेषेषु । एतस्मात् तत्त्वज्ञानान्मिथ्याज्ञानमपैति, तदपायान्निःश्रेयसमपवर्गः प्रादुर्भवति । मिथ्याज्ञानमूलो हि संसारः तदपाये नावतिष्ठते इति ॥ ४ ॥

**पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ॥५॥**

( उप० ) इदानीमपवर्गभागितया सर्वपदार्थाश्रयतया च प्रथमोद्दिष्टस्य द्रव्यपदार्थस्य विभागं विशेषोद्देशं च कुर्वन्नाह–पृथिवीति । इतिकारोऽवधारणार्थः । तेन नवैव द्रव्याणि नाधिकानि न न्यूनानि वेत्यर्थः । ननु विभागबलादेव न्यूनाधिकसंख्याव्यवच्छेदसिद्धौ किमितिकारेणेति चेत् । उद्देशमात्रपरतयापि सूत्रसंभवे विभागतात्पर्यस्फोरणार्थमेवेतिकाराभिधानात् । सुवर्णादीनामीश्वरस्य चात्रैवान्तर्भावात् । अन्धकारस्य चाधिकत्वेनाशङ्क्यमानस्याभावत्वव्युत्पादनादेतदध्यवसेयम् । असमासकरणं तु सर्वेषां प्राधान्यप्रदर्शनाय । लक्षणमेतेषां तु वैधर्म्यावसरे सूत्रकृदेव दर्शयिष्यति । ननु सुवर्णं न तावत्पृथिवी निर्गन्धत्वात्, न जलं स्नेहसांसिद्धिकद्रवत्वशून्यत्वात्, न तेजो गुरुत्ववत्त्वात्, अत एव न वायुर्न वा कालादि । ततो नवभ्यो भिद्यत इति चेन्न । आद्यद्वितीययोरनाभासत्वं, तृतीयस्य स्वरूपासिद्धत्वं, ततः परं सिद्धसाधनं, हेतोः स्वरूपासिद्धिश्च । साधयिष्यते च सुवर्णस्य तैजसत्वमिति ॥ ५ ॥

(विवृ०) द्रव्याणि विभजते—पृथिवीति । इतिशब्दोऽत्रधारणपरस्तेनोक्तानि नवैव द्रव्याणि नाधिकानि न वा न्यूनानीत्यर्थः । असमासकरणं तु सर्वेषा मितरनैरपेक्ष्येण कार्यविशेषोत्पादकताप्रदर्शनार्थं स्वसमवेतकार्यजनने सर्वेषांतुल्यताज्ञापनार्थं वा । नच विभागबलादेव न्यूनाधिकसंख्याव्यवच्छेदसंभवादवधारणार्थकेतिशब्दो व्यर्थ इति वाच्यम् । यतो विभागस्थले अवधारणवाचकपदासत्त्वे तदाध्याहारेणैव न्यूनाधिकसंख्याव्यवच्छेदो बोध्यते । अत्र त्वध्याहारं विनैव तादृशव्यवच्छेदबोधार्थमेव मुनिना इतिशब्दोऽभिहित इति ध्येयम् । द्रव्यत्वजातिस्तु कार्यसामान्यस्य संयोगस्य विभागस्य वा समवायिकारणतावच्छेदकतया सिध्यति । ननु कन्दलीकारैः साङ्ख्याचार्यैश्च अन्धकारस्य द्रव्यत्वं स्वीकृतं युक्तं चैतत् । कथमन्यथा नीलं तमश्चलतीति गुणक्रियाप्रत्ययस्तत्र लोकानाम् । स हि न पृथिवी, निर्गन्धत्वात् । नाप्यस्य जलादावन्तर्भावः, नीलरूपवत्त्वात् । तथा चाधिकसंख्याव्यवच्छेदः कथं संभवतीति चेन्न । आवश्यकतेजोविशेषाभावेनैवोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वात् । नीलरूपप्रतीतिस्तु गगन इव तत्र भ्रान्तिरूपा । चलनप्रतीतिरपि आलोकापसरणौपाधिकी भ्रान्तिरेव । यथा नौकादिचलनौपाधिकी तीरस्थवृक्षादौ चलनप्रतीतिर्नौस्थानाम् । तमसो द्रव्यत्वकल्पनेऽनन्ततदवयवप्रागभावध्वंसकल्पनापत्तेः । कन्दलीकारमते तु तमसः पृथिव्यामन्तर्भाव इति न तन्मते व्यवच्छेदासङ्गतिरिति ध्येयम् । अत्र नवसु द्रव्यविभाजकेषु गगनत्वकालत्वदिक्त्वानामेकैकमात्रवृत्तित्वान्न जातित्वं शेषाणां पुनर्जातित्वमेवेति ॥ ५ ॥

(भाष्यम्) अथ तत्त्वज्ञानार्थमुद्दिष्टस्य विभागवचनम् । तत्र,—*पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि । तत्र, पृथिव्यप्तेजांस्यनित्यानि द्रव्याणि नित्यान्यपराणि । प्रागुत्पद्यमाना पृथिवी गन्धमात्रा प्रकृतेरुत्पद्यते । पूर्वमस्या आपो रसमात्राः । ताभ्यः पूर्वं तेजो रूपमात्रम् । ततोऽप्यर्वाग् वायुः स्पर्शमात्रः । पूर्वं चास्मात् शब्दमात्रमाकाशम् । त इमे गन्धादयो गुणाः पृथिव्यादीनां नैजाः । कारणगुणक्रमात्तु शब्दादयो वाय्वादिष्विति । अथाप्येतदुक्तम्,—'आद्याद्यस्य गुणं तेषामवाप्नोति परः परः । यो यो यावतिथश्चैषां स स तावद्गुणः स्मृतः'—इति । अभिभवानुद्भवौ त्वमीषां यथाविषयं वेदितव्यौ । 'गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः अप्तेजोवायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तरः' इति तन्त्रान्तरे

चोद्भवानभिभववतामेव गुणानामुपसंख्यानमिति । सूक्ष्मेभ्यश्चैतेभ्यः परस्परं संहन्यमानेभ्यः स्थूलानां पृथिव्यादीनामुत्पत्तिः । वाय्वाकाशौ त्वनित्यावपि परमार्थतो व्यवहारभूमौ नित्यावुच्येते । अवान्तरसर्गप्रलययोरवस्थानात् । एतेन मनोव्याख्यातम् ।

तत्रापां पृथग्वचनं न कर्तव्यम् । कस्मात् ? वायुसन्निपातात् तदुत्पत्तेः । विशिष्टयोर्वाय्वोः संनिपातात्खल्वाप उत्पद्यन्ते इति । कृत्रिमोत्पत्तेस्तात्त्विकप्रतिषेधानुपपत्तेरप्रतिषेधः वाय्वोः सन्निपातात्खल्वापः कृत्रिमा उत्पद्यन्ते । कृत्रिमानां चापामुत्पत्तेर्न तात्त्विक्य आपः शक्याः प्रतिषेद्धुम् । प्रसिद्ध्यभावात् । तस्मान्नायं प्रतिषेधः पृथग्वचनं न कर्तव्यमिति । उत्पत्तेश्चार्थान्तरभावात् । उत्पत्तेरर्थान्तरभावाच्चाप्रतिषेधः । याः खल्वापो वाय्वोः संनिपातादुत्पद्यन्ते ता इमा वायोरर्थान्तरभूता भवन्ति । तस्मादप्रतिषेधः । तत्रापि सद्भावाच्च । ययोर्वाय्वोः संनिपातादाप उत्पद्यन्ते, तत्रापि वायौ सूक्ष्माणामपां सद्भावोऽस्ति । प्रक्रियाविशेषात्तु तासामभिव्यक्तिरिति । ता इमा वायोरर्थान्तरभूता आपः पृथग्वक्तव्याः । अथापि खल्वस्ति वायौ सूक्ष्माणामपां सद्भाव इति कुत एतत्प्रतिपत्तव्यम् ? अनुपादानोत्पत्त्यनुपपत्तेः । न वै वाय्वोः संनिपातादनुपादानानामपामुत्पत्तिरुपपद्यते । अतः प्रतिपद्यामहे अस्ति सद्भावोऽपां सूक्ष्माणामिति । कालदिशोः पृथग्वचनं कार्यभेदाद्व्यपदेशभेदज्ञापनाय । आकाशः खल्वेकोऽपि कार्यभेदाद्व्यपदेशभेदं भजते । न त्वर्थान्तरमाकाशात् तत्त्वतः कालो दिक् चेति । कया युक्त्या ? तदन्तरेणाप्युपलब्ध्युपपत्तेः । यच्चैतत्कालस्य दिशश्चोपकल्पनं तदुपलब्धेरन्यथानुपपत्त्या । सा चोपलब्धिरन्तरेणापि कालं दिशं चोपपद्यते इति न तयोरर्थान्तरभूतयोः परिकल्पनम् । तपनक्रियासंयोगोपनयार्थं हि तयोरुपकल्पनम् । सोऽयमुपनय आकाशेनोपपद्यते । अन्यत्र सतो निमित्तस्यान्यत्रोपनयानुपलब्धेरप्रतिषेधः । योऽयं कालस्य दिशश्च प्रतिषेधः स नोपपद्यते । कस्मात् ? यस्मादन्यत्र सतो निमित्तस्यान्यत्रोपनयो नोपलभ्यते । तत्कार्यानुपलब्धेः । आकाशं चेदन्यस्य धर्ममन्यत्रोपनयेत्, एकस्यां भेर्यामभिहतायां सर्वासु भेरीषु शब्दा उत्पद्येरन् । काश्मीरकुङ्कुमारुणिम्ना कीकटेषु स्फटिक उपरज्येत । तुल्यत्वादहेतुः । ऽन्यत्र सतो निमित्तस्यान्यत्रोपनयानुपलब्धेरित्ययमहेतुः । कस्मात् ? तुल्यत्वात् । कालदिशोः परिकल्पनेऽप्येतत्तुल्यं भवति । नहि

कालोऽप्येकत्राभिघातमन्यत्रोपनयति । क्रियैवानेनोपनीयते संयोगस्त्वसाविति चेत्, दिगेवैनमुपनयतु । संयोगोपनयार्थं हि तस्याः कल्पनम् । या च क्रिया निमित्तमभिघातस्य, सैव वा किमिति नोपनीयते । सति चैवं सर्वत्राभिघातप्रसङ्गः । तस्माद्वस्तुशक्तिरेवैतादृशी यत्किंचिदेव कुत्रचिदुपनीयते न सर्वं सर्वत्र—इति कथमाकाशोऽप्यनियमेनार्थानुपनयेत् । आत्मा तु चेतनो नैवंस्वभावः । जडो हि तथा स्यात् । दृष्टं खल्वन्यस्य गन्धादिकमन्यत्रोपनयद्वाय्वादिद्रव्यमचेतनमिति । तस्मादाकाशस्य सतः कालस्य दिशश्च पृथग्वचनं कार्यभेदाद्व्यपदेशभेदार्थम् । सोऽयं पूर्ववत्प्रस्थानभेदः ॥ ५ ॥

**रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः ॥ ६ ॥**

( उप० ) गुणत्वेन रूपेण गुणानां सर्वद्रव्याश्रितत्वं द्रव्याभिव्यङ्ग्यत्वं द्रव्याभिव्यञ्जकत्वं चेति द्रव्यानन्तरं गुणानामुद्देशं विभागं चाह रूपेति । चकारेण गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दान्समुच्चिनोति । ते हि प्रसिद्धगुणभावा एवेति कण्ठतो नोक्ताः । गुणत्वं चामीषां यथास्थानं लक्षणतः स्वरूपतश्च वक्ष्यति । रूपरसगन्धस्पर्शानां समानकालीनरूपरसगन्धस्पर्शसामानाधिकरण्यं नास्तीति सूचनार्थं समासः । संख्यापरिमाणयोस्तु समानकालीनसंख्यापरिमाणसामानाधिकरण्यसूचनायासमासो बहुवचननिर्देशश्च । यद्यप्येकत्वसमानाधिकरणं नैकत्वान्तरं, न वा महत्त्वदीर्घत्वसमानाधिकरणं महत्त्वदीर्घत्वान्तरं, तथापि द्वित्वादीनामन्योऽन्यं सामानाधिकरण्यं महत्त्वदीर्घत्वादीना च विजातीयपरिमाणयोः सामानाधिकरण्यमस्त्येव । पृथक्त्वं च यद्यपि द्विपृथक्त्वादिसमानाधिकरणं तेन संख्यावद्बहुत्वेनैव निर्देष्टुमर्हति । तथाप्यवधिव्यङ्ग्यत्वलक्षणं संख्यातो वैधर्म्यं सूचयितुमेकवचननिर्देशः । संयोगविभागयोर्द्वयोरप्येककर्मजन्यत्वसूचनाय द्विवचनम् । परत्वापरत्वयोरन्योन्याश्रयनिरूप्यतया दिक्काललिङ्गत्वाविशेषसूचनाय च द्विवचनम् । बुद्धीनां विद्यादिभेदेन सांख्याभिमतैकमात्रबुद्धिनिराकरणसूचनाय बहुवचनम् । सुखदुःखयोर्द्वयोरपि भोगत्वावच्छेद्यैककार्यजनकत्वम् । अविशेषेण चादृष्टोन्नायकत्वं, सुखस्यापि दुःखत्वेन भावनं च ख्यापयितुं द्विवचनम् इच्छाद्वेषयोर्द्वयोरपि प्रवृत्तिं प्रति कारणत्वसूचनाय द्विवचनम् । प्रयत्नानां विहितनिषिद्धगोचराणां दशविधानां पुण्यहेतुत्वं दशविधानां च पापहेतुत्व-

मभिसंधाय बहुवचनमित्युन्नेयम् । यद्वा रूपरसगन्धस्पर्शानां भौतिकेन्द्रिय-व्यवस्थाहेतुत्वज्ञापनार्थं पाकजप्रक्रियाव्यवस्थापनार्थं वा ते समस्योक्ताः । संख्यायां द्वित्वबहुत्वादौ विप्रतिपत्तिरिति तन्निराकरणसूचनार्थं बहुत्वेनाभिधानम् । पृथक्त्वे तु संख्याबहुत्वेनैवास्यापि बहुत्वमिति सूचनायावधिज्ञानव्यञ्जनीयत्वम् । संख्यातो वैधर्म्यमिति सूचनाय च पृथगभिधानम् । परिमाणे तु दीर्घत्वह्रस्वत्वादिविप्रतिपत्ति निरासाय बहुवचनम् । संयोगविभागयोरन्योन्यविरोधज्ञापनाय द्विवचनम् । परत्वापरत्वयोर्दैशिककालिकभेदेन भिन्नजातीयत्वसंभवेन चतुष्ट्वापत्तौ गुणविभागो न्यूनः स्यादिति तत्रापि द्विवचनमित्याद्युन्नेयम् । एतेषां च लक्षणमग्रे वक्ष्यते ॥ ६ ॥

(विवृ०) गुणान्विभजते—रूपेति । अत्रानुक्तसमुच्चायकचकारेण गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दानामुपग्रहः । अत एव भाष्ये—चशब्दसमुच्चिताश्च गुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दाः सप्तैवेत्येवं चतुर्विंशतिर्गुणाः ” इति प्रशस्तदेवाचार्यैरभिहितम् । अत्र गुणविभाजकानि रूपत्वादीनि सर्वाण्येव जातयः । सूक्तिकारस्तु वेगस्थितिस्थापकभावनासु वर्तमानं संस्कारत्वं न जातिः प्रमाणाभावादित्याह । अथ गुणत्वजातौ किं मानमिति चेत् इदं—द्रव्यकर्मभिन्नसामान्यवति या कारणता सा किंचिद्धर्मावच्छिन्ना निरवच्छिन्नकारणताया असंभवात् । नहि रूपत्वादिकं सत्ता वा तत्रावच्छेदिका न्यूनातिरिक्तदेशवृत्तित्वात् । अतश्चतुर्विंशत्यनुगतं वाच्यं, तदेव गुणत्वमिति मुक्तावलीकारः । नव्यास्तु गुणत्वजातिः प्रत्यक्षसिद्धा । इन्द्रियसंयुक्तसमवेतसमवायतस्तत्प्रत्यक्षसंभवात् । न च तद्व्यञ्जकविरहान्न तत्प्रत्यक्षमिति वाच्यम् । सर्वत्र व्यञ्जकस्य जातिप्रत्यक्षप्रयोजकत्वे प्रमाणाभावात् । अन्यथा रूपत्वादेरप्यप्रत्यक्षतापत्तेरिति प्राहुः ॥ ६ ॥

(भाष्यम्) अथ यथाक्रममुद्दिष्टाः रूपादयश्चत्वारो यथायथं चक्षुरादिभिरिन्द्रियैर्गृह्यन्ते । चक्षुषा रूपं, रसनेन रसः, घ्राणेन गन्धः, त्वचा स्पर्श इति । संख्याश्चैकत्वमारभ्य पर(रार्धं?)पर्यन्ता अनेकप्रकाराः । परिमाणानि महदादीनि । यतः सर्वतोभावेन मीयन्तेऽर्थाः । पृथक्त्वमसंयोगो वैलक्षण्यमनेकता चेति । अथाप्येतदुक्तम् । पृथक्त्वं स्यादसंयोगो वैलक्षण्यमनेकतेति । संयोगो नाम येन सम्यग्युज्यन्तेऽर्थाः । योगः पुनरुपश्लेषः । विभागस्तु तत्प्रत्यनीकभावापन्नो गुणः । परत्वमपरत्वं च पूर्वत्वमुत्तरत्वं दूरत्वमन्तिकत्वं च । बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् । सुखदुःखे परस्परप्रत्यनीकभावापन्नौ गुणौ

प्रत्यात्ममनुकूलप्रतिकूलवेदनीयौ । तथेच्छाद्वेषौ । इच्छन्प्रवर्तते द्विषन्निवर्तते इति । या तु द्विषतामपि परप्रमापणादौ प्रवृत्तिः, साऽपि तदिच्छात एव । एनं हन्मीतीच्छया हि हन्ति । प्रयत्नस्त्विच्छादिकार्यं क्रियानिमित्तं गुणः । प्रयतमानो हि क्रियामभिनिर्वर्तयतीति । केचिदेतेषु न सहजाः, आश्रयोत्पत्तेः पश्चात्पुरुषप्रयत्नादुत्पद्यन्ते सत्येवाश्रये चोपरमन्ति । सहजास्त्वाश्रयोत्पत्तिमनूत्पद्यन्ते यावद्विनाशं चानुवर्तन्ते । संख्याः खल्वपि उत्पत्तेः प्रभृत्याविनाशमनुवर्तन्ते । नह्येकं न कदाचिदेकं भवति द्वौ वा न द्वौ । प्रत्यक्षं त्वस्य द्वयोरिन्द्रियसंनिकर्षादुपजायते । द्वयोः खल्वेतद्भवतीति । चकारेण गुरुत्वलघुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दसमवायशक्तिप्रभृतीनाचार्यः समुच्चिनोति । विप्रतिपत्तेस्तु रूपादीनां नामधेयेन संकीर्तनम् । गुरुत्वं लघुत्वं चेति संयोगविभागवत्परस्परप्रत्यनीकभावापन्नं गुणद्वयम् । न त्वेतयोरेकस्याभावादपरस्य सिद्धिः । एकं खल्वेकस्माद्गुरु भवद्भवत्यन्यस्माल्लघु इति । किंचिद्धि गुरुत्वं क्वचिद्गुरुण्यपि न भवति । गुरुत्वसामान्यस्य त्वभावो न भवति गुरुणीति । विशेषहेत्वभावादुभयम् । नह्यस्ति विशेषहेतुर्गुरुत्वस्याभावो लघुत्वं न लघुत्वस्याभावो गुरुत्वमिति । विशेषहेत्वभावाद्गुरुत्वं लघुत्वं चेत्युभयं गुण इति । धर्माधर्मौ तु संस्कारविशेषावेव सन्तौ लक्षणभेदात्पृथगुच्येते । पुण्येन कर्मणा संस्कृतः खल्वयं पुरुषो धार्मिको भण्यते । पापेन कर्मणा तत्प्रत्यनीकभावेन संस्कारेण संसृष्टोऽधार्मिक इति । समवायः खलु पृथक्त्वप्रतिद्वन्द्वी गुणविशेष उपश्लेषो वा । सोऽयमयुतसिद्धानामुपश्लेषः समवायो युतसिद्धाना तु संयोग इति प्रकारभेदाद्व्यपदेशभेदः । शक्तिः खल्वपि प्रतिभावमनुगता न शक्यते निह्नोतुम् । शक्नोति खल्वग्निर्दग्धुं जलं चैतं शमयितुम् । माघकर्षणेनाधीयमानशक्तिः शस्यमभ्रिकमुत्पादयति भूमिः । सेयं प्रत्यात्ममनुभवारूढा शक्तिः । न चैतन्निह्नवानः क्वचिदभ्यनुज्ञां लब्धुमर्हतीति । हेतुभावेऽपि वस्त्वप्रत्याख्यानात्संज्ञाभेदमात्रम् । अथापि खल्वियं शक्तिर्न वस्त्वन्तरं किंतु कारणत्वमात्रमिति । एवमपि संज्ञाभेदमात्रं स्यात् । येयं शक्तिसंज्ञा सा न मृष्यते कारणत्वसंज्ञा त्वभ्यनुज्ञायते । वस्तुतत्त्वं तु न प्रत्याख्यायते इति । यद्वै भवान्कारणत्वमिति मन्यते, न तस्यास्तिभावः शक्यः प्रत्याख्यातुमिति । अनतिरेकेऽपि तुल्यम् । अथापि खल्वयं हेतुभावो हेतोर्नातिरिच्यते, शक्तिरपि तर्हि शक्तिमतो नातिरिच्यते इति समानमिति ॥ ६ ॥

**उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि ॥ ७ ॥**

( उप० ) कर्मणां द्रव्यजन्यतया गुणजन्यतया च रूपवद्द्रव्यसमवायाच्च प्रत्यक्षतेति द्रव्यगुणाभिधानानन्तरं कर्मोद्देशविभागावाह—उत्क्षेपणमिति । उत्क्षेपणम्, अवक्षेपणम्, आकुञ्चनं, प्रसारणं, गमनमिति कर्माणि । इतिरवधारणार्थः । भ्रमणादेरपि गमनान्तर्गतत्वात् । अत्र च उत्क्षेपणत्वावक्षेपणत्वाकुञ्चनत्वप्रसारणत्वगमनत्वानि कर्मत्वसाक्षाद्व्याप्याः पञ्च जातयः। नन्वेतदनुपपन्नं गमनस्य कर्मपर्यायत्वात्, सर्वत्र गच्छतीति बुद्धेर्दृष्टत्वात्, उत्क्षेपणत्वादीनां चतसृणां जातीनां परस्परात्यन्ताभावसमानाधिकरणानां सामानाधिकरण्याननुभवात् ' चतस्र एव कर्मत्वव्याप्या जातय इति चेत् । सत्यम् । कर्मपर्याय एव गमनं पृथगभिधानं तु भ्रमणरेचनस्यन्दनोर्ध्वज्वलननमनोन्नमनादीनां भिन्नभिन्नबुद्धिव्यपदेशभाजामेकेन शब्देन संग्रहार्थम् । यद्वा गमनत्वमपि कर्मत्वव्याप्या पञ्चमी जातिरेव तेन भ्रमणरेचनादिष्वेव गमनप्रयोगो मुख्यः । उत्क्षेपणावक्षेपणादिषु यदि गमनप्रयोगस्तदा भाक्तः। स्वाश्रयसंयोगविभागासमवायिकारणत्वमेव गौणमुख्यसाधारणो धर्मः । गमनत्वजातेस्त्वनियतदिग्देशसंयोगविभागासमवायिकारणत्वमेव व्यञ्जकम्। तच्च भ्रमणादिषु सर्वत्रेति गमनग्रहणेनैव तेषां ग्रहणमिति । निष्क्रमणत्वप्रवेशनत्वादिका तु न जातिः । एकस्मिन्नेव कर्मणि गृहाद्गृहान्तरं गच्छति पुरुषे कस्यचिद्द्रष्टुः प्रविशतीति प्रत्ययः कस्यचित्तु निष्क्रामतीति, तत्र जातिसंकरः स्यात् । तथा भ्रमणादेरेकस्या जलप्रणाल्या निष्क्रम्यापरां प्रविशति निष्क्रामति प्रविशतीति प्रत्ययद्वयदर्शनादुपाधिसामान्यमेवैतदध्यवसेयम् । उत्क्षेपणादौ तु मुषलमुत्क्षिपामीतीच्छाजनितेन प्रयत्नेन प्रयत्नवदात्मसंयोगादसमवायिकारणाद्धस्ते तावदुत्क्षेपणं तत उत्क्षेपणविशिष्टहस्तनोदनादसमवायिकारणान्मुषलेऽप्युत्क्षेपणाख्यं कर्म युगपद्वा तत ऊर्ध्वमुत्क्षिप्तयोर्हस्तमुषलयोरवक्षेपणेच्छाजनितप्रयत्नवदात्मसंयोगाद्धस्तनोदनाच्च युगपदेव हस्ते मुसले चावक्षेपणमुलूखलपातानुकूलं संजायते । ततो दृढतरद्रव्यसंयोगाद्यदकस्मान्मुषलस्योर्ध्वगमनं भवति तत्र नेच्छा न वा प्रयत्नः कारणं, किंतु संस्कारमात्रादेव मुषलस्योत्पतनम् । तच्च गमनमात्रं नतूत्क्षेपणं भाक्तस्तत्रोत्क्षेपणव्यवहारः । एवमनुलोमप्रतिलोमवायुद्वयसंघट्टवशाद्वाय्वोस्तत्प्रेरिततृणतूलकादौ चोत्क्षेपणव्यवहारो भाक्तः । एवं स्रोतोद्वयसंघट्टवशाज्जलोर्ध्वगमनेऽपि । एवमुत्क्षेणावक्षेपणव्यवहारः शरीरतदवयवतत्सं-

युक्तमुषलतोमरादिष्वेव मुख्यः । भवति हि हस्तमुत्क्षिपति मुषलमुत्क्षिपति तोमरमुत्क्षिपतीति एवमवक्षिपतीत्यपि । आकुञ्चनं तु सत्स्वेवावयवानामारम्भकसंयोगेषु परस्परमवयवानामनारम्भकसंयोगोत्पादकं वस्त्राद्यवयविकौटिल्योत्पादकं कर्म। यतो भवति संकुचति पद्मं, संकुचति वस्त्रं,संकुचति चर्मेतिप्रत्ययः । एवमवयवानां पूर्वोत्पन्नानारम्भकसंयोगविनाशकं कर्म प्रसारणम् । यतो भवति प्रसरति वस्त्रं, प्रसरति चर्म, प्रविकसति पद्ममित्यादिप्रत्ययः । एतच्चतुष्टयभिन्नं यत्कर्मजातं तत्सर्वं गमनविशेषः । तत्र भ्रमणं प्रयत्नवदात्मसंयोगाद्धस्ते, कर्मवता हस्तेन नोदनाख्यसंयोगादवघट्टनाच्च चक्रादौ तिर्यक्संयोगानुकूलं कर्म । एवं रेचनाद्यपि व्याख्येयं स्फुटीकरिष्यति चाग्रे । तदेतेषां कर्मणां विहितयागस्नानदानादिषु धर्मानुकूलप्रयत्नवदात्मसंयोगजन्यत्वं निषिद्धदेशगमनहिंसाकलञ्जभक्षणादिषु चाधर्मानुकूलप्रयत्नवदात्मसंयोगजन्यत्वमध्यवसेयमिति ॥ ७ ॥

( विवृ० ) कर्माणि विभजते—उत्क्षेपणमिति । इतिः पूर्ववदवधारणपरः।कर्मत्वजातिः प्रत्यक्षसिद्धा।एवमुत्क्षेपणत्वादिकमपीति मुक्तावलीकारः । गमनत्वं च जातिविशेषो भ्रमणरेचनस्यन्दनोर्ध्वज्वलननमनोन्नमनादिष्वपि वर्ततेऽतो नाधिक्यम्, तद्व्यञ्जकं च नियतदिग्देशसंयोगविभागकारणत्वम् । उत्क्षेपणादिषु गमनव्यवहारो भाक्तः । स्वाश्रयसंयोगविभागासमवायिकारणत्वमेव गौणमुख्यसाधारणो धर्म. । निष्क्रमणत्वप्रवेशनत्वादिका तु न जातिः एकस्मिन्नेव कर्माणि एकस्मादावरकादावरकान्तरं गच्छति पुरुषे प्रविशत्ययमिति कस्यचिद्द्रष्टुः प्रत्ययः कस्यचिच्च निष्क्रामतीत्यतो जातिसंकरप्रसङ्गात् । जगदीशतर्कालंकारस्तु ऊर्ध्वसंयोगफलकक्रियावच्छिन्नव्यापारत्वमेवोत्क्षेपणत्वं तदेवोत्क्षिपतीत्यत्र धात्वर्थतावच्छेदकं नतूत्क्षेपणत्वं जातिः प्रवेशनत्वादिना संकरात् । लोष्टमुत्क्षिपतीत्यादौ लोष्टादेः कर्मत्वानुपपत्तेश्चेति प्रकाशिकायां प्राह । गमनत्वं च न जातिः किंतु संयोगावच्छिन्नक्रियात्वमेवेति तु नव्याः ॥ ७ ॥

(भाष्यम् )क्रमप्राप्तानि—*तु उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि । तत्रोत्क्षेपणं येनोर्ध्वमुत्क्षिप्यते । उत्क्षेपस्तु संयोगविशेषः । यतोऽवाचीनं क्षिप्यते तदवक्षेपणम् । सत्यारम्भके संयोगे येनापरोऽवयवानां संयोगस्तदाकुञ्चनम् । यतस्तु तत्प्रतिद्वन्द्वी विभागस्तत्प्रसारणम् । यच्चान्यत्किंचित्कर्म, तत्सर्वं गमनम् । गमनेऽन्तर्भूतानामेवोत्क्षेपणादीनां पूर्ववत्पृथगभिधानमिति ॥ ७ ॥

**सदनित्यं द्रव्यवत्कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः ॥ ८ ॥**

(उप०) द्रव्यादीनामुद्देशानन्तरं त्रयाणां साधर्म्यप्रकरणमारभते। तत्र द्रव्यादीनां त्रयाणां साधर्म्यस्य तत्त्वज्ञानानुकूलतया प्रथमं शिष्याकाङ्क्षितत्वात्सामान्यादिपदार्थत्रयस्य उद्देशात्प्रागेव त्रयाणां साधर्म्यमाह—सदिति। विशेषे सत्यपि अयमविशेषशब्दः साधर्म्यपरः। सदिति। सदाकारप्रत्ययव्यपदेशविषयत्वं त्रयाणामेव सत्तायोगित्वात्। अनित्यमिति। ध्वंसप्रतियोगित्वं यद्यपि न परमाण्वादिसाधारणं तथापि ध्वंसप्रतियोगिवृत्तिपदार्थविभाजकोपाधिमत्त्वं विवक्षितम्। द्रव्यवदिति। द्रव्यं समवायिकारणतयाऽस्यास्तीति द्रव्यवत् एतदपि परमाण्वादौ नास्तीति द्रव्यसमवायिकारणकवृत्तिपदार्थविभाजकोपाधिमत्त्वं विवक्षितम्। कार्यमिति। प्रागभावप्रतियोगिवृत्तिपदार्थविभाजकोपाधिमत्त्वं विवक्षितम्। कारणमिति। ज्ञानेतरकार्यनियतपूर्ववर्तिजातीयवृत्तिपदार्थविभाजकोपाधिमत्त्वम्। तेन स्वसाक्षात्कारे विषयतया कारणे गोत्वादौ नातिप्रसक्तिर्नवा पारिमाण्डल्यादावजनकेऽव्याप्तिः। सामान्यविशेषवदिति। सामान्यं सद्विशेषोऽन्योन्यव्यावर्तकतया द्रव्यत्वगुणत्वकर्मत्वादि तद्वत्त्वमित्यर्थः। ननु 'गां दद्यात्' 'गौः पदा न स्प्रष्टव्या' इति श्रुतेर्धर्माधर्मजनकत्वं जातेरपीति कारणत्वमतिव्यापीति चेन्न। अवच्छेदकतामात्रेण जातेर्विनियोगात्। उपलक्षणं चैतत्। स्वसमवायार्थशब्दाभिधेयत्वमपि त्रयाणां साधर्म्यं द्रष्टव्यम्, यदि तु कार्यत्वानित्यत्वे कारणवतामेव 'कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्यः' इति प्रशस्तदेवाचार्यव्यवस्थितं साधर्म्यमुच्यते तदा पदार्थविभाजकोपाधिमत्तया न विशेष्यं सूत्रोक्तरीत्या त्रयाणां गुणजनकत्वं गुणजन्यत्वं चान्यत्र नित्यद्रव्येभ्य इति ॥ ८ ॥

(विवृ०) इदानीं द्रव्यगुणकर्मणां साधर्म्यमाह—सदिति। इतीत्यनन्तरं प्रत्यय इत्यध्याहार्यम्, सामान्यं सद्विशेषो द्रव्यत्वादि तद्वत्। सदित्यादिप्रत्ययो यथा द्रव्ये तथा गुणकर्मणोरपि तत्र न कश्चिद्विशेषः। तथाच सत्तावत्त्वं ध्वंसप्रतियोगित्वं द्रव्यसमवायिकारणकत्वं प्रागभावप्रतियोगित्वं कारणत्वं सत्ताव्याप्यजातिमत्त्वं च द्रव्यगुणकर्मणां साधर्म्यमिति भावः। यद्यप्यनित्यत्वादित्रिकं नित्ये द्रव्ये गुणे चाव्याप्तं कारणत्वं च पारिमाण्डल्यादौ तथापि ध्वंसप्रतियोगिभाववृत्तिपदार्थविभाजकोपाधिमत्त्वमनित्यत्वं,

द्रव्यसमवायिकारणकवृत्तिपदार्थविभाजकोपाधिमत्त्वं द्रव्यवत्त्वं, प्रागभावप्रतियोगिभाववृत्तिपदार्थविभाजकोपाधिमत्त्वं कार्यत्वं, समवाय्यसमवाय्यन्यतरकारणवृत्तिपदार्थविभाजकोपाधिमत्त्वं कारणत्वं, द्रव्यादीनां साधर्म्यमित्यत्र तात्पर्यम्। प्रथमं चरमं च यथाश्रुतमेवेति हृदयम्। इदमुपलक्षणं समवायानुयोगित्वमर्थशब्दाभिधेयत्वं च तेषां साधर्म्यं बोध्यम्॥८॥

(भा०) प्रविभक्तानि द्रव्यगुणकर्माणि। सामान्यविशेषाविदानी वक्तव्यौ। तत्र,—*सदनित्यं द्रव्यवत्कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः॥ न विशिष्यते इत्यविशेषः सामान्यम्। सदिति सत्तावत्। सत्ता च सतां भावः। सामान्यादयः खल्वन्तर्भवन्ति द्रव्यादिष्विति द्रव्यगुणकर्मणामेवैतत्सामान्यम्। किंचिन्नित्यं पारमार्थिकं किंचिच्च व्यावहारिकम्। तत्र, यत्कालत्रयेऽपि न स्वरूपात्प्रच्यवते, तत्कूटस्थं जगज्जन्मस्थितिभङ्गलक्षणमतर्क्यमप्रमेयं वाङ्मनसयोरगोचरः स्वे महिम्न्यवस्थितं वस्तुभूतं पारमार्थिकं नित्यं विस्तरतस्तन्त्रान्तरेषूपदिष्टम्। ततोऽन्यत्सर्वमनित्यं परमार्थतः। तत्रापि किंचिदचिरावस्थानेन व्यवहारभूमावप्यनित्यं भवति। किंचिच्च प्रागुत्पन्नमवान्तरसर्गप्रलयेष्ववस्थानादनित्यमपि परमार्थतो व्यवहारभूमौ नित्यमित्यभिलप्यते। व्यवहारभूमौ खल्वेतत्सच्चाकारणवच्च। अवान्तरसर्गेष्वकारणवन्तो हि वाय्वादयोऽर्था इति। यत्पुनः सत्परमार्थतोऽप्यकारणवत्, तत्पारमार्थिकं नित्यं वस्तुभूतम्। तच्चात्र नोपदिष्टं प्रयोजनाभावात्। तत्त्वज्ञानार्थं हि शास्त्रारम्भः। तत्त्वज्ञानस्य च प्रयोजनं मिथ्याज्ञानापायादपवर्गनिष्पत्तिः। न खलु ब्रह्मात्मनोरितरेतरबुद्ध्या बध्यते पुरुषः। मुच्यते ह्यनयेत्यागमवादः। तदेवं द्रव्यगुणकर्मणां केषांचिद्व्यवहारभूमौ नित्यानामपि न पारमार्थिकी नित्यतेत्यनित्यमिति द्रव्यगुणकर्मणामविशेषः। आत्मानः खलु वै अनुपजनापायधर्मकस्य परस्यात्मनोऽशा अग्नेरिव विस्फुलिङ्गा अर्णवस्येव जलबुद्बुदास्तस्मात्प्रादुर्भवन्तो जायस्व म्रियस्व इत्येतत्तृतीयं स्थानं प्राप्ताः संसरन्तो यावदपवर्गं पृथगवभासन्ते। अपवर्गनिष्पत्तौ पुनस्तत्रैव विशन्तो मधुनीव पुष्परसाः समुद्र इवापगाः परमे व्योम्नि अवान्तराकाशवद्विलीनाः तेनैकीभवन्ति न तदानीं पृथगवभासन्ते स्वेनैव रूपेणावतिष्ठन्ते, तत्परमं निर्वाणम्। ते खल्वमी नित्या भवन्तोऽप्येवमनित्या भण्यन्ते। एवं खलु द्वैताद्वैतागमप्रवृत्तिः। गुणाः कर्माणि च द्रव्यैर्युज्यन्ते, द्रव्याणि द्रव्यैः पृथिव्याद्भिराप-

स्तेजसा पृथिवी पृथिव्यन्तरेण आपोऽवन्तरेण परमाणुः परमाण्वन्तरेण । एवं शेषेषु । तदेवं सर्वाणि द्रव्यवन्ति । अतो द्रव्यवदिति द्रव्यगुणकर्मणामविशेषः । किंचित्कस्यचित्कार्यं किंचिच्च कस्यचिदिति कार्यमिति द्रव्यगुणकर्मणामविशेषः । एतेन कारणं व्याख्यातम् । सन्ति द्रव्याणि, सन्तो गुणाः, सन्ति कर्माणि, अनित्यानि द्रव्याणि अनित्या गुणा अनित्यानि कर्माणीत्येवं समानानि द्रव्याणि समाना गुणाः समानानि कर्माणि द्रव्यगुणकर्माणि च । समानानां भावः सामान्यम् । अतः सामान्यवदिति द्रव्यगुणकर्मणामविशेषः । द्रव्यं स्वेन रूपेण विशिष्यते गुणकर्मभ्यां, कर्मापि स्वेनैव रूपेण द्रव्यगुणाभ्याम्, तथा द्रव्यं द्रव्यान्तरात्, गुणो गुणान्तरात्, कर्म कर्मान्तरात्, पृथिवी पृथिव्यन्तरादापोऽबन्तरात्, तेजस्तेजोऽन्तरादित्यादि यथाविषयं वेदितव्यम् । एकं खल्वेकेन रूपेण समानमप्यन्येन स्वेन रूपान्तरेण तस्माद्विशिष्यते । अतः विशेषवदित्ययमपि द्रव्यगुणकर्मणामविशेष. । अथापि परिभाषामात्रमेतौ, सामान्यविशेषवदित्यविशेष एव द्रव्यगुणकर्मणां द्रव्यगुणकर्मसु ह्यसौ भवतीति । सामान्यविशेषवचने चेत्थमाचार्यप्रवृत्तिर्ज्ञापयति, इत्थं सामान्यमित्थं च विशेषः । प्रेक्षावतः खल्वाचार्यस्योपेक्ष्य वक्तव्यमन्यत्र प्रवृत्तिर्नोपपद्यते इति । तदेवं द्रव्यगुणकर्मणामविशेष उक्तः॥८॥

## द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम् ॥ ९ ॥

( उप० ) इदानीं द्रव्यगुणयोरेव साधर्म्यमाह—द्रव्यगुणयोरिति । एतदेव सूत्रान्तरेण स्पष्टयति ॥ ९ ॥

(विवृ०)द्रव्यगुणयोः साधर्म्यमाह—द्रव्यगुणयोरिति । पार्थिवाः परमाणवः पार्थिवं द्व्यणुकमारभन्ते परमाणुनीलरूपादिकं च द्व्यणुकादिगतं नीलरूपादिकमारभते इति द्रव्यगुणयोः सजातीयारम्भकत्वं यद्यपि गगनादावन्त्यावयविनि तद्गुणे चाव्याप्तिस्तथापि सजातीयारम्भकवृत्तिपदार्थविभाजकोपाधिमत्त्वस्य साधर्म्यत्वे तात्पर्यम् ॥ ९ ॥

( भाष्यम् ) अथेदानीं द्रव्यगुणयोर्गुणकर्मणोर्द्रव्यकर्मणोर्द्रव्यस्य गुणस्य कर्मणश्चाविशेषोऽभिधीयते,—द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम् । जातिर्नाम सामान्यं बुद्ध्यपेक्षम् । इदं द्रव्यमयं गुण इत्युपलब्धेरनयोः प्रतिस्वं सामान्यमनपह्नवं भवति । साधर्म्यं सामान्यम् । तदिदं द्रव्यगुणकर्मणां महतः सामान्यादद्रव्यगुणयोरवान्तरं वेदितव्यम ॥ ९ ॥

**द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम् ॥ १० ॥**

( उप० ) अन्त्यावयविविभुद्रव्याणि तथान्त्यावयविगुणान् द्वित्वद्विपृथक्त्वपरत्वापरत्वादीन् गुणांश्च विहाय सजातीयारम्भकत्वं साधर्म्यं द्रष्टव्यं सजातीयारम्भकवृत्तिपदार्थविभाजकोपाधिमत्त्वं वा विवक्षितं तेनाजनकद्रव्यव्यक्तीनामप्युपग्रहः ॥ १० ॥

( विवृ० ) पूर्वोक्तमेव स्पष्टयति—द्रव्याणीति । सुगमम् ॥ १० ॥

( भाष्यम् ) न वै खलु पृथिव्यप आरभते आपः पृथिवीं रूपं रसं रसो रूपमिति कुत एतदित्यत आह—*द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम् । अन्यद्द्रव्यं द्रव्यान्तरम् । येनारभ्यते यच्चारभ्यते तदुभयमपि द्रव्यमिति सजातीयमारभन्ते द्रव्याणि । पृथिवी पृथिवीजातीयमापोऽब्जातीयमिति । एतेन गुणा व्याख्याताः । गुणारम्भादनियमः । पृथिव्यादि द्रव्यं रूपादिगुणमारभते । तस्मान्नायं नियमः द्रव्याणि द्रव्यान्तरमारभन्ते इति । द्रव्ये नियमोपपत्तेरप्रतिषेधः । नायं नियमप्रतिषेधः । कस्मात् द्रव्ये नियमोपपत्तेः । न ब्रूमो द्रव्याणि गुणं नारभन्ते इति । किंतु द्रव्यमन्यद्द्रव्यमारभमाणं सजातीयमारभते इति द्रव्ये नियम उपपद्यते । येयं पृथिवी सा खलु पृथिव्यन्तरमारभते, एवं आपोऽबन्तरं तेजस्तेजोऽन्तरमिति । न खल्वपि पृथिव्यप आरभते आपस्तेजः तेजः पृथिवीमिति वाय्वाकाशौ खल्वपि सूक्ष्मौ द्रव्यमारभमाणौ स्थूलौ वाय्वाकाशावारभेते, नापरं द्रव्यम् । एतेन कालदिशोर्द्रव्यारम्भकत्वं व्याख्यातम् । आत्मा च क्षेत्रज्ञः क्षेत्रज्ञान्तरमारभते पितापुत्रव्यपदेशात् 'आत्मा वै जायते पुत्रः' इत्यागमवादाच्चारम्भकत्वं गौणं मन्तव्यम् । एतेन मनो व्याख्यातम् । अथापि खलु नायं नियमो द्रव्येण सताऽवश्यं सजातीयं द्रव्यमारब्धव्यमिति । किंतु द्रव्यं द्रव्यमारभमाणं सजातीयमारभते न विजातीयमिति । एतेन गुणस्य गुणारम्भकत्वं व्याख्यातम् । परमात्मनः सर्वोत्पत्तेरनियमः । परस्मात्खल्वात्मनः सर्वमुत्पद्यते, ततो नायं नियमो भवति द्रव्यं द्रव्यान्तरमारभमाणं सजातीयमारभते इति । उपादाननियमोपपत्तेरप्रतिषेधः । द्रव्यं द्रव्यस्योपादानं भवत्सजातीयस्य भवतीत्युपादाननियम उपपद्यते । तस्मादप्रतिषेधः । प्रकृतिर्नाम त्रिगुणात्मकः परस्यात्मनः शक्तिभेदस्त्रिगुणात्मकस्य पृथिव्यादेरुपादानं न साक्षात्परमात्मा । कथं ज्ञायते ? जडचैतन्ययोरुपादानोपादेयभावानुपपत्तेः । यदि वै उपपद्येत, तयोरैकजात्यानियमेन कार्येऽपि चैतन्यं प्रसज्येत । शक्तिभेदश्चाय-

मात्मनो नातिरिच्यते । लोके तथोपलब्धेः अवस्तुत्वाच्च । शक्तिभेदः खल्वसौ वस्तुभूतो न भवति । वस्तुभूतश्चात्मा । जगदप्यवस्तुभूतमेव सद्व्यवहारभूमौ वस्तुवदवभासते । तत्त्वज्ञानार्थत्वाच्छास्त्रस्य मिथ्याज्ञान-विषयाणाममीषां वचनम् । तेषां च वस्तुत्वावस्तुत्वव्यवस्थापनस्य प्रयोज-नाभावाद्व्यावहारिकमेव वस्तुत्वमवलम्ब्य तत्त्वज्ञानमुपदिश्यते । सोऽयं श-क्तिभेदो जगच्च न वस्त्वित्येकेषां दर्शनम् । विपरीतमन्येषाम् । प्रयोजनभा-वात्तु न तत्त्वनिर्णयार्थं प्रवृत्तिराचार्यस्य । चिन्मात्रश्च परमात्मा न परमा-र्थतो गुणादिमानित्यद्रव्यं भवति । यस्त्वपरः क्षेत्रज्ञो नामात्मा सोऽयग्नि-स्फुलिङ्गादिवच्चिन्मात्र एव सन्व्यवहारभूमौ गुणादिमानिव भवतीति द्रव्य-मुच्यते तस्य च तत्त्वज्ञानान्मिथ्याज्ञानोपमर्देनापवर्गनिष्पत्तिर्भवतीति १०॥

## कर्म कर्मसाध्यं न विद्यते ॥ ११ ॥

( उप० ) ननु कर्माणि कुतो न कर्मान्तरमारभन्त इत्यत आह– कर्मेति । विदिरयं ज्ञानार्थो नतु सत्ताभिधायी । सजातीयारब्धद्रव्य-गुणयोरिव कर्मसाध्ये कर्मणि प्रमाणं नास्तीत्यर्थः । इदमत्राकूतम् । कर्म यदि कर्म जनयेत् स्वोत्पत्त्यनन्तरमेव जनयेत् शब्दवत् । तथाच पूर्वकर्मणैव यावत्संयोगिद्रव्येभ्यो विभागे जनिते द्वितीयं कर्म केन सह विभागं जनयेत् विभागस्य संयोगपूर्वकत्वात् संयोगान्तरस्य च तत्राधिकरणेऽनुत्पन्नत्वात् विभागाजनने तु कर्मलक्षणक्षतेः । नच क्षणान्तरे कर्मान्तरं जनयिष्यतीति वाच्यं समर्थस्य क्षेपायोगात् । अपेक्षणीयान्तराभावात् । पूर्वसंयोगनाशक्षणे-ऽपि जनने विभागजनकत्वानुपपत्तिरेव । उत्तरसंयोगोत्पत्तिकालेऽपि जनने तथैव । उत्तरसंयोगोत्पत्त्यनन्तरकालं तु कर्मनाश एव । तथाच सुष्ठूक्तं कर्म कर्मसाध्यं न विद्यत इति ॥ ११ ॥

( विवृ० ) नैतादृशं कर्मेत्याह–कर्मेति । कर्मसाध्यं कर्म न विद्यते । तथाच प्रमाणाभावान्न कर्मणः कर्मारम्भकत्वमिति भावः । अयमभिसं-धिः । क्रिया चेत्क्रियान्तरं जनयेत्तदा स्वोत्पत्तिद्वितीयक्षण एव जनयेत्, शब्दवत् । सत्यां हि सामग्र्यां फलविलम्बस्यादृष्टचरत्वात् । तथाच प्रथ-मकर्मणैव विभागे जनिते द्वितीयं कर्म कतमं विभागं जनयिष्यति विभा-गाजनने च तस्य कर्मत्वानुपपत्तिः संयोगविभागयोरनपेक्षकारणं कर्मेति तल्लक्षणादिति ॥ ११ ॥

( भाष्यम् ) अथापि खल्वेकमुत्क्षेपणमपरमुत्क्षेपणमारभते । लोष्टादेः सुदूरमूर्ध्वमुत्सर्पणं खल्वन्यथा नोपपद्यते । क्षणचतुष्टयावस्थायिनी हि

क्रिया नैका ताव त्कालमवतिष्ठते । एवं सति द्रव्यगुणवत्कर्मणोऽपि सजाती यारम्भकत्वं साधर्म्यं प्रसज्यते इति । यदि वै कर्मसाध्यं कर्म विद्येत, भवेदेतदेवम् । न त्वेतदस्तीत्याह—*कर्म कर्मसाध्यं न विद्यते । न वै खलु किंचित्कर्म कर्मणा साध्यते । कर्म यस्य साध्यं तत् कर्मसाध्यम् । न त्वेवंविधं कर्म । कर्म न कर्मणः कारणमित्यर्थः । कस्मात् ? उभयथाऽप्यनुपपत्तेः न वै सजातीयं कर्म कर्मणा साध्यते, न विजातीयम् । कर्म खल्वन्यत् कर्म समानमसमानं वा साधयदुत्पन्नमेव साधयेत् । विलम्बकारणानुपपत्तेः । तत्र पूर्वेण कर्मणा विभागे निष्पादिते द्वितीयात्कर्मणो नेदानी विभागान्तरनिष्पत्तिः संभवति । स्वप्रतिद्वन्द्विनः संयोगान्तरस्याभावात् । एतेन पूर्वसंयोगनाशो व्याख्यातः। उत्तरस्य पूर्वभावादिति चेन्न विनाशानुपपत्तेः। अथ मन्येत, योऽयमुत्तरः संयोगः पूर्वस्मात्कर्मण उत्पद्यते, सोऽयमपरस्य कर्मणः पूर्वो भवति, तमेवैतन्नाशयदन्यं संयोगमुत्पादयिष्यतीति।तच्च नैवं मन्तव्यम् । कस्मात् ? विनाशानुपपत्तेः । योऽयं पूर्वस्य कर्मण उत्तरः संयोगः स खल्वपरस्य कर्मणः पूर्वो भवन्नपरस्मात् कर्मणो नङ्क्ष्यतीति मन्यते । तच्च नोपपद्यते । यदा खल्वयमुत्तरः संयोगः पूर्वस्मात्कर्मण उत्पद्यते, तदा परस्मात्कर्मणो विनाशेनास्य भवितव्यम् । न त्वेवं भवितुमर्हति । न ह्युत्पद्यते च विनश्यति चेत्येकस्यैकदा द्वयमुपपद्यते । विभागस्य चानुत्पत्तेः यत्कालं वै पूर्वस्मात्कर्मणः पूर्वः संयोगो नश्यति, तत्कालमुत्तरस्मात्कर्मणो विभागेन भवितव्यम्। न त्विदानी विभाग उत्पत्तुमर्हति तत्प्रत्यनीकस्य संयोगस्याभावात् । प्रमाणगम्यश्च हेतुफलभावो न कर्मणोरस्ति । इतरथा कर्मवतो द्रव्यस्य यावन्न द्रव्यान्तरेणावरोधस्तावदनुपरमः कर्मणः प्राप्नोति ।

अवयवकर्मणाऽवयविकर्मोत्पत्तेरप्रतिषेधः । अथापि खल्ववयवस्यैकदेशस्य कर्मणा तदवयविन एकदेशिनोऽप्युपलभ्यते कर्म चलनाख्यम् । न ह्येतदनिमित्तं भवितुमर्हति । उपजनधर्मकाणां हेतुनियमात् । नचान्यदस्ति निमित्तमित्यवयवकर्मैव तत्र निमित्तमिति भवति प्रतिपत्तिः । तस्मात्कर्म कर्मसाध्यं न विद्यते इत्येवं प्रतिषेधो नोपपद्यते इति ।

अस्य प्रतिषेधः । वेगात्तदुत्पत्तिः । वेगात्खल्ववयविनि कर्मोत्पद्यते नावयवकर्मणः । कथं ज्ञायते ? तस्मिन्सत्युपलब्धेरसति चानुपलब्धेः । बलवता वेगेन प्रेर्यमाणस्यैकदेशस्य कर्मोत्पत्तौ तेनैवानुरूपस्य बलव-

तो वेगान्तरस्यैकदेशिन्युत्पत्तेस्तत्रोपलभ्यते कर्म । यदा त्वेकदेशिस्पन्दन-समर्थो वेगो नैव तस्मिन्नाधीयते, तदैकदेशिनि नैवोत्पद्यते कर्मेति । अथापि खल्वेकदेशकर्मोत्पत्तिहेतुरेकदेशिनः कर्मोत्पादयति, न त्वेकदेशकर्मैवेति । समानो हि स हेतुरेकदेशस्यैकदेशिनश्च भवति । यं वै भवानेकदेशकर्मोत्पत्तौ हेतुं मन्यते, सोऽयमविशेषादेकदेशिकर्मोत्पत्तावपि हेतुरिति । तस्मादवयवकर्मणाऽवयविकर्मोत्पत्तेरित्यहेतुः । यच्चोत्क्षिप्तस्य लोष्टादेः सुदूरमूर्ध्वमुत्सर्पणम्, तत्रापि प्रथमकर्मप्रभवाद्वेगात्कर्मसंतानस्योत्पत्तिः, न त्वेकस्मात्कर्मणः कर्मान्तरस्य । यावच्च न वेगस्योपरमस्तावत्कर्मसंतानः प्रवर्तते । तदुपरमे चोपरम्यते । अथाधः पतति । कर्मणः कर्महेतुत्वे न त्वेतदेवं भवतीति । एतेन कर्मणः क्षणद्वयावस्थितावपि ततः कर्मानुत्पत्तिर्व्याख्याता ॥ ११ ॥

## न द्रव्यं कार्यं कारणं च वधति ॥ १२ ॥

( उप० ) गुणकर्मभ्यां द्रव्यस्य वैधर्म्यमाह—नेति । द्रव्यं न स्वकार्यं हन्ति न वा स्वकारणं हन्ति कार्यकारणभावापन्नयोर्द्रव्ययोर्वध्यघातकभावो नास्तीत्यर्थः । आश्रयनाशारम्भकसंयोगनाशाभ्यामेवद्रव्यनाशादिति भावः। वधतीति सौत्रो निर्देशः ॥ १२ ॥

( विवृ० ) इदानी गुणकर्मभ्यां द्रव्यस्य वैधर्म्यमाह—नेति । द्रव्यं स्वस्य कार्यं कारणं वा न हन्तीत्यर्थः । वधतीति सौत्रः प्रयोगः । अयं भावः जन्य-द्रव्यं हि आश्रयनाशादारम्भकसंयोगनाशाद्वा नश्यति नतु द्रव्यस्य कारणं कार्यं वा तन्नाशयतीति ॥ १२ ॥

( भाष्यम् ) न वै द्रव्यं कार्यं द्रव्यान्तरं गुणादिकं च वधति, न खल्वपि कारणम् । द्रव्यं खल्वेकमपरं द्रव्यमारभमाणमानुगुण्येनैवारभते, न कार्यं कारणं च वधतीति ॥ १२ ॥

## उभयथा गुणाः ॥ १३ ॥

( उप० ) गुणस्य कार्यकारणवध्यत्वमाह—उभयथेति । कार्यवध्याः कारणवध्याश्चेत्यर्थः । आद्यशब्दादीनां कार्यव ध्यत्वं चरमस्य तु कारण-वध्यत्वम् उपान्त्येन शब्देन अन्त्यस्य नाशात् ॥ १३ ॥

( विवृ० ) नैतादृशा गुणा इत्याह—उभयथेति । कश्चिद्गुणः स्वकार्येण नाश्यते यथादिमः शब्दो द्वितीयेन शब्देन । कश्चिच्च स्वकारणेन नाश्यते यथोपान्त्यशब्देनान्त्यशब्दः ॥ १३ ॥

( भाष्यम् )*उभयथा गुणाः । इत्थंभावे तृतीया । गुणास्तूभयथा । गुणः क्वचित्कारणं वधति क्वचिन्न वधति । सोऽयं प्रत्यासत्त्यतिरेकात्कारणवधेना-

स्याभिसंबन्धः । हरिद्राचूर्णसंयोगाज्जायमाने द्रव्ये हरिद्रास्थं पीतं चूर्णस्थं शुक्लं च पीतं शुक्लं च रूपमारभते । तत्र हरिद्राचूर्णगताभ्यां तैक्ष्ण्याभ्यामारभ्यमानेन कार्यद्रव्यगतेन तैक्ष्ण्यविशेषेण कारणद्रव्यगतं तैक्ष्ण्यं वध्यते । ततः शुक्लपीतयोरवजयाल्लौहित्यस्याभिव्यक्तिः । कृष्णंत्वल्पत्वान्नाभिव्यज्यते । पृथग्भावे चैतयोर्यथास्वं पूर्वरूपोपलब्धिरिति । एतेन हरिद्राकठिनीसंयोगे लोहित्यानाभिव्यक्तिर्व्याख्याता । तन्तूनां शुक्लं पटस्य शुक्लेन न वध्यते । एवमनियमेन कार्यवध्यत्वं गुणानां सामान्यम् ॥ १३ ॥

## कार्यविरोधि कर्म ॥ १४ ॥

( उप० ) गुणानां कार्यकारणोभयविरोधित्वमुक्त्वा कर्मणः कार्यविरोधित्वमाह—कार्येति । कार्यं विरोधि यस्येति बहुव्रीहिः । स्वजन्योत्तरसंयोगनाश्यत्वात्कर्मणः द्रव्याणां कार्यकारणाविरोधित्वं नियतमेव गुणकर्मणोस्त्वनियमः, आश्रयनाशासमवायिकारणनाशनिमित्तनाशविरोधिगुणानां नाशकत्वस्य वक्ष्यमाणत्वात् ॥ १४ ॥

( विवृ० ) स्वकार्यमेव कर्मणो नाशकमित्याह—कार्यविरोधीति। कार्येणोत्तरसंयोगरूपेण कृतो यो विरोधो नाशस्तद्वत् कर्मेत्यर्थः । अथवा कार्यं विरोधि नाशकं यस्येति बहुव्रीहिः ॥ १४ ॥

( भाष्यम् ) नियमतः पुनः—*कार्यविरोधि कर्म । कार्यस्य विरोधि, कार्यं वा विरोधि यस्य, तथाभूतं कर्म । एकस्य कर्मणः कार्यभूतः संयोगः अपरेण कर्मणा वध्यते । कार्येण चोत्तरसंयोगेन वधः कर्मणामित्येतदमीषां सामान्यम् ॥ १४ ॥

## क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम् ॥ १५ ॥

( उप० ) शिष्याकाङ्क्षानुरोधेन त्रयाणां साधर्म्यमभिधायेदानी त्रयाणां लक्षणमारभमाण आह—क्रियेत्यादि । क्रियाश्च गुणाश्च विद्यन्तेऽस्मिन्निति क्रियागुणवत् । अत्र लक्षणशब्दश्चिह्नवचनः समानासमानजातीयव्यवच्छेदकव्यतिरेकिलिङ्गविशेषवचनश्च लक्ष्यतेऽनेनेतिव्युत्पत्तिबलात् । तत्र क्रियया कर्मणा द्रव्यमिदमिति लक्ष्यते गुणवत्त्वेन च समानासमानजातीयेभ्यो व्यावृत्तं द्रव्यं लक्ष्यते तत्र समानजातीया भावत्वेन गुणादयः पञ्च । असमानजातीयस्त्वभावः । तेन द्रव्यं गुणादिभ्यो भिन्नं गुणवत्त्वात्, यन्न गुणादिभ्यो भिद्यते तन्न गुण वत् यथा

गुणादीति । गुणवत्त्वं यद्यप्याद्यक्षणेऽवयविनि नास्ति तथापि गुणात्यन्ताभावविरोधिमत्त्वं विवक्षितं गुणप्रागभावप्रध्वंसयोरपि गुणात्यन्ताभावविरोधित्वात् । एवं समवायिकारणत्वमपि षट्पदार्थभेदकमेव द्रव्यपदार्थस्य लक्षणम् । नच साध्याप्रसिद्धिर्गुणादिभेदस्य घटादावेव प्रत्यक्षसिद्धत्वात् । नचात्र सिद्धसाधनं घटत्वावच्छेदेनेतरभेदस्य सिद्धत्वेऽपि द्रव्यत्वावच्छेदेन साध्यत्वात्पक्षतावच्छेदकभेदे न सिद्धसाधनं, यथा नित्ये वाङ्मनसे इत्यत्रेति केचित्तन्न । पक्षतावच्छेदकावच्छिन्ने क्वचिदपि साध्यसिद्धौ पक्षताक्षतेस्तथाप्यावश्यकत्वात् । इतिशब्दश्च इत्यादिपरस्तेन सङ्ख्यावत्त्वपरिमाणवत्त्वपृथक्त्ववत्त्वसंयोगवत्त्वविभागवत्त्वान्यपि द्रव्यलक्षणत्वेन संगृह्यन्ते ॥ १५ ॥

( विवृ० ) द्रव्यस्य लक्षणमाह–क्रियागुणवदिति । क्रियाश्च गुणाश्च सन्त्यस्मिन्निति क्रियागुणवत् । अत्र क्रियावत्त्वं कर्मवद्वृत्तिपदार्थविभाजकोपाधिमत्त्वं, नातो गगनादावव्याप्तिः । यद्वात्र क्रियावत्त्वं स्वजन्यसंयोगवत्त्वसंबन्धेन स्वजन्यविभागवत्त्वसंबन्धेन वा योज्यम् । उपस्कारकारास्तु चिह्नत्वरूपलक्षणत्वं क्रियायाः गुणवत्त्वसमवायिकारणत्वयोश्च समानासमानजातीयव्यवच्छेदकत्वरूपलक्षणत्वं लक्ष्यतेऽनेनेति व्युत्पत्तेर्द्विविधलक्षणबोधादित्याहुस्तच्चिन्त्यम्, इतरभेदानुमापकत्वातिरिक्तस्य चिह्नत्वस्य दुर्वचत्वात् । नच द्रव्यत्वसामानाधिकरण्येनेतरभेदानुमापकत्वं द्रव्यचिह्नत्वं तदवच्छेदेनेतरभेदानुमापकत्वं च व्यवच्छेदकत्वं, नातो भागासिद्धिरिति वाच्यं, गन्धवत्त्वादेरपि द्रव्यचिह्नत्वापत्तेः । न चेष्टापत्तिरुद्देशलक्षणपरीक्षाप्रकाशकशास्त्रेषु केनापि मुनिना निबन्धकारेण वा चिह्नरूपलक्षणस्यानभिधानादित्यलमनल्पजल्पनेन । अत्रेतिशब्दो गणसूचकः । तेन संख्यादीनां पञ्चानां प्रत्येकस्यापि लक्षणत्वं सूचितमिति दिक् ॥ १५ ॥

(भाष्यम्) क्रिया परिस्पन्दो गुणश्च रूपादिर्यत्रास्ति तत्क्रियागुणवत् । यच्च समवायिकारणं तत् द्रव्यमिति द्रव्यलक्षणं द्रव्याणां सामान्यम् । परिस्पन्दो नाम स्वभावो द्रव्याणाम् । सेयं पृथिव्यामप्सु तेजसि वायौ च स्थवीयसी सर्वोपलब्धियोग्या । आकाशमपि द्रव्यं द्रव्यान्तरैः पृथिव्यादिभिः संहन्यमानं क्रियावदेव भवत्यादिसर्गे । परतस्त्वनभिव्यक्तक्रियं व्यवहारभूमौ महच्चोपलभ्यमानमक्रियमुच्यते । एतेन दिक्कालौ व्याख्यातौ । आत्मा खल्वक्रियोऽपि मनसः क्रियया क्रियावानिव भवति व्यवहार–

दशायामिति द्रव्यमुच्यते । यदा चोत्पद्यते द्रव्यं तदानीमपि नागुणं भवति । कस्मात् ? स्वाभाविकगुणानुवृत्तेः । स्वाभाविकः खल्वपि गुणो भवत्युत्पाद्यश्च । पृथिव्या गन्धोऽपां रसस्तेजसो रूपमित्येवमादिकः स्वाभाविको गुणोऽनभिव्यक्तोऽपि न शक्यते प्रतिषेद्धुम् । तथैकत्वादयः । यश्चोत्पाद्यो गुणः शुक्लस्य पटस्य लौहित्यं, सोऽयमुपरञ्जनेन पुरुषेणोत्पाद्यते । तत्र योऽसौ स्वाभाविको गुणः, सोऽयमुत्पत्तिकालमपि द्रव्यस्यानुवर्तते । न ह्युत्पत्तिकालेऽपि द्वावेको भवतः एकं नैकं पृथिव्यादीनि वा अपृथगिति । स्वाभाविकेष्वपि गुणेषु द्रव्याणां कारणभावोऽनुमीयते । उपजनधर्मकाणां हेतुनियमात् । सहभवन्तश्चैते द्रव्येषु समवयन्तीति द्रव्यमेषां कारणमुच्यते । तदुक्तम् कारणमिति । द्रव्ये कार्यसमवायादिति । अथाप्युत्पत्तेरुत्तरकालं द्रव्येषु गुणोत्पत्तिरिष्यते, हेतुफलयोः पूर्वापरभावनियमात्; ततः उत्पत्तेरुत्तरकालमेव द्रव्यव्यपदेशस्तदानीमेव च लक्षणप्रवृत्तिः । न ह्युत्पत्तिकाले द्रव्यमद्रव्यं वा शक्यं व्यपदेष्टुम् । तत्रापि तस्य हेतुभावात् । द्रव्यमुत्पद्यते इति तु भाविन्या संज्ञया संव्यवहार इति ॥१५॥

**द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम्॥**

(उप०) द्रव्यानन्तरं गुणानामुद्देशात् तल्लक्षणमाह—द्रव्याश्रयीति । द्रव्यमाश्रयितुं शीलमस्येति द्रव्याश्रयी । एतच्च द्रव्येऽपि गतमत आह—अगुणवानिति । तथापि कर्मण्यतिव्याप्तिरित्यत आह—संयोगविभागेष्वकारणम् । तथापि संयोगविभागधर्माधर्मेश्वरज्ञानादीनामसंग्रहः स्यादत उक्तमनपेक्ष इति । अत्रानपेक्ष इत्यनन्तरं गुण इति पूरणीयम् । संयोगविभागेष्वनपेक्षः सन् कारणं यो न भवति स गुण इत्यर्थः । संयोगविभागादीनां संयोगविभागौ प्रति सापेक्षत्वात् । नित्यवृत्तिनित्यवृत्तिसत्ताव्याप्यजातिमत्त्वं गुणत्वम्। संयोगविभागौ मिलितौ प्रति समवायिकारणत्वासमवायिकारणत्वरहिते सामान्यवति यत्कारणत्वं तद्गुणत्वाभिव्यञ्जकम् । संयोगविभागयोः—प्रत्येकमेव संयोगविभागकारणत्वं न मिलितयोः, धर्माधर्मेश्वरज्ञानादीनां द्वयोर्निमित्तकारणत्वमात्रं न समवायिकारणत्वं नाप्यसमवायिकारणत्वमिति तेषां संग्रहः। यद्वा संयोगविभागसमवायि (कारण ?) त्वासमवायिकारणत्वशून्यत्वं सामान्यसमानाधिकरणं गुणत्वव्यञ्जकं, सामान्यवत्त्वे सति कर्मान्यत्वे च सत्यगुणवत्त्वमेव वा गुणलक्षणम् ॥ १६ ॥

(विवृ०) गुणलक्षणमाह—द्रव्याश्रयीति । द्रव्यरूपो य आश्रयः सोऽस्या-

स्तीति द्रव्यमाश्रयितुं शीलं यस्येति वा द्रव्याश्रयी। यद्यपि द्रव्याश्रितत्वं द्रव्य-कर्मादावतिव्याप्तं तथापि सकलद्रव्यगताश्रयतानिरूपकतावच्छेदकसत्तान्य-जातिमत्त्वस्य लक्षणत्वे तात्पर्यम् । द्रव्यत्वं कर्मत्वं च न तादृशं गगनादौ द्रव्यकर्मणोराश्रयत्वाभावात्। सामान्यत्वं च न जातिः। सत्तायास्तादृश-त्वेऽपि न सत्तान्यत्वमिति। अगुणवानित्यादि अनपेक्ष इत्यन्तमेकं लक्षणम्। अनपेक्ष इत्यनन्तरं गुण इति लक्ष्यपदं पूरणीयम् । संयोगविभागेषु निर-पेक्षः स्वोत्तरभावानपेक्षः सन् कारणं यो न भवति कर्मभिन्न इति फलि-तार्थः। सामान्यवानिति पूरणीयम् । तथाच गुणवद्भिन्नः कर्मान्यो यः सामान्यवान् स गुण इत्यर्थः। द्रव्यकर्मणोर्व्युदासाय विशेषणद्वयं, सामा-न्यादिव्युदासार्थं विशेष्यदलमिति ॥ १६ ॥

( भाष्यम् ) यो द्रव्यमाश्रयति न गुणवान्न चानपेक्षः सन्संयोगविभा-गेषु कारणं भवति, सोऽयं गुणः। कश्च संयोगविभागेष्वनपेक्षः कारणम्? कर्मेत्याह। कर्म संयोगविभागौ जनयन्न किंचिदपेक्षते । संयोगविभागौ त्वपेक्षेते किंचिदिति। द्रव्यं नाम द्रव्यमाश्रयदपि गुणवदेव भवति न त्वगुणवत्। कर्म त्वित्थंभूतमपि कर्मैव। गुणस्तु द्रव्यमाश्रयति न गुण-वान्नो खल्वपि कर्मेति। रूपादयो गुणाः सङ्ख्यादिगुणवन्तोऽपि ये प्रागन-भिव्यक्ताः कार्येष्वभिव्यज्यन्ते, तथाविधगुणवन्तो न भवन्तीत्यगुणवन्तः कथ्यन्ते। एकत्वपृथक्त्वादयः स्वाभाविका गुणा रूपादिषु न शक्याः प्रतिषेद्धुम्। नहि रूपादयः प्रत्येकमेके न भवन्ति न वा पृथक् । एकमे-तद्रूपमेतस्माद्रूपात्पृथगित्युपलब्धेरिति । प्रमाणविशेषाभावाच्च तत्त्वभाक्तव्य-वस्थाऽनुपपत्तिः। द्रव्ये एकत्वादिप्रत्ययस्तत्त्वरूपः गुणे तु भाक्त इति व्यवस्था नोपपद्यते। कस्मात्? प्रमाणविशेषस्याभावात्। आचार्यप्रवृत्ति-र्ज्ञापयति सामान्यादयः खल्वपि न पदार्थान्तराणीति। यदि वै भवेयुः, कर्मवद्व्यतिरेकं तेषामत्राभिदध्यात्॥ १६ ॥

**एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम्॥१७॥**

( उप० ) गुणानन्तरमुद्दिष्टस्य कर्मणो लक्षणमाह–एकेति । एकमेव द्र-व्यमाश्रयो यस्य तदेकद्रव्यं न विद्यते गुणोऽस्मिन्नित्यगुणं संयोगविभागेष्वन-पक्षकारणमिति स्वोत्पत्त्यनन्तरोत्पत्तिकभावभूतानपेक्षमित्यर्थः। तेन समवा-यिकारणापेक्षाया पूर्वसंयोगाभावापेक्षायां च नासिद्धत्वम्। स्वोत्पत्त्यनन्तरोत्प-त्ति कानपेक्षत्वं वा विवक्षितं पूर्वसंयोगध्वंसस्यापि स्वोत्पत्त्यनन्तरानुत्पत्तिकत्वा-त् अभावत्वेन तस्याद्यक्षणसंबन्धाभावात्। नित्यावृत्तिसत्तासाक्षाद्व्याप्यजातिम-

त्त्वं कर्मत्वं,चलतीतिप्रत्ययासाधारणकारणतावच्छेदकजातिमत्त्वं वा, गुणान्यनिर्गुणमात्रवृत्तिजातिमत्त्वं वा, स्वोत्पत्त्यव्यवहितोत्तरक्षणवृत्तिविभागकारणतावच्छेदकजातिमत्त्वं वा। स चायं चलतीतिप्रत्ययसाक्षिकः पदार्थो नाविरलदेशोत्पादनादिनोपपाद्यः क्षणभङ्गस्याग्रे निराकरिष्यमाणत्वात्। लक्षणस्य इतरभेदसाधकताप्रकारः पूर्वोक्त एव ॥ १७ ॥

( विवृ० ) कर्मलक्षणमाह—एकद्रव्यमिति। एकं द्रव्यमाश्रयो यस्य तदेकद्रव्यम्। यथावयविद्रव्यम्। संयोगादिगुणाश्चानेकाश्रितास्तथा किमपि कर्म नानेकाश्रितम्। तथाचानेकाश्रितावृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं कर्मणो लक्षणमित्यर्थः। अगुणमिति गुणवद्भिन्नमित्यर्थः। तथाच गुणवद्भिन्नवृत्तिगुणावृत्तिजातिमत्त्वं पर्यवसितं लक्षणम्। संयोगविभागेषु स्वानन्तरोत्पन्नभावनैरपेक्ष्येण कारणत्वं तृतीयं लक्षणम्। कर्मण उत्तरसंयोगजनने समवायिद्रव्यकालादृष्टेश्वरादिभावापेक्षणात्पूर्वसंयोगनाशापेक्षणाच्च स्वानन्तरोत्पन्नभावेत्युक्तमधिकमन्यत्रानुसंधेयम्। सूत्रे संयोगविभागयोरिति षष्ठ्यन्तपाठो मुक्तावलीकारादिसंमतः ॥ १७ ॥

( भाष्यम् ) यत्खल्वेकमेव द्रव्यमाश्रयति, न गुणो भवति, नवाऽस्ति गुणः प्रागनभिव्यक्तः पश्चादभिव्यज्यमानो यत्र, यच्च संयोगविभागेष्वनपेक्षकारणं, तत् कर्म। पृथिव्याद्याः रूपाद्याः उत्क्षेपणाद्याश्च व्यक्तीरुपादाय त्रिसूत्रीयं व्याख्येया ॥ १७ ॥

## द्रव्यगुणकर्मणां द्रव्यं कारणं सामान्यम् ॥ १८ ॥

( उप० ) इदानी कारणमुखेन त्रयाणामेव साधर्म्यप्रकरणमुपक्रमते। द्रव्येति। समानमेव सामान्यमेकमित्यर्थः। अनयोः समाना मातेतिवत्। एकस्मिन्नेव द्रव्ये समवायिकारणे द्रव्यगुणकर्माणि वर्तन्ते इत्यर्थः। द्रव्यसमवायिकारणकवृत्तिजातिमत्त्वं त्रयाणां साधर्म्यम् ॥ १८ ॥

( विवृ० ) कारणकथनव्याजेन त्रयाणां साधर्म्यमाह—द्रव्यगुणकर्मणामिति। समानमेव सामान्यं स्वार्थिकप्रत्ययात्। एकमित्यर्थः। अनयोः समानमधिकरणमितिवत् द्रव्यगुणकर्मणां त्रयाणामेव समवायिकारणमेकं द्रव्यम्। तथाच द्रव्यसमवायिकारणकवृत्तिपदार्थविभाजकोपाधिमत्त्वं त्रयाणां साधर्म्यमित्यर्थः ॥ १८ ॥

( भाष्यम् ) द्रव्यं द्रव्यमुत्पादयति गुणं कर्म चेति द्रव्यगुणकर्मणां कारणं द्रव्यमित्येतत्तस्य सामान्यम्। महावयविद्रव्यमपि खण्डावयविद्रव्योत्पत्तौ हेतुरिति ॥ १८ ॥

## तथा गुणः ॥ १९ ॥

( उप० ) गुणासमवायिकारणकत्वं त्रयाणां साधर्म्यमाह–तथेति । गुणासमवायिकारणकवृत्तिजातिमत्त्वं त्रितयसाधर्म्यं द्रव्याणां संयोगोऽसमवायिकारणं कार्यगुणानां रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वादीनां सजातीयकारणगुणासमवायिकारणकत्वं बुद्ध्यादीनामात्मगुणानां मनःसंयोगासमवायिकारणकत्वं पार्थिवपरमाणुगुणानामग्निसंयोगासमवायिकारणकत्वं कर्मणां तु वह्न्यादिनोदनाभिघातगुरुत्वद्रवत्वसंस्कारादृष्टवदात्मसंयोगप्रयत्नवदात्मसंयोगाद्यसमवायिकारणकत्वं यथायथं स्वयमूहनीयम् । क्वचिदेकस्यापि गुणस्य त्रयाणां द्रव्यगुणकर्मणामारम्भकत्वं तद्यथा वेगवत्तूलपिण्डसंयोगस्तूलपिण्डान्तरे कर्म करोति द्वितूलकं च द्रव्यमारभते तत्परिमाणं च । क्वचिदेको गुणो द्रव्यगुणावारभते यथा तूलपिण्डसंयोग एव वेगानपेक्षप्रचयाख्यो द्वितूलकं द्रव्यं तत्परिमाणं चारभते ॥ १९ ॥

( विवृ० ) साधर्म्यान्तरमाह–तथेति । द्रव्यगुणकर्मणां त्रयाणां यथा एकं द्रव्यं समवायिकारणं तथा एको गुणोऽसमवायिकारणम् । तथाच गुणासमवायिकारणकवृत्तिपदार्थविभाजकोपाधिमत्त्वं त्रयाणां साधर्म्यमित्यर्थः । भवति हि द्रव्यमवयवसंयोगासमवायिकारणकम् । अवयविगता रूपरसादिगुणा अवयवगतसमानजातीयगुणासमवायिकारणकाः । कर्माणि नोदनाद्यसमवायिकारणकानीति । गुणासमवायिकारणकवृत्तित्वं द्रव्यत्वादिपदार्थविभाजकोपाधित्रिके इति ॥ १९ ॥

( भाष्यम् ) गुणस्तूभयथा[१]–कचिद्द्रव्यगुणकर्मणां कारणं भवति, क्वचिच्च न भवतीति द्रव्यगुणकर्मस्वनियतहेतुभावः सामान्यं गुणानाम् । कारणद्रव्ययोः संयोगः कार्यद्रव्योत्पत्तौ हेतुर्न रूपादिकम् । कारणरूपादिकं कार्यरूपादौ हेतुः । संख्यादिकं तु न तथा । गुरुत्वादयो गुणा उत्क्षेपणाद्युत्पादयन्ति, न रूपादय इति ॥ १९ ॥

## संयोगविभागवेगानां कर्म समानम् ॥ २० ॥

( उप० ) क्वचिदेकस्य कर्मणोऽनेककार्यकारित्वमाह–संयोगेति । कारणमित्यनुषङ्गः । यत्र द्रव्ये कर्मोत्पन्नं तेन समं यावद्द्रव्यं संयुक्तमासीत्तावत्संख्याकान्विभागाञ्जनयित्वा तावतः संयोगानपि पुनरन्यत्र जनयति । वेगं पुनरेकमेव स्वाश्रये करोति । वेगपदं स्थितिस्थापकमप्युपलक्षयति ॥ २० ॥

---

१ ' उभयथा गुणः ' इति चन्द्रकान्तधृतः पाठः ।

( विवृ० ) द्रव्यगुणयोरिव कर्मणोऽप्यनेककार्यकारित्वमाह—संयोगेति । समानमित्यनन्तरं कारणमिति पूरणीयम् । पूर्वसूत्रस्थस्य कारणमित्यस्यानुषङ्गो वा । शरादौ यत् कर्म जायते तद्धनुषः शरस्य विभागमुत्तरदेशेन संयोगं शरे वेगं च जनयतीति भावः ॥ २० ॥

(भाष्यम्) कारणमिति प्रकृतम् । कर्मणा हि किंचित्संयुज्यते विभज्यते च, वेगश्चास्मिन्नाधीयते इति । अथापि खल्ववयवकर्मणा तेषां परस्परं संयोगाद्द्रव्यमुत्पद्यते, तत्र संयोगवत्कर्मापि द्रव्योत्पत्तौ हेतुः, न खल्वन्तरेणावयवसंयोगं द्रव्यस्यात्मलाभः, न चान्तरेण कर्मैतस्योत्पत्तिः तदेवं द्रव्यस्योत्पत्तौ कर्मणो हेतुभावो न शक्यते प्रतिषेद्धुम् । तदेतदपरं सामान्यं कर्मणः प्रसज्यते इतिप्रणाल्या खल्वेतद्द्रव्यस्योत्पत्तौ हेतुः । अतिशयहेतुभावेनातिशयहेतोर्हेतुत्वात् । इत्थमेव हि पाके दहनवदेधसां हेतुभाव इति २०॥

## न द्रव्याणां कर्म ॥ २१ ॥

( उप० ) ननु क्रियावता द्रव्येणारम्भकसंयोगे जनिते तेन च द्रव्यमारब्धं यत्तदपि कर्मजन्यमेव कर्मणस्तत्पूर्ववर्तित्वादत आह—नेति । कर्म द्रव्याणां न कारणमित्यर्थः ॥ २१ ॥

( विवृ० ) द्रव्येषु कर्मणः कारणत्वं नास्तीत्याह—नेति । कारणमित्यस्य पूर्ववत्पूरणमनुषङ्गो वा । कर्मपदार्थो द्रव्याणां कारणं न भवतीत्यर्थः ॥२१॥

( भाष्यम् ) अव्यवधानेन तु—*न द्रव्याणां कर्म व्यतिरेकात्। कर्म द्रव्याणामव्यवधानेन कारणं न भवति । कस्मात् ? व्यतिरेकात् । यदा खल्वात्मलाभो द्रव्यस्य, तदा व्यतिरेकः कर्मणो भवति । संयोगेन खल्ववयवकर्म निवर्तते द्रव्यं चात्मानं लभते । सोऽयं कर्मणो व्यतिरेकः । तस्मान्नैतदव्यवधानेन द्रव्योत्पत्तौ हेतुः । तत्खल्वव्यवधानेन हेतुः, यन्नाम सदेव कार्यस्योत्पत्तौ निमित्तं भवति, न त्वेवं कर्मेति । व्यतिरेकादित्याचार्यप्रवृत्तिर्ज्ञापयति व्यवधानेन कर्मणो द्रव्योत्पत्तौ हेतुभावो न प्रत्याख्यायते इति । साक्षाद्धि तस्य व्यतिरेको न प्रणाल्या । अथापि खलु महतः पटस्यात्मप्रहाणात्परतोऽवस्थितैरेव संयोगैः खण्डस्य पटस्योत्पत्तिर्भवति । सोऽयं कर्मणोव्यतिरेकेऽप्युत्पद्यते । तस्मादवगच्छामः नात्र द्रव्योत्पत्तौ कर्मणो हेतुभाव इति ॥ २१ ॥

## व्यतिरेकात् ॥ २२ ॥

(उप०) कुत एवमत आह—व्यतिरेकादिति । निवृत्तेरित्यर्थः । उत्तरसंयो-

---

१ उत्तरसूत्रेण सहास्यैकसूत्रत्वं चन्द्रकान्तसंमतम् ।

गेन कर्मणि निवृत्ते द्रव्यमुत्पद्यते इति न कर्मणो द्रव्यकारणत्वं विनश्यदवस्थं च कर्म न द्रव्यकारणम् । किं च कर्म द्रव्यस्यासमवायिकारणं वा भवेन्निमित्तकारणं वा । न तावदाद्यः,द्रव्यस्यासमवायिकारणनाशनाश्यत्वेन अवयवकर्मनाशादेव द्रव्यनाशापत्तेः । न द्वितीयः, महापटनाशेऽवस्थितसंयोगेभ्य एव खण्डपटोत्पत्तौ निष्कर्मणामेवावयवानां द्रव्यारम्भदर्शनाद्व्यभिचारात् ॥ २२ ॥

( विवृ० ) नन्ववयवसंयोगजनकं कर्म कुतो न द्रव्यकारणमित्यत आह–व्यतिरेकादिति । व्यतिरेकात् द्रव्योत्पत्तिसमये कर्मणोऽभावाद् यत् कर्मावयवारम्भकसंयोगं जनयति संयोगस्य तन्नाशकत्वेन संयोगोत्तरं द्रव्योत्पत्तिकाले तस्य नाशात् । नच कर्मणः कार्यकालेऽसत्त्वेऽपि तत्पूर्वक्षणवृत्तित्वात्कारणत्वं निराबाधमिति वाच्यम् । महापटनाशानन्तरं खण्डपटाद्युत्पत्तेः पूर्वक्षणेऽपि तदवयवेषु कर्मणोऽभावात् । वस्तुतः कर्मजनितारम्भकसंयोगाधीनद्रव्येऽपि न कर्म कारणं संयोगेनान्यथासिद्धत्वादिति ध्येयम् ॥ २२ ॥

## द्रव्याणां द्रव्यं कार्यं सामान्यम् ॥ २३ ॥

( उप० ) बहूनामेकस्यारम्भकत्वमुक्त्वा इदानीमेकस्मिन्कार्ये बहूनामारम्भकत्वमाह–द्रव्याणामिति। द्रव्ये च द्रव्याणि चेति द्रव्याणि तेषां द्रव्याणाम् । तत्र द्वाभ्यां तन्तुभ्यां द्वितन्तुकः पटो बहुभिरपि तन्तुभिरेकः पट आरभ्यते । नन्वेकतन्तुकोऽपि पटो दृश्यते यत्रैकेनैव तन्तुना तानप्रतितन्त्रौ (तानौ ?) भवत इति चेन्न। तत्रैकस्य संयोगाभावेनासमवायिकारणाभावात्पटानुत्पत्तेः । नचांशुकतन्तुसंयोगोऽसमवायिकारणमवयवावयविनोरयुतसिद्धत्वेन संयोगाभावात् आरभ्यारम्भकभावानभ्युपगमान्मूर्तानां समानदेशताविरोधात् । दृश्यते तावदेवमिति चेन्न तत्र वेमाद्यभिघातेन महावयविनस्तन्तोर्नाशात्खण्डावयविनानातन्तूत्पत्तौ तेषामन्योन्यसंयोगात्पटोत्पत्तेः । वस्तुगत्या तत्र नानाभूतेषु तन्तुषु एकत्वाभिमानात् ॥ २३ ॥

( विवृ० ) इदानीमेकस्यानेककारणकत्वमाह–द्रव्याणामिति । बहूनामवयवरूपद्रव्याणामवयविरूपमेकं द्रव्यं कार्यमित्यर्थः । सामान्यशब्दस्य पूर्वोक्तरीत्या एकबोधकत्वात् । इदमुपलक्षणम् । द्वयोरपि द्रव्ययोरेकं द्रव्यं कार्यमित्यपि द्रष्टव्यम् । असमवायिकारणसंयोगाभावादेकस्यावयवस्य नावयव्यारम्भकत्वमिति ॥ २३ ॥

( भाष्यम् )कारणसामान्यमुक्त्वा कार्यसामान्यमभिधीयते,—*द्रव्याणां द्रव्यं कार्यं सामान्यम् । द्रव्याणां द्रव्यमित्येवं कार्यं सामान्यम् । द्रव्यकारणभाववद्द्रव्यकार्यभावोऽपि सामान्यं द्रव्याणाम् । अनेकेषामवयवद्रव्याणामेकमवयविद्रव्यं कार्यमिति । यत्र महतैकेन तन्तुना तानप्रतितानाभ्यां पटस्योत्पत्तिस्तत्राप्यनेकेभ्यस्तन्त्वंशेभ्य एव पट उत्पद्यते, न त्वेकस्मात्तन्तोः । तानप्रतितानानुपपत्तेश्च न कल्पान्तरम् । न खल्वेकस्य तन्तोस्तानप्रतितानेउपपद्येते । यो हि तन्यते यश्च प्रतितन्यते सोऽयं हेतुः । अवयवा एव तन्तोस्तन्यन्ते प्रतितन्यन्ते चेति तेषामेव हेतुभावो न त्ववयविनस्तन्तोरिति ॥ २२ ॥

## गुणवैधर्म्यान्न कर्मणां कर्म ॥ २४ ॥

( उप० ) ननु यथा द्रव्याणां द्रव्यं कार्यं गुणानां च गुणस्तथा किं कर्मणामपि कर्म कार्यमित्यत आह—गुणेति । कार्यमिति शेषः। द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यमुक्तं तत्र कर्म कर्मसाध्यं न विद्यते इति सूत्रेण कर्मणां कर्मजनकत्वं प्रतिषिद्धमेव तदिहानूद्यते इति भावः ॥ २४ ॥

( विवृ० ) एकस्मिन्कर्मण्यनेककर्मजन्यत्वं नास्तीत्याह—गुणेति । कर्मेति कार्यमिति शेषः । ननु गुणकर्मणोर्द्रव्यसमवेतत्वाविशेषाद् गुणानां गुणजन्यत्ववत् कथं न कर्मणां कर्मजन्यत्वमित्यत उक्तं गुणवैधर्म्यादिति । यथा द्रव्यसमवेतत्वरूपं गुणसाधर्म्यं कर्मणि तथा कर्मत्वादिरूपं गुणवैधर्म्यमपीति सजातीयानारम्भकत्वमपि वैधर्म्यान्तरं कर्मणीति भावः । एतच्च पूर्वोक्तमपि स्पष्टार्थमुक्तम् ॥ २४ ॥

( भाष्यम् ) गुणोऽपि द्रव्यमाश्रयति कर्मापि । तत्र यथा गुणः कार्यं गुणानां, तत्सामान्यात्कर्मापि कार्यं कर्मणां प्राप्नोति । तदेतदाचार्यः प्रत्याचष्टे *गुणवैधर्म्यान्न कर्मणां कर्म । न वै खलु कर्मणां कार्यं कर्म । कस्मात्?गुणवैधर्म्यात् । गुणसाधर्म्यात्प्राप्तं गुणवैधर्म्यात्प्रतिषिध्यते । कारणगुणा रूपादयः कार्यगुणं रूपादिकमारभन्ते । न त्ववयवकर्मावयविनि कर्मारभते । यदि वै आरभेत, अवयवकर्मोत्पत्तावयविनि कर्मानुत्पत्तिर्नोपपद्यते । तदेतत्कृतभाष्यं पुरस्तादिति । तस्मादनैकान्तिको हेतुः । पुरस्तात्कारणसामान्यमत्र तु कार्यसामान्यमाश्रित्योक्तम् । एवं परत्र ॥ २३ ॥

## द्वित्वप्रभृतयः संख्याः पृथक्त्वसंयोगविभागाश्च ॥ २५ ॥

( उप० ) इदानीं व्यासज्यवृत्तीनां गुणानामनेकद्रव्यारभ्यत्वं दर्श-

यन्नाह–द्वित्वेति। अनेकद्रव्यारभ्या इति शेषः । द्वित्वादिसमभिव्याहृतं पृथक्त्वपदमपि द्विपृथक्त्वादिपरम् । एवं च द्वित्वादिकाः परार्धपर्यन्ताः संख्या द्विपृथक्त्वादीनि च संयोगा विभागाश्च द्वाभ्यां बहुभिश्चैव द्रव्यैरारभ्यन्ते इत्यनेकवृत्तित्वममीषां तच्च समवाय्यन्योन्याभावसामानाधिकरण्यम् ॥ २५ ॥

( विवृ० ) केषांचित् गुणानामप्यनेकद्रव्यारब्धत्वमित्याह–द्वित्वेति । अत्र पृथक्त्वपदं द्विपृथक्त्वादिपरम् । तथाच द्वित्वादिपरार्धपर्यन्ताः संख्या द्विपृथक्त्वादीनि संयोगा विभागाश्च अनेकद्रव्यारब्धा इत्यर्थः ॥ २५ ॥

( भाष्यम् ) कार्यं सामान्यमिति प्रकृतम् । केषाम् ? अनन्तरनिर्दिष्टानां द्रव्यगुणकर्मणाम् । नचेदेवम्, संनिकर्षातिरेकात्कर्मणामेव प्राप्नोति । न त्वेवं भवितुमर्हति । कस्मात् ? उपलब्ध्यविशेषात् । तस्माद्द्वित्वादयः संख्याः पृथक्त्वसंयोगविभागाश्चैते द्रव्यगुणकर्मणां कार्यं सामान्यम् । विप्रतिपत्तेर्द्वित्वप्रभृतिवचनम् । सप्तमे त्वेकत्वचिन्ता वर्त्स्यतीति । द्वे द्रव्ये त्रीणि द्रव्याणि द्वौ गुणौ त्रयो गुणाः द्वे रूपे त्रीणि रूपाणि द्वे कर्मणी त्रीणि कर्माणि द्वे उत्क्षेपणे त्रीण्युत्क्षेपणानीत्यादि यथाविषयमुपलब्धिरुत्प्रेक्षितव्या । संयोगः खल्वपि, गुणाः कर्माणि च द्रव्यैरुपश्लिष्यन्ते । तानि च परस्परम् । उपश्लेषो हि संयोगः । सम्यक् युज्यते अनेनेति । सोऽयमुपश्लेषो द्रव्याणामिव गुणकर्मणोरपि कार्यमिति । तथा, विभक्तानि द्रव्याणि विभक्ता गुणाः विभक्तानि कर्माणीति। विभागोऽप्यमीषां कार्यमिति॥२४॥

## असमवायात्सामान्यकार्यं कर्म न विद्यते ॥ २६ ॥

( उप० ) नन्ववयविद्रव्याणां गुणानां चोक्तानां यथा व्यासज्यवृत्तित्वं तथा कर्मणामपि किं न स्यादत आह–असमवायादिति । असमवायादित्यत्र द्रव्ययोर्द्रव्येष्विति योज्यं, तथाच न द्रव्ययोरेकं कर्म समवैति न वा द्रव्येष्वेकं कर्म समवैति तेन सामान्यस्य समुदायस्य कार्यं कर्म न विद्यते । अत्रापि विदिर्ज्ञानार्थो न सत्तावचनः । यदि कर्म व्यासज्यवृत्ति स्यादेकस्मिन्द्रव्ये चलति द्वयोर्द्रव्ययोर्बहुषु च द्रव्येषु चलतीति प्रत्ययः स्यात् । नचैतत् । तस्मान्न कर्म व्यासज्यवृत्तीत्यर्थः । ननु शरीरतदवयवानां कर्म शरीरतदवयवैर्बहुभिरारभ्यत एव कथमन्यथा शरीरे चलति करचरणादावपि चलतीति प्रत्ययः, एवमन्यत्राप्यवयविनीति चेन्न । अवयविकर्मसामग्र्या अवयवकर्मसामग्रीव्याप्तत्वात् । तथोपलब्धेः नतु वैपरीत्यं, नह्यवयवे चलति सर्वत्रावयविनि चलतीतिप्रत्ययः । अन्यथा कारणाकार-

णसंयोगात्कार्याकार्यसंयोगोऽपि न स्यात्कारणकर्मणैव कार्यस्यापि संयोगोपपत्तेः ॥ २६ ॥

(विवृ०) कर्मण्यनेकारब्धत्वं नास्तीत्याह—असमवायादिति । असमवायात् द्वयोर्बहुषु च समवायेन कर्मणोऽभावात्सामान्यकार्यमनेकारब्धं कर्म न विद्यते नास्तीत्यर्थः । तथाच प्रतिद्रव्यं भिन्नं भिन्नं कर्म अनुभवसिद्धम् ॥ २६ ॥

(भाष्यम्) यथा खलु द्वित्वादिकं द्रव्यगुणकर्मणां कार्यं, तथा कर्मापि द्रव्यगुणकर्मणां कार्यं स्यादिति दृष्टान्तबलात्पुनः प्रत्यवतिष्ठमानं प्रत्याह, असमवायात्सामान्यकार्यं कर्म न विद्यते । समानानां द्रव्यगुणकर्मणां कार्यं न भवति कर्म । कस्मात् ? असमवायात् । द्वित्वादिकं हि द्रव्येषु गुणेषु कर्मसु च समवैति । समवायाद्धि कारणभावः । तदुक्तम्—कारणमिति द्रव्ये कार्यसमवायादिति । न त्वेवं कर्म । न खल्वेतद्द्रव्य इव गुणे कर्मणि च समवैति । यदि वै समवेयात्, द्वौ गुणौ द्वे कर्मणी इतिवद् गुणो गच्छति कर्म गच्छतीति प्रतीयेत । न त्वेवम् । तत्र यादृगिदं भवति रूपवज्ज्ञानमपि पृथिव्या गुणः न वाऽऽत्मनो गुण इति, तादृगेतद्भवति द्वित्वादिवत्कर्मापि द्रव्यगुणकर्मणां कार्यमिति । सोऽयं दृष्टान्तोऽस्ति हेतुस्तु नास्तीति ॥ २५ ॥

## संयोगानां द्रव्यम् ॥ २७ ॥

(उप०) पुनर्बहूनामेकं कार्यमाह—संयोगानामिति । बहूनां संयोगानां द्रव्यमेकं कार्यमित्यर्थः । निःस्पर्शानां द्रव्याणामन्त्यावयविनां विजातीयद्रव्याणां च ये संयोगास्तान्विहायेति द्रष्टव्यम् ॥ २७ ॥

(विवृ०) पुनरनेकारब्धं कार्यमाह—संयोगानामिति । बहूनां तन्त्वादिसंयोगानां पटादिरूपमेकं द्रव्यं कार्यमित्यर्थः ॥ २७ ॥

(भाष्यम्) कार्यं सामान्यम् । सूक्ष्मेभ्यः पृथिव्यादिभ्यः परमात्मना संसृज्यमानेभ्यः स्थूलानि पृथिव्यादीन्युत्पद्यन्ते, अनेकेभ्यस्तन्त्वादिसंयोगेभ्यश्चैकं पटादिकमित्यादि यथाविषयं वेदितव्यम् ॥ २६ ॥

## रूपाणां रूपम् ॥ २८ ॥

(उप०) इदानी बहूनां गुणानामेकं गुणकार्यमाह—रूपाणामिति । रूपमेकं कार्यमित्यन्वयः । रूपपदमुभयमपि लाक्षणिकम् । अजहत्स्वार्था चेयं लक्षणा । कारणैकार्थसमवायप्रत्यासत्त्या जन्यजनकभावाश्रयत्वं च शक्यलक्ष्यसाधारणो धर्मस्तेन रूपरसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वैकपृथक्त्वानि संगृह्यन्ते । एते हि कारणे वर्तमानाः कार्येषु समानजातीयमेकमेव गुणमा-

रभन्ते। द्विधा ह्यसमवायिकारणानां गतिः। केचित् कारणैकार्थप्रत्यासत्त्या जनयन्ति। कारणमिह समवायिकारणम्, तच्च जन्यस्य रूपादिलक्षणस्य कार्यस्य तेन रूपादिलक्षणकार्यस्य यत् समवायिकारणं घटादि तेन सह कपाले वर्तमानं रूपं कारणैकार्थसमवायेन घटरूपमारभते। एवं रसाद्यपि। कचित्तु कार्यैकार्थप्रत्यासत्त्याऽसमवायिकारणत्वं यथा—कारणमपि शब्दो नभसि कार्यमपि शब्दान्तरमारभते नभस्येवं रूपाद्यपि पार्थिवपरमाणावग्निसंयोगेन कार्यैकार्थसमवायप्रत्यासत्त्या जन्यते ॥ २८ ॥

(विवृ०) एकस्य गुणस्यानेकगुणजन्यत्वमाह—रूपाणामिति। रूपपदे रसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वैकत्वैकपृथक्त्वपरिमाणवेगस्थितिस्थापकगुरुत्वानामप्युपलक्षके। तथाच समवायिकारणगतैर्बहुभी रूपादिभिरवयविगतमेकं रूपादिकं जायत इत्यर्थः॥ २८ ॥

(भाष्यम्) रूपाणां लोहितशुक्लकृष्णानां तेन तेन रूपेण संसृज्यमानानां पीतादिकमेकं रूपं कार्यं सामान्यम्। कृष्णशुक्ललोहितानि पृथिव्यप्तेजसां रूपाणि प्रकृतिभूतानि। तेभ्य एव तारतम्येन संसृज्यमानेभ्यपीतादीनामुत्पत्तिरिति। बहूनां चावयवरूपाणामेकमवयविरूपं कार्यमिति॥ २७॥

गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम् ॥ २९ ॥

(उप०) एकस्य कर्मणोऽनेककार्यत्वमाह—गुरुत्वेति। उत्क्षेपणमेकं कार्यममीषामित्यर्थः। अत्र गुरुत्वस्य हस्तलोष्टादिवर्तिनो निमित्तकारणत्वं प्रयत्नवदात्मसंयोगस्यासमवायिकारणत्वं हस्तनिष्ठोत्क्षेपणस्य, लोष्ठनिष्ठोत्क्षेपणस्य तु हस्तनोदनमसमवायिकारणम्। अत्राप्युत्क्षेपणपदमवक्षेपणादावपि लाक्षणिकम् ॥ २९ ॥

(विवृ०) इदानीमेकस्य कर्मणो बहुकारणकत्वमाह—गुरुत्वेति। एकं कार्यमिति शेषः। उत्क्षेपणपदमवक्षेपणादेरप्युपलक्षकम्। उत्क्षेप्यस्य गुरुत्वम् उत्क्षेप्तुः प्रयत्नः उत्क्षेप्यहस्तनोदनं च एते त्रय एवोत्क्षेपणहेतवः, अतः कर्मण्यप्यनेककारणत्वं निराबाधमिति भावः॥ २९ ॥

(भाष्यम्) कार्यं सामान्यम्। गुरुणो लोष्टादेः प्रयत्नेन हस्तसंयोगेन चोत्क्षेपणमुत्पद्यते। अन्यदपेक्ष्य लघ्वपि भवत्यन्यदपेक्ष्य गुर्विति सर्वत्रोत्क्षेपणं गुरुत्वकार्यमिति॥ २८॥

[१]संयोगविभागाश्च कर्मणाम् ॥ ३० ॥

(उप०) ननु मूर्तगुणानां कार्याणां कारणगुणपूर्वकत्वं स्वाश्रयगुणपू-

१. संयोगविभागवेगाश्चेति चन्द्रकान्तधृत. पाठ.।

वैकत्वं चोक्तं द्रव्यकर्मणोश्च न कर्म कारणमित्युक्तम् । तथाच कर्मण: किमपि न कार्यमित्यायातम् । तथाचातीन्द्रियाणां सूर्यादिगतीनामनुमानमपि दुर्लभं लिङ्गाभावादत: संयोगविभागवेगानां कर्मेति सूत्रोक्तमेव स्मारयन्नाह—संयोगेति । जन्या इति शेष: । व्यक्त्यभिप्रायेण बहुवचनम् । संस्कारोऽप्युपलक्षणीय: ।। ३० ।।

( विवृ० ) ननु यथा धूमादिरूपकार्येण वह्न्यादिकारणानामनुमानं तथाऽतीन्द्रियाणां चन्द्रसूर्यादिगतीनां केन लिङ्गेनानुमानं कर्मण: कार्याभावादित्यत: पूर्वोक्तानि कर्मकार्याणि स्मारयति—संयोगेति । चकारो वेगस्थितिस्थापकयो: समुच्चायक: । तथाच एत एव कर्मणो जायन्ते इति कर्मणो न कार्यदारिद्र्यमिति भाव: ।। ३० ।।

( भाष्यम् ) कार्यं सामान्यमिति प्रकृतम् । कर्मणा खल्वपरेण देशेन किंचित्संयुज्यते, पूर्वस्माद्देशाद्विभज्यते, वेगश्चास्योत्पाद्यते इति ।। २९ ।।

**कारणसामान्ये द्रव्यकर्मणां कर्माकारणमुक्तम् ।। ३१ ।।**

( उप० ) ननु द्रव्यकर्मणी न कर्मकार्ये इति पूर्वमुक्तम्, संयोगविभागौ तु संयोगविभागकार्यावेव तथाचेदानीं कर्मण: कारणत्वाभिधानं विरुद्धमित्यत आह—कारणेति । कारणसामान्यपदेन तत्प्रकरणमुपलक्ष्यते । तेन कारणसामान्याभिधानप्रकरणे द्रव्यकर्मणी प्रति कर्मणोऽकारणत्वमुक्तं न तु सर्वथाप्यकारणमेव कर्मेति विवक्षितं, येन संयोगविभागाश्च कर्मणामिति सूत्रं व्याहन्येतेति भाव: ।। ३१ ।।

इति शाङ्करे वैशेषिकसूत्रोपस्कारे प्रथमाध्यायस्य प्रथमाह्निकम् ।

(विवृ०) ननु संयोगो यदि कर्मजन्यस्तदाऽवयवसंयोगद्वाराऽवयवकर्मणोऽवयविद्रव्यं प्रति वह्निनोदनद्वारा वह्निकर्मण: परमाण्वादिक्रियां प्रति च कारणत्वं दुरपह्नवं यथा स्वजन्यसंयोगद्वारा चाक्षुषादिकं प्रति चक्षुरादे: कारणत्वं तथाच कर्मणो यद्द्रव्यकर्माकारणत्वमुक्तं तत्किं द्रव्यं प्रति क्रियां प्रति च कर्मणो नासमवायिकारणत्वमित्येतत्परमित्यत आह—कारणेति । द्रव्यकर्मणामकारणं कर्मेति यत्पूर्वमुक्तं तत्कारणसामान्ये कारणसामान्यपरमित्यर्थ: । तथाच पूर्वं द्रव्यकर्मकारणसामान्यभिन्नत्वमेव कर्मण्युक्तम्, नतु तदसमवायिकारणान्यत्वमवयवकर्मणो वह्निकर्मणश्चावयवसंयोगेन वह्निनोद-

नेन चान्यथासिद्धत्वात् । चक्षुरादेस्तु चाक्षुषादिकं प्रति संयोगेन नान्यथा-सिद्धत्वं व्यापारेण व्यापारिणोऽनन्यथासिद्धत्वादिति भावः ॥ ३१ ॥

इति श्रीजयनारायणतर्कपञ्चाननकृतायां कणदसूत्रविवृतौ
प्रथमाध्यायस्य प्रथमाह्निकम् ।

( भाष्यम् ) तदेवं गुणेषु केषांचित्कारणं भवदपि–*कारणसामान्ये द्रव्यकर्मणां कर्माकारणमुक्तम् । द्रव्यकर्मणामकारणमिति कारणसामान्य एवोक्तमित्युक्तं द्रव्यगुणकर्मणां सामान्यमिति ॥ ३० ॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये प्रथमाध्यायस्याद्यमाह्निकम् ।

---

# प्रथमाध्याये द्वितीयाह्निकम् ।

## कारणाभावात्कार्याभावः ॥ १ ॥

( उप० ) नन्वनेन प्रघट्टकेन द्रव्यादीनां त्रयाणां पदार्थानां कार्यैकत्व-घटितं कारणैकत्वघटितं च साधर्म्यमुक्तं तच्चानुपपन्नं कार्यकारणभावस्यै-वासिद्धेरित्यत आह–कारणाभावादिति । दृश्यते हि मृच्चक्रसलिलकुलाल-सूत्रादौ समवहितेऽपि दण्डाभावाद्धटाभावः भूसलिलादौ समवहितेऽपि बीजाभावादङ्कुराभावः । स च दण्डघटयोर्बीजाङ्कुरयोर्वा कार्यकारणभावम-न्तरेणानुपपन्नः । अन्यथा वेमाद्यभावेऽपि घटाभावः शिलाशकलाद्यभावे-ऽप्यङ्कुराभावः स्यात् । किंच घटपटादीनां कादाचित्कत्वमनुभूयते तदपि हेतुफलभावमन्तरेणानुपपन्नं, नहि किंचित्कालासत्त्वे सति किंचित्कालस-त्त्वरूपं कादाचित्कत्वं भावानां कारणापेक्षामन्तरेण संभवति । तदा हि स्यादेव न स्यादेव वा नतु कदाचित्स्यात् । नहि भावो न भवत्येव, नाप्यहेतोर्भवति, नाप्यकस्मादेव भवति, न वा निरुपाख्यादेव शशविषा-णादेर्भवति । किंतु दण्डवेमादेः सोपाख्यस्यावधेर्घटपटादौ कार्ये दर्शनादव-धिस्तु कारणमेव । एवं कार्यकारणभावाभावे प्रवृत्तिनिवृत्ती न स्याताम् । तथाच निरीहं जगज्जायेत । नहीष्टसाधनताज्ञानमन्तरेण प्रवृत्तिरनिष्टसा-धनताज्ञानमन्तरेण निवृत्तिः ॥ १ ॥

( विवृ० ) ननु पूर्वाह्निके कार्यत्वघटितं कारणत्वघटितं च साधर्म्यमुक्तं तत्कथं संगच्छते कार्यकारणभावस्यासिद्धत्वेन शशविषाणसमानत्वादि-त्यतः कार्यकारणभावमेव व्यवस्थापयति–कारणाभावादित्यादिना । दण्डा-भावाद्धटाभाव इत्यादिप्रतीतौ हि दण्डाभावे घटाभावप्रयोजकत्वं भासते ।

तच्च दण्डघटयोः कार्यकारणभावं विना नोपपद्यते। अन्यथा दण्डाभावात्प-टाभाव इत्यपि प्रतीत्यापत्तेः। एवं घटादिकार्याणां किंचित्कालासत्त्वे सति किंचित्कालसत्त्वरूपं कादाचित्कत्वमनुभूयते तदपि घटादेः कारणापेक्षा-मन्तरेण न संभवति। अन्यथा घटादिः सर्वदैव स्यात्किंवा सर्वदैव न स्या-न्न तु कदाचित्स्यात्। अपि च कार्यकारणभावाभावे प्रवृत्तिर्निवृत्तिश्च लो-कानां न स्यात्। तथाच निरीहं जगदापद्येत। नहि प्रवृत्तिरन्तरेणेष्टसा-धनताज्ञानं न वा विनाऽनिष्टसाधनताबुद्धिं निवृत्तिः। सांख्यास्तु—'मृदा-दौ पुरा तिरोभूतः सन्कलसादिराविर्भवति पुनर्मुद्गरप्रहारादिना तत्रैव तिरोभूतस्तिष्ठतीत्याविर्भावतिरोभावावेवोत्पादविनाशौ नतु वास्तवौ। तथा सति कथं न तन्तुतः कलसोत्पादः। न चोत्पत्तेः पूर्वं कार्याणां कारणे सत्त्वमप्रामाणिकमिति वाच्यम् 'सदेव सौम्येदमग्र आसीत्' इत्यादि-श्रुतेरेव प्रमाणत्वादित्याहुः, तच्चिन्त्यम्। आविर्भावस्याविर्भावस्वीकारेऽनव-स्थाप्रसङ्गात्। आविर्भावस्य पूर्वमसत्त्वेऽसदुत्पत्तिस्वीकारस्यावश्यकत्वेन घ-टादीनां पूर्वं सत्त्वाङ्गीकारस्य निर्युक्तिकत्वादिति कारणत्वं चानन्यथासिद्ध-नियतपूर्ववर्तिजातीयत्वं सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वं स्वरूपसंब-न्धविशेषोऽतिरिक्तपदार्थो वेति॥ १॥

(भाष्यम्) उक्ता द्रव्यगुणकर्माख्याः पदार्थाः। सामान्यं चैषाम-भिहितम्। विशेषस्तु तत्प्रत्यनीकभावात्प्रतिपत्तव्यः। तावता तत्त्वज्ञानोत्पत्तिः पर्याप्ता। तत्त्वज्ञानाच्च निःश्रेयसम्। सोऽयमपवर्गः। स खलु किंस्वरूपः कथं च प्रादुर्भवतीत्येतदिदानीमभिधीयते,—*कारणाभावात्कार्याभावः। कारणस्य मिथ्याज्ञानादेरभावात्कार्यस्य दोषादेरभावः। आत्मा खल्वपेत-धर्मा स्वभावशुद्धस्तत्त्वम्। कामादयः सुखादयश्च मनसो धर्मा अनात्मन्यात्माभिमानादनादिमिथ्याज्ञानादात्मन्यवभासन्ते, लौहित्यादय इव स्फटिके दर्पणमालिन्यादय इव मुखे। सोऽयमात्माऽभेदेन मनः प्रति-संदधानः शरीरादिकं च सर्वार्थकारिणमुपकारभावादात्मानं मन्यमानः प्रियाप्रियरहितोऽपि शरीरादेरनुकूलं प्रतिकूलं चार्थमर्थयते द्वेष्टि च। अथ प्रव-र्तते। प्रवर्तमानो धर्ममभ्युदयसाधनमधर्मं चानभ्युदयहेतुमाचरतीव। आच-रंस्तत्फलैः सुखदुःखैर्मनोगतैरेव सुखिनं दुःखिनं चात्मानं मन्यते। सो-ऽयमित्थमनवरतं धर्माधर्मफलोपभोगार्थं भवति। भूत्वा म्रियते। मृत्वा पुनर्भ-वति। पुनर्भूत्वा पुनर्म्रियते। इत्येवमनिशमावर्तमानो न स्वस्तिभावमापद्यते।

अथ विषयदोषदर्शी विरज्यते । विरक्तस्तद्धानमिच्छति । इच्छंस्तदुपायमवधारयति। अवधार्य तत्त्वज्ञानाय यतते । यतमानस्तत्त्वं जानाति । तत्त्वज्ञानं च दीर्घकालादरनैरन्तर्यसेवितं दृढभूमिः । एतस्मात् तत्त्वज्ञानात् प्रत्यनीकं मिथ्याज्ञानमपैति । मिथ्याज्ञानस्य चात्मन्यनात्मबुद्धेरनात्मन्यात्मबुद्धेश्चापगमे हेत्वभावात् दोषा अपयन्ति प्रवर्तनालक्षणाः । परस्येव शरीरादेरपि सुखदुःखाभ्यां न हृष्यति नचोपतप्यते । दोषस्यापाये प्रवृत्तिर्वाग्बुद्धिशरीरारम्भोऽपैति । इच्छाद्वेषपूर्विका हि धर्माधर्मप्रवृत्तिः । स खल्वयमात्मानं तत्त्वतो जानानः कस्य कामाय धर्माधर्मयोः प्रवर्तेत । प्रवृत्त्यपाये च कारणाभावाज्जन्मापैति । जन्मनोऽपाये दुःखसन्तानोऽत्यन्तमुच्छिद्यते । कारणाभावादन्यस्य दुःखस्योत्पत्तिर्न भवति । आत्मनश्च स्वरूपेणावस्थानम् । सोऽयमपवर्गः।'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः'—इति तन्त्रान्तरसमाचाराच्चैतदेवं प्रतिपत्तव्यमिति । कथं पुनरस्य मिथ्याज्ञानमुदेतीत्यत्र प्रयोजनाभावादप्रवृत्तिराचार्यस्य । तत्त्वज्ञानार्थं हि शास्त्रस्यारम्भः । तच्च यथावस्थितानेव मिथ्याज्ञानवतः प्राणभृद्भेदानधिकृत्योपदिश्यते । तत्त्वज्ञानस्य चोत्पत्तौ न मिथ्याज्ञानमवतिष्ठते । तदपायादपवर्गनिष्पत्तिरिति । नात्र मिथ्याज्ञाननिमित्तावगमस्योपयोगः । मिथ्याज्ञाननिमित्तमनवगच्छतोऽपि दशमस्य तत्त्वज्ञानोत्पत्त्या मिथ्याज्ञानोपरमेन दुःखनिवृत्तेरुपलब्धेः । न वै खल्वयमपवर्गो नामार्थनीयः पुरुषस्य । कुतः ? सुखोपरमादप्रवृत्तेः । सुखं खल्वनुकूलवेदनीयं प्राणभृतामपवर्गे लुप्यते इति न तत्र प्रवृत्तिः पुरुषस्य । को हि बुद्धिमान्सर्वसुखोपरमलक्षणं भीष्ममपवर्गमर्थयेत् । न । दुःखोपरमात्प्रवृत्तेः । उच्चावचान्यरुन्तुदानि प्रतिकूलवेदनीयानि बहूनि दुःखान्यपवर्गे उपरम्यन्ते इति कथं बुद्धिमान्सर्वदुःखोपरमलक्षणं शान्तमपवर्गं नार्थयेत् । प्रभूततरं हि पुरुषाणां दुःखं भवत्यल्पीयश्च सुखम् । यथा च खल्वयं पुरुषो दुःखेनोपतप्यते न तथा सुखेन निर्वृतो भवति । सोऽयं दुःखविकल्पे सुखाभिमानो न खल्वपि न बुद्धिमतां हातव्यो भवति । दृश्यते खल्वनर्थं बलवन्तं सोढुमक्षमास्तन्मात्रनिविवृत्सयोद्बन्धनादिभिरात्मानं व्यापादयन्तीति ॥ १ ॥

**न तु कार्याभावात्कारणाभावः ॥ २ ॥**

( उप० ) ननु सदेवोत्पद्यते नासत् ' सदेव सौम्येदमग्र आसीत् '

इत्यादिश्रुतिप्रामाण्यात् । अन्यथाऽसत्त्वाविशेषे तन्तुभ्य एव पटो न कपालेभ्य इति नियमो न स्यादिति चेत् परिणामवादिभिरपि स्वीकृतकारणकैरयं नियमोऽभ्युपगन्तव्य एव । अन्यथा घटाभिव्यक्तिः कपालेष्वेव न तन्तुष्विति कथं स्यात् । किंच यद्यभिव्यक्तिरपि पूर्वमासीदेव तदा तस्या अपि नित्यत्वे आविर्भावतिरोभावावेवोत्पादविनाशाविति रिक्तं वचः । अथाविर्भावतिरोभावौ कारणापेक्षौ तदा घटपटादीनामपि कारणापेक्षैवासतामप्युत्पत्तिरित्यायातम् । यत्तु कारणं प्रति नियमानुपपत्तिरित्युक्तं तत्र स्वभावनियमेनैवोत्तरम् । स च स्वभावनियमोऽन्वयव्यतिरेकावगम्यो भवति । भवति हि दण्डमन्तरेण न घटो दण्डे सति घट इति सर्वसाक्षिकोऽनुभवः । एवं चानन्यथासिद्धनियतपूर्ववर्तिजातीयत्वं सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वं वा कारणत्वम् । यद्यपि 'यवैर्यजेत व्रीहिभिर्वा' इत्यादौ नियतपूर्ववर्तित्वं नास्ति । नहि यवकरणकयागनिष्पाद्ये फले व्रीहिकरणकयागस्य पूर्ववर्तित्वं तथापि विकल्पितं विहितकारणं कारणमेव । फलैकजात्येऽपि द्वयोः कारणत्वोपपत्तेः । तथाच सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वं लोकवेदसाधारणी कारणता । नियतपूर्ववर्तित्वं तु अन्वयव्यतिरेकगम्या कारणता लौकिकी, नहि 'स्वर्गकामो यजेत' इत्यादौ व्यतिरेकभागोऽपि विषयः प्रवृत्तेरन्वयमात्रज्ञानादेवोपपत्तेः, अत एव 'विकल्प उभयमशास्त्रार्थः' इत्यपि घटते । तज्जातीयस्य फलस्य एकेनैवोपपत्तेरपरानुष्ठानवैयर्थ्यात् । अत एव 'श्रौतात्साङ्गात्कर्मणः फलावश्यंभावनियमः' इत्यप्युचितम् । 'आगममूलत्वाच्चास्यार्थस्य व्यभिचारो न दोषाय' इत्याचार्याभिधानमृज्वर्थतात्पर्यकमेव । तृणारणिमणिस्थले तु कार्यवैजात्यमावश्यकं तत्रान्वयव्यतिरेकगम्यत्वात्कारणताया व्यतिरेकाव्यतिरेकस्यावश्यकत्वात् । विकल्पस्थले तु फलवैजात्यकल्पने राजसूयवाजपेयादावपि वैकल्पिकी कारणता स्यादिति कार्यकारणभावनियममेवोपपादयन्नाह—नत्विति । यदि कार्यकारणभावनियमो न भवति तदा कार्याभावादपि कारणाभावः स्यात्कार्याभावः कारणाभावं प्रत्यतन्त्रं, कारणाभावस्तु कार्याभावं प्रति तन्त्रम् । तने दुःखाभावार्थं जन्माभावे, जन्माभावार्थं प्रवृत्त्यभावे, तदर्थं च दोषाभावे, तदर्थं मिथ्याज्ञाननिवृत्तये, तदर्थं चात्मसाक्षात्काराय मुमुक्षूणा प्रवृत्तिः प्रयोजनमौपोद्घातिकस्याप्यस्य द्विसूत्रकप्रकरणस्य ॥ २ ॥

( विवृ० ) कार्यकारणभावनियममेवोपपादयति–नत्विति । कार्यकारणभावनियमाभावे कार्याभावः कारणाभावाप्रयोजकः कारणाभावस्तु कार्याभावप्रयोजक इति नियमानुपपत्तेरिति भावः ॥ २ ॥

(भाष्यम्) यस्तु दुःखाभावमात्रमपवर्गं प्रतिजानीते, तस्यैतत्स्यात्,–*न कार्याभावात्कारणाभावः । कार्यस्य दुःखस्याभावान्न कारणस्य जन्मादेरभावः । एवं सति, यदा वै न भवति दुःखं तदापि जन्मादयो भवेयुः । यदि वै भवेयुः, कारणसद्भावाद्दुःखमपि पुनरुत्पद्येत । तस्मान्मिथ्याज्ञानाद्यपायक्रमेणात्यन्तदुःखनिवृत्तिरपवर्गो न दुःखाभावमात्रमिति । सिद्धश्चातीतस्य दुःखस्याभावो न तदर्था प्रवृत्तिरुपपद्यते । अनागतमपि दुःखं नोत्पन्नमिति नास्ति तदभावार्थमपि प्रवृत्तिः । भवच्च दुःखमन्तरेणापि तत्त्वज्ञानं स्वकारणान्नङ्क्ष्यति । मिथ्याज्ञानाद्युपमर्दक्रमेण जन्मोच्छेदार्थं तु प्रवृत्तिरुपपद्यते इति ॥ २ ॥

**सामान्यं विशेष इति बुद्ध्यपेक्षम् ॥ ३ ॥**

( उप० ) पदार्थत्रयोद्देशलक्षणानन्तरमिदानीमुद्दिष्टस्य सामान्यपदार्थस्य लक्षणमाह–सामान्यमिति । सामान्यं द्विविधं परमपरं च । तत्र परं सत्ता अपरं सत्ताव्याप्यं द्रव्यत्वादि । तत्र सामान्यस्य तद्विशेषस्य च लक्षणं बुद्धिरेव । अनुवृत्तबुद्धिः सामान्यस्य, व्यावृत्तबुद्धिर्विशेषस्य । इतिना द्वयमवच्छिद्य परामृश्यते । तेन बुद्ध्यपेक्षमिति नपुंसकनिर्देशः । वृत्तिकारस्तु विशेषान्वयमाह परंतु ‘ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ’ इत्यनेनैकवद्भावो नपुंसकता चेत्याह । बुद्धिरपेक्षा, लिङ्गं लक्षणं वा यस्य तद्बुद्ध्यपेक्षम् । तत्र नित्यमनेकव्यक्तिवृत्ति सामान्यं, नित्यत्वे सति स्वाश्रयान्योन्याभावसमानाधिकरणं वा । परमपि सामान्यमपरमपि तथा । परंतु सामान्यं विशेषसंज्ञामपि लभते यथा–द्रव्यमिदं द्रव्यमिदमित्यनुवृत्तप्रत्यये सत्येव नायं गुणो नेदं कर्मेति विशेषप्रत्ययः । तथाच द्रव्यत्वादीनां सामान्यानामेव विशेषत्वम् । ननु विधिरूपं सामान्यं नास्त्येव अनुगतमतेरतद्व्यावृत्त्यैवोपपत्तेः । भवति हि गौरयमिति प्रतीतेरगोव्यावृत्तोऽयमिति विषयः । जातिवादिनाऽपि गोत्वादिविशिष्टप्रत्ययस्य तद्विषयत्वाभ्युपगमात् । नहि वैशिष्ट्यमतद्व्यावृत्तेरन्यत्, गवादिपदप्रवृत्तिनिमित्तमप्यगोव्यावृत्त्यादिरेव । किंच गोत्वं कुत्र वर्तते न तावद्गवि गोत्ववृत्तेः पूर्वं तस्याभावात् । नाप्यगवि विरोधात् । यत्र गोपिण्ड उत्पद्यते तत्र कुत आगत्य गोत्वं वर्तते ।

न तावत्तत्रैवासीद्देशस्यापि तस्य गोत्वापत्तेः । नापि गोत्वमपि तदानीमेवोत्पन्नं, नित्यत्वाभ्युपगमात् । नाप्यन्यत आगतं, निष्क्रियत्वाभ्युपगमात् । न च एकस्यैव नित्यस्य नानाव्यक्तिवृत्तित्त्वं, कार्त्स्न्यैकदेशविकल्पानुपपत्तेः । नहि कृत्स्नमेकत्रैव वर्तते अन्यत्र तद्विशिष्टप्रत्ययानुदयप्रसङ्गात् । नाप्येकदेशेन, जातेरेकदेशस्याभावात् । तदुक्तम् ' न याति नच तत्रासीन्न चोत्पन्नं न चांशवत् । जहाति पूर्वं नाधारमहो व्यसनसन्ततिः ' इति । सामान्यमस्ति । तच्च संस्थानमात्रव्यङ्ग्यं गोत्वघटत्वादिवत् । न तु गुणकर्मगतमपीति सगोत्रकलहः । अत्रोच्यते सामान्यं नित्यं व्यापकं च । व्यापकत्वमपि स्वरूपतः सर्वदेशसंबद्धत्वम् । न देशानां गोव्यवहारापत्तिः समवायेन तद्व्यवहारस्याभ्युपगमात् । काले रूपादिमत्त्वेऽपि कालो रूपवानित्यप्रतीतिव्यवहारवत् । नच कालो नास्त्येव पञ्चस्कन्धसंज्ञाभेदमात्रमित्यभ्युपगमादिति वाच्यम् , कालस्य साधयिष्यमाणत्वात् । तथाच यत्र पिण्ड उत्पद्यते तत्रस्थमेव गोत्वं तेन संबध्यते, जातः संबद्धश्चेत्येक. काल इत्यभ्युपगमात् । एतेन कीदृश्याश्रये वर्तते इत्यत्र यत्र प्रतीयते इत्युत्तरम् । कुत्र प्रतीयते इत्यत्र यत्र वर्तते इत्युत्तरम् । गोत्ववृत्तेः पूर्वं स पिण्डः कीदृगासीदित्यत्र नासीदित्येवोत्तरम् । एवं च ' न याति न च तत्रासीत् ' इत्यादिकं परिदेवनमात्रम् । अतद्व्यावृत्तिरेव गोत्वमित्यत्र गौरयमिति विधिमुखः प्रत्यय एव बाधकः । नह्यनुभवोऽपि व्याख्यायते । तदुक्तम्— 'विधिजः प्रत्ययोऽन्योऽयं व्यतिरेकासमर्थकः' इति । नहि गौरयमिति प्रत्ययेऽगोव्यावृत्तिरपि भासते । कार्त्स्न्यैकदेशविकल्पस्तदा भवेद् यद्येकस्य सामान्यस्य कार्त्स्न्यं भवेदेकदेशो वा । कृत्स्नता ह्यनेकाशेषता सा चैकस्मिन्नोपपन्ना । गौरयमित्याद्यनुभव एवासद्विषयो न वस्तुव्यवस्थापनक्षम इत्यत्रोत्तरं वक्ष्यते । प्राभाकरास्तु संस्थानमात्रव्यङ्ग्यं सामान्यमाचक्षते । तद्यद्यनुगतप्रतीतिसाक्षिकं तदा किमपराद्धं गुणकर्मगतैः सामान्यैः । भवति हि रूपरसादावनुगतधीः सा च जातिव्यवस्थापिकैव बाधकाभावात् । रूपत्वादिजातिषु न तावद्व्यक्त्यभेदो बाधकः आकाशत्वादिवत् । रूपरसादिव्यक्तीनामनेकत्वात् । नापि बुद्धित्वज्ञानत्वादिवद्घटत्वकलशत्वादिवद्वा तुल्यत्वं बाधकम् ,तच्चान्यूनानतिरिक्तव्यक्तिकत्वं गुणत्वापेक्षया न्यूनव्यक्तिकत्वात् नीलत्वाद्यपेक्षया चाधिकव्यक्तिकत्वात् । अत एव न संकरः भूतत्वमूर्तत्ववत्, परस्परात्यन्ताभावसामानाधिकरण्ये सति जात्यन्तरेण सामानाधिकरण्याभावात् । नाप्यनवस्था रूपत्वादिगतसामान्यान्तरानभ्यु-

पगमात् । नापि रूपहानिर्विशेषत्ववत्, यदि विशेषाः द्रव्याश्रितत्वे सति जातिमन्तः स्युः गुणाः कर्माणि वा स्युः विभुवृत्तित्वे सति यदि जातिमन्तः स्युर्गुणाः स्युरिति यथा विशेषपदार्थस्वरूपहानिरतथा प्रकृतेऽभावात् । नापि समवायत्ववदसंबन्धः समवाये समवायाभ्युपगमेऽनवस्थाभयात्तथास्तु, प्रकृते तु समवायस्यैव संबन्धस्याभ्युपगमात् । यद्यपि समवायत्वजातिबाधको व्यक्त्यभेद एव तथापि यन्मते उत्पादविनाशशीला बहवः समवायास्तन्मते द्रष्टव्यम् । अभावत्वादिजात्यभ्युपगमे वा बाधकमेतत् । विवादपदमनुगतबुद्धिरनुगतनिमित्तसाध्या अबाधितानुगतमतित्वात् दामकुसुमबुद्धिवत् इति जातौ मानमिति वृत्तिकारास्तच्चिन्त्यम् ॥ ३ ॥

( विवृ० ) सामान्यपदार्थस्य लक्षणमाह–सामान्यमित्यादिना । सामान्यं परं विशेषः अपरं सामान्यमिति द्वयं बुद्ध्यपेक्षं बुद्धिरपेक्षा लक्षणं यस्य तत् । तथाच सामान्यं द्विविधं परमपरं च । तत्र परसामान्यं सत्ता । द्रव्यत्वादिकं त्वपरसामान्यम् । तत्र सामान्यविशेषयोः परापरयोर्लक्षणं बुद्धिरेव । अनुवृत्तत्वबुद्धिः सामान्यस्य व्यावृत्तत्वबुद्धिर्विशेषस्य लक्षणम् । अनुवृत्तत्वमधिकदेशवृत्तित्वं व्यावृत्तत्वमल्पदेशवृत्तित्वम् । तथाच सत्तायाः सर्वसामान्यापेक्षयाऽधिकदेशवृत्तित्वात्परत्वमेव । द्रव्यत्वादिजातेस्तु सत्तापेक्षया न्यूनदेशवृत्तित्वादपरत्वं पृथिवीत्वाद्यपेक्षयाऽधिदेशवृत्तित्वात्परत्वमपीति परत्वरूपं सामान्यत्वम् । अपरत्वरूपं विशेषत्वं च न नियतं किंतु बुद्ध्यपेक्षामिति । जातिबाधका उक्ता न्यायाचार्यैः–'व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः । रूपहानिरसंबन्धो जातिबाधकसंग्रहः' इति । तत्रैकव्यक्तिकत्वादाकाशत्वं न जातिः । अन्यूनानतिरिक्तव्यक्तिकत्वाद्घटत्वं कलशत्वं च न जातिद्वयम् । परस्परात्यन्ताभावसमानाधिकरणयोरेकव्यक्तिसमावेशेन संकरेण भूतत्वं मूर्तत्वं च न जातिः । अनवस्थाभयात्सामान्यत्वं न जातिः । विशेषस्य व्यावृत्तस्वभावस्य रूपहानिर्विशेषत्वजातिबाधिका । यदि विशेषत्वं जातिः स्यात्तदा जातिमतः स्वतोव्यावृत्तत्वासंभवेन स्वतोव्यावृत्तत्वरूपस्य असाधारणधर्मस्य व्याघातः स्यादतो विशेषत्वं न जातिः । अथवा रूपहानिः स्वरूपहानिः । तथाच विशेषा यदि मूर्तवृत्तित्वे सति जातिमन्तः स्युस्तदा गुणाः कर्माणि वा स्युः । विभुवृत्तित्वे सति जातिमन्तः स्युस्तदा गुणाः स्युरिति विशेषस्य स्वरूपहानिर्विशेषत्वजातिबाधिका । समवायसंबन्धाभावाच्च समवायत्वं न

जातिः । समवाये समवायान्तरस्वीकारेऽनवस्थाप्रसङ्गात् । उत्पादविनाशशालिनो बहवः समवाया इतिमतेनैतत् । अन्यथैकव्यक्तिकत्वादपि समवायत्वं न जातिः स्यात् । एवमभावत्वस्य जातित्वे समवायसंबन्धाभाव एव बाधक इत्यादिकमूहनीयम् । प्राभाकरास्तु संस्थानव्यङ्ग्यैव जातिः सा च गुणकर्मणोर्नास्तीत्याहुः ॥ ३ ॥

(भाष्यम्)पर्याप्तः शास्त्रार्थः । परीक्षेदानी पदार्थानां वर्तिष्यते । तत्राल्पत्वाद्व्युत्क्रमेण सामान्यविशेषौ तावद्द्रव्यादीनां परीक्ष्येते । श्रूयते खल्वत्र विप्रतिपत्तिरिति—*सामान्यं विशेष इति बुद्ध्यपेक्षम् । समानानां भावः सामान्यं तुल्यार्थता । तद्विपर्ययश्च विशेषः । सामान्यमिति विशेष इति यावेतौ प्रत्ययव्यवहारौ, तदेतद्द्वयं बुद्ध्यपेक्षम् । बुद्धिरपेक्षा यस्य, यद्वा अपेक्षते बुद्धिं तद् बुद्ध्यपेक्षम् । कथम् ? येयं भिन्नेष्वभिन्ना बुद्धिस्तया हि समानव्यपदेशो भवति । तत्प्रत्यनीकभावाद्विशेषो व्याख्यातः । न वै खलु वस्तुभूतं निमित्तमन्तरेण भिन्नेष्वभिन्ना बुद्धिर्भवति, यदस्या निमित्तं सामान्यं नाम तत् । किंचास्या निमित्तम् ? सदनित्यमित्यादिभिर्यद्व्याख्यातं तदस्या निमित्तम् । भिन्नेषु खल्वपि भावेषु कुतश्चित्सामान्यादभिन्ना बुद्धिर्भवति । यथोदकपयसोः संसृज्यमानयो. सेनावनादिषु चेति । अथापि वक्ष्यति सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यमिति । सामान्ये सामान्यान्तरापेक्षया न व्यवतिष्ठते बुद्धिरिति चेत् सामर्थ्याद्व्यवस्थास्यते । यावति न व्यवस्थोपपद्यते तावति न व्यवस्थास्यते, परतस्तु सामर्थ्याद्व्यवस्थास्यते । सामान्यभावादिवत् । यथा खल्वन्यः समानानां भावः सामान्यमन्यो भावः सामान्यस्य, तस्याप्यन्यस्तस्याप्यन्य इत्यव्यवस्था बुद्धेः प्राप्नोति । सामर्थ्यात्तु व्यवतिष्ठते । तथाऽन्यत्रापि व्यवस्थास्यते । येषु समाना बुद्धिरुदेति तेष्वर्थान्तरभूतस्य सामान्यस्य परिकल्पने चोदकपयसोः संसृज्यमानयोर्द्रव्यगुणयोरन्येषु च केनचिद्रूपेण समानबुद्धिनिर्ग्राह्येषु भावेष्वर्थान्तरभूतानां सामान्यान्तराणां परिकल्पनं प्राप्नोति । तत्रान्तरेणार्थान्तरभूतं सामान्यं केनचिद्रूपेण समाना बुद्धिरिति चेत्समानमन्यत्र । एतेनैकस्यां व्यक्तौ गौरयमित्युपदिष्टस्य व्यक्त्यन्तरे गौरयमिति प्रतिपत्तिर्व्याख्याता । अथापि खल्वयं धर्मधर्मिभावः परमार्थतोऽसन्नपि विषयतादिवत्स्वभावाद्भासते । धर्मश्चाभिन्नो धर्मिणो भिन्नवदुपलभ्यते । अथाप्येतदुक्तम् । अर्थक्रियाकारितया भिन्ना एव हि व्यक्तयः । ता एव

व्यक्त्यस्त्यक्तभेदा जातिरुदाहृतेति । अथापि खल्वस्त्येको भावाना भावः । स एव तेन तेन विशेषेण तत्र तत्रोपलभ्यमानः सामान्यविशेषबुद्धिहेतुगकाशादिवदिति । द्रव्याणां भावो गुणानां भावः कर्मणां भावः इत्यनुवर्तमान एव हि भावो व्यावर्तमानैर्द्रव्यादिभिर्विशिष्यते । अथाप्येतदुक्तम्–'एको भावस्तत्त्वतो येन दृष्टः सर्वे भावास्तत्त्वतस्तेन दृष्टाः' इति । तदेतत्सामान्यं यदि भावः, गुण एव । यदि चान्यत्किंचित्, यथायथं द्रव्यादिष्वन्तर्भवति । एतेन विशेषो व्याख्यातः । अथानेकानि द्रव्यत्वादिलक्षणानि सामान्यानि भावाद्भिन्नानि मन्येरन्, नैव गुणलक्षणमतिवर्तन्ते इति । अथापि खलु परिभाषामात्रं सामान्यविशेषौ । परिभाषातो हि समाना बुद्धिर्विशेषबुद्धिश्चोत्पद्यते । येयं नवसु पृथिव्यादिषु द्रव्यमित्यनुगता बुद्धिः, सा खलु परिभाषाबलात् । यथा हि परिभाषाविशेषाद्वादजल्पवितण्डादिव्यवहारास्तत्र तत्र प्रवर्तन्ते प्रत्ययाश्च तथा तथोत्पद्यन्ते, तद्वदेतत्प्रतिपत्तव्यम् । यदि वै कश्चिद्गुणपरिभाषां पृथिव्यादिषु कुर्यात्, तथैव ह्यस्य बुद्धिर्भवेदिति । इत्थमेव प्रतितन्त्रमभिन्नेऽप्यर्थे विभिन्ना बुद्धिरिति । यस्तु द्रव्यपरिभाषां नाभ्यनुजानाति, नासौ क्षितिपयस्तेजांस्युपलभमानो द्रव्यमिति प्रतिसंधत्ते । यस्यार्थान्तरभूतं द्रव्यत्वादिकं, तस्यैतन्नोपपद्यते । प्रत्यक्षं हि तदभ्यनुज्ञायते । यथा खल्वालयविज्ञानसंप्रज्ञातमौलिकार्थप्रतिपत्तिजातिसकलादिबुद्धयस्तन्त्रान्तरपरिभाषाभिस्तत्र तत्रोत्पद्यन्ते, तथाऽन्यत्रापि प्रत्येतव्यम् । न वै खलु गुरुत्रिकादिषु मत्वादिसामान्यं वस्तुभूतमस्ति । परिभाषातस्तु मत्वादिरूपेणानुगता बुद्धिर्भवतीति । सेयमसत्यर्थे बुद्धिरिति बुद्ध्यपेक्षता सामान्यविशेषयोरिति । तावेतौ सामान्यविशेषौ परस्परबुद्ध्यपेक्षौ भवतः । द्रव्यत्वं पृथिवीत्वापेक्षया सामान्यं सत्तापेक्षया च विशेष इति । सत्ता नामान्त्यं सामान्यं, तत्तत्पृथिवीत्वादिकं चान्त्यो विशेष इत्यादि यथाविषयं वेदितव्यम् ॥ ३ ॥

## भावोऽनुवृत्तेरेव हेतुत्वात् सामान्यमेव ॥ ४ ॥

( उप० ) सामान्यं विशेष इति द्वैविध्यं यदुक्तं तदुपपादयन्नाह–भाव इति । भावः सत्ता अनुवृत्तेरेव हेतुः न तु व्यावृत्तेरपि हेतुः । तथाच विशेषसंज्ञां न लभते ॥ ४ ॥

( विवृ० ) सत्तायाः परत्वमेव नापरत्वमित्याह–भाव इति । भावः सत्ता । अनुवृत्तेरधिकदेशवृत्तित्वबुद्धेर्हेतुत्वात् । एवकारेणाल्पदेशवृत्तित्वबु-

द्धिव्यवच्छेदः । तादृशबुद्धिस्तु सत्ता द्रव्यत्वाद्यपेक्षयाऽधिकदेशवृत्तिरित्याकारिका । तस्याः प्रत्यक्षात्मिकाया हेतुत्वं सत्तायां विषयमुद्रया । तथाच सत्तायां कांचिदपि जातिमपेक्ष्याल्पदेशवृत्तित्वबुद्धेरभावान्न विशेषत्वं किंतु परत्वमात्रमेवेति ॥ ४ ॥

( भाष्यम् ) तत्र सत्ता नाम सतां भावः । सोऽयम्—*भावोऽनुवृत्तेरेव हेतुत्वात्सामान्यमेव । न विशेषः । भावः खल्वयमनुवृत्तेरेव हेतुर्न व्यावृत्तेरपि आचार्यप्रवृत्तिर्ज्ञापयति, नैव सामान्यादीन्यर्थान्तराणीति । यदि वै भवेयुः, व्यावृत्तिं तेभ्यो भावस्य प्राप्नोतीति । सोऽयं भावः सामान्यमेव समानो हि सर्वेषामर्थानाम् । सन्तो हि सर्वेऽर्था इति ॥ ४ ॥

**द्रव्यत्वं गुणत्वं कर्मत्वं च सामान्यानि विशेषाश्च ॥ ५ ॥**

( उप० ) केषां सामान्यानां विशेषसंज्ञेत्यपेक्षायामाह—द्रव्यत्वमिति । चकारः पृथिवीत्वादीनि द्रव्यगतजातीः रूपत्वादीनि गुणगतजातीः उत्क्षेपणत्वादीनि कर्मगतजातीः समुच्चिनोति । द्रव्यत्वमित्यादावसमासः परस्परं व्याप्यव्यापकभावाभावसूचनार्थः । सामान्यानि विशेषाश्चेत्यत्रासमासः सामान्यत्वे सत्येव विशेषत्वं यथा ज्ञायेत तदर्थम् । अन्यथा सामान्यविशेषा इति षष्ठीसमासभ्रमः स्यात् । तथाच सामान्यत्वे सति विशेषत्वं न प्रतीयते । ननु द्रव्याकारानुगतमतिसाक्षिकं न द्रव्यत्वम्, पृथिव्यादौ कथंचित्तत्सत्त्वेऽपि वाय्वाकाशादौ तदसंभवात् । न च गुणत्वावच्छिन्नकार्यसमवायिकारणतावच्छेदकतया तत्सिद्धिः, नित्यानित्यवृत्तितया गुणत्वस्य कार्यतानवच्छेदकत्वात् । गुणत्वार्थमपि पर्यनुयोगस्य तादवस्थ्यात् । मैवम्, संयोगत्वावच्छिन्नकार्यसमवायिकारणतावच्छेदकतया द्रव्यत्वसिद्धेः । सा हि न पृथिवीत्वाद्यवच्छेद्या, न्यूनवृत्तित्वात् । नापि सत्तावच्छेद्याऽधिकवृत्तित्वात् । अवश्यं ह्यवच्छेदकेन भवितव्यम्, अन्यथाकस्मिकतापत्तेः । तत्र परमाणुषु द्व्यणुकासमवायिकारणवत्तया द्व्यणुकेषु त्र्यणुकासमवायिकारणवत्तया विभुचतुष्टयस्य सर्वमूर्तसंयोगितयैव सिद्धेः । मनसि इन्द्रियमनःसंयोगाधारतया वायौ तृणादिनोदनाश्रयतया प्रत्यक्षद्रव्येषु प्रत्यक्षतयैव संयोगाभ्युपगमस्यावश्यकत्वात् । अजस्तु संयोगो नास्त्येव येन संयोगत्वस्यापि कार्याकार्यवृत्तितया कार्यतावच्छेदकता न स्यात् । एवं विभागसमवायिकारणतावच्छेदकतयाऽपि द्रव्यत्वसिद्धेः सुप्रतिपदत्वात् । गुणत्वं तु संयोगविभागसमवायिकारणत्वासमवायिकारणत्वशून्ये सामा-

न्यवति यत्कारणत्वं तदवच्छेदकतयैव सिद्धमित्युक्तत्वात् । कर्मत्वमपि प्रत्यक्ष-द्रव्येषु चलतीति प्रत्ययसाक्षिकम् । अन्यत्र तु संयोगविभागानुमेयं संयोग-विभागोभयासमवायिकारणतावच्छेदकतयाऽपि कर्मत्वसिद्धेरावश्यकत्वात् । अत एवादित्यस्य देशान्तरप्राप्त्या गत्यनुमानम् । तत्र च देशान्तरस्याका-शादेरतीन्द्रियत्वेऽपि तत्किरणसंयोगविभागयोस्तन्मण्डलेन प्रत्यक्षत्वात्तत एव गत्यनुमानं देशान्तरप्राप्तिमानादित्यः अविनाशित्वे द्रव्यत्वे च सति प्राङ्मुखोपलब्धस्य प्रत्यङ्मुखेन तेनैवोपलभ्यतया प्रत्यभिज्ञायमानत्वादिति देशान्तरप्राप्त्या अनुमितया आदित्यगत्यनुमानमित्युद्द्योतकराचार्याः ॥५॥

( विवृ० ) ननु के विशेषा इत्याकाङ्क्षायामाह–द्रव्यत्वमिति । चकारेण पृथिवीत्वादीनां द्रव्यगताना, रूपत्वादीनां गुणगतानाम्, उत्क्षेपणत्वादीनां कर्मगतानां च जातीनां समुच्चयः । तथाच द्रव्यत्वादीनां परत्वरूपं सामान्य-त्वमपरत्वरूपं विशेषत्वं चेत्यर्थः ॥ ५ ॥

( भाष्यम् ) सद्विशेषाणां पुनर्भावः–*द्रव्यत्वं गुणत्वं कर्मत्वं च सामा-न्यानि विशेषाश्च । सत्ताऽपेक्षया विशेषाः पृथिवीत्वाद्यपेक्षया सामा-न्यानि । न वै खलु सद्विशेषाणां सर्वे भावा. सामान्यानि विशेषाश्च ॥५॥

## अन्यत्रान्त्येभ्यो विशेषेभ्यः ॥ ६ ॥

( उप० ) ननु य एव विशेषपदार्थ उद्दिष्टः स एव किं सामान्यविशे-षत्वेनाभिधीयते इति शिष्याकाङ्क्षामपनयन्नाह–अन्यत्रेति । अन्त्या विशेषा नित्यद्रव्यवृत्तयो येऽभिहिताः तान्वर्जयित्वा सामान्यविशेषाभिधानमि-त्यर्थः । अन्तेऽवसाने भवन्तीत्यन्त्या । यतो न व्यावर्तकान्तरमस्तीत्या-चार्याः । उत्पादविनाशयोरन्तेऽवसाने भवन्तीत्यन्त्या नित्यद्रव्याणि तेषु भवन्तीत्यन्त्या विशेषा इति वृत्तिकृतः । ते हि विशेषा एव व्यावृत्तिबु-द्धिहेतवो न तु सामान्यरूपा अपीति ॥ ६ ॥

( विवृ० ) ननु सामान्यस्य विशेषत्वाभ्युपगमे भावानां षट्त्वसंख्या व्याहन्येतेति तटस्थाशङ्कां निरस्यति–अन्यत्रेति । अन्त्या नित्यद्रव्यवृत्तयो ये विशेषा अभिहितास्तान्वर्जयित्वा सामान्यविशेषाभिधानमित्यर्थः । अन्ते-ऽवसाने तिष्ठन्ति यदपेक्षया विशेषो नास्ति एकमात्रवृत्तय इति फलितार्थः । तथाच पूर्वसूत्रे विशेषपदं नैकमात्रवृत्तिविशेषपदार्थपरं, किंतु व्याप्यसामा-न्यपरमिति न षट्त्वसंख्याव्याघात इति भावः ॥ ६ ॥

( भाष्यम् ) किं तर्हि ?—*अन्यत्रान्त्येभ्यो विशेषेभ्यः । अन्त्याविशेषास्तत्तत्पृथिव्यादिभावाः । तेभ्योऽन्यत्र ये सद्विशेषाणां द्रव्यादीनां पृथिव्यादीनां च भावाः, त इमे सामान्यानि विशेषाश्च, नत्वन्त्या विशेषा इति । यथा खल्वन्त्या विशेषाः विशेषा एव, न सामान्यानि, तथाऽन्त्यमपि सामान्यं सामान्यमेव न विशेषः ॥ ६ ॥

## सदिति यतो द्रव्यगुणकर्मसु सा सत्ता ॥ ७ ॥

( उप० ) सत्तासामान्यमित्यत्र बहूना विप्रतिपत्तिरतस्तत्र प्रमाणमाह—सदितीति । इतिकारेण प्रत्यव्ययवहारयोः प्रकारमुपदिशति । तथाच द्रव्यादिषु त्रिषु सत्सदिति प्रकारको यतः प्रत्ययः, सदिदं सदिदमित्याकारकः शब्दप्रयोगो वा यदधीनः सा सत्ता ॥ ७ ॥

( विवृ० ) सत्तासामान्ये प्रमाणमाह—सदितीति । इतिशब्देन प्रत्ययव्यवहारयोः संग्रहः । यतो यस्याः सत्ताया हेतोर्द्रव्यगुणकर्मसु अयं सन्नित्याकारकः प्रत्ययः व्यवहारश्च भवति सा सत्ता इत्यर्थः । तथाच सत्तायामनुगतः प्रत्ययो व्यवहारश्च मानमिति भावः ॥ ७ ॥

( भाष्यम् ) यस्मात्—*सदिति यतो द्रव्यगुणकर्मसु सा सत्ता । द्रव्यगुणकर्मस्वविशेषितौ सदितिप्रत्ययव्यवहारौ यतः, सा सत्ता । कुतश्चैतौ प्रत्ययव्यवहारौ ? अविशेषिताद्भावात् । द्रव्यत्वादयस्तु विशेषितो भावः । द्रव्याणां भावः द्रव्यत्वं गुणानां भावो गुणत्वं कर्मणां भावः कर्मत्वम् । एवं शेषेपु । द्रव्यादिकं तु क्रियागुणवदित्याद्युक्तम् ॥ ७ ॥

## द्रव्यगुणकर्मभ्योऽर्थान्तरं सत्ता ॥ ८ ॥

( उप० ) ननु द्रव्यगुणकर्मभ्यः पृथग्भावेन सत्ता नानुभूयतेऽतो द्रव्याद्यन्यतममेव सत्ता । यतो हि यद्भिन्नं भवति तत्ततो भेदेनानुभूयते यथा घटः पटात् । न च सत्ता तेभ्यो भेदेनानुभूयते इति तदात्मिकैवेत्यत आह—द्रव्येति । द्रव्यादयोऽननुगताः । सत्ता चानुगता । तथाच अनुगतत्वाननुगतत्वलक्षणविरुद्धधर्माध्यासेन तेभ्यो भेदस्य सिद्धत्वात् । यत्तु तेभ्योऽन्यत्र नोपलभ्यते तदयुतसिद्धिबलात् । घटपटयोस्तु युतसिद्धिः । न च व्यक्तिस्वरूपमेव सत्ता, व्यक्तीनामननुगमात् । स्वरूपत्वं यद्यनुगतं तदा सैव सत्ता । अननुगतैरपि स्वरूपैरनुगतव्यवहारश्चेत्तदा गोत्वादिभिरपि गतम् । अत एव यत्र सत्ता समवैति तादृशैराधारैरेव तद्व्यवहारोपपत्तौ किं

सत्तयेत्यपास्तम्। अत एवार्थक्रियाकारित्वं प्रामाणिकत्वं वा सत्त्वमित्ययुक्तं तदननुसंधानेऽपि सन् इति प्रत्ययात्॥ ८॥

( विवृ० ) ननु स्वरूपसंबन्धरूपैव सत्ता सा च द्रव्यादिस्वरूपानतिरिक्तेत्याशङ्कां निरस्यति–द्रव्येति। अर्थान्तरं भिन्ना। तथाच द्रव्यादिषु त्रिषु सदित्यनुगतप्रत्ययस्य सर्वसिद्धत्वेनानुगता सत्ता स्वीकार्या। सत्ताया अननुगतद्रव्यादिस्वरूपत्वे तादृशानुगतप्रत्ययापलापप्रसङ्गादिति भावः॥८॥

( भाष्यम् ) अन्योऽर्थोऽर्थान्तरम्। कश्चार्थः ? अर्थ इति द्रव्यगुणकर्मसु इति वक्ष्यति। सोऽयमर्थः। तस्मादियमप्येष्वेवान्तर्भवति। अर्थः खल्वितरथा न स्यादिति। द्रव्यगुणकर्मणामेव काचिद्भवन्ती सत्ता न खल्वपि निर्दिष्टेषु द्रव्यगुणकर्मस्वन्तर्भवतीति तेभ्योऽर्थान्तरम्॥ ८॥

## गुणकर्मसु च[1] भावान्न कर्म न गुणः॥ ९॥

( उप० ) भेदकान्तरमाह—गुणेत्यादि। न गुणो न कर्मेति वक्तव्ये व्यत्ययेनाभिधानं न द्रव्यमित्यपि सूचयति। नहि कर्म कर्मसु वर्तते, न वा गुणो गुणेषु। न वा द्रव्यं गुणे कर्मणि वा। सत्ता तु गुणे कर्मणि च वर्तते। तेन द्रव्यगुणकर्मवैधर्म्यात्तेभ्यो भिन्नैव सत्ता॥ ९॥

( विवृ० ) इतोऽपि सत्ता न द्रव्यादिस्वरूपेत्याह–गुणकर्मस्विति। न कर्म न गुण इति व्यत्ययेनाभिधानान्न द्रव्यमित्यपि मुनेरभिप्रेतम्। तथाच सत्ताया गुणकर्मवृत्तित्वाद्द्रव्यादीनां च तदभावात्सत्ता द्रव्यादिभ्यो भिद्यत इत्यर्थः॥ ९॥

( भाष्यम् ) कस्मान्नेयं निर्दिष्टेषु द्रव्यगुणकर्मस्वन्तर्भवति ? यस्मात्—*गुणकर्मसु भावान्न कर्म न गुणः। सत्ता खल्वियं गुणेषु भवति कर्मसु च। तस्मात् नासौ कर्म न खल्वपि गुणः। एतेन द्रव्यं व्याख्यातम्। यः खलु गुणो गुणेषु न भवति नासौ सत्ता। तेभ्यः खल्वर्थान्तरमियमिति। यस्तु गुणो गुणेषु भवति, नात्र तस्य प्रतिषेधः। सत्ता नाम गुणो गुणेषु भवति संख्यादिवत्। द्रव्यं खल्वियमाश्रयति न त्वसौ गुणवती न कर्मेति॥ ९॥

## सामान्यविशेषाभावेन च॥ १०॥

( उप० ) भेदकान्तरमाह–सामान्येति। यदि सत्ता द्रव्यं गुणः कर्म वा स्यात्तदा सामान्यविशेषवती स्यात्। न च सत्तायां सामान्यविशेषा

---

१ चन्द्रकान्तश्चकारमत्र न पठति।

द्रव्यात्वादय उपलभ्यन्ते । नहि भवति सत्ता द्रव्यं गुणः कर्म वेति केषाचिदनुभवः ।। १० ।।

( विवृ० ) भेदकान्तरमाह—सामान्येति । सामान्यविशेषाः पूर्वोक्ताः द्रव्यत्वादयः । तथाच द्रव्यत्वाद्यभावात्सत्ता न द्रव्याद्यात्मिकेत्यर्थः ।।१०।।

( भाष्यम् ) अथापि संख्यादयो गुणाः सत्ता स्युः, गुणकर्मसु खल्वेते भवन्तीत्यत आह—*सामान्यविशेषाभावेन च । न कर्म न गुण इति प्रकृतम् । सत्तायां तावत्सामान्यविशेषौ न भवतः । भवतस्त्वेतौ संख्यादाविति न संख्यादयः सत्ता । अथापि रूपादीनां कर्मणां चान्यतमः सत्ता, नहि तद्विनाकृतं द्रव्यमिति यो मन्यते, तस्यैतत्स्यात्; गुणकर्मसु भावान्न कर्म न गुणः, सामान्यविशेषाभावेन चेति । सेयं स्वरूपसती प्रदीपवत् । यथा खल्वन्येऽर्थाः प्रदीपप्रभयोपलभ्यन्ते प्रदीपस्तूपलब्धौ न प्रदीपान्तरमपेक्षते, स्वैव प्रभयाऽन्यानपि प्रकाशयति स्वयं चोपलभ्यते, तथा सत्ताऽपि स्वरूपेणैव सती न सत्ताऽन्तरमपेक्षते । स्वयमेव खल्वसौ भावो न तत्र भावान्तरापेक्षेति । सोऽयं भावः परिभाषा वाऽन्यो वा, नैवार्थो भिद्यते । साऽपि हि सत्येव न त्वसती स्वयमेव चात्र हेतुरिति । सामान्यविशेषाभावः सामान्यविशेषवत् । यथा हि सामान्यानि द्रव्यत्वादीन्येकबुद्धिनिग्राह्याणि समानानि भवन्त्यपि स्वेनैव रूपेण भवन्ति न तत्र सामान्यान्तरं विशेषान्तरं वाऽस्ति, यथा चानन्ता विशेषा विशेषतया समानाः स्वेन स्वेन रूपेण च विशेषा भवन्तोऽपि न सामान्यान्तरं विशेषान्तरं वाऽपेक्षन्ते । तथा स्वभावात् । तथा सत्ताऽपि न सामान्यविशेषवती । सोऽयमतर्क्यो वस्तुस्वभावो न खल्वपि पर्यनुयोगमर्हतीति । अथापि गुणकर्मणोर्यौ सामान्यविशेषौ तावत्र न भवत इति न कर्म न गुण इत्युक्तमिति ।। १० ।।

## अनेकद्रव्यवत्त्वेन द्रव्यत्वमुक्तम् ।। ११ ।।

( उप ) एवं सत्ताया द्रव्यगुणकर्मभ्योऽर्थान्तरत्वमभिधाय द्रव्यत्वस्य तेभ्योऽर्थान्तरत्वमाह—अनेकेति । अनेकं द्रव्यं समवायितया यस्यास्ति तदनेकद्रव्यवत् । अनेकपदमिह सर्वपरं, तेन पृथिवीत्वादिभ्यो भेदः । नित्यत्वं तु सामान्यलक्षणप्राप्तमेव तेनावयविभ्यो भेदः। अनेकद्रव्यवत्त्वं च अनेकद्रव्यमात्रसमवेतत्वं तेन सत्ताया भेदः । तेन नित्यमनेकद्रव्यमात्रसम-

वेतं द्रव्यत्वम्, अतः संयोगो नेष्यत इत्युक्तम् । द्रव्यत्वं च साधितमेव । द्रव्यत्वमुक्तमिति द्रव्यत्वमपि सत्तावदेव व्याख्यातमित्यर्थः ॥ ११ ॥

( विवृ० ) द्रव्यत्वमपि न द्रव्याद्यात्मकमित्याह–अनेकेति । अनेकद्रव्यवत्त्वं समवेतत्वसंबन्धेन, नित्यत्वं तु सामान्यत्वादेव प्राप्तं तथाच द्रव्यत्वमनेकद्रव्यसमवेतत्वेन नित्यत्वेन च द्रव्यादिभिन्नतया सत्तावदेव व्याख्यातमित्यर्थः ॥ ११ ॥

( भाष्यम् ) अनेकेषु द्रव्येषु भवन् भाव एव द्रव्यत्वम् । द्रव्याणां भावो हि द्रव्यत्वमिति ॥ ११ ॥

## सामान्यविशेषाभावेन च ॥ १२ ॥

( उप० ) ननु द्रव्यत्वमपि जातिः स्वाश्रयादभिन्नमेव स्यात् को दोष इत्यत आह—सामान्येति । यदि द्रव्यत्वं जातिर्द्रव्याद्यात्मिकैव स्यात्तदा तस्यां पृथिवीत्वजलत्वतेजस्त्वादयः सामान्यविशेषाः स्युरित्यर्थः । नहि भवति द्रव्यत्वं पृथिवी जलं तेजो वेति केषांचित्प्रत्यय इत्यर्थः ॥ १२ ॥

( विवृ० ) द्रव्यादिगतधर्माभावादपि द्रव्यत्वं न द्रव्याद्यात्मकमित्याह–सामान्येत्यादि । द्रव्यत्वगुणत्वकर्मत्वपृथिवीत्वजलत्वतेजस्त्वाद्यभावाद्द्रव्यत्वं न द्रव्याद्यात्मकमित्यर्थः ॥ १२ ॥

( भाष्यम् ) द्रव्यगतौ हि सामान्यविशेषौ न तत्र भवत इति । अथापि खलु न द्रव्यत्वे सामान्यविशेषौ भवतः, तथा चायमिति ॥ १२ ॥

## तथा[१] गुणेषु भावाद्गुणत्वमुक्तम् ॥ १३ ॥

( उप० ) गुणत्वमाह–तथेति । गुणेष्वेव भावात्समवायाद्गुणत्वं द्रव्यगुणकर्मभ्यो भिन्नं सत्तावदेवोक्तमित्यर्थः ॥ १३ ॥

( विवृ० ) गुणत्वमपि न द्रव्याद्यात्मकमित्याह–तथेति । भावात्समवायेन सत्त्वात्तथाच गुणसमवेतत्वाद् गुणत्वं द्रव्यादिभिन्नं तथा सत्तावदेव व्याख्यातमित्यर्थः ॥ १३ ॥

(भाष्यम्) यथैतत्, *तथा गुणेषु भावाद्गुणत्वमुक्तम् ॥ १३ ॥

## सामान्यविशेषाभावेन च ॥ १४ ॥

( उप० ) भेदकान्तरमाह—सामान्येति । यदि द्रव्यगुणकर्मभ्यो गुणत्वमतिरिक्तं न भवेत्तदा द्रव्यत्वगुणत्वकर्मत्वं तदवान्तरजातिमत्तयोपलभ्येतेत्यर्थः ॥ १४ ॥

---

१ 'तथा' इत्यंशस्तु न सूत्रान्तर्गत' किंतु भाष्यांश एष इति प्रतिभातीति चन्द्रकान्तः ।

( विवृ० ) इतोऽपि गुणत्वं न द्रव्याद्यात्मकमित्याह—सामान्येति । द्रव्यत्वाद्यभावाद् गुणत्वं न द्रव्याद्यात्मकमित्यर्थः ॥ १४ ॥

( भाष्यम् ) *सामान्यविशेषाभावेन च ॥ १४ ॥

**कर्मसु भावात्कर्मत्वमुक्तम् ॥ १५ ॥**

( उप० ) द्रव्यगुणकर्मभ्यो भेदकं कर्मत्वमाह—कर्मस्विति । कर्मस्वेव भावात्समवायात्कर्मत्वमपि जात्यन्तरं द्रव्यगुणकर्मभ्यो भिन्नमुक्तं, सत्तावदित्यर्थः ॥ १५ ॥

( विवृ० ) कर्मत्वमप्यतिरिक्तमित्याह—कर्मस्विति । कर्मसु भावात्सत्वात्कर्मत्वं सत्तावदतिरिक्तमुक्तमित्यर्थः ॥ १५ ॥

( भाष्यम् ) एवम् *कर्मसु भावात् कर्मत्वमुक्तम् ॥ १५ ॥

**सामान्यविशेषाभावेन च ॥ १६ ॥**

( उप० ) भेदकान्तरमाह—सामान्येति । कर्मत्वं यदि द्रव्याद्यात्मकं भवेत्तदा द्रव्यत्वादिसामान्यविशेषस्तत्र समवेयादित्यर्थः । सेयमेकाकारा चतुःसूत्री सत्ताद्रव्यत्वगुणत्वकर्मत्वानां चतसृणां जातीनां द्रव्यगुणकर्मभेदप्रतिपादनाय एकप्रकरणेनोक्तेत्यवधेयम् ॥ १६ ॥

( विवृ० ) द्रव्यादिगतधर्माभावादपि कर्मत्वं न द्रव्याद्यात्मकमित्याह—सामान्येति । द्रव्यत्वाद्यभावात्कर्मत्वमपि न द्रव्याद्यात्मकमित्यर्थः ॥ १६ ॥

( भाष्यम् ) *सामान्यविशेषाभावेन च ॥ १६ ॥

**सदितिलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैको भावः ॥ १७ ॥**

( उप० ) ननु सत्ता द्रव्यगुणकर्मसु वर्तमाना द्रव्यत्वाद्यवच्छेदभेदेन भिन्नैव कथं न स्यादत आह—सदितीति । सदित्याकारकं ज्ञानं शब्दप्रयोगो वा सत्ताया लिङ्गम् । तच्च द्रव्यगुणकर्मसु समानमविशिष्टम् । तेन भाव सत्ता एकैव तेषु वर्तते । अन्यथा द्रव्यत्वादिभिस्तुल्यव्यक्तिकतया सत्ता वा न स्यात्तानि वा न स्युः । विशेषलिङ्गाभावाच्चेति । विशेषो भेदस्तत्र यल्लिङ्गमनुमानं तदभावाच्च न भेद इत्यर्थः । भवति हि स एवायं दीप इत्यनुगमस्तत्र यथा विशेषलिङ्गं दीर्घह्रस्वत्वादिपरिमाणभेदस्तथात्र विशेषलिङ्गं नास्तीति भावः ॥ १७ ॥

इति श्रीभगवत्कणादसूत्रोपस्कारे शांकरे प्रथमाध्यायस्य द्वितीयमाह्निकम् ।

---

१ विशेषाभावादिति चन्द्रकान्तसमतः पाठः ।

( विवृ० ) ननु द्रव्यादिषु वर्तमाना सत्ता द्रव्यत्वाद्यवच्छेदकभेदेन भिन्ना कथं न स्यादित्यत आह—सदितीति। सदित्याकारकप्रत्ययव्यवहारयोः सत्तालिङ्गयोर्विशेषाभावाद्भेदकलिङ्गान्तराभावाच्च भावः सत्ता एक एव नतु नाना। भिन्नत्वे तुल्यवृत्तिकत्वात्सत्ताया द्रव्यत्वादेर्वाऽर्थान्तरत्वं न स्यादिति भावः। स एवायं दीप इत्यनुगतयोः प्रत्ययव्यवहारयोः सत्त्वेऽपि तत्र परिमाणादिभेद एव भेदकः न चात्र तथा कश्चिदस्तीति भावः ॥१७॥

इति श्रीजयनारायणतर्कपञ्चाननकृतायां कणादसूत्रविवृतौ प्रथमाध्यायस्य द्वितीयाह्निकम्।

( भाष्यम् ) *सदिति लिङ्गाविशेषाद्विशेषाभावाच्चैको भावः। सदिति प्रत्ययव्यवहारलिङ्गाद्भावोऽवगम्यते। तच्चाविशिष्टम्। न च विशेषे लिङ्गमस्तीत्येको भावः। सत्तया हि सदिति प्रत्ययव्यवहारौ। सत्ता च भाव इति ॥१७॥

इति श्रीचन्द्रकान्तीये वैशेषिकभाष्ये प्रथमस्याध्यायस्यद्वितीयमाह्निकम्।

समाप्तश्चायं प्रथमोऽध्यायः।

# अथ द्वितीयाध्याये प्रथमाह्निकम्।

## रूपरसगन्धस्पर्शवती पृथिवी ॥ १ ॥

( उप० ) द्वितीयाध्यायस्य प्रथमाह्निकस्य नवानां द्रव्याणां लक्षणमर्थः। तत्र पृथिव्यप्तेजसां लक्षणप्रकरणम्, ईश्वरसिद्धिप्रकरणम्, आकाशानुमानप्रकरणम्। तत्र प्रथमोद्दिष्टायाः पृथिव्या लक्षणमाह—रूपेति। रूपं नीलपीताद्यनेकप्रकारं पृथिव्या एव। तथाच नीलरूपसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणम्। एवं रसः कटुकषायाद्यनेकप्रकारकः पृथिव्यामेव। तथाच कटुरससमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणम्। एवं कषायादिपदप्रक्षेपेण लक्षणान्यूहनीयानि। गन्धो द्विविधः सुरभिरसुरभिश्च। तथाच गन्धसमानाधिकरणद्रव्यत्वव्याप्यजानितमत्वं लक्षणम्। तथा गन्धसमानाधिकरण—गन्धासमानाधिकरणगुणासमानाधिकरण—जात्यधिकरणद्रव्यत्वं द्रष्टव्यम्। नच पाषाणादौ गन्धरसयोरननुभवात्तत्राव्यापकमिदमुभयमपीति वाच्यम्। तत्रापाततो गन्धरसयोरननुभवेऽपि तदीयभस्मसु तदुपलम्भात्। य एवावयवाः पाषाणारम्भकास्त एव तद्भस्मारम्भका अपीति नाव्याप्तिः। कथं तर्हि सुरभिः समीरणः तिक्तं कारवेल्लजलमिति प्रतीतिरिति चेन्न। पार्थिवोपाधिकत्वात्तयोर्गन्धर-

सयोः । स्पर्शोऽप्यनुष्णाशीतः पाकजः पृथिव्यामेव । तथाच पाकजस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणम् । पाकजत्वं च विशेषान्तरव्यङ्ग्यं पृथिवीस्पर्श एव, विशेषान्तरं च शिरीषलवङ्गीकुसुमादौ स्पर्शविशेषे स्फुटतरम्, न त्वेवं जलादिस्पर्शे । यद्यप्यवयविनि पाकादग्निसंयोगात्स्पर्शादयो न जायन्ते तथापि तत्परंपराप्रभवतया तत्रापि वैजात्यविशेषोऽनुसरणीयः । ननु लक्षणमिदं व्यतिरेकिलिङ्गमितरभेदसाधकं व्यवहारसाधकं वा । तत्र पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात् यन्नेतरभिन्नं तन्न गन्धवत् यथा जलादि इतरभेदाभावव्यापकाभावप्रतियोगिगन्धवती चेयं तस्मादितरभिन्ना । तत्रेतरभेदस्य साध्यस्य प्रसिद्धौ ततो हेतोर्व्यतिरेके सपक्षविपक्षव्यावृत्ततयाऽसाधारण्यम व्यतिरेके चान्वयित्वम् । अप्रसिद्धौ च अप्रसिद्धविशेषणः पक्षः, तथाच तत्र न संदेहो न वा सिषाधयिषा न वा तद्विशिष्टज्ञानरूपाऽनुमितिः । किं च व्यतिरेकयोर्व्याप्तिस्तथाच न व्याप्तस्य पक्षधर्मत्वं पक्षधर्मस्य न व्याप्तत्वमिति वैषम्यम्, अत एवोपनयवैयर्थ्यमपि व्याख्यायते न त्वगृहीतव्याप्तिकमपि । तदुक्तम्—'साध्याप्रसिद्धिर्वैषम्यं व्यर्थतोपनयस्य च । अन्वयेनैव सिद्धिश्च व्यतिरेकिणि दूषणम्' इति । एवं व्यवहारसाध्यकेऽपि । तत्र यद्यपि व्यवहारः पृथिवीपदवाच्यत्वं तच्च पृथिवीत्वजातावप्यस्ति तत्र च पृथिवीत्वं हेतुर्नास्तीत्यसाधारण्यं तथापि पृथिवीत्वप्रवृत्तिनिमित्तकपृथिवीपदवाच्यत्वं साध्यमिति नासाधारण्यम् । यद्वा पृथिवीत्वं काचित्कपदप्रवृत्तिनिमित्तं जातित्वात् घटत्ववदिति सामान्यतः सिद्धौ पृथिवीपदं पृथिवीत्वप्रवृत्तिनिमित्तकम् इतराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वात् यन्नैवं तन्नैवमिति साध्यम् । तथाचात्रापि साध्याप्रसिद्धिरेवेति चेन्नैवम्, इतरेषां जलादीनां भेदस्य घट एव प्रसिद्धेः । वाय्वादेरतीन्द्रियस्यापि भेदस्य अन्योन्याभावस्य घटादौ प्रत्यक्षत एव सिद्धत्वात् । अन्योन्याभावग्रहे अधिकरणयोग्यतामात्रस्य तन्त्रत्वात्, स्तम्भः पिशाचो न भवतीत्यादौ यथा दर्शनात् । नचैवं घट एव तर्हि दृष्टान्तोऽस्तु । किं व्यतिरेकिणा 'ऋजुमार्गेण सिद्ध्यन्तं को हि वक्रेण साधयेत्' इति वाच्यम् । अव्यतिरेकिलिङ्गं चेदनाभासं, तदाऽयमपि मार्गो वक्ररुचिं प्रत्यप्रतिहत एव साध्याप्रसिद्धेर्निरासे तन्मूलकदोषाणां निरस्तत्वात् । व्यतिरेकसहचारेण अन्वयव्याप्तेरेव ग्रहात् व्यतिरेकव्याप्त्याऽन्वयव्याप्तेरनुमानाद्वा न वैषम्यम् । नचोपनयवैयर्थ्यम्, गृहीतव्याप्तेरेव हेतोः पक्षे उपसं-

हारात्। तदुक्तम्–'नियम्यत्वानियन्तृत्वे भावयोर्यादृशी मते । त एव विपरीते तु विज्ञेये तदभावयोः ' इति । व्यवहारस्तु गन्धवती पृथिवीत्युपदेशादेव यथा कम्बुग्रीवादिमान् घटपदवाच्य इति । तथा कुत्रचिदेव घृतादौ मृदादौ च गन्धवत्त्वेनोपलक्षणेन पृथिवीत्वे पृथिवीपदप्रवृत्तिनिमित्तत्वं येनोपदेशाद्गृहीतम्, गन्धवत् सर्वं पृथिवीत्वेन प्रवृत्तिनिमित्तेन पृथिवीपदवाच्यं गन्धवत्त्वात् यन्नैवं तन्नैवमिति व्यतिरेकी तस्याप्यवतरत्येव। ननु भेदसाधकव्यतिरेकिणि भेदो वैधर्म्यं, स्वरूपभेदो वा, अन्योन्याभावो वा। न तावदाद्यौ प्रत्यक्षत एव तदवगमात्। न तृतीयः अभावभेदस्यापि साध्यत्वेन तदन्योन्याभावस्य तत्राभावात्। तेन सह स्वरूपभेदे साध्ये साध्याननुगमादिति चेन्न, अभावप्रतियोगिकान्योन्याभावस्यापि साध्यत्वात्। स यद्यतिरिक्तस्तदाऽस्त्येव न चेत् स्वरूपमादाय तत्पर्यवसानात् वस्तुतो भिन्न एव तद्वैधर्म्यस्य तदन्योन्याभावव्याप्यत्वात्। नचानवस्था यावत्येवानुभवस्तावत्येवाविश्रामात् अन्यत्र त्वननुभवेनैव विश्रामात्। यत्तु त्रयोदशान्योन्याभावास्त्रयोदशसु प्रसिद्धाः मिलिताः पृथिव्यां साध्यन्ते इति तत्तुच्छं प्रत्येकं प्रसिद्धेरतन्त्रत्वात् मिलितप्रसिद्धेरभावात्। किंतु निर्गन्धत्वावच्छिन्नप्रतियोगिताकान्योन्याभावः साध्येत प्रतियोगितावच्छेदकभेदेनाभावभेदस्यावश्यकत्वात् स च घटादावेव प्रत्यक्षसिद्ध इत्युक्तत्वात्। आकाशादौ का गतिरिति चेत् आकाशमितरभिन्नं शब्दाश्रयत्वात् यन्नैवं तन्नैवमित्यादौ पक्षैकदेशे यद्यपि न साध्यं प्रसिद्धं तथापि यद्वैधर्म्यवत् तत्तत्प्रतियोगिकान्योन्याभाववदिति सामान्यप्रवृत्तव्याप्तिबलेन शब्दाश्रयत्वात्यन्ताभाववत्प्रतियोगिकान्योन्याभावस्य पूर्वमेव सिद्धौ केवलं पक्षनिष्ठतया इदानी बोध्यते वह्निरिव पर्वतनिष्ठतया इत्यन्योऽस्मत्सिद्धान्तः तद्वैधर्म्यस्य तदन्योन्याभावव्याप्यत्वात्। शब्दाश्रयत्वात्यन्ताभाववत्त्वमेव विपक्षे न गृहीतमिति चेत्तर्हि शब्दाश्रयत्वस्य न लक्षणत्वं न वा लिङ्गत्वं विपक्षगामित्वशङ्काग्रस्तत्वादिति ॥ १ ॥

( विवृ० ) जनयन्तं पालयन्तं नाशयन्तं जगन्मुहुः ।
अगजाङ्गजमानन्दाद्गजाननमहं भजे ॥

द्वितीयाध्यायस्य प्रथमाह्निके द्रव्यलक्षणान्यभिधास्यति, तत्रादौ पृथिव्या लक्षणमाह–रूपेति । नीलादिरूपसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वकषायादिरससमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वगन्धवत्त्वपा-

कजस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वादीनि पृथिव्या लक्षणान्यूह्यानि । अत्र शंकरमिश्राणां गन्धवत्त्वं परित्यज्य तत्समानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वपर्यन्तानुधावनस्य प्रयोजनं त एव जानन्ति ।। १ ।।

( भाष्यम् ) परीक्षितौ सामान्यविशेषौ । पृथिव्यादिकमिदानी परीक्ष्यते । तत्र प्रत्यक्षाणां स्थूलानां पृथिव्यादीनां न स्वरूपतः परीक्षापेक्षा । गुणतस्तु—*रूपरसगन्धस्पर्शवती पृथिवी । तत्र कृष्णं रूपं पृथिव्याः स्वाभाविकम् । निमित्तव्यपाश्रयमन्यत् । रसो मधुरादिः। गन्धः सुरभिरसुरभिश्च । स्पर्शस्त्वनुष्णाशीतो विलक्षणः । तत्र गन्धो नाम नैजो गुणः पृथिव्याः । कारणगुणक्रमाच्च रूपादयः । शब्दस्त्वनभिव्यक्तः सन्नपि नोक्त इति । यस्तु सर्वेषां समानो गुणः संख्यादिर्नात्र तस्योपसंख्यानम् । यस्तु भूतानां विशेषो गुणस्तस्यैतदुपसंख्यानमिति । एवं परत्र ।। १ ।।

## रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः ।। २ ।।

( उप० ) पृथिव्यनन्तरमुद्दिष्टानामपां लक्षणमाह—रूपेति । शुक्लमधुरशीता एव रूपरसस्पर्शाः द्रवत्वं च सांसिद्धिकं स्नेहस्तु स्वरूपतः । ननु शुक्लमेव रूपमपामित्ययुक्तं कालिन्दीजलादौ नैल्यस्योपलम्भात् । मधुर एव रस इत्यप्ययुक्तं जम्बीरकरवीररसादौ आम्ल्यतैक्त्यादेरुपलम्भात् । शीत एव स्पर्श इत्यप्यनुपपन्नं मध्यन्दिने औष्ण्यस्यैवोपलम्भात् । सांसिद्धिकं च द्रवत्वमव्यापकं हिमकरकादावभावात् । स्नेहस्तु स्वरूपासिद्धोऽतिव्यापकश्च जलेऽननुभवात् घृतादौ पार्थिवेऽनुभवाच्च । न च जलत्वं जातिरेव जललक्षणं, व्यवस्थापकाभावेन तदनुपपत्तेः । न च स्नेहसमवायिकारणतावच्छेदकत्वेन तत्सिद्धिः स्नेहत्वस्य कार्याकार्यवृत्तितया कार्यतानवच्छेदकत्वात् । तस्माद्भेदकाभावाज्जलं न भिद्यत इति चेन्मैवम् । अभास्वरशुक्लमात्ररूपस्यैव तद्भेदकत्वात् कालिन्दीजलादौ नैल्यस्याश्रयोपाधिकत्वात् वियद्विकीर्णकालिन्दीजले धावल्यस्योपलम्भात् । तेनाभास्वरशुक्लेतररूपासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वमपां लक्षणम् । रसोऽपि मधुर एव जम्बीरकरवीररसाम्ल्यतैक्त्यादेः पार्थिवोपाधिकत्वात् । जले माधुर्यं नानुभूयत एवेति चेन्न कषायद्रव्यभक्षणानन्तरं तदभिव्यक्तेः । न च हरीतक्या एव तन्माधुर्यं जलाभिव्यङ्ग्यं तत्र कषायरसस्यैवोपलम्भात् । हरीतक्यां चामलक्यामिव कषाय एव रसः तस्यैवानुभवात् । न च गुणविरोधेन तत्र रसानारम्भः अवयवानामपि तत्र कषायरसवत्त्वात् षड्रसत्वप्रवादस्तु तत्तद्रसकार्यकारित्वनिबन्धनः । चित्ररसस्तु प्रमाणाभावादेव नि-

रस्तः। चित्ररूपे तु पटोपलम्भ एव प्रमाणम्। सुरभ्यसुरभ्यवयवारम्भस्तु गुण-विरोधनिरस्त एव चित्रगन्धे प्रमाणाभावात् । तस्माद्धरीतकीभक्षणानन्तरं यन्माधुर्यमुपलभ्यते तज्जलस्यैव उल्बणता तु द्रव्यविशेषसन्निधानाधीना श्रीखण्डसन्नियोगाज्जले शैत्योल्बणतेव। कर्कटीभक्षणानन्तरं तु तिक्तता याऽनुभूयते सा कर्कट्या एव तदवयवे जलपानमन्तरेणापि तिक्ततोपलम्भात् । रसनाग्रवर्तिपित्तद्रव्यतिक्तताया वा तत्रानुभवात् । तथाच मधुरेतररसासमानाधिकरणरससमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वमपां लक्षणम्। एवं शीतस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वमपां लक्षणम् । मध्यन्दिने तु यदौष्ण्यं तत्तेजस एव तदन्वयव्यतिरेकानुविधानात्। एवं सांसिद्धिकद्रवत्वं स्वरूपत एव लक्षणं सांसिद्धिकद्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं वा जलत्वम् । स्नेहस्तु गुणविशेषो न तु दुग्धत्वदधित्ववत् सामान्यविशेषः स्निग्धस्निग्धेतरास्निग्धतमेति तारतम्यप्रतीतेः। न च जातौ तारतम्यं संभवति । ननु भवतु स्नेहो गुणः स तु जले वर्तत इत्यत्र किं प्रमाणमिति चेन्न, सक्तुसिकतादौ जलेन संग्रहे तदनुमानात् । संग्रहो हि स्नेहद्रवत्वकारितः संयोगविशेषः स हि न द्रवत्वमात्राधीनः काचकाञ्चनद्रवत्वेन संग्रहानुपपत्तेः। नापि स्नेहमात्रकारितः स्त्यानैर्घृतादिभिः संग्रहानुपपत्तेः। तस्मादन्वयव्यतिरेकाभ्यां स्नेहद्रवत्वकारितः स च जलेनापि सक्तुसिकतादौ दृश्यमानः स्नेहं जले द्रढयति । इयं च प्रत्यक्षोपष्टम्भिकैव युक्तिः स्नेहस्य प्रत्यक्षत्वात् ।घृतादौ तु स्नेह उपष्टम्भकजलनिष्ठः संयुक्तसमवायेन तद्गततया भानात्। एवं तैलरसादिष्वपि। उपष्टम्भकं चातिशायितस्नेहमेव जलम्, स्नेहाधिक्यादेव तस्य जलस्य नानलविरोधित्वम् । यदि पृथिवीविशेषगुणः स्नेहः स्यात् सर्वपार्थिववृत्तिः स्यात् गन्धवत् । जलत्वं च द्रव्यत्वसाक्षाद्व्याप्यजातिः स्नेहवन्मात्रवृत्तिसंयोगसमवायिकारणतावच्छेदिकाया जातेः परमाणुसाधारण्येन सिद्धत्वात् ॥ २ ॥

( विवृ० ) क्रमानुरोधात्पृथिव्यनन्तरं जललक्षणमाह—रूपरसेति । जले रूपं शुक्लं रसो मधुरः स्पर्शः शीतः द्रवत्वं सांसिद्धिकं, तथाच जलसूत्रे पञ्चानां गुणानामुपादानात्पञ्चैव जललक्षणानि मुनेरभिप्रेतानि । तथाच नीलासमानाधिकरणभास्वरशुक्लासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तिक्तावृत्तिमधुरवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं शीतस्पर्शवत्त्वं सांसिद्धिकद्रवत्ववत्त्वं स्नेहवत्त्वमित्येतानि लक्षणानि जलस्येति भावः । हिमकरकादौ यदि न सांसिद्धिकद्रवत्वं तदा सांसिद्धिकद्रवत्व-

द्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं विवक्षणीयम् । लवणोदकालिन्दीजलादौ या नीलोपलब्धिः सा आश्रयौपाधिकी भ्रान्तिरेव । वियति विक्षेपे तस्यैव धवलिमोपलब्धेः । यद्यपि जले कोऽपि रसो नानुभूयते तथापि हरीतक्यादिकषायद्रव्यभक्षणानन्तरं जलमाधुर्यमनुभूयत एव तस्य तद्व्यञ्जकत्वात्, न च जलसंयोगाद्धरीतक्यादावेव माधुर्योत्पत्तिरिति वाच्यम् । पात्रस्थहरीतक्यादावपि जलसंयोगेन मधुरिमोत्पत्त्यापत्तेः, कषायेन रसान्तरोत्पादतत्प्रागभावादिकल्पनाया गौरवाच्च । कर्कटीभक्षणानन्तरं जलस्य या तिक्ततोपलब्धिः सा कर्कट्या एव जलमन्तरेणापि तद्ग्रहात् । जम्बीररसादावम्लोपलब्धिः कारवेल्लरसादौ तिक्तत्वोपलब्धिश्च एतेन व्याख्याता । सूरकरादिसंयोगाज्जले य उष्णस्पर्शः प्रतीयते सोऽपि सूरकरादेरेव, यद्यपि हिमकरकादौ द्रवत्वं नानुभूयते इति कथं तस्य जलेऽन्तर्भावः संभवति तथापि ऊष्मणा विलीने तत्र जलत्वं प्रत्यक्षसिद्धमेव दिव्यतेजःसंयोगात्तु तत्र द्रवत्वप्रतिरोधः। काठिन्यप्रतीतिस्तु तत्र भ्रान्तिरेवेति मुक्तावलीकारः । केचितु दिव्यतेजःसंयोगात् जलपरमाणुभ्यां द्व्यणुकं तैश्च त्रसरेण्वादिकं क्रमेण हिमादौ जायते तादृशद्व्यणुकादिकं च द्रवत्वरहितं कठिनमेवेति हिमादौ काठिन्यप्रतीतिर्न भ्रान्तिरित्याहुः । स्नेहस्तु जल एव घृतादावपि तदुपष्टम्भकजलस्यैव स्नेहः तत्प्रकर्षाच्च घृतादेर्दहनानुकूलत्वं सक्तुसिकतादौ पिण्डीभावरूपः संग्रहनामकः संयोगविशेषो द्रवत्वसहितस्नेहकारित एव द्रवत्वमात्रकारितत्वे काचकाञ्चनद्रवत्वादितोऽपि तदुत्पत्त्यापत्तेः । नापि स्नेहमात्रकारितः घनीभूतैर्घृतादिभिरपि तदुत्पत्तिप्रसङ्गादित्यलमधिकेन ॥ २ ॥

( भाष्यम् ) क्रमप्राप्तास्तु—*रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः ॥ शुक्लं रूपमपां स्वाभाविकं निमित्तव्यपाश्रयमन्यत् । रसो मधुरः । रसान्तरं निमित्तकारितमिति । स्पर्शः शीतः । तत्र रसो नैजः । कारणगुणक्रमात् रूपस्पर्शौ । अन्यस्त्वनभिव्यक्तत्वान्नोक्त इति । द्रवस्नेहावपि नैजावेव गुणौ, कारणगुणक्रमेणान्यत्र तदारम्भकौ न भवत इति पृथगुक्तौ । सेयमननुयोज्या वस्तुशक्तिरिति । एतेन पृथिव्यादीनां खरादयो गुणा व्याख्याताः ॥ २ ॥

## तेजो रूपस्पर्शवत् ॥ ३ ॥

( उप० ) उद्देशक्रमानुरोधेन तेजोलक्षणमाह—तेज इति । रूपं भास्वरं स्पर्शश्चोष्णस्तद्वत्तेज इत्यर्थः । ननु भास्वरत्वं परप्रकाशकत्वं तादृशं च रूपं नोष्मणि न वा चामीकरस्थे भर्जनकपालस्थे वारिस्थे वा तेजसि । शुक्लं च

रूपमुक्तेषु न क्वापि, उष्णश्च स्पर्शो न चान्द्रे न वा चामीकरे तत्कथमेतदिति चेन्न ऊष्मादौ तेजस्त्वेन भास्वररूपानुमानात् । तेजस्त्वमेव तत्र स्वरूपासिद्धमिति चेन्न उष्णस्पर्शवत्त्वेन तदनुमानात् । चामीकरे कथमिति चेत् तत्र भास्वररूपाभावेऽपि अत्यन्तानलसंयोगेनानुच्छिद्यमानजन्यद्रवत्वाधिकरणत्वेन व्यतिरेकिणा तेजस्त्वानुमानादिति वक्ष्यमाणत्वात्, भर्जनकपालादिनिष्ठे चोष्णस्पर्शवत्त्वेन तेजस्त्वानुमानात् । चतुर्विधं हि तेजः किंचिदुद्भूतरूपस्पर्शं यथा सौरादि, किंचिदुद्भूतरूपमनुद्भूतस्पर्शं यथा चान्द्रम् । किंचिदनुद्भूतरूपस्पर्शं यथा नायनम्, किंचिदनुद्भूतरूपमुद्भूतस्पर्शं यथा नैदाघं वारिभर्जनकपालादिगतं च तेजः । नायनमग्रे साधयिष्यते ॥ ३ ॥

( विवृ० ) क्रमप्राप्तं तेजोलक्षणमाह–तेजोरूप इति । भास्वरशुक्लरूपवत्त्वम् उष्णस्पर्शवत्त्वं च तेजोलक्षणमित्यर्थः । नच सुवर्णोष्मभर्जनकपालादिस्थतेजःप्रभृतिषु परप्रकाशकत्वरूपभास्वरत्वविशिष्टशुक्लरूपाभावादव्याप्तिरिति वाच्यं तेष्वपि तेजस्त्वेन तदनुमानात् । सुवर्णस्य तेजस्त्वं च सुवर्णं तैजसम् अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानजन्यद्रवत्वात् यन्नैवं तन्नैवं यथा पृथिवीति व्यतिरेक्यनुमानात्सिद्धम् । ऊष्मादौ तु उष्णस्पर्शवत्त्वेन उष्णस्पर्शोऽपि चान्द्रकरचामीकरादौ जलीयपार्थिवस्पर्शेनाभिभवान्न गृह्यते इति न तत्र द्वितीयलक्षणाव्याप्तिः, तेजस्त्वेन तत्र तदनुमानात् । चतुर्विधं हि तेजः किंचिदुद्भूतरूपस्पर्शं यथा सौरादि, किंचिदनुद्भूतरूपस्पर्शं यथा चक्षुरादि, किंचिदुद्भूतरूपमनुद्भूतस्पर्शं यथा चान्द्रप्रभादि, किंचिदनुद्भूतरूपमुद्भूतस्पर्शं यथा भर्जनकपालादिस्थवह्न्यादि । तेजस्त्वं च जन्योष्णस्पर्शसमवायिकारणतावच्छेदकतया सिद्धो जातिविशेषः । नित्यस्य स्वरूपयोग्यस्येत्यादिनियमाभ्युपगमे तु जन्योष्णस्पर्शसमवायिकारणतावच्छेदकतया सिद्धं जन्यतेजस्त्वं तदवच्छिन्नसमवायिकारणतावच्छेदकतया तेजस्त्वजातिसिद्धिरिति मुक्तावलीकारः ॥ ३ ॥

(भाष्यम्) रूपं लोहितं तेजसः स्पर्शश्चोष्णः । निमित्तकारिता चान्यथोपलब्धिरिति । तत्र रूपं नैजो गुणः, कारणगुणप्रक्रमादपरः । अन्यस्त्वनभिव्यक्तो नोक्त इति ॥ ३ ॥

## स्पर्शवान् वायुः ॥ ४ ॥

( उप० ) क्रमप्राप्तं वायुलक्षणमाह–स्पर्शवानिति । रूपासमानाधिकरणस्पर्शसमानाधिकरणजातिमत्त्वं रसासमानाधिकरणानुष्णाशीतस्पर्शसमानाधिकरणजातिमत्त्वं गन्धासमानाधिकरणानुष्णाशीतस्पर्शसमानाधिकरण-

जातिमत्त्वं स्पर्शेतरविशेषगुणासमानाधिकरणविशेषगुणसमानाधिकरणजातिमत्त्वं वा वायुलक्षणम् ॥ ४ ॥

( विवृ० ) वायुं लक्षयति—स्पर्शवानिति । अत्र स्पर्शोऽपाकजोऽनुष्णाशीतो ग्राह्यः। तेन वायवीयो विजातीयस्पर्शो लभ्यते । तथाच तादृशविजातीयस्पर्शवत्त्वमेव वायुलक्षणवैजात्यन्तु वायुस्पर्शप्रत्यक्षसिद्धमिति ॥ ४ ॥

( भाष्यम् ) स्पर्शो नाम वायोर्नैजो गुणोऽभिव्यक्तश्च । अनुष्णाशीतो विलक्षणस्पर्शो वायोः । निमित्तव्यपाश्रयोऽन्यः। शब्दस्तु कारणगुणक्रमादुत्पन्नो नाभिव्यज्यत इति ॥ ४ ॥

## त आकाशे न विद्यन्ते ॥ ५ ॥

( उप० ) नन्वाकाशकालदिगात्मनामपि रूपादिमत्त्वं कथं न लक्षणमत आह—त इति । अत्र विदिरुपलब्धिवचनः नोपलभ्यन्ते यतोऽतो न ते रूपादयो नियोगतः (?) समुच्चयतो विकल्पतो वा वर्तन्ते नभःप्रभृतिषु द्रव्येष्वित्यर्थः । ननु दधिधवलमाकाशमिति कथं प्रतीतिरिति चेन्न मिहिरमहसां विशदरूपाणामुपलम्भात्तथाभिमानात् । कथं तर्हि नीलं नभ इति प्रतीतिरिति चेन्न सुमेरोर्दक्षिणदिशमाक्रम्य स्थितस्येन्द्रनीलमयशिखरस्य प्रभामालोकयतां तथाभिमानात् । यत्तु सुदूरं गच्छच्चक्षुः परावर्तमानं स्वचक्षुःकनीनिकामाकलयत्तथाभिमानं जनयतीति मतं तदयुक्तम् , पिङ्गलसारनयनानामपि तथाभिमानात् । इहेदानी रूपादिकमिति प्रत्ययात् दिक्कालयोरपि रूपादिचतुष्कमिति चेन्न समवायेन पृथिव्यादीनां तल्लक्षणस्योक्तत्वात् न तु संबन्धान्तरेणापि इहेदानी रूपात्यन्ताभाव इत्यपि प्रतीतेः सर्वाधारतैव दिक्कालयोः ॥ ५ ॥

( विवृ०) नन्वाकाशादावपि नीलादिरूपोपलब्धेस्तस्य कथमतीन्द्रियत्वमत आह । यद्वा रूपादिचतुष्कं निःस्पर्शद्रव्ये नास्तीति वस्तुगतिमनुरुध्याह—त इति। ते रूपरसगन्धस्पर्शाः आकाशे न सन्तीत्यर्थः । दधिधवलमाकाशमिति प्रतीतिस्तु सूरकरधवलिमोपाधिकी भ्रान्तिरेव नीलं नभ इति प्रतीतिरपि सुमेरोर्दक्षिणदिगवस्थितस्येन्द्रनीलमयाशिखरनीलिमाविषयिणी भ्रान्तिरेव । केचित्तु सुदूरगतस्य परावर्तमानस्य चक्षुषः स्वगोलकस्थकनीनिकापतनात् तद्गतनीलरूपविषयिणी तादृशप्रतीतिरित्याहुस्तन्न पिङ्गलसारनयनानामपि तथो पलम्भादिति संक्षेपः ॥ ५ ॥

( भाष्यम् )ते रूपादयो गुणा आकाशे न सन्ति । रूपादयो हि नैजा-

स्तेजः प्रभृतीनां, न चैतान्याकाशकारणानि, आकाशाद्धितेषामुत्पत्ति-रिति ॥ ५ ॥

**सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् ॥ ६ ॥**

( उप० ) नन्वपां द्रवत्वं लक्षणमुक्तं तदयुक्तं पृथिव्यामपि द्रवत्वोपलम्भादि-त्यत आह—सर्पिरिति । सर्पिरादीनां यद्द्रवत्वमस्ति तदग्निसंयोगान्निमित्तात् न तु सांसिद्धिकं तादृशं चापां लक्षणं द्रवत्वमात्रं तु पृथिव्या अद्भिः सामान्यं न तु सांसिद्धिकं द्रवत्वमपीति नातिव्याप्तिरित्यर्थः ॥ ६ ॥

( विवृ० ) ननु पृथिव्यादावपि द्रवत्वसत्त्वात् जलसूत्रे जलमात्रस्य द्रवत्वकथनमसंगतमत आह—सर्पिरिति । सर्पिर्घृतम्, मधूच्छिष्टं सिक्थ-कम्, घृतादीनां यवद्द्रत्वमग्निसंयोगान्निमित्ताद्भवति तदद्भिः जलैः सामान्यं समानं स्वार्थिकतद्धितप्रत्ययादत्र जलवाचकशब्दस्य जलद्रवत्वे लक्षणा तथाच घृतादीनां यन्नैमित्तिकं द्रवत्वं तज्जलगतसांसिद्धिकद्रवत्वतुल्यं द्रवत्व-त्वजातेरुभयत्र सत्त्वात् । सांसिद्धिकद्रवत्वं तु घृतादिषु नास्ति जलसूत्रोक्त-द्रवपदं सांसिद्धिकद्रवत्वविशिष्टपरमिति नासंगतिरिति भावः ॥ ६ ॥

( भाष्यम् ) अथापि खल्वापो द्रवाः स्निग्धा इत्येतन्नोपपद्यते सर्पिरादी-नामपि द्रवत्वादित्यत आह— * सर्पिर्जतुमधूच्छिष्टानामाग्निसंयोगाद्द्रवत्वम-द्भिः सामान्यम् । अग्निसंयोगात् सर्पिरादीनां यद्द्रवत्वं तत्खल्वद्भिः सामा-न्यम् । आग्निसंयोगादिति निदर्शनमात्रम् । आतपसंयोगादपि कुत्रचिद्द्रवत्व-मुत्पद्यते इति ॥ ६ ॥

**त्रपुसीसलोहरजतसुवर्णानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् ॥७॥**

( उप० ) ननु तथापि त्रपुसीसलोहादौ तेजसि गतत्वेन तदवस्थैवाति-व्याप्तिरित्यत आह—त्रप्विति । उपलक्षणंचैतत्कांस्यताम्रारकूटपारदादीनाम-प्युपसंग्रहः । शक्यलक्ष्यसाधारणं च अत्यन्ताग्निसंयोगानुच्छिद्यमानजन्य-द्रवत्वाधिकरणत्वमेव । तथाच सुवर्णादीनामपि द्रवत्वं नैमित्तिकमेव निमि-त्तस्याग्निसंयोगस्यान्वयव्यतिरेकसिद्धत्वात्, परंतु पूर्वसूत्रेऽग्निपदमौष्ण्यप्र-कर्षवत्तेजःपरम्, इह तु वह्निपरमिति विशेषः । ननु सुवर्णादीनामपि पार्थिवत्वमेव द्रव्यान्तरत्वं वा पीतिमगुरुत्वादेः पार्थिवत्वव्यवस्थापकत्वाद्द्रव-त्वानुच्छेदस्य पृथिवीवैधर्म्यस्याप्यनुभवात् द्रव्यान्तरत्वव्यवस्थापकत्वादिति चेन्न । सुवर्णं तैजसम् अत्यन्ताग्निसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरण-त्वात् । यन्नैवं तन्नैवं यथा पृथिवीति व्यतिरेकिणा तैजसत्वसिद्धेः । न च

जलपरमाणौ विरुद्धता द्रवत्वस्यानित्यत्वेन विशेषणीयत्वात् । नच प्रदीपादेः सपक्षाद्धेतोर्व्यावृत्तेरसाधारण्यं सुवर्णं न पार्थिवमिति साध्यार्थत्वात् । नचात्र गुरुत्वाधारस्य पक्षत्वे बाधः, तदतिरिक्तस्य पक्षत्वे चाश्रयासिद्धिः द्रवत्वाधिकरणत्वेन पक्षत्वात् । नचात्यन्तिकत्वं दुर्वचं, प्रहरपर्यन्तमग्निसंयोगेऽप्यनुच्छिद्यमानानित्यद्रवत्वाधिकरणत्वादिति विवक्षितत्वात् । नच तरतमादिप्रत्ययादाश्रयनाशाच्च द्रवत्वनाशोऽप्यवश्यं वाच्य इति वाच्यं, समानाधिकरणद्रवत्वसामग्र्यसमवहिताग्निसंयोगजन्यध्वंसप्रतियोग्यवृत्तिद्रवत्वसामान्यवद्द्रवत्ववत्त्वादित्यस्य हेत्वर्थत्वात् । यद्वा पीतिमगुरुत्वाश्रयः पीतरूपभिन्नरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः प्रहरपर्यन्तमनलसंयोगेऽपिपीतरूपभिन्नरूपानाश्रयत्वात् अनलसंयुक्तजलमध्यस्थितपीतपटवत् । ननु चान्धकारे सुवर्णरूपग्रहापत्तिस्तदानी तद्रूपस्याभिभवाभावात् । बलवत्सजातीयग्रहणकृतस्याग्रहणस्याभिभवपदार्थत्वात् इति चेत्तन्न फलबलेनबलवत्सजातीयसंबन्धमात्रस्याभिभवपदार्थत्वात् । तदुक्तम्, 'भूसंसर्गवशाच्चान्यरूपं' नैव प्रकाशते । इति दिक् ॥ ७ ॥

( विवृ० ) एवं रङ्गसीसकादौ द्रवत्वमपि नैमित्तिकमेवेत्याह—त्रप्वित्यादि । सुवर्णानामिति बहुवचनेन कांस्य—ताम्र-पित्तल-पारदादीनामप्युपग्रहः । व्याख्यानं चास्य सूत्रस्य पूर्ववदेव बोध्यम् ॥ ७ ॥

(भाष्यम्) निदर्शनार्थं त्रप्वादिकमुपादीयते । कांस्यादीनामपि द्रवत्वमद्भिः सामान्यं वेदितव्यम् । द्रवत्वं खल्वेतदपामेव सर्पिरादिगतानां सर्पिरादीनां च प्रभावविशेषान्निमित्तविशेषाच्चाभिव्यज्यते संघातश्चाभिभूयते इति । तदेतद्द्रवत्वमद्भिः सामान्यं पृथिव्याः, स्वाभाविकं तु द्रवत्वमपामेव न त्वन्यस्यास्तीति । अत्यन्तानलसंयोगेऽपि तदनुच्छेदात्तेजसः । न वै पृथिव्या एवैतत्सामान्यं किंतु तेजसोऽपि । सुवर्णे खल्वग्निसंयोगात् द्रवत्वमुत्पद्यते तेजश्च सुवर्णम् । कया युक्त्या ? अत्यन्तमनलसंयोगेऽपि न तत्रोत्पन्नं द्रवत्वमुच्छिद्यते इति । प्रसिद्ध्यभावादनपदेशः । नैतावता तेजस्त्वं सुवर्णस्य शक्यमपदेष्टुम् । कस्मात् ? प्रसिद्ध्यभावात् । अत्यन्तमनलसंयोगेऽपि द्रवत्वानुच्छेदात तेजस्त्वं सुवर्णस्य मन्यते न त्वत्र प्रसिद्धिरस्ति । यथा खल्वत्यन्तानलसंयोगेऽपि उत्पन्नद्रवत्वस्यानुच्छेदात् तदाश्रयो न पृथिवीति पृथिवीवैधर्म्यात् साध्यते । तथैव तदाश्रयो न तेज इति तेजोवैधर्म्यात् शक्यं साधयितुम् । सुवर्णं खलु न किंचित् प्रकाशयति न च तमस्युपलभ्यते । तदे

तद्वैधर्म्यं तेजसः। अस्त्यन्यद्वैधर्म्यमनुष्णत्वादिकम्। द्रवत्वमप्यपरं वैधर्म्यम्। तेजसि तदनुपलब्धेः। पृथिव्यां तु सर्पिरादौ दृष्टं द्रवत्वमग्निसंयोगादिति। वैधर्म्येण चात्रोदाहरणं पृथिव्युपादीयते। शक्यं च साधर्म्येणापि तस्या उपादानम्। वैधर्म्येण तेजसोऽप्यत्रोपादानमुदाहरणतया न शक्यं प्रतिषेद्धुम्। सोऽयमनपदेशो न लैङ्गिकं प्रयोजयति। किंचिच्च कस्यचित्कुत्रचित्साधर्म्यं भवदन्यत्र न भवतीत्यनेकान्तः। कठिना मृत्सा जलसंयोगात् क्लिद्यते। तच्चैतत्क्लेदनं मृत्सायां पृथिव्याः साधर्म्यं भवदश्मनि न भवति। न खल्वश्मा न पृथिवी। तदेवमत्यन्तानलसंयोगेऽपि यद्द्रवत्वं नोच्छिद्यते, तदाश्रयो न पृथिवीति नैकस्मिन्नन्ते व्यवतिष्ठते हेतुरिति जतुमधूच्छिष्टयोरप्येवं तेजस्त्वप्रसङ्गः। तत्रापि सर्वात्मना द्रवत्वस्यानुच्छेदात्। द्रवीभूतानां स्फटिकादीनामपि तदनुच्छेदात्तेजस्त्वमापद्येत। सोऽयं मृद्वग्निसंयोगे मधूच्छिष्टादावपि द्रवत्वस्यानुच्छेदः प्रबलेन त्वग्निना भूयसा संयोगे सुवर्णस्याप्याश्रयोच्छेदाद्द्रवत्वोच्छेद इत्युभयतः सव्यभिचारः। यच्चात्यन्तानलसंयोगेऽपि रूपान्तरं नोत्पद्यते, तदपि पीते वासस्यनेकान्तमपां विरोधश्च समानः। सुवर्णेऽपि खल्वापः करकादिष्विव प्रभावविशेषाद्द्रियन्ते, पृथिवीविशेषात्त्वसौ विशेषो नोपलभ्यते। न चात्रापि प्रसिद्धिरस्ति। अथापि पीतिमगुरुत्वाश्रयस्य पार्थिवस्य द्रुतत्वादनेकान्तम्। प्रत्यक्षं हि तस्य द्रवत्वं न शक्यमपह्नोतुम्। विशेषो वा वक्तव्य इति। तेजसोऽप्यपूर्व एवायं विशेषोऽभ्युपगम्यते। न त्वसौ सर्वेषु तेजःस्वस्ति। तस्मात्सर्वासु पृथिवीष्वसन्नप्यसौ विशेषः पृथिव्या एव स्यात्। नास्त्यत्र तेजसः साधर्म्यम्। वैधर्म्यं त्वस्ति। पृथिव्यास्तु साधर्म्याणि गुरुत्वादीनि भूयांस्युपलभ्यन्ते। सोऽयं भूम्ना व्यपदेशस्तन्त्रान्तरसमाचारात् प्रतिपत्तव्यः। बाष्पभावानिष्पत्तेस्तदनुच्छेदः। वह्निना नुद्यमानाः खल्वापो बाष्पभावमापन्ना ऊर्ध्वमारोहन्ति। बाष्पभावापत्तौ चापामनवस्थानात्तदाश्रयं द्रवत्वमुच्छिद्यते। सुवर्णे च यद्द्रवत्वमुत्पन्नं नोच्छिद्यते, तत्खलु सुवर्णस्य बाष्पभावानिष्पत्तेः। लघीयसां खल्वपां तेजसा बलवता नोदनेन बाष्पभावनिष्पत्तिः। सुवर्णस्य तु गुरुत्वविशेषो बाष्पभावमवरुणद्धि। तस्मात् द्रवत्वस्यानुच्छेदः। आश्रयोच्छेदाद्धि तदुच्छेदोऽप्सु भवतीति। अथापि खल्वग्निसंयोगो द्रवत्वहेतुना स एव तस्योच्छेदकः। व्यतिरेको हि तस्य द्रवत्वोपरमहेतुरिति। प्रत्यक्षं चैतन्न शक्यमपह्नोतुम्। सर्पिरादावपि नाग्निसंयोगाद्द्रवत्वं नश्यति। किंतु अग्निनोदनात् द्रवाणामेव सर्पिरंशानां बाष्पभावेनापगमात्तदुच्छेदाभिमान

इति । बलवता त्वग्निना भूयसा संयोगे वेगातिशयेनाग्नेर्गुरुत्वप्रतिबन्धस्यावजयात् सुवर्णांशानामप्यपगमेन द्रवत्वोच्छेदो भवतीति । तैजसं गन्धानुपलब्धेः । न वै खल्वगन्धा पृथिव्यस्ति, न च सुवर्णे गन्ध उपलभ्यते, तस्मात्तैजसं सुवर्णं न पार्थिवमिति । तत्राप्यवश्यंभावादहेतुः । तेजस्त्वेऽपि सुवर्णस्यावश्यं तत्र पृथिव्या भवितव्यम् । तया हि गुरुत्वादिकमस्य क्रियते । न च तत्रावश्यं भवन्त्याः पृथिव्या गन्ध उपलभ्यते । न चागन्धा पृथिव्यस्ति । तस्माद्गन्धानुपलब्धेरित्यहेतुः । अश्मकाचादिगन्धानुपलब्धिवत्तदनुपलब्धिः । यथा पार्थिवस्याश्मनः काचादेश्च गन्धो नोपलभ्यते, स हि तेष्वभिभूयते । तथा पार्थिवस्य सतः सुवर्णस्यापि गन्धो नोपलभ्यते इति । तेजस्त्वे तु तमसि तद्रूपोपलब्धिप्रसङ्गः । पार्थिवरूपेणाभिभवाद्धि तदनुपलब्धिं मन्यते । अभिभवश्च बलवत्सजातीयग्रहणकृतमग्रहणमिति । तमसि चैतन्नोपपद्यते । बलवत्सजातीयसंबन्धमात्रमभिभव इति चेद्धेतुवचनम् । रात्रावप्युल्काप्रकाशस्याग्रहणप्रसङ्गश्च । तदानीमपि सौरेण तेजसा संसर्गस्याविशेषात् । सौरेण तेजसा खल्वृक्षादीनां रात्रौ प्रकाश इति । एतेन रजतादिकं व्याख्यातम् । यस्तु दैवतरेतसः परिणतिरेतदिति स्मार्तल्लिङ्गात्तेजस्त्वं मन्यते । तस्य रुद्राश्रुणः परिणती रजतमिति नैगमाल्लिङ्गात् करकादिवज्जलत्वप्रसङ्गः । प्राप्तिरहितमन्यार्थदर्शनमसाधकमन्यत्रापि समानम् । रेतसोऽपि तेजस्त्वं न प्रमाणत उपलभ्यते इति । एतेन अग्नेरपत्यं प्रथमं हिरण्यमिति नैगममपि लिङ्गं व्याख्यातं वेदितव्यम् । तस्य चाग्नेराप इति नैगमाल्लिङ्गान्तरादपामपि तेजस्त्वं प्रसज्येत । यस्तु सर्पिरादीनां पृथिवीत्वं त्रप्वादीनां च तेजस्त्वमिति प्रतिजानीते, तस्यैतत् पृथक्सूत्रणमाचार्यस्य । यथा हि सर्पिरादीनामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यं पार्थिवानां, तथा त्रप्वादीनामपि द्रवत्वमग्निसंयोगादद्भिः सामान्यम् । तस्मात्तदपि पृथिवी भवितुमर्हति । दृष्टं हि पार्थिवस्य सर्पिरादेरग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम्, तथा चेदमिति । यस्यापि तेजस्त्वं, तस्यापि सामान्यमेव द्रवत्वमद्भिरिति ॥ ७ ॥

**विषाणी ककुद्मान् प्रान्तेवालधिः सा-**
**स्नावानिति गोत्वे दृष्टं लिङ्गम् ॥ ८ ॥**

( उप० ) एवं स्पर्शवद्द्रव्यचतुष्कलक्षणप्रकरणं समाप्य वायोर्लक्षणमाश्रयासिद्धमिति तत्परिजिहीर्षया वा आदावनुमानं प्रमाणमुपन्यस्यानु-

मानस्यैव प्रथमं दृष्टानुसारेण प्रामाण्यमुपपाद्य वायुसाधनप्रकरणमारभते—विषाणीति। यथा गोत्वं प्रति विषाणादीनि लिङ्गानि गृहीतव्याप्तिकानि तथाऽतीन्द्रियवाय्वादिद्रव्यपञ्चकलिङ्गान्यपि सामान्यतोदृष्टानि प्रमाणभावमासादयन्तीति भावः। अत्र यद्यपि विषाणित्वमात्रं न गोत्वे लिङ्गं महिषादौ व्यभिचारात्। न च सास्नादिमत्त्वं विशेषणं विशेष्यस्य व्यर्थत्वापत्तेः, तथापि गोविषाणे महिषमेषादिविषाणापेक्षया वैलक्षण्यमाकलयतां धूम इव ते ते विशेषा लिङ्गभावमासादयन्त्येव विषाणेष्वपि ऋजुत्ववक्रत्वकठिनत्वसुकुमारत्वह्रस्वत्वदीर्घत्वादयः। ते च विशेषाः निपुणतरवेद्याः सन्त्येव। तथाच व्यवहितविप्रकृष्टगोपिण्डे अयं गौर्विषाणविशेषवत्त्वात् पूर्वानुभूतगोपिण्डवदित्यनुमानमप्रत्यूहमेव। एवं ककुद्मत्तापि लिङ्गं गोत्वे, प्रान्तेवालधिमत्त्वमपि स्वतन्त्रमेव लिङ्गं गोत्वे, प्रान्ते वाला आधीयन्तेऽस्मिन्निति प्रान्तेवालधिः पुछविशेषः। अलुक्समासाद् गोपुच्छ एव प्रान्तेवालधिशब्देनोच्यते। नहि यथा गोपुच्छेषु प्रान्तेवालधित्वं तथाऽश्वमेषादिपुच्छेषु, तेषां सामस्त्येन वालमयत्वात् महिषादिपुच्छे तादृशी प्रलम्बता नास्तीति वैलक्षण्यात् अन्तेवालधिमत्त्वमपि गोत्वे लिङ्गं मतुब्लोपाद् गोपिण्ड उच्यते तथाचायं गौः प्रान्तेवालधिमत्त्वात् पूर्वानुभूतगोपिण्डवत्, सास्नावत्ता तु प्रसिद्धैव गोत्वे लिङ्गम्॥ ८॥

(विवृ०) ननु स्पर्शवान् वायुरित्यनेन वायोर्लक्षणमुक्तं तच्च लक्ष्यासिद्ध्याऽसिद्धम्। नहि वायौ प्रत्यक्षं प्रमाणं संभवति तस्योद्भूतरूपाभावादित्यतस्तत्रानुमानं प्रदर्शयितुमादावनुमानप्रामाण्यं द्रढयति—विषाणीति। यथा गोत्वे विषाणित्वादीनि लिङ्गानि सामान्यतोदृष्टानि लोकसिद्धानि प्रमाणानि तथा अतीन्द्रिये वायौ स्पर्शादीनि लिङ्गान्यपि प्रमाणानीति सूत्रद्वयनिगूढार्थः। तत्र प्रथमसूत्रे विषाणीति प्रशंसायामस्त्यर्थप्रत्ययः। तेन च महिषादिव्यावृत्तो विषाणविशेषो लभ्यते स च गोत्वे लिङ्गम्। एवं ककुद्मत्तापि। प्रान्तेवालधिरिति अन्ते वाला आधीयन्तेऽस्मिन्निति व्युत्पत्त्या पुच्छरूपाङ्गविशेष उच्यते प्रकृष्टोऽन्तेवालधिर्यस्य स प्रान्तेवालधिर्गोपिण्डः, मेषादिपुच्छे तु सामस्त्येन वालमयत्वान्नान्तेवालधित्वम्। महिषादिपुच्छे प्रलम्बत्वादिरूपप्रकर्षाभावात् पुच्छविशेषो गोत्वे लिङ्गम्। सास्ना गलकम्बलं तद्वत्ता गोत्वे लिङ्गम्। विषाणीत्यादिव्यवहारविषयतावच्छेदकमितिशब्देन परामृश्यते। तत्रायं प्रयोगः—अयं गौर्विषाणविशेष-

वत्त्वात् ककुद्मत्त्वात् पुच्छविशेषवत्त्वात् सास्नावत्त्वाद्वा पूर्वानुभूतगो-पिण्डवदिति ॥ ८ ॥

( भाष्यम् ) पृथिव्यप्तेजांसि प्रत्यक्षाणि द्रव्याणि । नैतेषु स्वरूपतः परीक्षा प्रवर्तते । वायुस्तु द्रव्यं स्वरूपतोऽपि परीक्षणीयम् । श्रूयते खल्वत्र विप्रतिपत्तिः । अतो लिङ्गेनैनं साधयितुं दृष्टं तावल्लिङ्गमुदाह्रियते निदर्शनार्थम् । दृष्टसामान्याद्धि सिद्धिरदृष्टस्येति । —*विषाणी ककुद्मान् प्रान्तेवालधिः सास्नावानिति गोत्वे दृष्टं लिङ्गम् । विषाणेन गोत्वमनुमीयते, ककुदा, प्रान्तेवालधिना, सास्नया चेति विषाणादयो गोत्वस्यानुमितौ दृष्टं लिङ्गम् । विलक्षणं खलु विषाणं गोत्वे लिङ्गं विलक्षण इव धूमो वह्नौ । प्रान्ते यत्राधीयन्ते वालाः, सोऽयं प्रान्तेवालधिः पुच्छविशेषो गोत्वे लिङ्गमिति ॥८॥

## स्पर्शश्च वायोः ॥ ९ ॥

( उप० ) एवं सकललोकयात्रावाहिनोऽनुमानस्य दृष्टानुसारेण प्रामाण्यमभिधाय वायुसाधनप्रकरणमारिप्समाण आह—स्पर्शश्चेति । लिङ्गमिति शेषः । चकारात् शब्दधृतिकम्पाः समुच्चीयन्ते । ननूपलभ्यमानस्पर्शः पृथिव्या एवानुद्भूतरूपायाः स्यादिति चेन्न उद्भूतस्य पृथिवीस्पर्शस्योद्भूतरूपनान्तरीयकत्वात् । तथाच योऽयं स्पर्शोऽनुभूयते स क्वचिदाश्रितः स्पर्शत्वात् पृथिव्यादिस्पर्शवदिति सामान्यतोदृष्टेन स्पर्शाश्रयसिद्धौ स्पर्शाश्रयो न पृथिव्यादित्रयात्मकः नीरूपत्वात् नाकाशादिपञ्चात्मकः स्पर्शवत्त्वादितीतरबाधसहकृतेनाष्टद्रव्यातिरिक्तद्रव्यसिद्धिः । एवं शब्दविशेषोऽपि वायौ लिङ्गम् । तथाहि असति रूपवद्द्रव्याभिघाते योऽयं पर्णादिशब्दसंतानः स स्पर्शवद्वेगवद्द्रव्याभिघातनिमित्तकः अविभज्यमानावयवद्रव्यसंबन्धिशब्दसंतानत्वात् दण्डाभिघातजभेरीशब्दसंतानवत् । रूपवद्द्रव्याभिघातव्यतिरेकस्तु योग्यानुपलब्धिगम्यः । तच्च स्पर्शवद्वेगवद्द्रव्यमष्टद्रव्यातिरिक्तमेव परिशेषात् । एवं धृतिविशेषोऽपि वायोर्लिङ्गम् । तथाहि तृणतूलस्तनयित्नुविमानानां नभसि धृतिः स्पर्शवद्वेगवद्द्रव्यसंयोगजा चेतनानधिष्ठितद्रव्यधृतित्वात् प्रवाहे तृणकाष्ठनौकादिधृतिवत् । अभिध्यानकृतविषादिधृतौ च अस्मदाद्यधिष्ठानमेव । एवं पक्षिकाण्डादिधृतावपि । न चेश्वराधिष्ठितत्वेन हेतुविशेषणासिद्धिः चेतनपदेन तदितरस्य विवक्षितत्वात् । एवं कम्पोऽपि वायुसत्त्वे लिङ्गम् । तथाहि इदं रूपवद्द्रव्याभिघातमन्तरेण तृणादौ कर्म स्पर्शवद्वेगवद्द्रव्याभिघातजं गुरुत्वप्रयत्नवदात्मसंयोगाजन्यकर्मत्वात् नदीपूराहतवेतसवनकर्म-

वदिति गुरुत्वपदेनादृष्टवदात्मसंयोगद्रवत्वसंस्काराणामुपग्रहः । तेन तदजन्य-कर्मत्वं हेतुः । ननु प्रत्यक्ष एव वायुः किमत्र लिङ्गगवेषणयेति चेन्न । वायुर्न प्रत्यक्षः नीरूपबहिर्द्रव्यत्वात् गगनवदित्यनुमानादतीन्द्रियत्वस्यैव सिद्धेः । ननु वायुः प्रत्यक्षः स्पर्शाश्रयत्वाद्घटवदिति प्रत्यक्षत्वानुमानमिति चेन्न उद्भूतरूपवत्त्वस्यात्रोपाधित्वात् । न च रूपादावात्मनि च साध्याव्यापक-मेतत् पक्षधर्मबहिर्द्रव्यत्वावच्छिन्नस्य साधनधर्मावच्छिन्नस्य वा साध्यस्य व्यापकत्वात् । न च चाक्षुषप्रत्यक्षत्वे तत्तन्त्रं, तत्रैव तदन्वयव्यतिरेकानु-विधानात्, स्पार्शनप्रत्यक्षत्वे तु योग्यस्पर्शवत्तामात्रस्य तन्त्रतेति वाच्यं रूपान्वयव्यतिरेकयोरुभयत्रापि तन्त्रत्वात् । नह्युभयसिद्धस्पर्शेनैव प्रत्य-क्षता रूपस्य ग्रहमन्तरेण दृष्टा । किंच यदि वायुः प्रत्यक्षः स्यात् संख्या दिसामान्यगुणोपलम्भेऽपि तन्त्रं स्यात् । नन्वस्त्येव फूत्कारादौ संख्या-या परिमाणस्य च हस्तवितस्त्यादेः उभयपार्श्ववर्तिनोर्वाय्वोः पृथक्त्वस्य च परत्वापरत्वयोश्च प्रत्यक्षता । वायुजातीयस्य व्यक्तिपरतया तु न तवापि नियमः पृष्ठलग्नवस्त्रादौ तदनुपलम्भादिति चेन्न । व्यक्तिपरतयैव नियमात् । पृष्ठलग्नवस्त्रादौ चार्जवावस्थाने संख्यादीनां ग्रहणात् अनार्जवावस्थानदो-षात्तु तदग्रहः । उद्भूतरूपस्पर्शौ मिलितावेव बहिर्द्रव्यप्रत्यक्षत्वे तन्त्रे । प्रभाया नयनगतपीतद्रव्यस्य चन्द्रमहसश्च स्पर्शानुद्भवादप्रत्यक्षत्वं निदाघोष्मणो-र्विभक्तावयवाप्यद्रव्याणां च रूपानुद्भवादप्रत्यक्षत्वमिति न्यायवार्तिकतात्प-र्यटीकाकृतः । स्पर्शानुद्भवेऽपि प्रभादीनां प्रत्यक्षतैव अत एव चान्द्रालोके नभसि पक्षिकाण्डादिसंयोगविभागयोः प्रत्यक्षतैवेति संप्रदायविदः । न चोद्भूतस्पर्शवत्त्वं सामान्यतो बहिर्द्रव्यप्रत्यक्षताप्रयोजकमिति वाच्यम्, इन्द्र-नीलप्रभाया अप्रत्यक्षतापत्तेः । न चोद्भूतविशेषगुणवत्त्वमेव तन्त्रम् आका-शस्यापि प्रत्यक्षतापत्तेः । न च जन्यमहत्त्वसमानाधिकरणोद्भूतविशेषगु-णवत्त्वं तथा रसनाग्रवर्तिपित्तद्रव्यस्य तैक्त्योद्भवेऽप्यप्रत्यक्षत्वात्तस्मादुद्भू-तरूपवत्त्वमेवात्मेतरद्रव्यप्रत्यक्षतातन्त्रं,तच्च वायौ नास्तीत्यप्रत्यक्षो वायुः॥९॥

( विवृ० ) एवं लोकयात्रानिर्वाहकस्यानुमानस्य प्रमाण्यमुक्त्वाऽनुमाने-न वायुं साधयति—स्पर्शश्चेति । लिङ्गमित्यनुषज्यते । चकारः शब्दधृतिकम्पान् समुच्चिनोति । तथाच विजातीयस्पर्शेन पर्णादिशब्देन नभसि तृणतूला-दीनां धृत्या शाखादीनां कम्पेन च वायुरनुमीयते इति भावः । अनुमान-प्रकारस्त्वन्यत्रानुसंधेयः विस्तरभयात्परित्यक्तोऽस्माभिः ॥ ९ ॥

( भाष्यम् ) एवं तावल्लिङ्गमनुमितौ हेतुरित्युदाहृत्य वायोरनुमापकं

लिङ्गमुपादीयते—*स्पर्शश्च वायोः । अनुमितौ लिङ्गमिति प्रकृतम् । शब्दधृतिकम्पाश्चेति चार्थः । योऽयं विलक्षणः स्पर्शोऽनुभूयते, स गुणत्वात् किंचिद्द्रव्यमाश्रयति । गुणा रूपादयः किंचिद्द्रव्यमाश्रयन्तो दृष्टाः, गुणश्चायं स्पर्श इति तदाश्रयो द्रव्यमनुमीयते । कोष्ठ्यस्य वायोर्महता प्रयत्नेन प्रेरितस्य कण्ठताल्वादिप्रतिघातो भवति, प्रतिहन्यमानो वायुराकाशे शब्दमुत्पादयति । बलवता प्रयत्नेन दुन्दुभिरभिहन्यमानः तत्स्थस्य वायोः प्रतिघातेनाकाशे शब्दमुत्पादयति । ऊर्ध्वस्थस्य गुरुद्रव्यस्याधःपतनेन तत्स्थवायोः प्रतिघातादाकाशे शब्दस्योत्पत्तिरिति । प्रेरणादभिघाताच्च वायौ गतिकर्मविशेषः प्रादुर्भवति । ततो वेग उत्पद्यते । यावच्च वेगकारितो वीचीतरङ्गवद्गतिकर्मविशेषः प्रादुर्भवति, तावच्छब्दसंतान उत्पद्यते । वेगोपरमे चोपरमस्तस्य भवति । अत एवानुवातं दूरस्थस्य शब्दोपलब्धिर्वेगतारतम्याच्च शब्दतारतम्यमिति । मूले चास्य प्रयत्नो गुरुद्रव्यप्रतिघातो वा । अतः सर्वदागतिमानपि वायुर्न सर्वदा शब्दोत्पत्तौ निमित्तं भवति । यश्च दृष्टनिमित्तव्यतिरेकेण पर्णादीना शब्दसंतानस्तेन तन्निमित्तं वायुरनुमीयते । स्पर्शवद्वेगवद्द्रव्याभिघातकारितो हि सः । दण्डाभिघातात् खलु भेरीशब्द उत्पद्यमानो दृष्टः, तथाचायमिति । वायुप्रेरितानां तृणादीनां मेघादीनां च नभसि धृत्या वायोरनुमानं भवति । स्पर्शवद्वेगवद्द्रव्यसंयोगनिमित्ता ह्रीयं पयसि नौकादौ दृष्टेति । शाखादिकम्पेन च तन्निमित्तं वायुरनुमीयते । स्रोतसा हन्यमानस्य हि वेतसवनस्य कम्पो दृष्ट इति ॥ ९ ॥

**न च दृष्टानां स्पर्श इत्यदृष्टलिङ्गो वायुः ॥ १० ॥**

( उप० ) ननु प्रत्यक्षतो दृष्टमिह लिङ्गं नास्ति नहि वह्निधूमयोरिवेह प्रत्यक्षेण व्याप्तिग्रहः । किंच पृथिव्याद्यन्यतमस्यैव स्पर्शोऽप्ययं भविष्यतीत्यत आह—न चेति । अयं स्पर्शो यः पक्षः क्रियते स दृष्टानां पृथिव्यप्तेजसां न भवति, रूपासहचरत्वात् । तथाचायं स्पर्शः क्वचिदाश्रित इत्यनुमेयमित्यदृष्टलिङ्गः सामान्यतोदृष्टलिङ्गोऽपि वायुः पक्षधर्मताबलादायात इत्यर्थः । यद्यपि दृष्टमेव स्पर्शादिचतुष्कं लिङ्गमिति, तथापि वायुना सहागृहीतव्याप्तिकत्वाददृष्टलिङ्गत्वमुक्तम् । नह्ययं धर्मी वायुरिति प्रतिज्ञाय वायुः साधयितुं शक्यते । तथाच सामान्यतोदृष्टादेवेतरबाधसहकृताद्वायुसिद्धिरिति भावः ॥ १० ॥

( विवृ० ) ननु विजातीयस्पर्शेन तदधिकरणं वायुर्न सिध्यति पृथि-

व्याद्यन्यतमेन सिद्धसाधनादित्यत आह–न चेति । येन स्पर्शेन वायुरधिकरणतयाऽनुमीयते स स्पर्शो न दृष्टानां पृथिव्यप्तेजसाम्, इति हेतोः वायुरदृष्टलिङ्गः नास्ति दृष्टमधिकरणतया यस्य तादृशं लिङ्गं यस्य सः । दृष्टावृत्तिस्पर्शलिङ्गको वायुरिति फलितार्थः । तथाच पृथिव्यादिना न सिद्धसाधनं न वार्थान्तरं पृथिव्यादिस्पर्शस्य रूपसहचरितत्वनियमादिति भावः । अथवा यतो वायुरदृष्टलिङ्गः अदृष्टं रूपसहचरितत्वेनानुपलभ्यमानं लिङ्गं यस्य सः इति हेतोर्वाय्वनुमापकविजातीयस्पर्शो न दृष्टानां पृथिव्यादीनामिति समुदितसूत्रार्थः ॥ १० ॥

(भाष्यम्) अथ मन्येत, योऽयं स्पर्शः स दृष्टानामेव पृथिव्यप्तेजसां कस्यचित् स्यादिति, तच्च नैवं मन्तव्यमित्याह—*न च दृष्टानां स्पर्श इत्यदृष्टलिङ्गो वायुः । न वै खल्वयं स्पर्शो दृष्टानां पृथिव्यप्तेजसां भवितुमर्हति । कस्मात् ? विलक्षणत्वात् । पृथिव्यादिस्पर्शविलक्षणो ह्ययमिति । रूपशैत्यौष्ण्यानां चानुपलब्धेः स्पर्शमात्रमुपलभ्यते, न रूपम् । स्पर्शोऽपि न शीतो न खल्वप्युष्णः, किंतु विलक्षणो निपुणसंवेद्य इति । पूर्वकाये चोपलब्धेः । पूर्वकाये चासौ विलक्षणः स्पर्श उपलभ्यते । न तत्र पृथिव्यादिकमस्तीति न दृष्टानामयं स्पर्शः । तस्माददृष्टलिङ्गो वायुः नह्यस्य लिङ्गं स्पर्शो दृश्यते इति ॥ १० ॥

## अद्रव्यवत्त्वेन द्रव्यम् ॥ ११ ॥

(उप०) उपलभ्यमानस्पर्शाश्रयमवयविनं साधयित्वा परमाणुलक्षणं वायुं साधयितुमाह–अद्रव्यवत्त्वेनेति । द्रव्यमाश्रयभूतमस्यास्तीति द्रव्यवत् न द्रव्यवत् अद्रव्यवत्, द्रव्यानाश्रितमित्यर्थः । तथाचाकाशवत्परमाणुलक्षणो वायुर्द्रव्यम्, अन्येषां पदार्थानां द्रव्याश्रितत्वात् । आश्रितत्वं चान्यत्र नित्यद्रव्येभ्य इत्यभिधानात्परमाणुभ्यां द्व्यणुकारम्भाद् द्व्यणुकादिप्रक्रमेणावयविनो महत आरम्भस्योपपादनीयत्वादिति ॥ ११ ॥

(विवृ०) एवमवयविनि वायौ सिद्धे तन्निर्वाहकतया तत्परमाणुरप्यवश्यं स्वीकार्यस्तत्र द्रव्यत्वमप्यावश्यकमित्याह–अद्रव्यवत्त्वेनेति । द्रव्यमधिकरणतया विद्यते यस्य तद्द्रव्यवत् द्रव्यवृत्तीत्यर्थः । न द्रव्यवदद्रव्यवत् तस्य भावोऽद्रव्यवत्त्वं विशेषणे तृतीया तथाच द्रव्यवृत्तिभिन्नत्वेन विशेषितं वायुरूपं द्रव्यं स्थूलवायुनिर्वाहकतयाऽवश्यं स्वीकार्यमित्यर्थः ॥ ११ ॥

(भाष्यम्) सोऽयं वायुः—*अद्रव्यवत्त्वेन द्रव्यम् । द्रव्यं यन्न भवति

तदद्रव्यम् । अद्रव्यवांश्च वायुस्तस्माद्द्रव्यम् । वायौ खल्वद्रव्यं स्पर्शो वर्तत इति ॥ ११ ॥

## क्रियावत्त्वाद् गुणवत्त्वाच्च ॥ १२ ॥

( उप० ) वायुपरमाणोर्द्रव्यत्वसाधकं हेतुद्वयं समुच्चिन्वन्नाह—क्रियावत्त्वादिति । वायुपरमाणुर्द्रव्यमिति शेषः । यद्यपि द्रव्यत्वे सिद्धे क्रियावत्त्वं गुणवत्त्वं च सिध्यति तत्सिद्धौ च द्रव्यत्वसिद्धिरित्यन्योन्याश्रयः, तथाप्युपलभ्यमानस्पर्शाश्रयस्यावयविनो मूलभूतस्य परमाणोरसमवायिकारणसंयोगान्यथानुपपत्त्या क्रियावत्त्वम्, अवयविस्पर्शरूपादेः कारणगुणपूर्वकत्वनियमाद्गुणवत्त्वं च सिद्धं ताभ्यां च द्रव्यत्वमित्यदोषः । तत्र-क्रियावत्त्वं सपक्षैकदेशवृत्ति, गुणवत्त्वं च सपक्षव्यापकम् । चकारात्समवायिकारणत्वं द्रव्यत्वसाधकं समुच्चिनोति । ननु परमाणावेव न प्रमाणं कस्य द्रव्यत्वं साध्यत इति चेन्न, स्थूलकार्यस्य क्रियाविभागादिन्यायेन भज्यमानस्याल्पतरतमादिभावात् यतो नाल्पीयः स एव परमाणुः अवयवावयविप्रसङ्गस्यानवधित्वे अनन्तावयवत्वाविशेषे सुमेरुसर्षपादीनां परिमाणाविशेषापत्तिः कारणसंख्याविशेषमन्तरेण परिमाणप्रचययोरपि परिमाणभेदं प्रत्यतन्त्रत्वात् । न च विनाशावधिरेवायमवयवावयविप्रसङ्गः अन्त्यस्य निरवयवत्वेन विनाशानुपपत्तेः सावयवत्वे च निरवधित्वापत्तेस्तत्र च दोषस्योक्तत्वात् । ननु त्रुटिरेवावधिर्दृश्यमानत्वाददृश्यमानकल्पनायां मानाभावादिति चेन्न, तस्य चाक्षुषद्रव्यतया महत्त्वानेकद्रव्यत्वयोरावश्यकत्वात्तस्मात्त्रसरेण्ववयवावयव एव परमाणुर्यथा पृथिव्यादौ तथा वायावपीति सिद्धो वायुपरमाणुः ॥ १२ ॥

( विवृ० ) वायुपरमाणोर्द्रव्यत्वसाधकं हेतुद्वयमाह—क्रियावत्त्वादिति । वायवीयपरमाणुर्द्रव्यमिति शेषः । द्व्यणुकारम्भकसंयोगादिरूपगुणवत्त्वं तदनुकूलक्रियावत्त्वं च परमाणाववश्यमङ्गीकार्यमिति न संदिग्धासिद्धो हेतुः । परमाणुसिद्धिप्रकारस्तु त्रसरेणुः सावयवश्चाक्षुषद्रव्यत्वाद्घटवत् त्रसरेणोरवयवाः सावयवा महदवयवत्वात्कपालवदित्यादिः । एवं च पृथिव्यादौ यथा परमाणुस्तथा वायुस्थलेऽपि निराबाध एव अवयवावयविपरंपरायास्तुल्यत्वादिति ॥ १२ ॥

( भाष्यम् ) अथापि खल्वद्रव्यं भावो द्रव्यगुणकर्मसु वर्तते इति गुणः कर्म च द्रव्यं स्यादित्यत आह—*क्रियावत्त्वाद्गुणवत्त्वाच्च । न ब्रूमोऽद्रव्यं

भावोऽस्मिन् वर्तते इति वायुर्द्रव्यमिति । किंत्वद्रव्यं क्रिया गुणश्चास्मिन् वर्तते इति वायुर्द्रव्यमिति । क्रियागुणाभ्यां हि द्रव्यं लक्ष्यते न भावेन । न वै क्रिया गुणश्च गुणेषु वर्तते कर्मसु वेति । सत्यपि भावस्य संख्यादेश्च गुणत्वे द्रव्यगुणकर्मवृत्तित्वे च विशेषविवक्षया वैजात्यादुच्यते क्रियावत्वाद्गुणवत्त्वाच्चेति ॥ १२ ॥

## अद्रव्यत्वेन नित्यत्वमुक्तम् ॥ १३ ॥

( उप० ) ननु क्रियावत्त्वाद्गुणवत्त्वाच्च घटादिवत्परमाणोरनित्यत्वमनुमेयमत आह–अद्रव्यत्वेनेति । परमाणुलक्षणवायोरिति शेषः । द्रव्यं हि समवायिकारणासमवायिकारणान्यतरनाशान्नश्यति परमाणोस्तु निरवयवतया नैतदुभयमस्ति । तथाच विनाशकाभावान्न विनश्यति क्रियावत्त्वे गुणवत्त्वे च हेतौ सावयवत्वमुपाधिः । स च पक्षधर्मद्रव्यत्वावच्छिन्नसाध्यव्यापकः । केवलसाध्यव्यापकस्तु प्रागभावप्रतियोगित्वमुपाधिः ॥ १३ ॥

( विवृ० ) ननु परमाणुरनित्यः क्रियावत्त्वात् गुणवत्त्वाद्वा घटवत् इत्यनुमानेन परमाणावनित्यत्वं सेत्स्यतीत्यत आह–अद्रव्यत्वेनेति । वायुपरमाणोरिति शेषः । नास्ति द्रव्यं समवायिकारणतया यस्य तदद्रव्यं द्रव्यसमवायिकारणकभिन्नं तत्त्वेनेत्यर्थः । समवायिकारणजन्यत्वस्य द्रव्यसमवायिकारणकत्वव्याप्यतया परमाणोर्व्यापकाभाववत्त्वेन व्याप्याभाववत्त्वान्नानित्यत्वम् । तथाहि समवायिकारणाभावेऽसमवायिकारणस्याप्यभावात्परमाणोर्न विनाशसंभवः द्रव्यनाशं प्रति तदन्यतरनाशस्य हेतुत्वात् । परमाणोर्द्रव्यत्वं तु पूर्वमेव साधितम् । केचित्तु अद्रव्यद्रव्यत्वेनेति सूत्रस्य पाठ इत्याहुः ॥ १३ ॥

( भाष्यम् ) स्थूलस्य वायोरुपादानं सूक्ष्मो वायुर्न द्रव्यवानिति नित्यत्वमस्योक्तं भवतीति सूक्ष्माणां पृथिव्यादीनां साधारणं वचनम् । अथापि प्रागुत्पत्तेरुत्पन्नः स्थूलो वायुरवान्तरसर्गप्रलयेष्ववस्थानात् न पुनरिदानीं कारणद्रव्यादुत्पद्यते इति व्यवहारदशायामद्रव्यत्वात् नित्यत्वमस्योक्तं भवति । नित्यस्य सतोऽनुपलब्धिनिमित्तानुपपत्तेः सर्वदोपलब्धिप्रसङ्गः । न व खलु सर्वदा वायुरुपलभ्यते । न च नित्यस्य सतो वायोरनुपलब्धिनिमित्तमुपपद्यते । यदि वै उपपद्येत, तस्योपलब्धिः स्यात् । न तूपलभ्यते । तस्मात् सर्वदोपलब्धिप्रसङ्गः । ततो येयं कादाचित्की वायोरुपलब्धिः सा नोपपद्यते । अनित्यस्य खल्वसतोऽनुपलब्धिरुपपद्यते इति । चलत्वादहेतुः ।

चलो हि वायुर्नैकत्र चिरमवतिष्ठते देशाद्देशान्तरमपसर्पति । यदा खल्वयमुपलब्धुः सविधं प्रत्यासीदति, तदोपलभ्यते । यदा त्वपसरति, न तदोपलभ्यते इति । यश्चान्यो वायुराशिरभितः पृथिवी वर्तते, येनायं लोकः प्राणिति, स खलु स्पृष्टोऽपि सर्वकालमल्पत्वान्नोपलभ्यते । तस्मान्नित्यस्य सतोऽनुपलब्धिनिमित्तानुपपत्तेरित्यहेतुः ॥ १३ ॥

## वायोर्वायुसंमूर्च्छनं नानात्वलिङ्गम् ॥ १४ ॥

(उप०) द्व्यणुकादिप्रक्रमेणारम्भसिद्धौ सिद्धमपि वायुनानात्वं प्रकारान्तरेणापि साधयितुमाह—वायोरिति । वायुसंमूर्छनमिति वाय्वोर्वायूनां वा संमूर्छनं संयोगविशेषः । स च समानवेगयोर्विरुद्धदिक्क्रिययोः संनिपातः । स च तृणतूलकादेरूर्ध्वगमनेनानुमीयते। वाय्वोरूर्ध्वगमनस्य सन्निपातस्य चातीन्द्रियत्वात्तृणादीनां तु प्रत्यक्षाणामूर्ध्वगमनलक्षणायाः क्रियायाः प्रत्यक्षायाः स्पर्शवद्वेगवद्द्रव्याभिघातनोदनान्यतरजन्यत्वमनुमीयते । तथाहि तिर्यग्गमनस्वभावस्य वायोरूर्ध्वगमनं परस्परप्रतीघातमन्तरेणानुपपद्यमानं परस्परप्रतीघातं साधयति नदीपयःपूरयोस्तथा दर्शनात् । तदूर्ध्वगमनं च तृणाद्यूर्ध्वगमनानुमेयं, नहि तृणादीनामूर्ध्वगमनं स्पर्शवद्वेगवद्द्रव्याभिघातनोदनान्यतरद्विनेति ॥ १४ ॥

( विवृ० ) नन्वाकाशादिवद्वायोरपि न नानात्वं किंत्वेकत्वमेव, दक्षिणवातोत्तरवातादिव्यवहारस्तु उपाधिभेदादेवोपपादनीय इति तटस्थाशङ्कां निरस्यति—वायोरिति । विरुद्धदिग्गामिनोर्वेगवतोर्वाय्वोः परस्परप्रतीघातरूपं यत्संमूर्च्छनं तृणतूलादीनामूर्ध्वगमनानुकूलं तत्संपादकतयाऽनुमीयमानं तदेव वायुनानात्वे लिङ्गम् । अन्यथा वायोरेकत्वे संमूर्च्छनानुपपत्त्या तृणादेरूर्ध्वगमनानुपपत्तेः । तथाच वाय्वोः संमूर्च्छनेन तयोरूर्ध्वगमनं भवति तेन च तृणादीनामूर्ध्वगमनम् । संमूर्च्छनेनोर्ध्वगमनं तु विरुद्धदिग्गामिनोर्वेगवतोर्नद्यादिप्रवाहस्थितजलयोर्दृष्टमिति ॥ १४ ॥

(भाष्यम्) न चैतन्मन्तव्यं नित्यश्चैकश्चायं वायुराकाशवत्, तत्रैवं सत्येकस्यापसर्पणमन्यस्य चोपसर्पणमित्येतन्नोपपद्यते इति । अनेके हि वायवः । कया युक्त्या ? उच्चावचोपलब्धेः । अनेकप्रकारः खलु वायुरुपलभ्यते मन्दस्तीव्रो मध्यमश्चातो नायमेको भवति । अथापि खल्वेतत्—
*वायोर्वायुसंमूर्छनं नानात्वलिङ्गम् । वायुसंमूर्छनं नाम विरुद्धदिक्क्रिययोर्वेगवतोर्वाय्वोः संनिपातः । या चेयं वायुप्रेरितानां तृणादीनामूर्ध्वगतिरु-

पलभ्यते, सा खलु वायुसंमूर्च्छनादुत्पद्यते । संमूर्च्छितो वै वायुरूर्ध्वं गच्छंस्तृणादिकमप्यूर्ध्वं गमयति । विरुद्धदिक्क्रिययोर्नदीस्रोतसोः संमूर्च्छनादपां तत्संसृष्टानां तृणादीनां चोर्ध्वगमनं दृष्टम्, तथाचैतदिति । तदेवं तृणादीनामूर्ध्वगमनात्तन्निमित्तं वायोः संमूर्च्छनमनुमीयते, ततो वायुनानात्वमिति ॥ १४ ॥

**वायुसंनिकर्षे प्रत्यक्षाभावाद्दृष्टं लिङ्गं न विद्यते ॥ १५ ॥**

( उप० ) नन्वदृष्टलिङ्गो वायुरित्युक्तम् । तथाच कथमेतदित्यत आह— वाय्विति । दृष्टं हि लिङ्गं यत्र प्रत्यक्षेण व्याप्तिग्रहस्तदुच्यते यथा धूमोऽग्नेः वायुसंनिकर्षे च वायुना सहाविनाभावे प्रत्यक्षं नास्ति । नहि भवति यो यः स्पर्शकम्पादिमान् स वायुरिति कस्यचित् प्रत्यक्षं वायोरेवाप्रत्यक्षत्वादत एव तादृशं प्रत्यक्षगृहीतव्याप्तिकं लिङ्गं नास्तीत्यर्थः ॥ १५ ॥

( विवृ० ) नन्वदृष्टलिङ्गो वायुरिति यत्पूर्वमुक्तं तत्कथं संगच्छते दृष्टस्य स्पर्शादेरेव वायुलिङ्गत्वादत आह—वायुसंनिकर्ष इति । दृष्टं लिङ्गं हि यत्र व्याप्तेः प्रत्यक्षं भवति यथा वह्नेर्धूमः । प्रकृते तु वायुसंनिकर्षेऽपि वायुव्याप्तिप्रत्यक्षं न संभवति वायोरतीन्द्रियत्वात् । तथाच प्रत्यक्षगृहीतव्याप्तिकं लिङ्गं वायौ नास्तीत्यदृष्टलिङ्गो वायुरिति सुष्ठूक्तमेवेत्यर्थः ॥ १५ ॥

( भाष्यम् ) न वै खलु भोः स्पर्शादिभिर्लिङ्गैर्वायुरनुमीयते । द्रव्यं हि किंचिदेतैस्तदाश्रयोऽनुमीयते । न च यदनुमीयते, वायुर्नाम तद्भवति । तत्र, यादृगिदं भवति उपलब्धिलिङ्गात् योऽनुमीयते स वायुरिति, तादृगेतद्भवति स्पर्शादिभिर्लिङ्गैर्योऽनुमीयते स वायुरिति । न च वायुर्नाम द्रव्यं प्रत्यक्षम् । अदृष्टलिङ्गो हि स इत्याह—*वायुसंनिकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते । यदा वै वायुः संनिकृष्यते तदापि नैवासौ प्रत्यक्षेणोपलभ्यते । तस्मान्न तत्र दृष्टं लिङ्गमस्ति । न चात्र लिङ्गलिङ्गिभावः प्रत्यक्षेण शक्यो ग्रहीतुम् । यत्र लिङ्गं लिङ्गी चेत्येतद्द्वयं प्रत्यक्षं, तत्रैतत्स्यात् । नत्वेतदस्ति । कस्मात् ? सत्यपि वायुसन्निकर्षे वायोः प्रत्यक्षाभावात् । तस्माददृष्टलिङ्गोऽयमिति । अथ मन्येत कार्येण कारणानुमानवदेतत्स्यात् । कार्यं हि स्पर्शः कारणं चास्य वायुरिति । पार्थिवेन चोदञ्चनादिना पार्थिवस्य कारणस्यानुमानं दृष्टमिति । तच्च नैवं भवति । द्रव्यं द्रव्यमारभमाणं सजातीयमारभते इति पार्थिवेन पार्थिवस्यानुमानमुपपद्यते । द्रव्यगुणयोस्तु नैवं । गुणेन हि स्पर्शेन तदाश्रयो द्रव्यमनुमीयते इति ॥ १५ ॥

## सामान्यतोदृष्टाच्चाविशेषः ॥ १६ ॥

( उप० ) तर्हि वायोरनुमानमेव कथमित्यत उक्तमेव द्रढयितुमाह—सामान्यत इति । अनुमानं हि त्रिविधं पूर्ववत्, शेषवत् सामान्यतोदृष्टं च । तथाचायमनुभूयमानस्पर्शः क्वचिदाश्रितः स्पर्शत्वात् गुणत्वाद्वेति सामान्यतोदृष्टादेवेतरबाधसहकृतात् अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं सिध्यतीत्यर्थः । गतं तर्हि केवलव्यतिरेकिणेति चेन्न, इतरबाधानन्तरं यत्र सामान्यतोदृष्टं प्रवर्तते तत्राष्टद्रव्यानाश्रितत्वं पक्षविशेषणं सिद्धमादाय अष्टद्रव्यानाश्रितोऽयं स्पर्शः क्वचिदाश्रित इति प्रतिज्ञार्थोऽष्टद्रव्यातिरिक्तद्रव्याश्रितत्वमनादाय न पर्यवस्यतीति प्रतीत्यर्थापर्यवसन्नतयाऽन्वयिन एव तत्सिद्धिः । यत्र तु पूर्वमेव बाधावतारात्सामान्यतोदृष्टं तत्र प्रतीत्यर्थपर्यवसानात् केवलव्यतिरेकीत्यभ्युपगमात् । प्रकारार्थे केवलव्यतिरेकीति तु तुच्छमेव उक्तस्थले प्रकारस्यान्वयिन एवोपस्थितेः । व्यापकतावच्छेदकप्रकारिकैवानुमितिरिति नियमस्त्वप्रामाणिकः सामग्रीविशेषसाचिव्यात्प्रकारान्तरभानस्यापि संभवात् ॥ १६ ॥

( विवृ० ) ननु वायुव्याप्तेरप्रत्यक्षत्वे तदनुमानं कथं संभवतीत्यतः पूर्वोक्तमेव स्मारयति—सामान्यत इति । अविशेषो विशेषराहितः विशेषाविशेपित इति यावत् । विशेषश्च द्रव्यत्वव्याप्यजातिविशेषो वायुत्वं तथा चानुभूयमानः स्पर्शः क्वचिदाश्रितः स्पर्शत्वादित्यनुमानेन इतरबाधसहकृतेन स्पर्शे अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वसिद्धौ अष्टद्रव्यातिरिक्तद्रव्यत्वेन वायुरपि साध्यतावच्छेदककोटौ सिध्यतीति भावः । सामान्यतोदृष्टादिति कार्यकारणभिन्नलिङ्गादन्वयव्यतिरेकिलिङ्गाद्वेत्यर्थः । न्यायसूत्रे पूर्ववत् , शेषवत् , सामान्यतोदृष्टमिति त्रिविधमनुमानमुक्तम् । तत्र पूर्ववत्कारणलिङ्गकं केवलान्वयि वा । शेषवत् कार्यलिङ्गकं केवलव्यतिरेकि वा । सामान्यतोदृष्टं कार्यकारणभिन्नलिङ्गकमन्वयव्यतिरेकि वा इत्यर्थः ॥ १६ ॥

( भाष्यम् ) सामान्यतोदृष्टाच्चानुमानान्न विशेषःसिध्यति । स्पर्शेन हि तदाश्रयस्य द्रव्यस्यानुमानं भवति न वायोः । त्रिविधं खल्वनुमानमुक्तं पूर्ववत् , शेषवत् , सामान्यतोदृष्टं चेति । यत्र कारणेन कार्यमनुमीयते मेघोन्नत्या भविष्यति वृष्टिरिति, तत् पूर्ववदनुमानम् । यत्र कार्येण कारणमनुमीयते पूर्वोदकविपरीतोदकेन नद्याः भूता वृष्टिरिति, तच्छेषवदनुमानम् । अथापि खलु प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे संप्रत्ययः

शेषस्ततः शेषवदिति । गुणस्य स्पर्शस्य द्रव्याश्रितत्वे सिद्धे प्रसक्तस्य पृथिव्याद्याश्रितत्वस्य प्रतिषेधे गुणकर्मणोरप्रसङ्गाच्छिष्यमाणे द्रव्यान्तरे वायौ संप्रत्यय इति । सामान्यतोदृष्टं खल्वेकत्र दृष्टयोरेकस्य दर्शनादन्यस्यानुमानम् । यथा देवदत्तादिदेशान्तरसंबन्धो व्रज्यापूर्वको दृष्टः, ततश्चन्द्रार्कयोरपि देशान्तरसंबन्धो व्रज्यापूर्वक इत्यनुमानमिति । तत्रैवं सति, पूर्ववतः शेषवतश्चेति चार्थो मन्तव्यः । अथापि खलु यत्र साध्यसाधनयोः संबन्धग्रहणाद्भवत्यनुमानं पूर्ववन्नाम तत् । यत्र तद्व्यतिरेकयोस्तच्छेषवत् । यत्र चोभयथा प्रवृत्तिस्तत्सामान्यतोदृष्टमिति । अथापि खल्वाचार्यप्रवृत्तिर्ज्ञापयति द्विविधमनुमानं, क्वचिद्विशेषतोदृष्टं क्वचिच्च सामान्यतोदृष्टमिति । यत्र विशेषतो दृष्टं लिङ्गं भवति लिङ्गं लिङ्गी चेत्येतद्द्वयं यत्र प्रत्यक्षं, तत्र विशेषतो भवत्यनुमानम् । सामान्यतोदृष्टाच्च न गम्यते विशेषः ॥ १६ ॥

**तस्मादागमिकम् ॥ १७ ॥**

( उप० ) ननु चाविशेष इति वायुरयमित्याकाराऽनुमितिर्न भवति किंत्वष्टद्रव्यातिरिक्तद्रव्याश्रितत्वेनैव प्रकारेणेति विवक्षितं यदि, तदा तस्य द्रव्यस्य वायुसंज्ञायां किं मानमत आह—तस्मादिति । यस्माद्विशेषाकारेण नानुमितिः तस्माद्वायुरिति नाम आगमिकम् । आगमो वेदः ततः सिद्धमित्यर्थः । 'वायुर्वै क्षेपिष्ठा देवता', 'वायव्यं श्वेतं छागलमालभेत', 'वायुश्च सर्ववर्णोऽयं सर्वगन्धवहः शुचिः' इत्यादि विधिशेषीभूतार्थवादादेव वायुसंज्ञाधिगतिः । यथा 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्' इत्याद्यर्थवादात्स्वर्गसंज्ञायाः । 'वसन्ते सर्वसस्यानां जायते पत्रशातनम् । मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः ॥' इत्यर्थवादाद्यवसंज्ञायाः 'अम्बुजो वेतसः' इत्यर्थवादाद्वेतससंज्ञायाः, 'वराहं गावोऽनुधावन्ति' इत्यर्थवादाद्वराहसंज्ञायाः, अन्यथा 'स्वर्गकामो यजेत' इत्यादौ विशिष्टसुखानुपस्थितौ यागादिषु स्वर्गार्थिनां प्रवृत्तिर्न स्यात् । न स्याच्च 'यवमयश्चरुर्भवति', 'वैतसे कटे प्राजापत्यं चिनोति', 'वाराही चोपानत्' इत्यादौ म्लेच्छप्रसिद्धिमनुरुध्य प्रवृत्त्यनध्यवसायः । म्लेच्छा हि यववराहवेतसशब्दान् कङ्गुवायसजम्बुषु प्रयुञ्जते । तथाचार्थवादमन्तरेण संदेहः स्यादित्यागमादेव तत्तदर्थप्रतीतिरिति भावः । नाममात्रमागमिकं द्रव्यसिद्धिस्तु सामान्यतोदृष्टादेव ॥ १७ ॥

( विवृ० ) ननु वायुत्वेन यदि नानुमानं तदा तस्य वायुसंज्ञायां

किं मानमत आह—तस्मादिति । यस्माद्वायुत्वस्वरूपजातिप्रकारेण वायोर्नानुमितिः तस्माद्वायुरिति नाम आगमिकं वेदप्रसिद्धम् । आगमास्तु 'वायुर्वै क्षेपिष्ठा देवता', 'वायव्यं श्वेतं छागलमालभेत', 'वायुश्च सर्ववर्णोऽयं सर्वगन्धवहः शुचिः' इत्याद्याः । तेभ्यो वायुसंज्ञाधिगता यथा 'यन्न दुःखेन' इत्यादिना स्वर्गसंज्ञावगतिः, यथा वा 'वसन्ते सर्वसस्यानाम्' इत्याद्यर्थवादाद्यवसंज्ञावगतिः, यथा वा 'अम्बुजो वेतसः' इत्यर्थवादाद्वेतससंज्ञावगमः । यथा वा 'वाराही चोपानत्', 'वाराहं गावोऽनुधावन्ति' इत्याद्यागमाद्वराहसंज्ञावगमः । म्लेच्छा हि यववराहवेतसशब्दान् क्रमेण कङ्गुकाकजम्बुपु प्रयुञ्जते । तथाच—अर्थवादमन्तरेण संदेहः स्यादित्यागमादेव तत्तदर्थप्रतीतिरित्याशयः ॥ १७ ॥

( भाष्यम् ) * तस्मादागमिकम् ॥ १७ ॥

संज्ञा कर्म त्वस्मद्विशिष्टानां लिङ्गम् ॥ १८ ॥

( उप० ) एवं वायुप्रकरणं समाप्य तत्किमुन्मादिजल्पित-डित्थ-डवित्थसंज्ञावद्वायुसंज्ञापीत्यागमस्य सर्वज्ञप्रणीतत्वमुपपादयन् औपोद्घातिकमीश्वरप्रकरणमारिप्समान आह—संज्ञेति । तुशब्दः स्पर्शादिलिङ्गव्यवच्छेदार्थः । संज्ञा नाम, कर्म कार्यं क्षित्यादि, तदुभयमस्मद्विशिष्टानामीश्वरमहर्षीणां सत्त्वेऽपि लिङ्गम् ॥ १८ ॥

( विवृ० ) नन्वागमस्य कथं प्रामाण्यमित्यत आह—संज्ञेति । तुशब्दः प्रकरणविच्छेदार्थः । इदानीमीश्वरप्रकरणमारब्धमिति भावः । संज्ञा नाम वायुवराहयववेतसादि, कर्म कार्यं क्षित्यंकुरादि, एतदुभयमस्मद्विशिष्टानाम् अस्मत्तो विशिष्टानां तत्तत्कार्यसमर्थानां सर्वज्ञैश्वर्यसंपन्नानामीश्वरमहर्षीणां लिङ्गमनुमापकम् । तुकारो लिङ्गान्तरव्यवच्छेदार्थो वा । तथाचेश्वरमहर्षिसिद्धौ तत्प्रणीतत्वेन वेदस्मृत्यादेः प्रामाण्यमवश्यमङ्गीकार्यमिति । यद्यपीदं पूर्वमुक्तं तथापि दार्ढ्यार्थमीश्वराद्यनुमानकथनार्थं च पुनर्वचनम् ॥ १८ ॥

( भाष्यम् ) वायुरेतद्द्रव्यमित्येतदागमिकं मन्तव्यमित्यागमस्य स्वतन्त्रप्रमाणभावमनभ्युपगच्छतो न किंचित्समाधानमिति प्रत्यवतिष्ठमानमुपहसन्निवेदमाह—*संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम् । तुशब्दात् पक्षो व्यावर्त्यते । स्पर्शेन तदाश्रयस्य द्रव्यस्यानुमाने न विप्रतिपत्तिः । किंतु तद्द्रव्यं वाय्वभिधानमन्याभिधानं वेति संज्ञायां विप्रतिपत्तिः । संज्ञा त्वस्माकं न

कर्म । अस्मत्तो विलक्षणानां खल्वेतल्लिङ्गम् । परीक्षैव वस्तूनामस्मादृशाना कर्म । संज्ञा त्वस्मद्विलक्षणैर्लौकिकैरपि क्रियते । इदमस्ति नास्तीति परीक्षकैर्निर्णीतेऽर्थे लौकिकैरपि बह्व्यः संज्ञास्तत्र संनिवेश्यन्ते । असाधारणो हि वस्तुधर्मो व्यपदेशनिमित्तम् । तन्निर्णयश्च न परीक्षकेभ्योऽन्यस्मात् । संज्ञा त्वन्यस्मादपीति । यच्चैतत् स्पर्शादिभिर्लिङ्गैरनुमितं द्रव्यं, तत्खलु वातीति वायुः, स्पृश्यते इति स्पर्शनः, प्राणित्यनेनेति प्राणः, अशितपीतादिसमीकरणात्समान इत्यादि यथाविषयमाख्यायते । अथापि खल्वेतत्संज्ञाकर्म अस्माकमस्माद्विशिष्टानां च लिङ्गमिति । अथापि खल्वस्माद्विशिष्टानां योगिनां लिङ्गमिति लोकसामान्यमिवात्मनि मन्यते इति शैलीयं भगवतः सूत्रकारस्य ॥ १८ ॥

**प्रत्यक्षप्रवृत्तत्वात्संज्ञाकर्मणः ॥ १९ ॥**

( उप० ) कथमेतदित्यत आह—प्रत्यक्षेत्यादिना । अत्रापि संज्ञा च कर्म चेति समाहारद्वन्द्वादेकवद्भावः संज्ञाकर्तुर्जगत्कर्तुश्चाभेदसूचनार्थः । तथाहि यस्य स्वर्गापूर्वादयः प्रत्यक्षाः स एव तत्र स्वर्गापूर्वादिसंज्ञाः कर्तुमीष्टे, प्रत्यक्षे चैत्रमैत्रादिपिण्डे पित्रादेश्चैत्रमैत्रादिसंज्ञानिवेशनवत् । एवं च घटपटादिसंज्ञानिवेशनमपि ईश्वरसंकेताधीनमेव । यः शब्दो यत्रेश्वरेण संकेतितः स तत्र साधुः यथा या काचिदोषधिर्नकुलदंष्ट्राग्रस्पृष्टा सा सर्वाऽपि सर्पविषं हन्तीत्येतादृशी संज्ञा अस्मदादिविशिष्टानां लिङ्गमनुमापकम् । यापि मैत्रादिसंज्ञा पित्रा पुत्रे क्रियते सापि 'द्वादशेऽहनि पिता नाम कुर्यात्' इत्यादिविधिना नूनमीश्वरप्रयुक्तैव । तथाच सिद्धं संज्ञाया ईश्वरलिङ्गत्वम् । एवं कर्मापि कार्यमपीश्वरे लिङ्गम् । तथाहि क्षित्यादिकं सकर्तृकं कार्यत्वाद्घटवदिति । अत्र यद्यपि शरीराजन्यं जन्यं वा जन्यप्रयत्नाजन्यं जन्यं वा सकर्तृकत्वासकर्तृकत्वेन विवादाध्यासितं वा संदिह्यमानकर्तृकत्वं वा क्षित्यादित्वेन न विवक्षितं, अदृष्टद्वारा क्षित्यादेरपि जन्यप्रयत्नजन्यत्वात् । विवादसंदेहयोश्चातिप्रसक्तत्वेन पक्षतानवच्छेदकत्वात् । किं च सकर्तृकत्वमपि यदि कृतिमज्जन्यत्वं तदाऽस्मदादिना सिद्धसाधनम्, अस्मदादिकृतेरप्यदृष्टद्वारा क्षित्यादिजनकत्वात् । उपादानगोचरकृतिमज्जन्यत्वेऽपि तथा, अस्मदादिकृतेरपि किंचिदुपादानगोचरत्वात्, कार्यत्वमपि यदि प्रागभावप्रतियोगित्वं तदा ध्वंसे व्यभिचार इति तथापि क्षितिः सकर्तृका कार्यत्वात् अत्र च सकर्तृकत्वमदृष्टाद्वारककृतिमज्जन्यत्वं

कार्यत्वं च प्रागभावावच्छिन्नसत्ताप्रतियोगित्वम् । नचाङ्कुरादौ संदिग्धानैकान्तिकत्वं साध्याभावनिश्चये हेतुसदसत्त्वसंदेहे संदिग्धानैकान्तिकत्वस्य दोषत्वात् । अन्यथा सकलानुमानोच्छेदप्रसङ्गात् । न च पक्षातिरिक्ते दोषोऽयमिति वाच्यं, राजाज्ञापत्तेः । नहि दोषस्यायं महिमा यत्पक्षं नाक्रामति तस्मादङ्कुरस्फुरणदशायां निश्चितव्याप्तिकेन हेतुना तत्र साध्यसिद्धेरप्रत्यूहत्वात्क संदिग्धानैकान्तिकता तदस्फुरणदशायां तु सुतरामिति संक्षेपः ॥ १९ ॥

( विवृ० ) ननु सर्वज्ञत्वं संज्ञाकर्मकर्तुः कुतः सिद्धमित्यत आह—प्रत्यक्षप्रवृत्तत्वादिति । संज्ञाकर्मण इत्यत्र पूर्ववत्समाहारद्वन्द्वः प्रत्यक्षप्रवृत्तत्वात् प्रत्यक्षसाध्यत्वात् । तत्र संज्ञायाः संज्ञिप्रत्यक्षसाध्यत्वम् । कार्यस्य तूपादानप्रत्यक्षसाध्यत्वम् । पित्रादिना हि पुत्रादिशरीरं दृष्ट्वैव तत्र चैत्रमैत्रादिसंज्ञा निवेश्यन्ते । एवं कुलालादयोऽपि कपालादिकं दृष्ट्वैव घटादिकं कुर्वन्ति । अतो निखिलसाधुसंज्ञाकर्तुस्तादृशसंज्ञिप्रत्यक्षस्य, क्षित्यादिकार्यकर्तुस्तदुपादानप्रत्यक्षस्य चावश्यकत्वात्सर्वज्ञत्वमर्थवशसंपन्नमेव । अत एव न्यायसूत्रवृत्तौ तद्व्यणुकादिकं पक्षीकृत्य सकर्तृकत्वस्यानुमाने अधिकरणसिद्धान्तन्यायेनेशस्य सर्वज्ञत्वसिद्धिरित्युक्तम् । अथ क्षित्यङ्कुरादिपक्षकसकर्तृत्वानुमाने पक्षतावच्छेदकं किम्, न तावत् क्षितित्वं परमाण्वात्मकक्षितावंशतो बाधस्वरूपासिद्ध्योः प्रसङ्गात् । तत्सामानाधिकरण्येन पक्षत्वमिति चेन्न । घटादौ सिद्धसाधनात् । जन्यत्वस्य विशेषणत्वे पक्षतावच्छेदकघटकस्य हेतुत्वेन उपनयासंभवादुद्देश्यतावच्छेदकविधेययोरैक्यादिति चेन्न । स्वरूपसंबन्धरूपं पदार्थान्तररूपं वा कार्यत्वं पक्षतावच्छेदकं प्रागभावप्रतियोगित्वरूपं कार्यत्वं च हेतुः सकर्तृकत्वं च स्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वम् । ध्वंसे बाधादिवारणाय कार्यत्वद्वये सामानाधिकरण्यसंबन्धेन सत्तावैशिष्ट्यं निवेशनीयमिति संक्षेपः ॥ १९ ॥

( भाष्यम् ) अथापि खल्वियं संज्ञा अस्मद्विशिष्टैरपि क्रियते इति कुत एतत्प्रतिपत्तव्यम् ?—*प्रत्यक्षप्रवृत्तत्वात्संज्ञाकर्मणः । प्रत्यक्षं खल्वद्यतना अपि संज्ञां कर्तुं प्रवर्तन्ते, किमत्रानुमानेन । प्रत्यक्षपूर्वकं खल्वनुमानमिति पूर्वोऽप्येवमिति शक्यमनुमातुम् । दृश्यते खल्वेवमिति । अथापि खल्वसाधारणैर्वस्तुधर्मैः संज्ञाकर्मणः प्रवृत्तिरिति प्रत्यक्षमुपलभ्यते । तच्च शक्यमस्मद्विशिष्टैः कर्तुमिति । अवसिता वायुपरीक्षा ॥ १९ ॥

**निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम् ॥ २० ॥**

( उप० ) एवं सूत्राभ्यामीश्वरप्रकरणं समाप्याकाशप्रकरणमारिप्समान आह–निष्क्रमणमिति । इतिशब्दः प्रकारार्थः । उत्क्षेपणादीन्यपि कर्माणि संगृह्णाति स्पर्शवद्द्रव्यसंचारो निष्क्रमणं प्रवेशनं च तद्कार्यस्याकाशस्य लिङ्गमिति सांख्याः ॥ २० ॥

( विवृ० ) आकाशं निरूपयितुमाह—निष्क्रमणमिति । अत्र प्रकारार्थकेतिशब्देनोत्क्षेपणादेरपि ग्रहणम् । स्पर्शवतां संचारो निष्क्रमणं प्रवेशनं च शून्यात्मकाकाशं विनाऽनुपपद्यमानमाकाशनामकं द्रव्यान्तरमनुमापयतीति सांख्यमतम् ॥ २० ॥

( भाष्यम् ) आकाशमिदानी परीक्ष्यते–*निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम् । आकाशो ह्यवकाशं ददाति । ततो निष्क्रामति प्रविशति च । यत्र चावकाशो नास्ति न तत्रैते भवतः । तस्मादनुमीयते अस्त्याकाशं यदवकाशं ददातीति ॥ १९ ॥

**तदलिङ्गमेकद्रव्यत्वात्कर्मणः ॥ २१ ॥**

( उप० ) तदेतद्दूषयितुमाह–तदलिङ्गमिति । निष्क्रमणप्रवेशनादिकं न तावत्समवायिकारणतया आकाशमनुमापयति कर्मण एकद्रव्यत्वादेकमात्रमूर्तसमवायिकारणकत्वात्, न कर्मापि व्यासज्यवृत्तीत्युक्तं न वाऽमूर्तवृत्तीति ॥ २१ ॥

( विवृ० ) तदेतन्मतं निरस्यति—तदलिङ्गमिति । तन्निष्क्रमणादिकमलिङ्गमाकाशस्य लिङ्गं न भवति कर्मणः क्रियाया एकं मूर्तं द्रव्यमाश्रयो यस्य तत्वात् । तथाच मूर्तमात्रसमवेतं कर्म न समवायितयाकाशानुमानसमर्थम् समवेतकार्यं हि समवायिकारणमाक्षिपति न चाकाशकर्मणोः समवायिसमवेतभाव इत्यर्थः ॥ २१ ॥

( भाष्यम् ) अस्य प्रत्यवस्थानम् । तदलिङ्गमेकद्रव्यत्वात्कर्मणः । निष्क्रमणं प्रवेशनं चेति द्वयं न लिङ्गमाकाशस्य । कस्मात् ? एकद्रव्यत्वात्कर्मणः । कर्म खल्वेतत् निष्क्रमणं प्रवेशनं चैकस्मिन् द्रव्ये समवैति यन्निष्क्रामति प्रविशति च, न त्वेतदाकाशेऽपि समवैतीति नैतदाकाशस्य लिङ्गम् ॥ २० ॥

**कारणान्तरानुक्लृप्तिवैधर्म्याच्च ॥ २२ ॥**

( उप० ) ननु चासमवायिकारणतयैवाकाशमनुमापयिष्यति निष्क्रम-

णप्रवेशनादीत्यत आह—कारणान्तरेति । अनुक्लृप्तिर्लक्षणम् । अनुकल्प्यते ज्ञाप्यतेऽनेनेति व्युत्पत्त्या कारणान्तरस्य असमवायिकारणस्य याऽनुक्लृप्ति-र्लक्षणं तद्वैधर्म्यादित्यर्थः । द्रव्यं तावदसमवायिकारणं न भवत्येव असम-वायिकारणता च कारणैकार्थप्रत्यासत्त्या कार्यैकार्थप्रत्यासत्त्या च । प्रथमा तन्तुरूपाणां पटरूपं प्रति, इयं चासमवायिकारणता महतीति संज्ञां लभते गुरुप्रतिपत्तिकत्वात् । द्वितीया च यथा आत्ममनःसंयोगस्य ज्ञानादिकं प्रति, इयं चासमवायिकारणता लघ्वीति संज्ञां लभते लघुप्रतिपत्तिकत्वात् । आकाशस्य तु निष्क्रमणप्रवेशनादौ कर्मणि न समवायिकारणता नाप्यसम-वायिकारणता तथाच न च कर्माकाशसत्त्वे लिङ्गमिति ॥ २२ ॥

( विवृ० ) असमवायिकारणविधयाऽपि न गगनस्य गमकं कर्मेत्याह—कारणेत्यादिना । अनुक्लृप्तिरिति क्तिद्विहितो भाव इति न्यायादनुक्लृप्तं वादिप्रतिवाद्युभयसंमतं यत्कारणान्तरमसमवायिकारणं गुणः कर्म च तद्वै-धर्म्यात् द्रव्यत्वरूपतद्वैधर्म्यस्याकाशे सत्त्वात् नासमवायिकारणतयाकाशम-नुमापयितुं निष्क्रमणादिकं शक्नोतीत्यर्थः ॥ २२ ॥

( भाष्यम् ) इतश्चैतदेवं प्रतिपत्तव्यम्—*कारणान्तरानुक्लृप्तिवैधर्म्याच्च । यानि कारणान्तराण्यनुकल्पन्ते कार्यान्तरेषु, तेषां वैधर्म्याच्च तदलिङ्गमा-काशस्य । नियतपूर्वभावो हि कारणानां धर्मः । सर्वकालं चाकाशं विद्यते, न तस्य पूर्वभावनियमः शक्यो निश्चेतुम् । न चैतस्य व्यतिरेकोऽस्ति । अन्वयव्यतिरेकाभ्यां हि कारणभावावगतिः । यदि वै कारणमाकाशं भवेत्, ततो व्यतिरेकाभावात्सर्वदा कर्मोत्पद्येत । असर्वगतत्वं वा आका-शस्य स्यात् । तत्र यादृगिदं भवति द्रव्यं लिङ्गमाकाशस्य, तादृगेतद्भवति निष्क्रमणं प्रवेशनं च लिङ्गमाकाशस्येति ॥ २१ ॥

## संयोगादभावः कर्मणः ॥ २३ ॥

( उप० ) ननु निमित्तकारणमस्तु कर्मण्याकाशम्, दृश्यते ह्याकाशे पक्षिकाण्डादीनां संचरणमत आह—संयोगादिति । मूर्तसंयोगेन कर्मका-रणस्य वेगगुरुत्वादेः प्रतिबन्धात् कर्मणोऽभावोऽनुत्पादो न त्वाकाशाभा-वात्तस्य व्यापकत्वात्, तस्मादाकाशान्वयोऽन्यथासिद्ध एव नाकाशनि-मित्ततां साधयतीत्यर्थः ॥ २३ ॥

( विवृ० ) निमित्तकारणतयापि नाकाशानुमापकं कर्मेत्याह—संयो-गादिति । यतः संयोगात्संयोगानन्तरं कर्मणोऽभावः अनुत्पादः अत

आकाशं न कर्मणि निमित्तकारणमित्यर्थः । अयं भावः—फलपत्रादीनां भूम्यादिसंयोगानन्तरं कर्मानुत्पत्तिदर्शनात्, संयोगविशेषाभावादिकमेव कर्मणि निमित्तकारणं न त्वाकाशं तद्व्यतिरेकेण कर्मव्यतिरेकस्यासिद्धेस्तस्य व्यापकत्वादिति भावः ॥ २३ ॥

( भाष्यम् ) अस्योत्तरम्—* संयोगादभावः कर्मणः । तदलिङ्गमिति न भवति प्रतिषेधः । कस्मात्? कर्मणः संयोगात् । कर्म हि क्रिया । सा च धात्वर्थः फलं व्यापारश्चेति द्वयी । तत्र, व्यापारो यन्निष्क्रामति प्रविशति च तस्मिन् समवैति । फलं तु संयोग आकाशेऽपीति भवति लिङ्गमाकाशस्य । अथापि खल्वाकाशः सर्वगतोऽपि न सर्वत्र कर्मोत्पत्तिनिमित्तम् । मूर्तिमता द्रव्येण संयोगात् खल्ववकाशस्यावरोधो भवतीति न तत्र कर्मोत्पद्यते । यस्तु सर्वदा सतो व्यतिरेकाभावात्पूर्वभावनियमो न शक्यो निश्चेतुमिति प्रतिजानीते, तस्यात्मनोऽपि न कारणभावः प्राप्नोति । अवकाशकारिता कर्मनिष्पत्तिरिति प्रत्यक्षमेतत् । ततो यथा मूर्तसंयोगाभावस्तत्र हेतुरेवमाकाशोऽप्यवकाशनिमित्तं हेतुर्भवति विशेषो वा वक्तव्यः । न त्वसावस्ति । तस्मादुभयं हेतुरिति ॥ २२ ॥

### कारणगुणपूर्वकः कार्यगुणो दृष्टः ॥ २४ ॥

( उप० ) एवं सांख्यमते दूषिते शब्दमाकाशे लिङ्गमुपपादयिष्यन्परिशेषानुमानाय पीठमारचयन्नाह—कारणगुणेति । पृथिव्यादिलक्षणे कार्ये ये विशेषगुणा रूपादयस्ते कारणगुणपूर्वका दृष्टाः शब्दोऽपि विशेषगुणः जातिमत्त्वे सति बाह्यैकेन्द्रियमात्रग्राह्यत्वात्, रूपादिवत् । तथाच तादृशं कार्यं नोपलभ्यते यत्र कारणगुणपूर्वकः शब्दः स्यादित्यर्थः ॥ २४ ॥

( विवृ० ) शब्द एवाकाशानुमापक इत्यभिधातुं भूमिकामारचयति—कारणेत्यादिना । कार्यस्य यो विशेषगुणः स कारणगुणपूर्वक एव दृष्टः यथा घटरूपादिः कपालरूपादिपूर्वकः तथाच शब्दरूपो यो विशेषगुणः श्रोत्रेन्द्रियेणोपलभ्यते तस्य कारणगुणपूर्वकत्वाभावान्नकार्यगुणत्वं किंतु नित्यद्रव्यस्यैव गुणः शब्द इति शब्दाधारतया नित्यद्रव्यसिद्धिरित्यर्थः ॥ २४ ॥

( भाष्यम् ) अवकाशेन हि सोऽनुमीयते । यश्चायमुपलभ्यते शब्दः, सोऽप्याकाशस्य लिङ्गं भवति । कया युक्त्या? यस्मात्—* कारणगुणपूर्वकः कार्यगुणो दृष्टः । पृथिव्यादीनां रूपादयो गुणाः कारणगुणपूर्वका दृश्यन्ते । शुक्लेभ्यस्तन्तुभ्यः शुक्लः पट उत्पद्यते, कृष्णेभ्यः कृष्णो, लोहितेभ्यो लोहित इत्यादि यथाविषयं वेदितव्यम् ॥ २४ ॥

## कार्यान्तराप्रादुर्भावाच्च शब्दः स्पर्शवतामगुणः ॥ २५ ॥

( उप० ) ननु वीणावेणुमृदङ्गशङ्खपटहादौ कार्ये शब्द उपलभ्यते तथाच तत्कारणगुणपूर्वकः स्यादत आह—कार्यान्तरादिति । भवेदेवं यथा तन्तुकपालादिषु रूपरसाद्यनुभूयते तत्सजातीयं च रूपरसाद्यन्तरं पटघटादावुपलभ्यते तथा वीणावेणुमृदङ्गाद्यवयवेषु यः शब्द उपलब्धस्तत्सजातीयश्चेद्वीणावेणुमृदङ्गाद्यवयविन्युपलभ्यते । न चैवम्, प्रत्युत निःशब्दैरेवावयवैर्वीणाद्यारम्भदर्शनात् । नीरूपैस्तु तन्तुकपालादिभिः पटघटाद्यारम्भस्यादर्शनात् । किं च यदि शब्दः स्पर्शवतां विशेषगुणः स्यात्तदा तत्र तार-तारतर—मन्द—मन्दतरादिभावो नानुभूयेत नह्येकावयव्याश्रिता रूपादयो वैचित्र्येणानुभूयन्ते तस्मान्न स्पर्शवद्विशेषगुणः शब्दः ॥ २५ ॥

( विवृ० ) ननु भेरीमृदङ्गादावेव कार्ये शब्द उपलभ्यते । तथाच तस्य कारणगुणपूर्वकत्वमप्यनायत्याऽङ्गीकार्यमिति सर्वमेतदाकुलमित्यत आह—कार्येति । शब्दो न भेर्यादीनां कार्याणां स्पर्शवतां गुणः । कुतः । कार्यान्तरस्य स्वावयवकार्यसजातीयस्य शब्दरूपकार्यान्तरस्य अप्रादुर्भावादननुभवादर्थात् भेर्यादौ । अयं भावः—यथा भेर्यादौ रूपादयो विशेषगुणाः स्वावयवरूपादिसजातीया अनुभूयन्ते तथा स्वावयवशब्दसजातीयः शब्दो भेर्यादौ नोपलभ्यते निःशब्दैरपि भेर्याद्यवयवैर्भेर्याद्यारम्भात् । तथाच शब्दस्याकारणगुणपूर्वकत्वमवश्यमङ्गीकार्यम् । एवं च शब्दो न स्पर्शवद्विशेषगुणः अपाकजत्वे सति अकारणगुणपूर्वकप्रत्यक्षत्वादित्यनुमानेन शब्दस्य स्पर्शवद्विशेषगुणत्वाभावः सिध्यति । पाकजरूपादौ व्यभिचारवारणाय सत्यन्तं, कपालादिरूपादिजन्ये घटादिरूपादौ व्यभिचारवारणायाऽकारणगुणपूर्वकेति, जलादिपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति । अवयविपाकानङ्गीकारे तु सत्यन्तं न देयम् ॥ २५ ॥

( भाष्यम् ) कार्यगुणः कारणगुणपूर्वक इति प्रकृतम् । न वै खलु कार्यान्तरं कारणगुणाद्विजातीयो गुणः कार्ये प्रादुर्भवति । न शुक्लेभ्यस्तन्तुभ्य उत्पन्नस्य वाससः कृष्णं रूपमुत्पद्यते न कृष्णेभ्यो रक्तं न रक्तेभ्यः शुक्लमिति । तदेवं कार्यान्तराप्रादुर्भावाच्च प्रतिपद्यामहे कारणगुणपूर्वकः

---

१ 'शब्दः स्पर्शवतामगुणः' इति पृथक्सूत्रं चन्द्रकान्तमते ।

कार्यगुण इति । तदेवमुपलभ्यमानः शब्दोऽपि कारणगुणपूर्वक एवेति भवति प्रतिपत्तिः ॥ सोऽयम्–*शब्दः स्पर्शवतामगुणः । स्पर्शवतां पृथिव्यप्तेजोवायूनां गुणो न भवति । कस्मात्? गुणान्तरप्रादुर्भावाभावात् । नहि पृथिव्यादीनां कारणेषु शब्दो विद्यते इति । कारणक्रमादिति चेन्नाप्रत्याख्यानात् । अथ मन्येत, सूक्ष्मेष्वपि पृथिव्यादिषु कारणक्रमेण शब्दो विद्यते, आकाशाद्वायोर्वायोरग्नेरग्नेरपामद्भ्यः पृथिव्याश्चोत्पत्तेरिति । तच्च नैवं मन्तव्यम् । कस्मात्? अप्रत्याख्यानात् । न खल्वेवं शब्दस्य मूलकारणमाकाशं शक्यं प्रत्याख्यातुम्, वाय्वग्न्यादिषु शब्दानुपपत्तेः । आकाशकारितो हि तेषु शब्द इति । तारमन्द्रभावोपलब्धेश्च । एकस्मिन्नेवाश्रये तारमन्द्रादिभावेन शब्द उपलभ्यते । पृथिव्यादिविशेषगुणास्तु रूपादयो नैवम् । तस्मान्न पृथिव्यादिविशेषगुणः शब्दः । न च वायोरयावद्द्रव्यभावादस्तु वायुगुणः शब्दः, वायुकारिता हि शब्दोत्पत्तिरिति । एवं सति स्पर्शवच्छब्दोऽपि यावद्द्रव्यं भवेत् । न च भवति । कथं ज्ञायते? प्रतिवातं दूरादनुपलब्धेः । यदि वै भवेत्, येयं वायोः प्रातिकूल्येन वर्तमानस्योपलब्धुर्दूराच्छब्दस्यानुपलब्धिः, सा नोपपद्यते । स्पर्शवदसावपि ह्युपलभ्येत न चोपलभ्यते । तस्मादनुमीयते न यावद्द्रव्यं शब्दो भवतीति । अथापि खलु तृतीयक्षणे प्रणाशान्न यावद्द्रव्यं भवति शब्द इति । तस्मान्न वायुगुण इति । वायुविशेषगुणो हि स्पर्शो यावद्द्रव्यं भवतीति । एकैकविशेषगुणाश्च पृथिव्यादय इति शब्दविशेषगुणस्य द्रव्यस्यानुमानं भवति । क्रमाद्गुणोपचयदर्शनाच्च द्विगुणोऽपि वायुरुपचितगुण इति भवति प्रतिपत्तिरतोऽनुपचितगुणस्याकाशस्यानुमानमिति ॥ २५ ॥

**परत्र समवायात्प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः ॥ २६ ॥**

( उप० ) नन्वात्मगुणो मनोगुणो वा शब्दो भविष्यतीत्यत आह–परत्रेति । शब्दो यद्यात्मगुणः स्यात्तदाऽहं सुखी यते जाने इच्छामीत्यादिवदहं पूर्ये अहं वाद्ये अहं शब्दवानित्यादिधीः स्यात् नत्वेवमस्ति । किंतु शङ्खः पूर्यते, वीणा वाद्यते, इति प्रतियन्ति लौकिकाः । किंच शब्दो नात्मगुणः बाह्येन्द्रियग्राह्यत्वात् रूपादिवत् । अपि च शब्दो यद्यात्मयोग्यविशेषगुणः स्याद्बधिरेणाप्युपलभ्येत दुःखादिवत्, तस्मात् सुष्ठूक्तं परत्र समवायादिति, अमनोगुणत्वे हेतुमाह प्रत्यक्षत्वादिति । नात्ममनसोर्गुण इति

समासे कर्तव्ये यदसमासकरणं तेन तुल्यन्यायतया प्रत्यक्षत्वादित्यनेनैव हेतुना दिक्कालयोरपि गुणत्वं शब्दस्य प्रतिषिद्धमिति सूचितम् ॥ २६ ॥

( विवृ० ) इदानी शब्दस्यात्मगुणत्वं मनोगुणत्वं च निराकरोति—परत्रेति । परत्र आत्मभिन्ने समवायाच्छब्दो नात्मगुणः । शब्दो यद्यात्मगुणः स्यात्तदाऽहं सुखीत्यादिवदहं शब्दवानिति लौकिकमानसप्रत्यक्षं स्यात् । नतु शब्दस्य श्रावणप्रत्यक्षम्, अस्ति ह्यनुभवः सर्वेषां शब्दं शृणोमीति । मनःपदं दिक्कालयोरप्युपलक्षकम् । तथाच शब्दो न दिक्कालमनसां गुणः प्रत्यक्षत्वात् रूपादिवदिति व्यतिरेके कालपरिमाणादिवदित्यनुमानप्रकारः ॥ २६ ॥

( भाष्यम् ) परत्र खल्वयं शब्दः समवैति न त्वात्मनि । श्रूयते हि शब्दो न त्वात्मगुणवदुपलभ्यते । यदि वै समवेयात्, बधिरोऽप्युपलभेत । सुखीतिवच्छब्दवानिति च प्रतिपद्येत । जडश्चैवमात्मा स्यात् । एकैकबहिरिन्द्रियग्राह्याविशेषगुणवत्पृथिव्यादि द्रव्यं जडं दृष्टम् । तथाचायमिति । तस्मान्नात्मगुणः शब्दः । न च मनोगुणः प्रत्यक्षत्वात् । मनसस्तु गुणा न प्रत्यक्षाः, तस्य महत्त्वाभावात् । प्रत्यक्षश्च शब्द इति । सुखादीनां त्वात्मनि भासमानानां प्रत्यक्षेणोपलब्धिरिति ॥ २६ ॥

## परिशेषाल्लिङ्गमाकाशस्य ॥ २७ ॥

( उप० ) यदर्थमयं परिशेषस्तदाह—परिशेषादिति । शब्द इति शेषः । अत्रापि शब्दः क्वचिदाश्रितो गुणत्वात् रूपादिवदिति सामान्यतोदृष्टादष्टद्रव्यातिरिक्तद्रव्यसिद्धिः । गुणश्चायं बाह्यैकेन्द्रियग्राह्यजातीयत्वाद्रूपादिवदनित्यत्वे सति विभुसमवेतत्वात् ज्ञानादिवदनित्यत्वं च साधयिष्यते । परिशेषसिद्धस्य द्रव्यस्यावयवकल्पनायां प्रमाणाभावान्नित्यत्वं सर्वत्र शब्दोपलब्धेर्विभुत्वम् ॥ २७ ॥

( विवृ० ) इदानीमुपसंहरति—परिशेषादिति । शब्दः क्वचिदाश्रितो गुणत्वात् रूपादिवदिति सामान्यानुमानेन विशेषबाधसहकृतेनाऽष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं शब्दस्य सिध्यतीति भावः, गुणत्वं च तस्य प्रत्यक्षसिद्धम् । नच वाय्ववयवेषु सूक्ष्मशब्दक्रमेण कारणगुणपूर्वक एव वायौ शब्दः स्वीकार्य इति वाच्यं शब्दो न वायुविशेषगुणः अयावद्द्रव्यभावित्वात्सुखादिवत् व्यतिरेके वायवीयस्पर्शवदित्यनुमानेन वायुविशेषगुणभिन्नत्वसिद्धेः अयावद्द्रव्यभावित्वं च स्वाश्रयनाशजन्यनाशप्रतियोगि यद्यत्तदन्यत्वमिति संक्षेपः ॥ २७ ॥

(भाष्यम्) तस्मात्-※परिशेषाल्लिङ्गमाकाशस्य। पारिशेष्यात् शब्देनाकाशमनुमीयते। गुणः शब्दः किंचिद्द्रव्यमाश्रयति, यच्चायमाश्रयति तदाकाशमिति। आचार्यप्रवृत्तिर्ज्ञापयति कालो दिक् चाकाशमेवेति। यदयमन्येषां व्यतिरेकमाकाशे साधयति न कालदिशोः। अथापि स्पर्शवदात्ममनसां न गुण इति प्रसाध्य पारिशेष्याच्छब्देन तदाश्रयस्याकाशस्यानुमानं मन्यते ॥ २७ ॥

## द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ २८ ॥

(उप०) शब्दलिङ्गस्य द्रव्यस्य द्रव्यत्वनित्यत्वे अतिदेशेन साधयन्नाह-द्रव्यत्वेति। अद्रव्यवत्त्वाद्यथा वायोर्नित्यत्वं तथाकाशस्यापि, गुणवत्त्वाद्यथा वायोर्द्रव्यत्वं तथाकाशस्यापीत्यर्थः ॥ २८ ॥

(विवृ०) शब्दाश्रयस्य नित्यत्वं द्रव्यत्वं चातिदेशेन साधयति-द्रव्यत्वेति। यथा वायुपरमाणोरद्रव्यत्वेन नित्यत्वं गुणवत्त्वेन च द्रव्यत्वं तथाकाशस्यापीत्यर्थः ॥ २८ ॥

(भाष्यम्) तदेवमनुमितस्याकाशस्य-※द्रव्यत्वनित्यत्वे वायुना व्याख्याते क्रियावत्त्वाद्गुणवत्त्वाच्च द्रव्यत्वमद्रव्यत्वेन च नित्यत्वमिति ॥ २८ ॥

## तत्त्वं भावेन ॥ २९ ॥

(उप०) तत्किं बहून्याकाशानि एकमेव वेत्यत आह-तत्त्वमिति। व्याख्यातमिति विपरिणतेनान्वयः। भावः सत्ता सा यथैका तथाकाशमप्येकमेवेत्यर्थः ॥ २९ ॥

(विवृ०) गगनस्य नानात्वं निराकरोति-तत्वमिति। तत्त्वं तद्व्यक्तित्वम् एकव्यक्तित्वमिति यावत्। भावेन सत्तया व्याख्यातमिति विपरिणतेनान्वयः। सत्ताया यथैकत्वं तथाकाशस्यापीत्यर्थः ॥ २९ ॥

(भाष्यम्) तस्य भावस्तत्त्वं भावेन व्याख्यातम्। भाव एव विशिष्यमाणस्तत्त्वमिति। अथापि खल्वेकमाकाशं भाववदुपाधिभेदाद्भिद्यते इति ॥ २९ ॥

## शब्दलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च ॥ ३० ॥

(उप०) नन्वनुगतप्रत्ययमहिम्ना सत्ताया एकत्वं सिद्धम्। आकाशे कथमेकत्वं तद्दृष्टान्तेन सेत्स्यतीत्यत आह-शब्देति। तत्त्वमाकाशस्य सिद्धमित्यर्थः। वैभवे सति सर्वेषां शब्दानां तदेकाश्रयतयैवोपपत्तावाश्रयान्तरकल्पनायां कल्पनागौरवप्रसङ्गः। अन्यदपि यदाकाशं कल्पनीयं तत्रापि शब्द

एव लिङ्गं तच्चाविशिष्टं न च विशेषसाधकं भेदसाधकं लिङ्गान्तरमस्ति, आत्मनां यद्यपि ज्ञानादिकमविशिष्टमेव लिङ्गं तथापि व्यवस्थातो लिङ्गान्तरादात्मनानात्वसिद्धिरिति वक्ष्यते ॥ ३० ॥

( विवृ० ) ननु सदित्यनुगतप्रतीतिबलादस्तु सत्ताया एकत्वम्, आकाशस्य तु तत्कथमित्यत आह—शब्दलिङ्गाविशेषादिति । आकाशस्य तत्त्वमिति पूर्वेणान्वयः । यथा कुत्रचिदात्मनि कदाचित्सुखरूपमेव कार्यं जायते तदैवान्यस्मिन्नात्मनि दुःखरूपमेव कार्यं जायते इत्यात्मकार्ययोः सुखदुःखयोर्वैलक्षण्यादात्मनानात्वं तथाकाशे शब्दरूपलिङ्गस्य न कश्चिद्विशेषो येनाकाशनानात्वं सिध्यति न वाकाशनानात्वसाधकं लिङ्गान्तरमस्ति। तथाच प्रमाणाभावाल्लाघवाच्चाकाशस्य न नानात्वं किंत्वेकव्यक्तित्वमित्यर्थः ॥ ३० ॥

( भाष्यम् ) कुतः पुनरेकमाकाशमिति प्रतिपत्तिः—*शब्दलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च ॥ ३० ॥

## तदनुविधानादेकपृथक्त्वं चेति ॥ ३१ ॥

( उप० ) नन्वाकाशस्य एकत्वं तावदस्तु, वैभवात् परममहत्त्वमप्यस्तु, शब्दासमवायिकारणत्वात् संयोगविभागावपि स्याताम्, एकपृथक्त्वं कथमत आह—तदिति । नियमेनैकपृथक्त्वमेकत्वमनुविधत्ते इत्येकपृथक्त्वसिद्धिः इतिराह्निकपरिसमाप्तौ । मानसप्रत्यक्षाविषयविशेषगुणवद्द्रव्यलक्षणमाह्निकार्थः। तेन पृथिव्यप्तेजोवाय्वाकाशानां प्रसङ्गत ईश्वरात्मनश्च लक्षणमस्मिन्नाह्निके । तेन चतुर्दशगुणवती पृथिवी। ते च गुणा रूप-रस-गन्ध-स्पर्श-संख्या-परिमाणपृथक्त्व-संयोग—विभाग-परत्वापरत्व-गुरुत्व-द्रवत्व-संस्काराः । तावन्त एव गन्धमपास्य स्नेहेन सहापाम् । एत एव रसगन्धस्नेहगुरुत्वान्यपास्य तेजसः । गन्धरसरूपगुरुत्वस्नेहद्रवत्वान्यपास्य वायोः। शब्देन सह संख्यादिपञ्चगुणवत्त्वमाकाशस्य । संख्यादिपञ्चकमात्रं दिक्कालयोः । परत्वापरत्ववेगसहितं संख्यादिपञ्चकं मनसः । संख्यादिपञ्चकं ज्ञानेच्छाप्रयत्नाश्चेश्वरस्य ॥ ३१ ॥

इति श्रीशांकरे वैशेषिकसूत्रोपस्कारे द्वितीयाध्यायस्याद्यमाह्निकम् ।

( विवृ० ) एकपृथक्त्वमप्याकाशस्यैकत्वनिबन्धनमेवेत्याह—तदन्विति । आकाशस्येत्यादि यत्र यत्र एकत्वं तत्रैवैकपृथक्त्वमिति व्याप्तेराकाशस्यैकत्वेनैव एकपृथक्त्वसिद्धिरिति, सूत्रे इतीत्याह्निकसमाप्तिज्ञापनार्थम् ।

भावनावदवृत्तिविशेषगुणवद्द्रव्यलक्षणमेतदाह्निकार्थः । तादृशं च द्रव्यं भूत-पञ्चकमीश्वरश्चेति ॥ ३१ ॥

इति श्रीजयनारायणतर्कपञ्चाननकृतायां कणादसूत्रविवृतौ द्वितीयाध्यायस्याद्यमाह्निकम् ।

( भाष्यम् ) एकत्वे चाकाशस्य-*तदनुविधानादेकपृथक्त्वं चेति एक-पृथक्त्वं खल्वेकत्वमनुविधत्ते इत्येकपृथक्त्वं च सिध्यतीति ॥ ३१ ॥

इति श्रीचन्द्रकान्तीये वैशेषिकभाष्ये द्वितीयस्याध्यायस्याद्यमाह्निकम् ।

---

# द्वितीयाध्याये द्वितीयाह्निकम् ।

**पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तराप्रादुर्भावो वस्त्रे गन्धा भावलिङ्गम् ॥ १ ॥**

( उप० ) इदानी भूतानां लक्षणानि गन्धादीनि परीचिक्षिषुर्गन्धा-दीनां स्वाभाविकत्वमौपाधिकत्वं च व्यवस्थापयन्नाह-पुष्पवस्त्रयोरिति । रूपरसगन्धस्पर्शा यत्र कारणगुणप्रक्रमेणोत्पद्यन्ते तत्र स्वाभाविकाः सन्तो लक्षणतामुपयन्ति, नान्यथा । नहि समीरणे उपलभ्यमानं सौरभं शिला-तले उपलभ्यमानं शैत्यं जले उपलभ्यमानमौष्ण्यं वा लक्षणं भवति तदे-तदाह पुष्पवस्त्रयोरिति । नहि कनककेतकीकुसुमसन्निकृष्टे वाससि कनक-केतकीसौरभमुपलभ्यमानं वाससः । नहि वाससः कारणगुणप्रक्रमेण तदु-त्पन्नम् । किंतर्हि कनककेतकीसन्निधानादौपाधिकं, नहि वस्त्रे गन्धाभावे केतकीगन्धाभावो लिङ्गम् । किं लिङ्गमत उक्तं गुणान्तराप्रादुर्भाव इति गुणान्तरात्कारणगुणादप्रादुर्भावोऽनुत्पत्तिः । यदि हि वस्त्रे यो गन्ध उपलभ्यते स तस्य स्वाभाविकः स्यात्तदा तदवयवेषु तन्तुषु केतकी-सन्निकर्षात्पूर्वं तत्र वस्त्रे चोपलभ्येत न चैवमित्यर्थः । तथाच विवा-दाध्यासितो गन्धो न वस्त्रसमवेतः तदवयवगुणाजन्यविशेषगुणत्वाच्छीतो-ष्णस्पर्शादिवत् ॥ १ ॥

( विवृ० ) ननु पृथिव्यादीनां गन्धवत्त्वादिकं लक्षणं पूर्वमुक्तं तत्कथं संग-च्छते सुरभिभागसंयुक्तवाय्वादेरपि गन्धोपलब्धेस्तत्रातिव्याप्तेरतो वाय्वादौ गन्धादिप्रतीतेरौपाधिकत्वं व्यवस्थापयति-पुष्पवस्त्रयोरिति । गुणान्तरात्त-दवयवगुणादप्रादुर्भावोऽनुत्पत्तिः गन्धाभावस्य कुसुमीयविजातीयगन्धा-भावस्य लिङ्गं हेतुः । तथाच वस्त्रे उपलभ्यमानो विजातीयो विवादाध्या-सितो गन्धो न वस्त्रसमवेतः वस्त्रावयवगन्धाजन्यगन्धत्वादसन्निकृष्टकुसु-

मादिगन्धवदित्यनुमानाद्वस्त्रे तादृशगन्धाभावसिद्धिरेवं वाय्वादावपि। एवं च सुरभिर्वायुरित्यादिप्रतीतिः समवायेन सौरभादिप्रकारिका कुसुमाद्यौपाधिकी भ्रान्तिरेवेति न पृथिव्यादिलक्षणस्य वाय्वादावतिव्याप्तिरिति भावः॥ १॥

(भाष्यम्) परीक्षितानि संक्षेपेण गुणतः पृथिव्यप्तेजांसि। परीक्षितश्चाप्रत्यक्षो वायुराकाशश्च। पृथिव्यप्तेजसां लक्षणानि गन्धादय इदानीं परीक्ष्यन्ते। तत्र गन्धस्तावत् परीक्ष्यते। किमयमुपलभ्यमानो गन्धः पृथिव्या एव विशेषगुण आहोस्विद्वाय्वादेरपीति। कुतः संशयः? उपलब्धेरुभयथोपपत्तेः। येयं वायावप्सु च गन्धस्योपलब्धिः—सुरभिः समीरणो दुर्गन्धमुदकमिति, सा किमुपाधिनिमित्ता स्वाभाविकी वेति नोपलभ्यते विशेषः। यदि स्वाभाविकोऽपां वायोश्च गन्धः यदि वा सूक्ष्मपृथिवीभागोपाधिनिमित्तः उभयथाऽपि उपलब्धिरुपपद्यते। यस्तु पृथिव्या संहन्यमानेषु वाय्वादिषु गन्धः, न तस्योपलब्धिरस्ति सूक्ष्मत्वात्। यस्तूपलभ्यते स्थूलो गन्धस्तत्रायं विमर्श इति। उपाधिनिमित्तेयं पृथिव्या गन्धस्याप्सु वायौ चोपलब्धिः। कस्मात्? तदनुविधानादुपलब्धेः। यासु खल्वप्सु दुर्गन्धस्योपलब्धिस्तास्वेव प्रयत्नपरिशुद्धासु दुर्गन्धवत्पार्थिवांशापगमात् न खल्वपि दुर्गन्ध उपलभ्यते। पुष्पितमाराममावर्ज्य वाति वायावनुवातस्थः सुरभिं गन्धमुपलभते न प्रतिवातस्थः। सेयमुपलब्धिः पार्थिवांशमनुविधत्ते। तदनुविधानादनुमीयते पार्थिवोपाधिनिमित्तेयमप्सु वायौ च गन्धस्योपलब्धिरिति। तत्र निदर्शनम्—*पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तराप्रादुर्भावो वस्त्रे गन्धाभावलिङ्गम्॥ वस्त्रे तावत्पुष्पगन्धो नोपलभ्यते। पुष्पवस्त्रयोः सन्निकर्षे सति तु पुष्पगन्धादपरो गन्धो न खल्वपि वस्त्रे प्रादुर्भवति पुष्पेन संसृज्यमाने वाससि पुष्पगन्ध एवोपलभ्यते न गन्धान्तरम्। सोऽयं पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तराप्रादुर्भावो वस्त्रे पुष्पगन्धाभावस्य लिङ्गम्। न खल्वसति पुष्पवस्त्रयोः सन्निकर्षे वाससि पुष्पगन्धस्योपलब्धिर्भवति, सति च सन्निकर्षे पुष्पगन्धस्यैवोपलब्धिर्न गन्धान्तरस्य। तस्मादनुमीयते वाससि पुष्पगन्धो नास्ति पुष्पोपाधिनिमित्ता तु तत्र तदुपलब्धिरिति। या च परस्तादुपलब्धिः साऽप्युपाधिनिमित्ता प्रदीपवत्। तथा प्रदीपस्य सूक्ष्मा अवयवाः परितः प्रसर्पन्तो वेश्मनोऽभ्यन्तरं प्रकाशयन्ति, तथा पुष्पस्य सूक्ष्मा अंशा वाससि संसृष्टास्तत्र पुष्पगन्धोपलब्धिनिमित्तमिति। अप्रक्षयान्नेति चेन्नोपादानमात्रापगमात्। यदि

पुष्पस्य सूक्ष्मा अंशा अपगच्छन्तो वाससि पुष्पगन्धोपलब्धौ निमित्तं भवति, सर्वेषामंशानामपगमात्कदाचित् प्रक्षीयेत पुष्पं, न च प्रक्षीयते तस्मान्नैवमिति । तच्च नैवम् । कस्मात् ? उपादानमात्रापगमात् । कश्चित्खल्वंशः पुष्पस्य उपलभ्यमानगन्धोपादानं न सर्वः । पर्युषितेष्वनुपलब्धेः । न खल्वपि पर्युषितेषु पुष्पेषु गन्ध उपलभ्यते । कथं च नोपलभ्यते ? तदुपादानापगमात् । यो वै खल्वंशः पुष्पस्य उपलभ्यमानगन्धोपादानं, सोऽयमंशो वायुना नुद्यमानस्तस्मादपगच्छति अन्यश्चांशोऽवतिष्ठते इति न द्रव्यस्य प्रक्षयो भवति । सोऽयं संयोगविशेषावस्थितः पुष्पांशो वायुना न खल्वपि शक्यो नेतुमिति । एतेन सर्वे भावा व्याख्याताः । अथापि खलु तन्तुपु वस्त्रोपादानेषु न पुष्पगन्धोऽस्तीति, न जातुचिद्वस्त्रे पुष्पगन्धः प्रादुर्भवितुमर्हति स्वाभाविकः । गुणान्तरप्रादुर्भावाभावात् । सोऽयं गुणान्तराप्रादुर्भावः सत्यपि पुष्पवस्त्रयोः संनिकर्षे वस्त्रे स्वाभाविकस्य पुष्पगन्धस्याभावे लिङ्गम् । यथाऽऽरामस्थपुष्पगन्धो न वाससीति ॥ १ ॥

### व्यवस्थितः पृथिव्यां गन्धः ॥ २ ॥

( उप० ) स्वाभाविकं गन्धं पृथिव्या लक्षणमाह—व्यवस्थित इति । पृथिव्यां व्यवस्थितोऽयोगान्ययोगाभ्यां परिच्छिन्नः समानासमानजातीयव्यावर्तकतया गन्धो लक्षणमित्यर्थः । भवति हि पृथिवी गन्धवत्येव, पृथिव्येव गन्धवतीति । तदेवं समानजातीयेभ्यो जलाद्यष्टभ्योऽसमानजातीयेभ्यो गुणादिपञ्चभ्यो व्यावर्तकः स्वभाविकः पृथिव्यां गन्ध इति व्यवस्थितम् ॥ २ ॥

( विवृ० ) नन्वेवं सुरभि कुसुममित्यादिप्रतीतेरप्यौपाधिकत्वं स्यादित्यत आह—व्यवस्थित इति । व्यवस्थितः बाधकाभावादवधारितः । तथाच बाधाभावान्न सुरभि कुसुममित्यादिप्रतीतेरौपाधिकत्वमिति भावः ॥ २ ॥

( भाष्यम् ) तदेवम्—*व्यवस्थितः पृथिव्यां गन्धः । पृथिव्यामेव स्वाभाविको गन्धोऽन्यत्र त्वबादावुपाधिनिमित्त इति ॥ २ ॥

### एतेनोष्णता व्याख्याता ॥ ३ ॥

( उप० ) गन्धस्य स्वाभाविकत्वव्यवस्थापनप्रकारमुष्णतायां तेजोलक्षणेऽप्यतिदिशन्नाह—एतेनेति । अबादिलक्षणे शैत्यादावप्ययमतिदेशो द्रष्टव्यः ॥ ३ ॥

( विवृ० ) पृथिवीलक्षणस्येव उष्णस्पर्शवत्त्वरूपतेजोलक्षणस्यापि न

जलादावतिव्याप्तिरित्याह—एतेनेति । एतेन गन्धस्थलीयप्रकारेण । उष्णतेति शैत्यादेरप्युपलक्षकम् ।। ३ ।।

( भाष्यम् ) उष्णतापि क्वचिदुपाधिनिमित्ता क्वचिच्च स्वाभाविकी भवति । तत्र पृथिव्यामप्सु वायौ च योष्णतोपलभ्यते उपाधिनिमित्तेयम् ।। ३ ।।

**तेजस उष्णता ।। ४ ।।**

( उप० ) तेजोलक्षणं परीक्षते—तेजस इति । स्वाभाविक्युष्णता तेजोलक्षणमित्यर्थः । रूपमपि शुक्लभास्वरमुपलक्ष्यते ।। ४ ।।

( विवृ० ) संक्षेपतस्तेजोलक्षणं जललक्षणं च सूत्रद्वयेन परीक्षते—तेजस इति । तेजस एव उष्णता नान्येषामिति तेजोलक्षणस्य नातिव्याप्तिरिति भावः ।। ४ ।।

( भाष्यम् ) स्वाभाविकी तु—* तेजस उष्णता । या चेयं शिलाशकलादिषु शैत्योपलब्धिरुपाधिनिमित्ता सा इति ।। ४ ।।

**अप्सु शीतता ।। ५ ।।**

( उप० ) अपां लक्षणं परीक्षते—अप्स्विति । स्वाभाविकी शीतता अपा लक्षणमित्यर्थः । तथाच शिलातलश्रीखण्डादौ नातिव्याप्तिरिति भावः । शीततया, रूपरसावप्युक्तलक्षणौ स्नेहं सांसिद्धिकद्रवत्वं चोपलक्षयति । ननूद्देशलक्षणक्रमभङ्गः कुत इति चेन्न । तेजःस्पर्शस्य पृथिवीजलस्पर्शयोरभिभावकत्वसूचनाय तयोर्मध्ये तेजःपरीक्षाया उक्तत्वात्, वायुपरीक्षासूचनार्थं वा क्रमलङ्घनम् । तथाचापाकजानुष्णाशीतस्पर्शो वायोः स्वाभाविकः सन् लक्षणमित्युन्नेयमिति तात्पर्यम् ।। ५ ।।

( विवृ० ) अप्सु शीतता नान्यत्रेति न जललक्षणस्य शिलातलादावतिव्याप्तिस्तत्र शैत्यप्रतीतेरौपाधिकत्वादिति भावः । वायुलक्षणं विजातीयस्पर्शवत्त्वमप्युक्तदिशैव परीक्षणीयमिति सूचयितुमुद्देशक्रमः परित्यक्तः । यत्तूपस्कारकारैस्तेजःस्पर्शस्य पृथिवीजलस्पर्शाभिभावकत्वसूचनाय क्रमलङ्घनमित्युक्तं तन्न मनोरमं, सुवर्णे चन्द्रकिरणादौ च पृथिवीजलस्पर्शयोस्तेजःस्पर्शाभिभावकत्वस्य सर्वसिद्धत्वात् ।। ५ ।।

( भाष्यम् ) व्यवस्थिता भवति । अप्तेजसोर्व्युत्क्रमेणाचार्यप्रवृत्तिर्ज्ञापयति रूपादिगुणान्तरमप्येवं स्वाभाविकमौपाधिकं च प्रतिपत्तव्यमिति ।। ५ ।।

**अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि ।। ६ ।।**

( उप० ) तदेवं कारणगुणपूर्वकाः स्पर्शवतां विशेषगुणा गन्धादयः

पृथिव्यादीनां लक्षणानीत्युक्तम् । इदानीं क्रमप्राप्तं काललक्षणप्रकरणमारभमाण आह–अपरस्मिन्निति । इतिकारो ज्ञानप्रकारपरः प्रत्येकमभिसंबध्यते । तथाचापरमितिप्रत्ययो, युगपदितिप्रत्ययः, चिरमितिप्रत्ययः, क्षिप्रमितिप्रत्ययश्च काललिङ्गानीत्यर्थः । [1]अपरस्मिन्नपरमित्यनेन परस्मिन्परमित्यपि द्रष्टव्यं, तेनायमर्थः–बहुतरतपनपरिस्पन्दान्तारितजन्मनि स्थविरे युवानमवधिं कृत्वा परत्वमुत्पद्यते तच्च परत्वमसमवायिकारणसापेक्षम् । न च रूपाद्यसमवायिकारणं व्यभिचारात् त्रयाणां गन्धादीनां वायौ परत्वानुत्पादकत्वात् । स्पर्शस्याप्युष्णादिभेदेन भिन्नस्य प्रत्येकं व्यभिचारात् । न वावच्छिन्नपरिमाणं तथा, तस्य विजातीयानारम्भकत्वात् । तपनपरिस्पन्दानां च व्यधिकरणत्वात्तदवच्छिन्नद्रव्यसंयोग एवासमवायिकारणं परिशिष्यते । तच्च द्रव्यं पिण्डमार्तण्डोभयसंयुक्तं विभु स्यात् । आकाशस्य तत्स्वाभाव्यकल्पने क्वचिदपि भेर्यभिघातात्सर्वभेरीषु शब्दोत्पत्तिप्रसङ्गः । तथाच कालस्यैव मार्तण्डसंयुक्तस्य पिण्डेन संयोगः परत्वासमवायिकारणं, काल एव मार्तण्डक्रियोपनायकः । आत्मनश्च द्रव्यान्तरधर्मेषु द्रव्यान्तरावच्छेदाय स्वप्रत्यासत्त्यतिरिक्तसन्निकर्षापेक्षत्वात् । अन्यथा वाराणसीस्थेन महारजनारुणिम्ना पाटलिपुत्रेऽपि स्फटिकमणेरारुण्यप्रसङ्गात् । कालस्य तु तत्स्वभावतयैव कल्पनादयमदोषः । कालेनापि रागसंक्रमः कथं नेति चेन्नियतक्रियोपनायकत्वेनैव तत्सिद्धेः । एवं स्थविरमवधिं कृत्वा यूनि अपरत्वोत्पत्तिरूहनीया । युगपदिति युगपज्जायन्ते युगपत्तिष्ठन्ति युगपत्कुर्वन्ति इत्यादि-प्रत्ययानां च एकस्मिन्काले एकस्यां सूर्यगतौ एकसूर्यगत्यवच्छिन्ने काले इत्यर्थः । न चाप्राप्ता एव सूर्यगतयो विशेषणतामनुभवन्ति न च स्वरूपप्रत्यासन्ना एव ताः । तस्मादेतादृशविशिष्टप्रत्ययान्यथानुपपत्त्या विशेषणप्रापकं यद्द्रव्यं स कालः ॥ ६ ॥

( विवृ० ) काललक्षणमभिधातुमाह–अपरस्मिन्निति । इतीत्यनन्तरं ज्ञानानीति पूरणीयम् । तथाच स्थविरमपेक्ष्य युवाऽपरः, युगपदुत्पद्यन्ते, चिरं जीवति व्यासः, क्षिप्रं गच्छति वायुरिति ज्ञानानि कालसाधकानि । स्थविरोत्पत्त्यधिकरणसूरपरिस्यन्दानन्तरजातत्वज्ञानाद्यून्यपरत्वं जायते । ततस्तज्ज्ञानं जायते । तत्रापरत्वकार्ये किमसमवायिकारणम् ? न ताव-

[1] बॉम्बेरायलआशिआटिकसोसायटीसञ्ज्ञकग्रन्थसंग्रहालयस्थलिखितप्राचीनपुस्तके तु 'अपरस्मिन्परम्' इति पाठः सूत्र उपलभ्यते । उपस्कारे च 'अपरस्मिन्परमित्यनेन परस्मिन्नपरमित्यपि द्रष्टव्यम्' इति ।

द्रूपरसगन्धानामन्यतमं तद्भवितुमर्हति वायौ तदनुत्पत्तिप्रसङ्गात् । नापि स्पर्शः पाकजस्पर्शोत्पत्तिदशायामपरत्वानुत्पत्तिप्रसङ्गात्, स्पर्शवैजात्येनापरत्वादिवैजात्यप्रसङ्गाच्च । नाप्यपकृष्टपरिमाणं परिमाणस्य विजातीयगुणानारम्भकत्वात् । नापि तपनपरिस्पन्दो व्यधिकरणत्वात् । किंतु पिण्डमार्तण्डोभयसंयुक्तकिंचिद्विभुद्रव्यसंयोग एवापरत्वादिकार्येऽसमवायिकारणम् । तादृशस्वभावत्वं न गगनादेः । कस्मिंश्चिन्मृदङ्गादावभिघाताद्यावन्मृदङ्गेषु शब्दोत्पत्तिप्रसङ्गः किंतु तादृशस्वभावतया सिद्धं कालनामकं द्रव्यमेवेत्यपरत्वबुद्धिः कालसाधिका । इदमुपलक्षणं परमितिबुद्धिरपि तथेति मन्तव्यम् । युगपदिति । एकस्यां सूरक्रियायां घटादावेकत्वैकपृथक्त्वादय उत्पद्यन्ते इत्यत्र सूरक्रियाया घटैकत्वाद्याधारत्वं प्रतीयते । तच्च न साक्षात् संबन्धेन, बाधितत्वात् । किंतु स्वाश्रयसंयुक्तकालसंयोगितपनाश्रितत्वसंबन्धेनेति तत्संबन्धघटकतया कालसिद्धिः । उत्पत्तिरूपधात्वर्थस्याधारत्वभानेऽपि स्वाश्रयस्थाने स्वाश्रयाश्रयेति वक्तव्यम् । एवं चिरं क्षिप्रमित्यादावप्युन्नेयम् ॥ ६ ॥

( भाष्यम् ) रूपादयो गुणाः पृथिव्यादीनां लक्षणानि । इमानि तु—*अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि । यमपेक्ष्य यस्योत्पत्तिरल्पेन तपनपरिस्पन्देनान्तर्धीयते तमपेक्ष्य सोऽपरः । अपरं चापेक्ष्यान्यः पर इति प्रत्यनीकभावाल्लभ्यते । तत्र यद्द्रव्यं, योऽयमपरस्तेन तपनेन च संसृज्यते अपरस्य तपनक्रियया संबन्धं करोति तपनपरिस्पन्दांश्च तत्रोपनयति, तद्द्रव्यं कालः । स ह्येतत्कलयति । आत्मा तु चेतनः सर्वोपाधिविनिर्मुक्तो न खल्वप्यन्यस्य धर्ममन्यत्रोपनयति । अचेतनं तु द्रव्यमन्यस्य धर्ममन्यत्रोपनयद् दृष्टं, यथा पुष्पस्य गन्धं वायुरिति । एतेन परस्मिन् परं व्याख्यातम् । किंचित्कदाचित्स्पन्दते किंचिच्च कदाचिदित्यन्यपरिस्पन्दस्यान्यत्रोपनयमन्तरेण परापरव्यवहारो नोपपद्यते इति । युगपदित्येकया क्रियया भूयसामवच्छेदः । यद्द्रव्यं तया क्रियया भूयसां संबन्धं करोति भूयःसु चैनामुपनयति, तद्द्रव्यं कालः । चिरमिति क्रमेण भवन्तीभिर्भूयसीभिरनियताभिः क्रियाभिर्यस्यावच्छेदस्तत्र प्रयुज्यते । क्षिप्रमित्यल्पीयसीभिः क्रियाभिः क्रियान्तरस्यावच्छेद इति ॥६॥

**द्रव्यत्वानित्यत्वे वायुना व्याख्याते ॥ ७ ॥**

( उप० ) ननु सिध्यतु कालः, स तु नित्यो द्रव्यं वेति न प्रमाणमत

आह–द्रव्यत्वेति । यथा वायुपरमाणोर्गुणवत्त्वाद्द्रव्यत्वमद्रव्यद्रव्यत्वाच्च नित्यत्वं तथा कालस्यापीत्यर्थः ॥ ७ ॥

( विवृ० ) कालस्य नित्यत्वं द्रव्यत्वं च साधयितुमाह–द्रव्यत्वनित्यत्वे इति । वायुपरमाणोरिव कालस्यापि गुणाश्रयत्वाद्द्रव्यत्वं निरवयवत्वान्नित्यत्वमित्यर्थः ॥ ७ ॥

( भाष्यम् ) अस्य च—*द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ७ ॥

**तत्त्वं भावेन ॥ ८ ॥**

( उप० ) तथापि सन्तु बहवः काला इत्यत आह–तत्त्वमिति । व्याख्यातमिति विपरिणतेनान्वयः । चिरादिप्रत्ययानां काललिङ्गानां सर्वत्राविशेषादनेकत्वेऽप्यात्मनामिव विशेषलिङ्गाभावात्सत्तावदेकत्वं कालस्येत्यर्थः । नन्वेवं क्षणलवमुहूर्तयामदिवसाहोरात्रपक्षमासर्त्वयनसंवत्सरादिभेदेन भूयांसः कालास्तत्कथमेक इति चेन्न, भेदभानस्य उपाधिनिबन्धनत्वात् । यथा एक एव स्फटिकमणिर्जवातापिञ्जाद्युपाध्युपरागेण भिन्न इव भासते, तथैक एव कालः सूर्यस्पन्दाद्यवच्छेदभेदेन तत्तत्कार्यावच्छेदभेदेन च भिन्न इव भासते इत्यभ्युपगमात् । तथाच कालोपाध्यव्यापकः, कालोपाधिः, स्वाधेयकादाचित्काभावप्रतियोगिनाधारः कालो वा क्षणः । प्रतिक्षणं कस्यचिदुत्पत्तेः कस्यचिद्विनाशादेतदध्यवसेयम् । क्षणद्वयं च लव इत्याद्यागमप्रसिद्धम् । ननु तथाप्यतीतानागतवर्तमानभेदेन कालत्रयमस्तु, श्रूयते हि 'त्रैकाल्यमुपावर्तते' 'त्रैकाल्या सिद्धेः' इत्यादीति चेन्न । वस्तुतत्प्रागभावतत्प्रध्वंसावच्छेदेन त्रैकाल्यव्यवहारात् । येन हि वस्तुना यः कालोऽवच्छिद्यते स तस्य वर्तमानः, यत्प्रागभावेन यः कालोऽवच्छिद्यते स तस्य भविष्यत्कालः, यत्प्रध्वंसेन यः कालोऽवच्छिद्यते स तस्यातीतकालः । तथाचावच्छेदकत्रित्वाधीनः कालत्रित्वव्यवहारः ॥ ८ ॥

( विवृ० ) कालस्य नानात्वं निराकरोति–तत्त्वमिति । भावेन सत्तया तत्त्वं तद्व्यक्तित्वमेकत्वमिति यावत् । व्याख्यातमिति वचनविपरिणामादन्वयः । कालस्येति शेषः । तथाच अनुगतबुद्ध्यादितो लाघवाच्च यथा सत्ताया एकत्वं तथा कालस्यापीति समुदितार्थः । क्षणलवमुहूर्तयामादिव्यवहारस्य तत्तदुपाधिभेदे नैकेन कालेनैव संभवात् कालस्य न नानात्वमिति भावः ॥ ८ ॥

( भाष्यम् ) *तत्वं भावेन । तदेतत्सूत्रद्वयं कृतभाष्यं पुरस्तादिति ॥ ८ ॥

**नित्येष्वभावादनित्येषु भावात्कारणे कालाख्येति ॥ ९ ॥**

( उप० ) इदानीं सर्वोत्पत्तिमतां कालः कारणमित्याह–नित्येष्विति । इतिशब्दो हेतौ, इति हेतोः कारणे सर्वोत्पत्तिमत्कारणे काल इत्याख्या । हेतुमाह नित्येष्वभावादनित्येषु भावादिति । नित्येषु आकाशादिषु युगपज्जातः, चिरं जातः, क्षिप्रं जातः, इदानीं जातः, दिवा जातः, रात्रौ जात इत्यादिप्रत्ययस्याभावादनित्येषु च घटपटादिषु यौगपद्यादिप्रत्ययानां भावादन्वयव्यतिरेकाभ्यां कारणं काल इत्यर्थः । न केवलं यौगपद्यादिप्रत्ययबलात्कालस्य सर्वोत्पत्तिमन्निमित्तकारणत्वमपि तु पुष्पफलादीनां हैमन्तिकवासन्तिकप्रावृषेण्यादिसंज्ञाबलादप्येतदध्यवसेयम् ॥ ९ ॥

( विवृ० ) इदानीं कालस्य जन्यमात्रजनकत्वमाह–नित्येष्विति । नित्येषु परमाण्वादिषु अभावात्तदानीं जात इदानीं जात इत्यादिप्रत्ययानामभावादनित्येषु द्व्यणुकादिषु तादृशप्रत्ययानां सत्त्वात्कारणे अर्थादनित्यमात्रस्य कारणे कालाख्या कालसंज्ञा । तथाच कार्यमात्रं प्रति कालः कारणम् । इदानीं घटो जात इत्यादिप्रत्ययानामेतत्कालप्रयोज्योत्पत्तिमत्त्वस्य घटादाववगाहनात् । नहि कारणत्वं विना कार्योत्पत्तिप्रयोजकत्वं संभवतीति भावः । इदमापाततः इदानीं घटो जात इत्यादिप्रत्ययेषु एतत्कालवृत्त्युत्पत्तिमत्त्वमेव घटादौ भासते नतु एतत्कालप्रयोज्योत्पत्तिमत्त्वं, येन घटाद्युत्पत्तिप्रयोजकतया कालस्य घटादिकारणत्वं स्यात् । न च कालिकसंबन्धेन कार्यत्वावच्छिन्नं प्रति तादात्म्यसंबन्धेन कालस्य हेतुत्वानङ्गीकारे कार्याणां कालिकसंबन्धेन कालवृत्तित्वं न संभवति । अस्मन्मते तु कारणतावच्छेदकसंबन्धेन कारणाधिकरणनिरूपितकार्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितायां कार्यगतायां तादृशकार्यकारणभाव एव नियामक इति वाच्यम् । तथा सति कार्यगतानां साक्षात्परंपरारूपनानासंबन्धावच्छिन्ननानादेशवृत्तित्वानां विलयप्रसङ्गात् । नहि कार्यं येन येन संबन्धेन तिष्ठति तेन तेनैव कार्यकारणभावोऽङ्गीकरणीयः तथा सति तद्दण्डाद्यनन्तरजातचैत्रादिघटितस्वाश्रयचैत्राद्याश्रयत्वादिसंबन्धेन तद्दण्डादेर्भूतलादिवृत्तित्वभङ्गप्रसङ्गात् । तद्दण्डोत्पत्तिदशायां चैत्रस्यानुत्पन्नत्वेन तादृशपरंपरासंबन्धेन कार्यकारणभावस्य कल्पयितुमशक्यत्वात् । एवं संयोगसंबन्धेन घटादेर्भूतलादिवृत्तित्वमपि विलीयेत, उत्पत्तिदशायां द्रव्यस्य गुणाभावेन संयोगेन कुत्राप्यसत्त्वात् । संयोगसंबन्धे कार्यता

वच्छेदकसंबन्धत्वस्य स्वीकर्तुमशक्यत्वाच्चेति संक्षेपः । वस्तुतस्तु कालस्य कार्यमात्रकारणतायां 'कालादुत्पद्यते सर्वम्' इत्याद्यागमा एव मानमिति विभावनीयम् ॥ ९ ॥

( भाष्यम् ) नित्येष्वभावादनित्येषु भावात्कारणे कालाख्येति । नित्येषु वस्तुषु प्रावृषेण्यादिव्यवहारो न भवति भवति त्वनित्येष्विति । तत्र कालः कारणमित्यनुमीयते । किंचित् प्रावृष्युत्पद्यते किंचिच्छरदि हेमन्तादौ च किंचिदिति न खल्वनिमित्ता नियतकालमुत्पत्तिरिति कालो निमित्तमनुमीयते । वायौ तु प्रावृषेण्यादिव्यवहारस्तत्कालकारितधर्मान्तराभिमाननिमित्तो भाक्त इति ॥ ९ ॥

इत इदमिति यतस्तद्दिश्यं लिङ्गम् ॥ १० ॥

( उप० ) काललिङ्गप्रकरणं समाप्य इदानीं दिग्लिङ्गप्रकरणमारभमाण आह—इत इति । दिश इदं दिश्यं दिगनुमापकम् । इतोऽल्पतरसंयुक्तसंयोगाश्रयादिदं बहुतरसंयुक्तसंयोगाधिकरणं परम् । इतश्च संयुक्तसंयोगभूयस्त्वाधिकरणादिदं संयुक्तसंयोगाल्पीयस्त्वाधिकरणमपरमिति नियतदिग्देशयोः समानकालयोः पिण्डयोर्यतो द्रव्याद्भवति सा दिगित्यर्थः । नहि तादृशं द्रव्यमन्तरेण भूयसां संयुक्तसंयोगानामल्पीयसां वा पिण्डयोरुपनायकमन्यदस्ति । न च तदुपनयमन्तरेण तत्तद्विशिष्टबुद्धिः । न च तामन्तरेण परत्वापरत्वयोरुत्पत्तिः । न च तदुत्पत्तिं विना तद्विशिष्टप्रत्ययव्यवहारौ । न च काल एव संयोगोपनायकोऽस्तु किं द्रव्यान्तरेणेति वाच्यं, कालस्य नियतक्रियोपनायकत्वेनैव सिद्धेः । अनियतपरधर्मोपनायकत्वकल्पनायां तु काश्मीरकुङ्कुमपरागं कार्णाटकामिनीकुचकलशं प्रत्युपनयेत् । आकाशात्मनोरपि तथा परधर्मोपसंक्रामकत्वे स एव प्रसङ्गः । दिशस्तु नियतपरधर्मोपसंक्रामकतयैव सिद्धत्वान्नातिप्रसङ्गः । एवंच क्रियोपनायकात्कालात्संयोगोपनायिका दिक् पृथगेव । किंचास्मात्पूर्वमिदम्, अस्माद्दक्षिणमिदम्, अस्मात्पश्चिममिदम्, अस्मादुत्तरमिदम्, अस्माद्दक्षिणपूर्वमिदम्, अस्माद्दक्षिणपश्चिममिदम्, अस्मात्पश्चिमोत्तरमिदम्, अस्मादुत्तरपूर्वमिदम्, अस्मादधस्तादिदम्, अस्मादुपरिष्टादिदम्, इत्येते प्रत्यया इत इदमितीतिना संगृहीताः । एतेषां प्रत्ययानां निमित्तान्तरासंभवात् । किंच नियतोपाध्युन्नायकः काल, अनियतोपाध्युन्नायिका दिक् । भवति हि यदपेक्षया यो वर्तमानः स तदपेक्षया वर्तमान एव । दिगुपाधौ तु नैवं नियमः, यं प्रति या प्राची तं प्रत्येव कदा-

चित्तस्याः प्रतीचीत्वात् । एवमुदीच्यादिष्वपि वाच्यम् । यदपेक्षया सूर्योदयाचलसंनिहिता या दिक् सा तदपेक्षया प्राची । यदपेक्षया सूर्यास्ताचलसंनिहिता या दिक् सा तदपेक्षया प्रतीची । संनिधानं तु सूर्यसंयुक्ते संयोगाल्पीयस्त्वम् । ते च सूर्यसंयोगा अल्पीयांसो भूयांसो वा दिगुपनेया एव । प्राच्यभिमुखपुरुषवामप्रदेशावच्छिन्ना दिगुदीची । तादृशपुरुषदक्षिणभागावच्छिन्ना दिग् दाक्षिणा । वामत्वदक्षिणत्वे तु शरीरावयववृत्तिजातिविशेषौ । गुरुत्वासमवायिकारणक्रियाजन्यसंयोगाश्रयो दिक् अधः । अदृष्टवदात्मसंयोगजाग्निक्रियाजन्यसंयोगाश्रयो दिगूर्ध्वा । एवं चेन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशाननागब्रह्माधिष्ठानोपलक्षिता दश दिश इति व्यपदेशान्तरं प्राच्यादिव्यपदेशात् ॥ १० ॥

( विवृ० ) इदानी क्रमप्राप्तदिग्लिङ्गप्रकरणमारभते—इत इति । इत इदमिति परमपरं वेति शेषः । तथाचास्मादिदं दूरमस्मादिदमन्तिकमिति दैशिकपरत्वापरत्वबुद्धिर्यतस्तद्दिश्यं दिग्लिङ्गम् । तथाच कालवद् दैशिकपरत्वापरत्वासमवायिकारणसंयोगाश्रयतया दिक् सिध्यति । सा च एकापि उपाधिभेदात्प्राच्यादिव्यवहारं संपादयति । उपाधिश्च तदीयोदयगिरिसंनिहिता या दिक् सा तदीयप्राची । तदीयोदयगिरिव्यवहिता तु तदीयप्रतीची । तदीयसुमेरुसंनिहिता या दिक् सा तदीयोदीची । एवं सुमेरुव्यवहिता अवाची । उदयगिरिसंनिहिता सुमेरुव्यवहिता आग्नेयी । सुमेरुव्यवहितोदयगिरिव्यवहिता च नैर्ऋती । सुमेरुसंनिहिता उदयगिरिव्यवहिता च वायवी । सुमेरुसंनिहिता उदयगिरिसंनिहिता च ऐशानी । अदृष्टवदात्मसंयोगजन्याग्निक्रियाजन्यसंयोगाश्रयः ऊर्द्ध्वम् । पतनजन्यसंयोगाश्रयः अधः । 'सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः' इत्यादिवचनात् । एवमेव मुक्तावलीकारः ॥ १० ॥

( भाष्यम् ) परीक्षितः कालः । दिगिदानी परीक्ष्यते—*इत इदमिति यतस्तद्दिश्यं लिङ्गम् । इतोऽवधिभूतादिदं दूरमन्तिकं चेति यस्माद्वस्तुनः प्रत्ययो भवति तद्वस्तु दिश्यं लिङ्गम् । तेन हि दिगनुमीयते । किं पुनस्तत् ? दूरत्वमन्तिकत्वं च । यदेतद्दैशिकं परत्वमपरत्वं चाख्यायते । ततो हि दूरमन्तिकमिति बुद्धिरुत्पद्यते । हिमालयावस्थितस्य वै पुरुषस्य विन्ध्यमपेक्ष्य पारियात्रः परो भवति, पारियात्रं चापेक्ष्य विन्ध्योऽपर इति । कस्मात् ? यस्माद्धिमालयविन्ध्ययोर्मध्ये यावन्तः संयोगास्ततो भूयांसः संयोगा हिमालयपारियात्रयोर्मध्ये भवन्तीति । यश्चैतान्संयोगानुपनयति तद्द्रव्यं दिगिति ॥ १० ॥

**द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ११ ॥**

( उप० ) दिशो द्रव्यत्वं नित्यत्वं च वायुपरमाणुवदित्याह–द्रव्यत्वेति। गुणवत्त्वाद्द्रव्यत्वम्, अनाश्रितत्वाच्च नित्यत्वमित्यर्थः ॥ ११ ॥

( विवृ० ) दिशि द्रव्यत्वं नित्यत्वं च कथयति–द्रव्यत्वेति। एतत्सूत्रं पूर्ववद्व्याख्येयम् ॥ ११ ॥

( भाष्यम् ) दिशश्च–*द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ११ ॥

**तत्त्वं भावेन ॥ १२ ॥**

( उप० ) एकत्वमतिदिशन्नाह–तत्त्वमिति। दिग्लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च सत्तावदेकत्वं तदनुविधानादेकपृथक्त्वम् ॥ १२ ॥

( विवृ० ) पूर्ववन्नानात्वं निराकरोति–तत्त्वमिति। एतस्यापि पूर्ववदेव व्याख्यानम् ॥ १२ ॥

( भाष्यम् ) *तत्त्वं भावेन ॥ १२ ॥

**कार्यविशेषेण नानात्वम् ॥ १३ ॥**

( उप० ) ननु यद्येकैव दिक्कथं तर्हि दश दिश इति प्रतीतिव्यवहारावित्यत आह–कार्येति। कार्यविशेषः कार्यभेदस्तेन नानात्वोपचारः इत्यर्थः ॥ १३ ॥

( विवृ० ) दिश एकत्वेऽपि प्राच्यादिव्यवहारमुपपादयति–कार्येति। कार्यविशेषेण जन्यमूर्तरूपोपाधिना नानात्वं प्राच्यादिनानाव्यवहारः वस्तुत एकैव दिगित्यर्थः ॥ १३ ॥

( भाष्यम् ) आचार्यप्रवृत्तिर्ज्ञापयति आकाशकालदिगाख्यमेकं द्रव्यमिति। यतोऽसौ महता प्रयत्नेनाकाशे स्पर्शवदात्ममनसां व्यतिरेकमाह न कालदिशोः। तयोस्तु न कस्यापि। आकाशे वचनात्खल्वनयोरुक्तं मन्यते इति। यद्येकं द्रव्यं कथमाकाशं कालो दिगिति व्यपदेशभेदो भवतीत्यत आह–*कार्यविशेषेण नानात्वम्। शब्दोत्पत्तिः क्रियासंयोगयोश्चोपनय इति कार्यविशेषाः। तन्निमित्तश्चैकस्य व्यपदेशभेदः। यथैकस्य प्राणभृतः कार्यविशेषादाचार्यो यजमानो याजक इति। अस्त्वेकस्य द्रव्यस्य कार्यविशेषाद्व्यपदेशभेदः दिशस्त्वेकस्या न खल्वपि कार्यं विशिष्यते, संयोगोपनयो हि तस्याः कार्यम् ॥ १३ ॥

**आदित्यसंयोगाद्भूतपूर्वाद्भविष्यतो भूताच्च प्राची ॥ १४ ॥**

( उप० ) तमेव कार्यभेदं दर्शयन्नाह–आदित्येति। प्राक् अस्यां सविता

अञ्चतीति प्राची । तथाच यस्यां दिशि मेरुप्रदक्षिणक्रमेण भ्रमत आदित्यस्य प्रथमं संयोगो भूतपूर्वो भविष्यन् वा भवन् वा सा दिक् प्राची । अत्र पुरुषाभिसंधिभेदमाश्रित्य कालत्रयोपवर्णनम् । भवति हि कस्यचित्पूर्वेद्युः प्रातरस्यां दिशि आदित्यसंयोगः प्रथमं वृत्त इतीयं प्राचीति प्राचीव्यवहारः । कस्यचिदपरेद्युरस्यामादित्यसंयोगः प्रथमं भावीत्यभिसंधाय प्राचीव्यवहारः । कस्यचिदिदानीमस्यामादित्यसंयोगो भवन्नस्तीत्यभिसंधाय प्राचीव्यवहारः । भूतादिति आदिकर्मणि क्तप्रत्ययः, तेनाभिसंधेरनियमाद्यदाप्यादित्यसंयोगो नास्ति रात्रौ मध्याह्नादौ वा तत्रापि प्राचीव्यवहारानुगमः सिध्यतीति भावः ॥ १४ ॥

( विवृ० ) कार्यविशेषं दर्शयति—आदित्यसंयोगादिति । प्राथमिकादित्यादि । भूतपूर्वादतीतात् । भूतादिति आदिकर्मणि निष्ठाप्रत्ययः । वर्तमानादित्यर्थः । प्रथममस्यामादित्योऽञ्चतीति प्राची । तथाच प्राथमिकादित्यसंयोगाधार एव प्राचीव्यवहारनियामकोपाधिः । तादृशसंयोगज्ञानं च पूर्वेद्युरत्र प्रथममादित्यसंयोगो जात इत्याकारकमतीतसंयोगविषयकं कस्यचिद्व्यवहर्तुर्भवति, कस्यचिच्च इदानीमत्रादित्यसंयोगः प्रथमं भवतीति वर्तमानविषयकम् । कस्यचिच्चात्रादित्यसंयोगः श्वः प्रथमं भविष्यतीति भविष्यद्विषयकं भवतीति ज्ञापनाय पञ्चम्यन्तत्रयम् । तादृशसंयोगाधारतया ज्ञायमान उदयगिरिस्तत्संनिहितत्वज्ञानात्प्राचीव्यवहार इति हृदयम् । इदं त्ववधातव्यम्—उदयगिरावुदयगिरिसंनिहितत्वाभावात्कथं प्राचीव्यवहारः । न च व्यवधानराहित्यमेव सन्निहितत्वं तच्च तत्राबाधितमिति वाच्यं, तथा सति उदयगिरेः स्वापेक्षया प्राचीत्वापत्तेरिति ॥ १४ ॥

( भाष्यम् ) तत्कथं प्राच्यादिव्यपदेशभेदो भवति ? उपाधिभेदादित्याह—*आदित्यसंयोगाद्भूतपूर्वाद्भविष्यतो भूताच्च प्राची । यः खल्वादित्यस्य सृष्टिकाले पूर्वं भूतः प्रथमः संयोगः यश्च तस्यैवास्तंगतस्य पुनरुदेष्यतो भविष्यन् प्रथमः संयोगः, यश्च पुनरुदयतो भवन् प्रथमः संयोगः, स येनावच्छिद्यते सा प्राची । प्राक् खल्वस्यामादित्योऽञ्चतीति ॥ १४ ॥

**तथा दक्षिणा प्रतीची उदीची च ॥ १५ ॥**

( उप० ) दिगन्तरव्यवहारेऽपीममेव प्रकारमतिदिशन्नाह—तथेति । तद्वदेव दक्षिणदिग्वर्तिनगादिना सहादित्यसंयोगाद्भूतपूर्वाद्भविष्यतो भूताद्वा दक्षिणाव्यवहारः । एवं प्रतीच्युदीच्योरपि व्यवहार उन्नेयः । वामत्वदक्षिणत्वे निरुक्ते एव ॥ १५ ॥

( विवृ० ) प्रतीच्यादिव्यवहारेऽपीयमेव रीतिरित्याह–तथेति । दक्षिणादिव्यवहारेऽपि तथा कंचिदुपाधिमादाय निर्वाह्य इत्यर्थः । उपाधिस्तु इत इदमित्यादिसूत्रव्याख्यायां द्रष्टव्यः ॥ १५ ॥

( भाष्यम् ) यथोपाधिविशेषात् प्राचीव्यवहारः—*तथा दक्षिणा प्रतीच्युदीची च । तथैवोपाधिविशेषाद्दक्षिणादिव्यवहार इति । अञ्चतः खल्वादित्यस्य दक्षिणोंऽशो ययाऽवच्छिद्यते सा दक्षिणा दिक् । पूर्वाभिमुखः खल्वादित्योऽञ्चतीति । यस्याश्च दिशः प्रातिकूल्येनादित्योऽञ्चति सा प्रतीची । पूर्वाभिमुखो भ्रमन्खल्वादित्यः पश्चिमां दिशं पृष्ठतः कुर्वन्नञ्चतीति । यस्यां दिश्यूर्ध्वमादित्योऽञ्चति सा दिगुदीची । उदीच्यां खल्वादित्यः पृथिव्या ऊर्ध्वं दूरमञ्चतीति । एतेन मथुरावस्थितस्य प्रयागे प्राचीव्यवहारः काश्यवस्थितस्य तत्रैव प्रतीचीव्यवहारश्च व्याख्यातः । मथुरायामवस्थितस्य यस्यां दिशि प्रयागो भवति, तया खल्वादित्यस्य प्रथमः संयोगस्तस्यावच्छिद्यते । काश्यवस्थितस्य च यया प्रयागोऽवच्छिद्यते तस्याः प्रातिकूल्येनादित्योऽञ्चतीति ॥ १५ ॥

**एतेन दिगन्तरालानि व्याख्यातानि ॥ १६ ॥**

( उप० ) दिगन्तरालव्यवहारेऽपीममेव प्रकारमतिदिशन्नाह–एतेनेति । प्राचीदक्षिणयोर्दिशोर्लक्षणसांकर्येण दक्षिणपूर्वा दिगिति व्यवहारः । एवं दक्षिणपश्चिमा पश्चिमोत्तरा उत्तरपूर्वेत्यूह्यम् । एते चादित्यसंयोगा येन विभुना द्रव्येणोपनीयन्ते सा दिगिति कणादरहस्ये व्युत्पादितं विस्तरतः ॥ १६ ॥

( विवृ० ) अनयैव रीत्या आग्नेय्यादिव्यवहार उपपादनीय इत्याह–एतेनेति । दिगन्तरालानीत्युपलक्षणम्, ऊर्ध्वमधश्चापि ज्ञेयम् ॥ १६ ॥

( भाष्यम् ) द्वयोर्द्वयोर्दिशोर्लक्षणसांकर्येण दक्षिणपूर्वादयो विदिशो भवन्ति । यस्मात्पतति सा दिगूर्ध्वा, यत्र पतति सा दिगध इति । आकाशकालदिगाख्यमेकं द्रव्यमिति परतो निर्दिष्टाया दिश उपाधिभेदाद्व्यपदेशभेदवचनेनैव कालाकाशयोरपि तथैव व्यपदेशभेदमुक्तं मन्यते सूत्रकारः । तत्र यस्योत्पत्तिमारभ्य यावद्विनाशं यः कालः स तस्य भवन्, प्रागुत्पत्तेः स भविष्यन्, परतस्तु विनाशात्स एव भूत इति । तदेवं यदा द्रव्यं वर्तते स तस्य वर्तमानः कालः, यदोत्पत्स्यते स भविष्यन्, यदोपरतं सोऽतीत इति । यदोत्पद्यते स क्षणः, द्वौ क्षणौ लव इत्यादि यथाविषयं वेदितव्यम् ।

कथमस्मिन्नर्थे सूत्रं न दृश्यते । शैली ह्येषा भगवतः सूत्रकारस्य, यदयं किंचिदर्थात्प्रज्ञापयति किंचिच्च साक्षादुपदिशतीति ॥ १६ ॥

**सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च संशयः ॥ १७ ॥**

( उप० ) चतुर्णां भूतानां रूपादीनि लक्षणानि कारणगुणपूर्वकतया तात्त्विकानि अन्यथा त्वौपाधिकानीति व्यवस्थितम् । पूर्वमेव विशेषगुणशून्यविभुलिङ्गं चोक्तम् । इदानीमाकाशस्य लिङ्गं शब्दः परीक्षणीयः । सन्ति चात्र तान्त्रिकाणां विप्रतिपत्तयः । केचिच्छब्दं द्रव्यमाचक्षते, केचिद्गुणम् । गुणत्वे सत्यप्येके नित्यमाहुः अपरे त्वनित्यम् । अन्ये तु शब्देऽपि स्फोटाख्यं शब्दान्तरमाहुः । तदत्र परीक्षामारभमाणः परीक्षाप्रथमाङ्गं संशयमेव तावल्लक्षणतः कारणतश्च व्यवस्थापयन्नाह—सामान्यप्रत्यक्षादिति । सामान्यवतो धर्मिणः प्रत्यक्षाद्ग्रहणान्मतुब्लोपात् । विशेषाप्रत्यक्षादिति विशेषस्य परस्परव्यावर्तकस्य धर्मस्य वक्रकोटरादेः शिरःपाण्यादेश्चाप्रत्यक्षादग्रहणात् । विशेषस्मृतेः विशेषस्य कोटिद्वयस्य स्थाणुत्वपुरुषत्वलक्षणस्य स्मरणात् । स्मरणमपि ग्रहणपरं क्वचिदनुभूयमानधर्मयोरपि कोटित्वात् । चकाराददृष्टादेः संशयकारणस्य संग्रहः । असाधारणो धर्मोऽनध्यवसायात्मकज्ञानजनक इति नोक्तः । यद्वा असाधारणस्यापि व्यावृत्तिद्वारा कारणत्वं सपक्षविपक्षव्यावृत्तिश्च साधारणधर्म एवेति नोक्तः । विप्रतिपत्तिरपि विरुद्धप्रतिपत्तिद्वयजन्यं वाक्यद्वयं शब्दो नित्य इत्येकं शब्दोऽनित्य इत्यपरं तदुभयं तदुभयजन्यं च ज्ञानद्वयमयुगपद्भावित्वात्संभूय न संशायकमतस्तत्र शब्दत्वादिरसाधारणः, सत्त्वमेयत्वादिः साधारणो वा धर्मः संशायक इति पृथङ्नोक्ता । समानतन्त्रे गौतमीयेऽनध्यवसायज्ञानस्यानभ्युपगमादसाधारणो धर्मः संशयकारणत्वेनोक्तः । विप्रतिपत्तेश्च विरुद्धवाक्यद्वयस्यान्वयव्यतिरेकशालितया संशयकारणत्वमुक्तम् । न्यायभाष्ये च उपलभ्यमानत्वं यत्संशयकारणमुक्तं सदप्युपलभ्यते असदप्युपलभ्यते इति उपलभ्यमानमिदं सदसद्वेति । यच्चानुपलभ्यमानत्वं सदपि नोपलभ्यते मूलककीलकादि, असदपि नोपलभ्यते गगनारविन्दादि । तथाच पञ्चविधः संशय इति । तदेतत्सामान्यमेवेति सामान्यप्रत्यक्षादित्यनेनैव गतार्थम् । न्यायवार्तिकेऽपि यत्कारणभेदेन संशये त्रित्वमुक्तं तदपि न संभवति व्यभिचारेण समानधर्मादीनां त्रयाणां कारणत्वस्यैवासंभवात् । नहि तृणारणिमणिजन्यवह्नौ वैजात्यवदत्रापि वैजात्यं कल्पनीयं, संशयत्वावच्छिन्नकार्यं प्रति समानधर्मत्वेनैव कारणतायाः

कल्पनात् । यच्च प्रधानविधिकोटित्वप्रधाननिषेधकोटित्वादि वैजात्यमुक्तं तदननुगतत्वान्नावच्छेदकम् । तथाच संशयो न त्रिविधो न वा पञ्चविधः किंत्वेकविध एव । प्रकारान्तरेण तु द्वैविध्यं सूत्रकृदेव स्पष्टयति । ननु जिज्ञासाजनकज्ञानं संशय इति न लक्षणम्, अनध्यवसायेऽपि गतत्वात् । संस्काराजनकज्ञानं संशय इत्यपि निर्विकल्पकसाधारणं, विशिष्टज्ञानत्वेन संशयस्यापि संस्कारजनकत्वात् । संशयत्वं च जातिरपि न लक्षणं धर्म्यंशे संशयत्वाभावेन तदंशे तज्जात्यभावात्, जातेश्चाव्याप्यवृत्तित्वानभ्युपगमात्, इति चेदेकस्मिन् धर्मिणि विरोधिनानाप्रकारकं ज्ञानं संशय इति तल्लक्षणात् ॥ १७ ॥

( विवृ० ) इदानीं शब्दं परीचिक्षिषुः परीक्षाङ्गसंशयस्य कारणं निर्दिशति–सामान्येति । सामान्यस्य साधारणधर्मस्य प्रत्यक्षात्, ज्ञानात् विशेषस्य एककोटिव्याप्यस्य अप्रत्यक्षात् अज्ञानात् । विशेषस्य कोटिद्वयस्य स्मृतेर्ज्ञानात्संशयो भवतीति शेषः । तथाच संशयं प्रति साधारणधर्मज्ञानम् । एककोटिव्याप्यनिश्चयाभावः, कोटिद्वयज्ञानं च हेतुरित्यर्थः । चकारात् न्यायसूत्रोक्तयोरसाधारणधर्मज्ञानविप्रतिपत्तिवाक्यज्ञानयोः संग्रहः । साधारणादिधर्मज्ञानानां कार्यतावच्छेदककोटौ कारणाव्यवहितोत्तरत्वस्य निवेशान्न व्यभिचारः । कारणस्य त्रैविध्यात्संशयस्त्रिविध इति भावः ॥ १७ ॥

( भाष्यम् ) एकमेव द्रव्यमाकाशं कालो दिक् चेत्यतिरिक्ताकाशसिद्धौ कृतप्रयत्नः सूत्रकृदुपरराम । शब्दस्तत्र लिङ्गम् । तच्चैतत्तदा भवति यदि शब्दो गुणः स्यात् । तच्च नैवं मन्तव्यम् । श्रूयते खल्वत्र विप्रतिपत्तिरिति । अतो लिङ्गभूतस्य शब्दस्य गुणभाव इदानीं परीक्ष्यते । नैवं चेदुपेक्ष्य स्थानवन्तमात्मानं कथमप्रस्तुतस्य शब्दस्य परीक्षायामाचार्यः प्रवर्तते इति । तत्रानिमित्तः संशयो न खल्वपि निर्णयस्याङ्गं भवतीति संशयनिमित्तं तावदभिधत्ते–*सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च संशयः। यो धर्मो द्वयोः समानस्तस्योपलब्धेर्विशेषस्य चानुपलब्धेस्तत्स्मरणाच्च संशयो भवति। यो वै खलु विशेषः स्मर्यते स चेन्नोपलभ्यते धर्मिणि, तदा तत्र संशयो भवति। तदुपलब्धौ संशयो निवर्तते । दूरात्स्थाणुं पश्यन्खल्वयं पुरुषः संदिग्धे योऽयं दूरात् दृश्यते स स्थाणुर्वा भवेत्पुरुषो वेति । समानमनयोर्धर्ममारोहं परिणाहं चोपलभे विशेषं चानयोः पूर्वदृष्टं नोपलभे इति । यद्वै विशेषं बुभुत्समानस्य किंस्विदित्यनवधारणं ज्ञानं स संशय इति ॥ १७ ॥

## दृष्टं च दृष्टवत् ॥ १८ ॥

( उप० ) द्विविधः संशयो बहिर्विषयकोऽन्तर्विषयकश्च । बहिर्विषयकोऽपि दृश्यमानधर्मिकोऽदृश्यमानधर्मिकश्च । तत्र दृश्यमानधर्मिको यथा—ऊर्ध्वत्वविशिष्टस्य धर्मिणो दर्शनात् अयं स्थाणुः पुरुषो वेति । अदृश्यमानधर्मिको यथा—अरण्ये झाटाद्यन्तरिते गोगवयादिपिण्डे विषाणमात्रदर्शनादयं गौर्गवयो वेति । वस्तुतस्त्वत्रापि विषाणधर्मिक एव संदेहो विषाणमिदं गोसंबन्धि गवयसंबन्धि वेति । विवक्षामात्रात्तु द्वैविध्याभिधानम् । यत्सामान्यं संशयहेतुस्तदनेकत्र दृष्टं संशायकम् । एकत्र धर्मिणि वा दृष्टं संशयहेतुरित्यत्र प्रथमां विधामाह—दृष्टमिति । दृष्टमूर्ध्वत्वं संशयहेतुः दृष्टवदिति वतिप्रत्ययः । तेन दृष्टाभ्यां स्थाणुपुरुषाभ्यां तुल्यं वर्तते पुरोवर्तिनि यदूर्ध्वत्वं तदृष्टं संशयहेतुरित्यर्थः ॥ १८ ॥

( विवृ० ) कोटिद्वयसहचरितो धर्मः साधारणधर्मः स च क्वचिद्धर्मिद्वये गृह्यमाणः संशायकः क्वचिच्चैकत्रैव धर्मिणीति, तत्राद्यमाह—दृष्टमिति । यत्र पुरोवर्तिनि वस्तुनि दृष्टे अयं स्थाणुः पुरुषो वेति संशयस्तद्दृष्टं वस्तु । तच्च पूर्वं स्थाणुपुरुषयोर्दृष्टं यदूर्ध्वत्वादिकं तद्वत्तदाश्रयत्वात्तथाच धर्मिद्वये कोटिद्वयसहचरितत्वेन गृह्यमाणं यदूर्ध्वत्वादिकं तज्ज्ञानादेव पूर्वोक्तः संशय इति भावः ॥ १८ ॥

( भाष्यम् ) सामान्यप्रत्यक्षस्योदाहरणम्,—*दृष्टं च दृष्टवत् । दृष्टं स्थाण्वादि, दृष्टं यदारोहपरिणाहादि तद्युक्तं हि भवति । अतो दूराद्दृष्टे स्थाण्वादौ, स्थाणुपुरुषादेः समानो यो धर्मः पूर्वं दृष्ट आरोहपरिणाहादिस्तद्युक्ते संशय उत्पद्यते किं स्वित्स्थाणुराहोस्वित्पुरुष इति । समानं ह्यनयोर्धर्ममुपलभ्यते । तदेतद्दृष्टारोहादिमद् दृष्टं स्थाण्वादि संशयहेतुरिति ॥ १८ ॥

## यथादृष्टमयथादृष्टत्वाच्च ॥ १९ ॥

( उप० ) एकधर्मिविषयं दृष्टान्तमुदाहरति—यथेति । संशयहेतुरिति शेषः । चकारः पूर्वोक्तसमुच्चयार्थः । अयथादृष्टत्वाद्धेतोर्यथादृष्टमपि संशायकं यथा चैत्रो यथादृष्टः केशवान्, कालान्तरे अयथादृष्टः केशविनाकृतो दृष्ट इत्यर्थः । क्रमेण तत्रैव चैत्रे वस्त्रावृतमस्तके दृष्टे सति भवति संशयश्चैत्रोऽयं सकेशो निष्केशो वेति । अत्र हि चैत्रत्वं समानो धर्मः संशायकः स चैकत्रैवदृष्ट इत्यभिन्न एव धर्मिणि दृष्टः संशयहेतुः ॥ १९ ॥

---

१ धर्मशब्दस्य क्लीबत्वं चिन्त्यम्। २ यद्दृष्टं तदुदाहरतीति मुद्रितपुस्तके पाठः।

(विवृ०) एकत्र कोटिद्वयसहचरितं धर्ममाह–यथेति। भवति हि प्रावृतशिरसि चैत्रे अयं केशवान् निष्केशो वेत्यादिसंशयः। तत्कारणं च केशतदभावसहचरितचैत्रत्वज्ञानम्। तदुभयसाहचर्यज्ञानं च चैत्ररूपैकधर्म्यन्तर्भावेणैव चैत्रत्वे भवतीत्याह–यथादृष्टमिति। केशसहचरितत्वेन दृष्टमेव चैत्रत्वमयथादृष्टत्वात् केशाभावसहचारितत्वेन कदाचिदृदृष्टत्वात्संशयप्रयोजकमिति शेषः। केशनखादीनां शरीरावयवत्वाभावात्तदपचये न पूर्वशरीरनाशः। यद्यपि बाल्यादिभेदेन चैत्रशरीरं नाना तथाप्यत्र चैत्रादिशरीरगतं तत्तद्व्यक्तित्वमेव साधारणो धर्म इति न किंचिदनुपपन्नम्॥ १९॥

(भाष्यम्) अथ विशेषाप्रत्यक्षस्योदाहरणम्,—*यथादृष्टमयथादृष्टत्वाच्च। येन खलु विशेषेण वक्रकोटरादिना करचरणादिना च स्थाणुः पुरुषश्च दृष्टः तस्यायथादर्शनाच्च संशय उत्पद्यते। स्थाणौ पुरुषे च यो विशेषः पूर्वमुपलब्धस्तमिह नोपलभे, सोऽयं स्थाणुः पुरुषो वेति। यथा खलु स्थाण्वादि पूर्वं दृष्टं न तथैतद् दृश्यते इति। तदेतद्यथादृष्टं स्थाण्वादिकमयथादृष्टत्वात्संशयं प्रयोजयति। एतेन विशेषस्मृतिर्व्याख्याता। तदेवं सामान्यप्रत्यक्षादिकं संशयहेतुरित्युक्तम्। अस्त्यन्यदपि संशयकारणं विप्रतिपत्तिरिति। व्याहतमेकार्थदर्शनं विप्रतिपत्तिः। व्याघातः पुनर्विरोधोऽसहभाव इति॥ १९॥

**विद्याविद्यातश्च संशयः॥ २०॥**

(उप०) उपलभ्यमानत्वं समानमेव धर्मं संशयकारणमाह–विद्येति। आन्तरसंशयो हि विद्याविद्याभ्यां भवति यथा मौहूर्तिकः सम्यगादिशति चन्द्रोपरागादि असम्यगपि। तत्र स्वज्ञाने संशयोऽस्य जायते सम्यगादिष्टमसम्यग्वेति। यद्वा ज्ञानं हि क्वचिद्विद्या भवति क्वचिच्चाविद्या अप्रमा भवति। तथाच ज्ञायमानत्वात्सदिदमसद्वेति संशयो जायते। पुनः संशयग्रहणमिहापि सामान्यप्रत्यक्षादेव संशयो न तु निमित्तान्तरादिति सूचनार्थम्। तथाच–'समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः' इति गौतमीये लक्षणे उपलब्ध्यनुपलब्ध्यव्यवस्थेत्यस्य पृथगेव संशयकारणत्वं यत्कैश्चिदुक्तं तन्निरस्तम्॥ २०॥

(विवृ०) प्रामाण्यादिसंशयस्यापि साधारणधर्मज्ञानसहकृतस्यैव विषयसंशायकत्वमित्याह–विद्येति। अथ षष्ठ्यास्तसिः विद्याविद्ययोः प्रमाभ्र-

मयोर्यः प्रमात्वभ्रमत्वयोः संशयः चकाराद्विषयसंशयश्च सामान्यप्रत्यक्षादेव भवतीति शेषः। तथाच पर्वतो वह्निमान्, ह्रदो वह्निमानित्यादिप्रमाभ्रमयोर्यः प्रमात्वभ्रमत्वसंशयः स ज्ञानत्वरूपसाधारणधर्मज्ञानादेव भवति । एवं तादृशसंशयोत्तरं पर्वतो वह्निमान्नवा ह्रदो वह्निमान्नवेत्यादि संशयोपि ज्ञायमानत्वरूपसाधारणधर्मज्ञानादेव भवति प्रमात्वादिसंशयश्चागृहीतप्रामाण्यकविपरीतनिश्चयस्य संशयविरोधितया तद्विघटने उपयुज्यते नतु तन्मात्राद्विषयसंशय इति भावः ॥ २० ॥

(भाष्यम्) तदुच्यते,—*विद्याविद्यातश्च संशयः । यथार्थबुद्धिर्विद्या विपर्ययोऽविद्या । ताभ्यां च संशयो भवति । पुनः संशयग्रहणं पूर्वस्मान्निमित्तादेतदन्यत्संशयनिमित्तमिति प्रज्ञापनार्थम् । येयं विरुद्धा प्रतिपत्तिरस्त्यात्मेत्येकं दर्शनं नास्त्यात्मेत्यपरमिति, तयोरेका विद्या परा चाविद्या । कस्मात्? वस्तुनि विकल्पानुपपत्तेः कल्पान्तरानुपपत्तेश्च । नहि सद्भावासद्भावाभ्यामन्यः कल्प उपपद्यते । तां चोपलभमानोऽन्यतरनिश्चयहेतुं चापश्यन् किंस्विदिति नावधारयति, स संशयः । सह भवन्त्यौ खल्वेते विद्याऽविद्ये संशयहेतुः । अस्त्यात्मा नास्ति कर्मफलमित्यतो न जात्वपि संशयोत्पत्तिरिति । संप्रतिपत्तेरहेतुः । यां वै भवान् विप्रतिपत्तिं मन्यते, संप्रतिपत्तिरेव सा वादिनोर्भवति । न खल्वपि संप्रतिपत्तेः संशय उत्पद्यते । तस्मादहेतुः विप्रतिपत्तिः संशयस्य । तृतीयोत्पत्तेरप्रतिषेधः । न खलु विप्रतिपत्तेः संशयहेतुभावः शक्यः प्रतिषेद्धुम् । कस्मात्? तृतीयस्य संशयोत्पत्तेः । यो वै मन्यते अस्त्यात्मेति तस्य खलु सा संप्रतिपत्तिः, यश्च मन्यते नास्त्यात्मेति तस्यापि संप्रतिपत्तिरेव सा भवति । तृतीयं प्रति त्वेतद्व्याहतं दर्शनं विप्रतिपत्तिः संशयहेतुः । यो यस्य पक्षस्तस्य तत्र संप्रतिपत्तिर्न तृतीयस्य । नहि तस्यानयोरन्यतरः पक्ष इति । स खल्वयं तत्त्वं बुभुत्समानो विरुद्धां प्रतिपत्तिं च वादिनोरुपलभमानस्तत्त्वनिर्णयहेतुमनाकलयन् किमत्र तत्त्वमिति नावधारयति । सोऽयं तत्त्वत उत्पद्यमानः संशयो विप्रतिपत्तेः संप्रतिपत्तिसमाख्यान्तरयोजनया न शक्यो निवर्तयितुमिति । तन्त्रान्तरसमाचाराच्च । तन्त्रान्तरे हि-' समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः ' इत्युक्तम् । तत्र समानजातीयमसमानजातीयं चानेकम् । तस्य यो धर्मः स समान एव धर्मः संशयहेतुरिति । उपलब्ध्यनुपलब्ध्यव्यवस्थातः खल्वपि सच्चोदकमुपलभ्यते तडागेषु, असच्च मरीचिषु । एवं सदपि नोपलभ्यते,

असदपि नोपलभ्यते । तत्र यदिदमुपलभ्यते यच्च नोपलभ्यते, तत्किं सदाहोस्विदसदिति तत्त्वव्यवस्थापकप्रमाणानुपलब्धेः संशयो भवति । तत्र योऽयं संशयहेतुरुपलभ्यमानत्वमनुपलभ्यमानत्वं च, स समान एव धर्म इति । विशेषविवक्षया तु तन्त्रान्तरे पुनर्वचनम् । समानस्यैकस्य धर्मस्यानेकत्रोपपत्तिरनेकस्य चैकत्रेति । तावेतौ समानानेकधर्मौ ज्ञेयस्थौ, उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थे इत्यमीषां विशेषः ॥ २० ॥

**श्रोत्रग्रहणो योऽर्थः स शब्दः ॥ २१ ॥**

( उप० ) एवं लक्षणतः स्वरूपतश्च परीक्षाप्रथमाङ्गं संशयं व्युत्पाद्येदानीं परीक्षाविषयं शब्दं धर्मिणं दर्शयन्नाह–श्रोत्रग्रहण इति । श्रोत्रं ग्रहणं ग्रहकरणं यस्य स श्रोत्रग्रहणः, अर्थ इति धर्मीत्यर्थः । तथाच शब्दवृत्तिधर्मेषु श्रोत्रग्राह्येषु शब्दत्वतारत्वादिगुणत्वसत्त्वादिषु नातिव्याप्तिः । अर्थपदेन धर्मिपरेण जातिधर्मित्वमभिप्रेतम् । अतः स्फोटनामा शब्दसमवेतः शब्दो नास्तीति सूचितम् । नन्वेकं पदमेकं वाक्यमिति प्रतीतिबलादवश्यं स्फोटोऽङ्गीकर्तव्यः । नहि बहुवर्णात्मके पदे बहुपदात्मके वा वाक्ये भवत्येकत्वप्रत्ययः । स्फोट इति चार्थस्फुटीकरणाधीना संज्ञा । वर्णानां प्रत्येकं तावदर्थप्रत्ययाजनकत्वमेव मिलनं त्वेकवक्तृकाणामाशुतरविनाशिनामसंभवीति स्फोटादेवार्थप्रत्ययः, तज्ज्ञानमन्तरेणार्थस्फुटीभावाभावात् । स च स्फोटो यद्यपि पदभावेनावस्थितेषु सर्वेष्वेव वर्णेषु तथापि चरमवर्णे स्फुटीभवति । मैवं संकेतवद्वर्णत्वं पदत्वं तथाच संकेतबलादेव पदादर्थप्रतीतौ किं स्फोटेन । वर्णानां बहूनामप्येकार्थप्रतिपादकत्वमेकं धर्ममभिप्रेत्य एकं पदमिति भाक्तो व्यवहारः, एवं वाक्येऽपि । यदि वर्णातिरिक्तः पदात्मा कश्चित्प्रत्यक्षतो गृह्येत स्वीक्रियेतापि स्फोटः । सोऽयं स्फोटस्तुच्छत्वादुपेक्षितः सूत्रकृता ॥ २१ ॥

( विवृ० ) इदानीं शब्दं धर्मिणं लक्षणमुखेन व्यवस्थापयति–श्रोत्रग्रहण इति । श्रोत्रेण गृह्यतेऽसौ श्रवणेन्द्रियजन्यलौकिकप्रत्यक्षविषय इत्यर्थः। शब्दत्वादेरपि तादृशत्वादर्थ इति जातिमानिति तदर्थः । तथाच श्रवणेन्द्रियजन्यलौकिकप्रत्यक्षविषयवृत्तिगुणत्वव्याप्यजातिमत्त्वमेव शब्दलक्षणं पर्यवसितम् । तेनाश्रुतशब्दे नाव्याप्तिर्नवा सत्त्वगुणत्वादिकमादाय गुणान्तरेष्वतिव्याप्तिः । इत्थं च प्रत्यक्षसिद्धः शब्दो धर्मी न शक्योऽपलपितुमिति भावः ॥ २१ ॥

( भाष्यम् ) सोऽयं संशयः कोपयुज्यते इत्यत आह–*श्रोत्रग्रहणो योऽर्थः स शब्दः । योयं श्रोत्रेण गृह्यतेऽर्थः स खलु शब्दः । तत्रायं

संशय उपयुज्यते । योऽसौ शब्दः श्रोत्रेण गृह्यते, स किं द्रव्यमाहोस्विद्गुण उत कर्मेति संशयो भवति ॥ २१ ॥

**तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषस्योभयथा दृष्टत्वात् ॥ २२ ॥**

( उप० ) तदेवं शब्दे धर्मिण्युपस्थिते गुणत्वे सत्येव तस्याकाशलिङ्गत्वम् । अतो गुणत्वव्यवस्थापनाय त्रिकोटिकं संशयमुपपादयन्नाह—तुल्येति । शब्दे संशय इति शेषः । शब्दे शब्दत्वं श्रोत्रग्राह्यत्वं चोपलभ्यते, तच्च तुल्यजातीयेषु त्रयोविंशतौ गुणेषु अर्थान्तरभूतेषु द्रव्येषु कर्मसु च विशेषस्य व्यावृत्तेः उभयथा उभयत्र दर्शनात् 'शब्दः किं गुणो द्रव्यं कर्म वा' इति संशयं जनयति । सामान्यविशेषसमवायकोटिकत्वं तु सत्त्वकारणवत्त्वादिवैधर्म्यदर्शनान्न भवति । ननु चासाधारणधर्मस्यानध्यवसायजनकत्वात् संशयजनकत्वं प्रतिषिद्धं शब्दत्वं श्रोत्रग्राह्यत्वं चासाधारण एव धर्मः कथं संशयं जनयिष्यतीति चेत्सत्यं, व्यावृत्तिरस्य सजातीयासजातीयसाधारणीति व्यावृत्तेः साधारणस्यैव धर्मस्य संशयजनकत्वेनोक्तत्वात् । शब्दत्वप्रतियोगिकी व्यावृत्तिः समानो धर्मः उभयगतव्यावृत्तिप्रतियोगित्वं च शब्दत्वमसाधारणो धर्मः । तदुक्तं विशेषस्योभयथा दर्शनादिति । अत्र हि विशेषस्य व्यावृत्तेरुभयत्र सजातीये विजातीये च दर्शनस्य संशयहेतुत्वेनोपादानात् । स च समान एव धर्म इति ॥ २२ ॥

( विवृ० ) केचित्तु सूक्ष्मः शब्दः, महाञ्छब्द इत्यादिव्यवहाराद्द्रव्यमेव शब्द इत्याहुस्तन्मतं निराकर्तुमारभते—तुल्येति । शब्दे गृह्यमाणस्य शब्दत्वादेर्विशेषस्य तुल्यजातीयेषु रूपादिषु त्रयोविंशतौ गुणेषु अर्थान्तरेषु द्रव्येषु कर्मसु च उभयथा उभयत्र द्रव्यत्वादिमत्तया निश्चितेषु तदभाववत्तया निश्चितेषु च अदृष्टत्वात् अदर्शनात् शब्दो द्रव्यं नवेति संशय इति पूरणीयम् । तथाच निश्चितोभयकोटिमद्व्यावृत्तत्वरूपासाधारण्यस्य शब्दत्वादौ सत्त्वात्तज्ज्ञानं तादृशसंशयं जनयतीति भावः ॥ २२ ॥

( भाष्यम् )कस्मात्—*तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषस्योभयथा दृष्टत्वात् । योऽयं शब्दे विशेषः संयोगजत्वं विभागजत्वं शब्दत्वं च सोऽयं तुल्यजातीयेषु रूपादिगुणेषु अर्थान्तरभूतेषु द्रव्यकर्मसु च उभयथा दृश्यते । संयोगजत्वं विशेषो द्रव्ये दृश्यते । कर्मसु च गुणेषु च क्वचित् न रूपादिषु । विभागजत्वं शब्दत्वं च विशेषो न खल्वपि द्रव्येषु न रूपादिषु न कर्मसु चेति । तस्मात्संशयः किं द्रव्यस्य सतोऽयं विशेषः, आहोस्विद्गुणस्य सतः, अथ कर्मणः सत इति । अथापि

खलु तुल्यजातीयेष्वर्थान्तरभुतेषूभयथा विशेषस्य व्यावृत्तेर्दर्शनात्संशयः। उभयथा चार्थो विशिष्यते तुल्यजातीयेभ्यश्चार्थान्तरभूतेभ्यश्च। गन्धवत्त्वं पृथिव्या विशेषः। सा चेयं गन्धवत्त्वेन विशेषेण यथैवार्थान्तरेभ्यो गुणकर्मभ्यो विशिष्यते, तथैव तुल्यजातीयेभ्योऽबादिभ्योऽपि। शब्दस्य च यो विशेषस्तेनासौ विशिष्यते द्रव्येभ्यो रूपादिभ्यः कर्मभ्यश्चेति। तत्र किं द्रव्यस्य सतस्तुल्यजातीयेभ्यः पृथिव्यादिभ्योऽर्थान्तरभूतेभ्यो गुणकर्मभ्यश्चायं विशेषः, अथ गुणस्य सतस्तुल्यजातीयेभ्यो रूपादिभ्योऽर्थान्तरभूतेभ्यो द्रव्यकर्मभ्यश्च, अथ कर्मणः सतस्तुल्यजातीयेभ्य उत्क्षेपणादिभ्योऽर्थान्तरभूतेभ्यो द्रव्यगुणेभ्यश्चेति। तदेवं विशेषस्योभयथा दृष्टत्वादन्यतमव्यवस्थापकं प्रमाणमनुपलभमानस्य संशयो भवति योऽयं श्रोत्रेण गृह्यतेऽर्थः स किं द्रव्यमथ गुण आहोस्वित्कर्मेति ॥ २२ ॥

## एकद्रव्यत्वान्न द्रव्यम् ॥ २३ ॥

( उप० ) तदेवं संशयं दर्शयित्वा द्रव्यत्वकोटिव्युदासायाह–एकद्रव्यत्वादिति। एकं द्रव्यं समवायि यस्य तदेकद्रव्यं द्रव्यं च किमप्येकद्रव्यसमवायिकारणकं न भवतीति द्रव्यवैधर्म्यान्नायं शब्दो द्रव्यमित्यर्थः ॥ २३ ॥

( विवृ० ) इदानीं शब्दस्य द्रव्यत्वं निरस्यति–एकद्रव्यत्वादिति। शब्दो न द्रव्यमेकद्रव्यत्वात् एकमात्राश्रितत्वात्। नह्येकमात्राश्रितं किमपि द्रव्यं प्रसिद्धम् ॥ २३ ॥

( भाष्यम् ) अथ निर्णयः–*एकद्रव्यत्वान्न द्रव्यम्। शब्दो न द्रव्यम् कस्मात्? एकद्रव्यत्वात्। एकस्मिन् खल्वाकाशद्रव्ये शब्दः समवैति न त्वनेकस्मिन्। द्रव्यं त्वनेकस्मिन्समवैतीति न शब्दो द्रव्यम्। विशेषस्योभयथा दृष्टत्वात्प्रत्यवतिष्ठमानस्य द्रव्यवैधर्म्यात्स्थाप्यते एकद्रव्यत्वान्न द्रव्यमिति ॥ २३ ॥

## नापि कर्माऽचाक्षुषत्वात्प्रत्ययस्य[1] ॥ २४ ॥

( उप० ) ननु कर्मैकद्रव्यमेव, तथाच शब्द कर्म स्यादित्यत आह–नापीति। प्रत्ययस्य शब्दविषयकस्याचाक्षुषत्वात् चक्षुर्भिन्नबहिरिन्द्रियजन्यत्वादित्यर्थः। तथाच शब्दत्वं न कर्मवृत्ति चाक्षुषप्रत्यक्षावृत्तिजातित्वात् रसत्वादिवदिति भावः ॥ २४ ॥

( विवृ० ) शब्दत्वरूपासाधारणधर्मज्ञानाच्छब्दे संदिग्धं कर्मत्वमपि

---

१ प्रत्ययस्येत्ययमशः बॉम्बेरायलआशिआटिकसोसायटीग्रन्थसग्रहालयस्थप्राचीनलिखितपुस्तक एव दृश्यते।

निराकरोति—नापीत्यादिना । शब्दो न कर्म अचाक्षुषत्वात् । चाक्षुषप्रत्यक्षावृत्तियोग्यजातिमत्त्वात् गन्धादिवदिति पूरणीयम् । मनःक्रियागतवैजात्यादिवारणाय योग्येति । अपिना सत्त्वादिमत्वान्न सामान्यादिकमिति सूचितम् ।। २४ ।।

( भाष्यम् ) कर्माणि चक्षुषा गृह्यन्ते शब्दस्तु न तथेति नायं कर्म । नह्यत्राग्रहणकारणं किंचिदुपलभ्यते । रूपवदवृत्तेरिति चेन्न, तथाप्यकर्मत्वात् । अथ रूपिद्रव्यवृत्तीनि कर्माणि चक्षुषा गृह्यन्ते, शब्दस्त्वाकाशवृत्तिर्न रूपिद्रव्येषु वर्तते, तस्माच्चक्षुषा न गृह्यते इति । एवं सति कर्माणि रूपिद्रव्येषु वर्तन्ते शब्दस्तु न तथेति नैवासौ कर्म । रूपिद्रव्येषु हि तानि वर्तन्ते इति । अथ नायमाकाशे वर्तते किंतु वीणादाविति । तर्हि चक्षुषा गृह्येत, चक्षुषा हि वीणादिकर्म गृह्यते इति । अथापि खलु शब्दः स्पर्शवतामगुण इति नैवासौ वीणादिषु वर्तते इति । अथापि खलु शब्दाच्छब्दस्य निष्पत्तिर्भवतीति नायं कर्म । न कर्म कर्मणो निष्पद्यते । तदेतद्वैधर्म्यं कर्मणोऽस्ति । अस्त्यपरं वैधर्म्यमचाक्षुषत्वम् । न खल्वपि संयोगे न विभागे शब्दः कारणं भवति । प्रमाणतोऽनुपलब्धेः । कारणं च संयोगे विभागे च कर्म । तदेवं शब्दो न द्रव्यं न कर्म, यश्च परिशिष्यते सोऽयमिति शब्दस्य गुणत्वप्रतिपत्तिः । एकैकविशेषगुणाश्च पृथिव्यादयो भवन्ति । विशिष्यते चाकाशस्य शब्दः । तस्माद्रूपादिवत्सोऽपि गुण इत्यनुमीयते ।। २४ ।।

**गुणस्य सतोऽपवर्गः कर्मभिः साधर्म्यम् ।। २५ ।।**

( उप० ) ननु शब्दः कर्म आशुतरविनाशित्वादुत्क्षेपणादिवदिति चेदत्राह—गुणस्येति । अपवर्गः आशुनाशः स च गुणत्वेऽपि द्वित्वादिवदाशुभाविनाशकसंनिपाताधीन इति कर्मभिः साधर्म्यमात्रमस्य न तु कर्मत्वमेव त्वदुक्तहेतोराशुतरविनाशित्वस्य द्वित्वज्ञानसुखदुःखादिभिरनैकान्तिकत्वमिति भावः ।। २५ ।।

( विवृ० ) ननु शब्दस्याशुविनाशित्वेन कर्मत्वं साधनीयमत आह—गुणस्येति । सत उभयवाद्यङ्गीकृतस्य गुणस्य अपीति शेषः । अपवर्गः आशुविनाशः कर्मभिः साधर्म्यं नतु स कर्मत्वव्याप्यः, द्वित्वादावुभयवादिसिद्धगुणे व्यभिचारादित्यर्थः ।। २५ ।।

( भाष्यम् ) यत्पुनः कर्माप्याशु विनश्यति शब्दोऽप्याशु विनश्यति सोयम्—*गुणस्य सतोऽपवर्गः कर्मभिः साधर्म्यम् । गुणस्य सतः शब्दस्य

योऽयमपवर्ग आशुविनाशः, स खलु कर्मभिः साधर्म्यम् । यदि सन्नेव शब्दो न तर्हि सतः शब्दस्यापवर्गो भवितुमर्हति । यो हि भूत्वा न भवति स विनाशधर्मकोऽपवृज्यते । शब्दस्तु सन्ननुत्पद्य भवति न च भूत्वा न भवति । सोऽयं सन्नेवाभिव्यज्यते अभिव्यक्तश्चोपलभ्यते, न त्वसन्नुत्पद्यते उत्पन्नश्चोपलभ्यते इति । न ब्रूमः सन्नेव सदा शब्द इति । किंतर्हि ? यदाऽसावुपलभ्यते तदा सन्निति । संश्चायं गुणो न द्रव्यं न खल्वपि कर्म । तदेवं गुणस्य सतः शब्दस्यापवर्गः कर्मभिः साधर्म्यं भवति । सोऽयमुपलब्धिकाले सन्नपि तत्पूर्वापरयोर्नास्ति ॥ २५ ॥

## सतो लिङ्गाभावात् ॥ २६ ॥

( उप० ) ननु सिध्यतु शब्दो गुणस्तथापि नासावाकाशलिङ्गम् । आकाशं हि तदाऽनुमापयेद् यदि तस्य कार्यः स्यात् । किंतु नित्य एवायं, कदाचिदनुपलम्भस्तु व्यञ्जकाभावप्रयुक्त इत्याशङ्क्याह—सत इति । यदि हि उच्चारणात्प्रागूर्ध्वं शब्दः सन्स्यात्तदा सतोऽस्य लिङ्गं प्रमाणान्तरं स्यात् । न चाश्रवणदशायां शब्दसत्त्वे प्रमाणमस्ति तस्मात्कार्य एवायं न व्यङ्ग्य इत्यर्थः ॥ २६ ॥

( विवृ० ) शब्दो न जन्यते किंतु नित्य एव सः । कदाचिदप्रत्यक्षं तु तस्य व्यञ्जकवैधुर्यादिति मीमांसकमतं निरस्यति—सत इति । सतो नित्यस्य शब्दस्य लिङ्गाभावाच्छब्दनित्यतासाधकप्रमाणाभावादिति फलितार्थः ॥ २६ ॥

(भाष्यम्) कस्मात्*—सतो लिङ्गाभावात् । यदा खल्वयमुपलब्धा शब्दमुपलभते, सन्तमेनमुपलभते । यदा तु नोपलभ्यते शब्दस्तदा त्वसौ नास्ति । प्रत्यक्षं लैङ्गिकं च खल्वर्थं प्रज्ञापयति अस्त्येतदिति । यदा त्वसौ नोपलभ्यते, तदैतस्य सद्भावे न प्रत्यक्षं न खल्वपि लिङ्गमस्ति । सतो लिङ्गाभावाच्चानुपलब्धिकाले नास्तीति विज्ञायते । आवरणादनुपलब्धिरिति चेन्नावरणानुपलब्धेः । अथ मन्येत, विद्यमानः खल्वपि शब्द आवरणेनावृतो नोपलभ्यते रूपवदिति । तच्च नैवं मन्तव्यम् । कस्मात् ? आवरणानुपलब्धेः । एवं सति येनावृतः शब्दो नोपलभ्यते तदावरणमुपलभ्येत नचोपलभ्यते, येनावृतं रूपं नोपलभ्यते तत्खल्वावरणमुपलभ्यते इति । तस्मादनुपलब्धेर्नास्त्यावरणम् । आवरणाभावाच्च सतः शब्दस्यानुपलब्धिर्नोपपद्यते । तस्मात्प्रागुच्चारणादनुपलब्धेरावरणानुपलब्धेश्चोपलब्धिपूर्वापरयोर्नास्ति । सतो लिङ्गाभावात्तु प्रतिपद्यामहे अनुपलब्धिकाले नास्तीति ॥२६॥

## नित्यवैधर्म्यात् ॥ २७ ॥

( उप० ) इतश्चासौ न व्यङ्ग्यः किंतु जन्य इत्याह—नित्यवैधर्म्यादिति । नित्येन सहास्य शब्दस्य वैधर्म्यमुपलभ्यते यतश्चैत्रो वक्ति मैत्रो वक्तीत्यत्रावृतोऽपि चैत्रमैत्रादिर्वचनेनानुमीयते न च व्यञ्जकः प्रदीपादिर्व्यङ्ग्येन घटादिना क्वचिदनुमीयते । तस्माज्जन्य एवायं न व्यङ्ग्य इति भावः ॥ २७ ॥

( विवृ० ) साधकाभावमुक्त्वा बाधकमप्याह—नित्येति । नित्यवैधर्म्याद्विनाशित्वाच्छब्दो न नित्यस्तन्नाशस्य प्रत्यक्षसिद्धत्वादिति भावः ॥ २७ ॥

( भाष्यम् ) इतश्च प्रतिपद्यामहे न शब्दः सदा सन्निति—* नित्यवैधर्म्यात् । यदभूत्वा भवति तदुत्पत्तिधर्मकं, यच्च भूत्वा नभवति तद्विनाशधर्मकम् । नैतावुत्पत्तिविनाशौ नित्यधर्मः । न वै नित्यमुत्पत्तिधर्मकं न खल्वपि विनाशधर्मकम् । शब्दस्त्वभूत्वा भवतीत्युत्पत्तिधर्मकः, भूत्वा च न भवतीति विनाशधर्मकः, तस्मान्नित्यवैधर्म्यादनुपलब्धिकाले नास्तीति । वचनेन खल्वपि वक्तुरनुमानं भवति । कस्मात् ? उत्पत्तेस्तथाभावात् । यस्मात्पुरुषाद्यः शब्दो यथाभूत उत्पद्यते, न तस्य तथाभूतस्य पुरुषान्तरादुत्पत्तिः । यथाभूतः खलु शब्दः पुरुषान्तरादुत्पद्यते, तस्य पुरुषान्तरादुत्पद्यमानस्यापि न तथाभावो भवति । तस्माद्वचनेन वक्तुरनुमानं भवति । तदेतदपरं नित्यवैधर्म्यम् ॥ २७ ॥

## अनित्यश्चायं कारणतः ॥ २८ ॥

( उप० ) व्यङ्ग्यत्वे बाधकमुक्त्वा संप्रत्यनित्यत्वे हेतुमाह—अनित्यश्चेति । कारणत उत्पत्तेर्दृष्टत्वादिति शेषः । उपलभ्यते हि भेरीदण्डसंयोगादिभ्यः प्रादुर्भवञ्छब्दः । तथाचोत्पत्तिमत्त्वादनित्योऽयमिति । यद्वा कारणत इति कारणवत्त्वहेतुमुपलक्षयति ॥ २८ ॥

( विवृ० ) शब्दस्यानित्यत्वे हेत्वन्तरमाह—अनित्य इति । शब्दोऽनित्यः कारणतः कारणात्कारणवत्त्वादिति यावत् । नहि नित्यानि कारणवन्ति भवन्तीत्यर्थः ॥ २८ ॥

( भाष्यम् ) भेरीदण्डसंयोगादेः कारणात्खल्वयमुत्पद्यते । तस्मादनित्यः । कारणवदनित्यं दृष्टं स्थाल्यादि, कारणवांश्चायमिति । सोऽयं शब्दः कारणतश्चानित्यो न केवलं सतो लिङ्गाभावात् नित्यवैधर्म्याच्चेति । किमुत्पत्तिकारणं संयोगादिः शब्दस्य आहोस्विदभिव्यक्तिकारणमिति । यद्युत्पत्तिकारणमनित्यः शब्दः । अथाभिव्यक्तिकारणं, नायमनित्यो भवितुमर्हति ।

सत एवाभिव्यक्तेः । यं वै भेरीदण्डादिसंयोगमुत्पत्तिकारणं शब्दस्येति मन्यते, सोऽयमभिव्यक्तिकारणं शब्दस्य स्यात् ॥ २८ ॥

न चासिद्धं विकारात् ॥ २९ ॥

( उप० ) ननु च कारणवत्त्वं शब्दस्य स्वरूपासिद्धमत आह—नचेति । शब्दस्य कारणवत्त्वमसिद्धमिति न वाच्यं, तीव्रमन्दादिभावेन विकारस्य दर्शनात् भेरीदण्डाभिघातस्य तीव्रतया तीव्रस्य, मन्दतया मन्दस्य शब्दस्योपलम्भात् । नह्यभिव्यञ्जकतीव्रत्वाद्यधीनोऽभिव्यङ्ग्यतीव्रत्वादिः । तथा च कारणतो विकारादनुमीयते जन्योऽयं न त्वभिव्यङ्ग्य इति ॥२९॥

( विवृ० ) अत्र स्वरूपासिद्धिं निराकरोति–नचेति । शब्दस्य कारणवत्त्वं नासिद्धं विकारात्तीव्रमन्दादिभावात् । नहि भेरीदण्डाद्यभिघातस्य तीव्रमन्दादित्वाभावे शब्दस्य तीव्रमन्दादिभावः केनचिदुपलभ्यते । नाप्यभिव्यञ्जकस्य तीव्रमन्दादिभावेन शब्दे तीव्रमन्दादिभावो भवितुमर्हति अतो भेरीदण्डाद्यभिघातादिरूपकारणजन्यत्वं शब्दस्याकामेनापि वाच्यमिति नासिद्धिरिति भावः ॥ २९ ॥

( भाष्यम् ) तस्मान्न कारणवत्त्वं सिध्यतीत्यत आह–*नचासिद्धं विकारात् । न त्वसिद्धं कारणवत्त्वं शब्दस्य । कस्मात्? विकारात् । विक्रियते हि शब्द उदात्तादिरूपेण । न त्वसौ नित्यस्य घटते । एवं गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकारः । विकारधर्मित्वे च नित्यत्वाभावात्कारणाच्छब्दस्योत्पत्तिर्न त्वभिव्यक्तिरिति । अथापि खलु विक्रियते शब्दः तीव्रः शब्दो मन्दः शब्द इति । तीव्रमन्दभावेन विक्रियमाणं सुखादि कारणवद् दृष्टम् । तथा चायमिति । सांशयिकमेतत्—किं कारणस्य तीव्रमन्दभावात् तीव्रमन्दभावेन शब्दो विक्रियते, अथ व्यञ्जकस्य तीव्रमन्दभावाद्ग्रहणस्य तीव्रमन्दभावेन तथा गृह्यते इति । कुतः संशयः? ग्रहणस्योभयथा दर्शनात् । सुखादौ सन्नेव तीव्रमन्दभावो गृह्यते तथा व्यञ्जकस्य प्रकाशस्य तीव्रमन्दभावाद्रूपग्रहणस्य तीव्रमन्दभावो भवति । तेन चासन्नपि तीव्रमन्दभावो रूपादौ गृह्यते इति । सोऽयं व्यञ्जकस्य संयोगस्य तीव्रमन्दभावाच्छब्दग्रहणस्य तीव्रमन्दभावः स्यात् । नतु शब्दो भिद्यते रूपवदिति ॥ २९ ॥

अभिव्यक्तौ दोषात् ॥ ३० ॥

( उप० ) ननु व्यञ्जकस्यैवायं महिमा यत्तीव्रमन्दादिभावेनाभिव्यनक्ति

भेरीदण्डाद्यभिहतो वायुरेव तीव्रो मन्दश्च तथाप्रत्ययमाधत्तेऽत आह–अभिव्यक्ताविति। शब्दस्याभिव्यक्तौ समानदेशानां समानेन्द्रियग्राह्याणां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वं दोषः स्यात् । न च तादृशानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वं क्वचिद्दृष्टम् । अत्र यदि तथा न स्वीक्रियेत तदा ककाराभिव्यक्तौ सर्ववर्णाभिव्यक्तिप्रसङ्गः । ननु समानदेशानामपि सत्त्वनरत्वब्राह्मणत्वानां स्वरूपभेद–संस्थान–योनि–व्यङ्ग्यानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वं दृष्टमेवेति चेन्न । तेषां समानदेशत्वाभावात् । नहि यावान् देशः सत्त्वस्य तावानेव नरत्वस्य ब्राह्मणत्वस्य वा ॥ ३० ॥

( विवृ० ) अभिव्यक्तिस्वीकारोऽपि न संभवतीत्याह–अभिव्यक्ताविति। अभिव्यक्तिस्वीकारे दोषात्ककाराभिव्यक्तिदशायां यावद्वर्णाभिव्यक्तिरूपदोषप्रसङ्गात् । न च वर्णानां नैकं व्यञ्जकं किंतु प्रतिवर्णं भिन्नभिन्नमेव स्वीकार्यं, समानेन्द्रियग्राह्याणां समनियतानामेकव्यञ्जकव्यङ्ग्यत्वनियमात् । अन्यथा आलोकसंयोगदशायां घटादिगतसंख्यापरिमाणाद्यभिव्यक्तिर्न स्यात् । तत्रापि व्यञ्जकभेदप्रसङ्गात् । रूपरसगन्धस्पर्शानां समानेन्द्रियग्राह्यत्वाभावात्, घटीयपटीयरूपादीनां सत्त्वमनुष्यत्वब्राह्मणत्वादीनां च समनैयत्याभावादेव व्यञ्जकभेदस्वीकारादिति संक्षेपः ॥३०॥

( भाष्यम् ) तच्च नैवं मन्तव्यम् । कस्मात्– * अभिव्यक्तौ दोषात् । येषां समानदेशानां समानेन्द्रियेण ग्रहणं भवति, एकेन व्यञ्जकेन तेषामभिव्यक्तिर्दृष्टा । यथा वस्तुनः संख्या परिमाणं रूपं चैकेनेन्द्रियेण गृह्यते, एकश्चालोकस्तेषामभिव्यञ्जक इति । संख्याऽभिव्यक्तये कृतप्रयत्नः खल्वयं पुरुषो यावदालोकमुपादत्ते, तावत् रूपमपि तेनाभिव्यज्यते । सति चैवमेकस्य वर्णस्याभिव्यक्तये कृतप्रयत्नस्य पुरुषस्य सर्वेषां वर्णानामभिव्यक्तिः प्राप्नोति । सोऽयमभिव्यक्तौ दोषः। अथैतद्दोषपरिजिहीर्षया यावन्तो वर्णास्तावन्तोऽभिव्यञ्जका अभ्युपगम्यन्ते। समानदेशस्थितानां समानेन्द्रियग्रहणानामपि व्यञ्जकभेदः प्राप्नोति न त्वेवं दृष्टम् । दृष्टाच्चादृष्टं सिध्यति । अयमप्यभिव्यक्तिपक्षे दोषः। तीव्रेण शब्देन मन्दस्य शब्दस्याभिभवानुपपत्तिश्चापरो दोषः । तीव्रेण खलु भेरीस्वनेन मन्दस्तन्त्रीस्वनोऽभिभूयते । स चायमभिभवोऽभिव्यक्तिपक्षे नोपपद्यते। कस्मात्? प्राप्त्यभावात् । व्यञ्जकेन समानदेशः खल्वयमभिव्यज्येत । न त्वसमानदेशः । प्राप्त्यभावात् । न खल्वपि देशान्तरं व्यञ्जकः प्राप्नोति । अप्राप्तावप्यभिव्यक्तौ क्वचिदेव व्यञ्जकसद्भावे सर्वत्र शब्दोऽभिव्यज्येत। अप्राप्तेरविशेषात् । यदि वै व्यञ्ज-

कसमानदेशः शब्दोऽभिव्यज्यते, भेरीशब्देन तन्त्रीशब्दस्याभिभवो नोपपद्यते। कस्मात्? प्राप्त्यभावात्। न खलु भेरीस्वनेन तन्त्रीस्वनः प्राप्यते। अप्राप्य चाभिभवन्सर्वमभिभवेत्। तत्र क्वचिदेव भेर्यां प्रणादितायां समानकालास्तन्त्रीस्वना लोकेषु न श्रूयेरन्निति। उत्पत्तिपक्षे त्वयं दोषो न भवति। संतानक्रमेण श्रोत्रप्रत्यासन्नस्तीव्रः शब्दस्तथाभूतं मन्दं शब्दमभिभवतीति। अयं चाभिव्यक्तौ दोषः, दूरस्थस्य चानुपलब्धिः। यद्यभिव्यज्यते शब्दो नोत्पद्यते, दूरस्थेन शब्दस्यानुपलब्धिः प्रसज्यते। समानदेशो हि व्यञ्जको व्यनक्तीति। वैभवादिति चेदश्रवणानुपपत्तिः। विभुः शब्दोऽभिव्यज्यते इति दूरस्थस्य नानुपलब्धिः। एवं चेदश्रवणं नोपपद्यते। तथा च क्वचिदेवाभिव्यक्तं सर्वो लोकः शृणुयात्। विभुः खल्वभिव्यज्यते इति। निवृत्तौ चानुपलब्धिः। यद्यभिव्यज्यते शब्दो व्यञ्जकनिवृत्तावनुपलब्धिः प्राप्नोति प्रदीपवत्। यथा प्रदीपनिवृत्तावर्थो नोपलभ्यते, एवं व्यञ्जकनिवृत्तौ शब्दोऽपि नोपलभ्येत। न तु नोपलभ्यते। यदा वै पुरुषो दारु वृश्चति, दारुपरशुसंयोगनिवृत्तौ दूरस्थितः शब्दमुपलभते। उत्पत्तिपक्षे त्वयमदोषः। संतानोत्पत्तिक्रमेण श्रोत्रप्रत्यासत्त्या संयोगनिवृत्तावुपलब्ध्युपपत्तेरिति॥ ३०॥

**संयोगाद्विभागाच्च शब्दाच्च शब्दनिष्पत्तिः॥ ३१॥**

(उप०) इतश्च नाभिव्यङ्ग्यतेत्याह—संयोगादिति। संयोगात् भेरीदण्डादिसंयोगात्, विभागात् वंशे पाट्यमाने। तत्र संयोगस्तावन्नाद्यस्य शब्दस्य कारणं तदभावात्तस्माद्वंशदलद्वयविभागो निमित्तकारणं दलाकाशविभागश्चासमवायिकारणम्। यत्र च दूरे वीणादावुत्पन्नः शब्दः तत्र संतानक्रमेण उत्पद्यमानः शब्दः कर्णशष्कुल्यवच्छिन्नमाकाशदेशमासादयन्गृह्यते तेन शब्दादपि शब्दनिष्पत्तिरिति॥ ३१॥

(विवृ०) अभिघातस्य व्यञ्जकत्वं न संभवतीत्याह—संयोगादिति। संयोगाद्भेरीदण्डाद्यभिघाताद्विभागात्पाट्यमानवंशदलद्वयविभागात्तदुभयजन्यशब्दसंतानाच्च शब्दनिष्पत्तिः शब्दोत्पत्तिरित्यर्थः। अभिघातमात्रस्य व्यञ्जकत्वस्वीकारे वंशदलद्वयविभागस्थले दूरदेशस्थितभेरीदण्डाद्यभिघातादिस्थले च शब्दस्योपलब्धिर्न स्यादिति भावः॥ ३१॥

(भाष्यम्) तस्मात्—*संयोगाद्विभागाच्च शब्दाच्च शब्दनिष्पत्तिः। भेरीदण्डादिसंयोगाच्छब्दस्य निष्पत्तिरुत्पत्तिर्भवति नाभिव्यक्तिः। विभागात्खल्वपि पूर्वस्माद्देशाद्विभक्तो वायुरपरेण देशेन संयोगात्प्रतिहन्य-

मानः शब्दमुत्पादयति। पाट्यमाने च वंशे यः शब्द उत्पद्यते, दलद्वय-विभागस्तत्र निमित्तम्। शब्दश्च सूक्ष्मः स्थूलस्य हेतुः। प्रतिशब्दात्मा च शब्दः शब्दान्निष्पद्यते। संतानक्रमेण प्रत्यासन्नाच्च शब्दाद्विज्ञायते उत्प-त्तिधर्मकोऽयं नाभिव्यक्तिधर्मक इति। तारमन्दभावेन खल्वयं प्रत्यासन्नो भवति। न चैतदेकस्य शब्दस्य संभवति। नानाभूतस्य तु शब्दस्यैत-त्स्यात्। तदित्थंभूतात् शब्दादनुमीयते अयमुत्पद्यते नाभिव्यज्यते इति। शब्दः खल्वपि मात्रया वायुं प्रेरयति। प्रेरितश्च प्रतिहतः शब्दनिमित्तं भवति। यत्र च संतानक्रमेण प्रत्यासन्नस्य ग्रहणं, न तत्र पूर्वः शब्द उ-त्तरस्य शब्दस्य निमित्तम्। प्रयत्नेन हि पूर्वः शब्दस्तथोत्पद्यते, उत्तरस्तु शब्दो वेगकारितस्तथा भवति। सोऽयं शब्दसंतानो यावद्वेगमनुवर्तते वेगोपरमे चोपरमति। पूर्वः शब्द उत्तरस्य शब्दस्य निमित्तमिति पक्षे शब्दसंतानस्यानुपरमप्रसङ्गः। पूर्वो हि शब्दो हेतुरुत्तरस्येति नायमुच्छि-द्येत। पूर्वादुत्तरनाशे च तृतीयस्याश्रवणप्रसङ्गो हेतुवचनं वा। अथ मन्येतोत्तरः शब्दः पूर्वं शब्दं नाशयन् स्वयमपि तेनैव नश्यतीति संता-नस्योच्छेदो भवति। एवं सति द्वितीयः शब्दः पूर्वं शब्दं नाशयन् स्वयमपि तेन नश्यन् न तृतीयं शब्दमुत्पादयेत्। तथा सति तृतीयः शब्दो न श्रूयेत। अथ यस्माच्छब्दात्परतो न शब्दोपलब्धिः स एवोत्तरोऽन्त्यः शब्दः पूर्वमु-पान्त्यं शब्दं नाशयन् तेनैव स्वयं च नश्यतीति। एवं तर्हि अयमुत्तरः शब्दः पूर्वस्माच्छब्दान्नश्यति न त्वयमित्यत्र हेतुर्वक्तव्यः। न त्वसावस्ति। यदा चान्त्यः शब्द उत्पद्यते तदुत्तरक्षणे खल्वयमुपान्त्यं नाशयन् स्वयमपि तेन नश्यति इति वक्तव्यम्। सोऽयमुपान्त्यं नाशयन्नन्यं च जनयन्नश्य-तीति कुतो न विज्ञायते। तस्माद्विशेषहेत्वभावादयमसमाधिः। कस्तर्हि समाधिः? परतोऽनुपलब्धेः संतानोच्छेदो विज्ञायते। स च किंचिन्निमि-त्तमनुमापयति। तच्च कारणनिवृत्तिरेवावधार्यते। महता खल्वयं प्रय-त्नेन वायुं प्रेरयति, स तु तथा प्रेरितस्तेषु प्रदेशेषु प्रतिहतः शब्दोत्पत्तौ निमित्तभावं प्रतिपद्यते। तदेवं यावद्वेगवशाच्चलन् वायुः प्रतिहतो भवति तावच्छब्दसंतानः प्रवर्तते। वेगोपरमे च क्रियोपरमात्संतानोच्छेदः। दृष्टं हि प्रतिहतो वायुः शब्दमुत्पादयतीति ॥ ३१ ॥

**लिङ्गाच्चानित्यः शब्दः ॥ ३२ ॥**

( उप० ) अनित्यत्वे हेत्वन्तरं समुच्चिनोति—लिङ्गाच्चेति। वर्णात्मकः शब्दोऽनित्यः जातिमत्त्वे सति श्रोत्रग्राह्यत्वाद्वीणादिध्वनिवदित्यर्थः ॥ ३२ ॥

( विवृ० ) वर्णानित्यतासाधकं हेत्वन्तरमाह-लिङ्गाच्चेति। शब्द इति वर्णात्मक इत्यादि। तथाच वर्णात्मकः शब्दोऽनित्यः सत्त्वे सति श्रवणेन्द्रियग्राह्यत्वान्मृदङ्गादिध्वनिवदित्यर्थः ॥ ३२ ॥

( भाष्यम् ) सतो लिङ्गाभावादिभ्यश्चेति चार्थः। व्याख्यातं तत्। लिङ्गं खल्वपि शब्दमनित्यं प्रज्ञापयति। किं पुनर्लिङ्गम्? यत्तत्रान्तरेऽनुशिष्यते 'आदिमत्त्वादैन्द्रियकत्वात्कृतकवदुपचाराच्च' इति। आदिः कारणं, तद्व्याख्यातम्। ऐन्द्रियकः खल्वपि दूरादुत्पन्नः शब्दः संतानक्रमेण श्रोत्रप्रत्यासन्नो गृह्यते। यदि शब्दोऽनित्य उत्पद्यते, संतानक्रमेणास्य श्रोत्रप्रत्यासत्तिरुपपद्यते। अथ नित्योऽभिव्यज्यते, नास्य श्रोत्रेण प्रत्यासत्तिर्भवितुमर्हति। तत इन्द्रियेण ग्रहणं न प्राप्नोति। व्यञ्जकसमानदेशो हि व्यज्यते इति। तीव्रं सुखं मन्दं सुखमिति कृतकं यथोपचर्यते, शब्देऽपि तथोपचारो दृष्टः तीव्रः शब्दो मन्दः शब्द इति। तथोपचर्यमाणमनित्यं दृष्टं, तस्मादनित्यः शब्द इति ॥ ३२ ॥

द्वयोस्तु प्रवृत्त्योरभावात् ॥ ३३ ॥

( उप० ) इदानीं नित्यत्वे सिद्धान्तिनोक्तान्हेतून्दूषयितुमाह-द्वयोरिति। तुशब्दः पूर्वोक्तव्यवच्छेदकः पूर्वपक्षाभिव्यक्त्यर्थः। द्वयोराचार्यान्तेवासिनोरध्यापनेऽध्ययने च प्रवृत्तिर्दृश्यते तस्या अभावात् अभावप्रसङ्गात्। अध्यापनं हि संप्रदानं संप्रदीयते गुरुणा शिष्याय वेदः स यदि स्थिरो भवति तदा तस्य संप्रदानं संभवति। ननु संप्रदीयमानं गवादि दातृप्रतिग्रहीत्रोरन्तराल उपलभ्यते, न च वेदादि गुरुशिष्ययोरन्तराले उपलभ्यत इति नाध्यापनं संप्रदानमिति चेत् अन्तरालेऽपि तत्रस्थपुरुषश्रोत्रेण तदुपलम्भात्। किंचाभ्यासादपि शब्दस्य नित्यता, यथा पञ्चकृत्वो रूपं पश्यतीति स्थिरस्य रूपस्याभ्यासो दृष्टः तथा दशकृत्वोऽधीतोऽनुवाकः विंशतिकृत्वोऽधीत इत्यभ्यासः स्थैर्ये शब्दस्य प्रमाणम्। सिद्धे च स्थैर्ये विनाशकानुपलब्धेः 'तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति' इति नित्यतैव पर्यवसन्नेति भावः ॥ ३३ ॥

( विवृ० ) मीमांसकः प्रत्यवतिष्ठते-द्वयोस्त्विति। द्वयोर्गुरुशिष्ययोः प्रवृत्त्योः, गुरोरध्यापने प्रवृत्तिः शिष्यस्य तु अध्ययने तयोरभावादभावप्रसङ्गात्। गुरुः शिष्यान् वेदमध्यापयति, शिष्येभ्यो वेदं ददाति, इत्यादिवाक्यानामेकार्थकत्वानुभवेन अध्यापनं तथाच दानमेव। शब्दस्याशुविना-

शित्वे तस्य दानप्रतिग्रहयोरसंभवादध्यापनेऽध्ययने च प्रवृत्तिर्न स्यात् । अतः शब्दस्यावश्यं स्थैर्यं स्वीकार्यं नाशकानुपलब्धेश्च तन्नाशे प्रमाणाभावात् । 'तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति ' इति न्या येननित्यतैव फलितेति भावः ॥ ३३ ॥

( भाष्यम् ) यस्तु शब्दस्य नित्यत्वं प्रतिजानीते, स कस्माद्धेतोः प्रतिजानीते– * द्वयोस्तु प्रवृत्त्योरभावात् । तुशब्दात्पक्षो विपरिवर्तते । योऽध्यापयति यश्चाध्याप्यते तयोर्द्वयोरध्यापने अध्ययने च न भवेत् प्रवृत्तिर्यद्यनित्यः शब्दः स्यात् । आचार्यस्थः शब्दो यदन्तेवासिनमापद्यते तदध्यापनम् । यदि नित्यः शब्दो विद्यमानस्य शब्दस्य देशान्तरप्राप्तिरुपपद्यते, अथानित्यः शब्दो नास्य देशान्तरप्राप्तिर्घटते । तदेवमध्यापनेऽध्ययने चाचार्यस्यान्तेवासिनश्च न भवति प्रवृत्तिः । योऽयमनित्यपक्षे द्वयोः प्रवृत्त्योरभावस्तस्मादनुमीयते नित्यः शब्द इति ॥ ३३ ॥

## [1]प्रथमाशब्दात् ॥ ३४ ॥

( उप० ) हेत्वन्तरं शब्दस्य नित्यत्वे आह–प्रथमेति । 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम् ' इति प्रथमोत्तमयोः सामिधेन्योस्त्रिरुच्चारणं स्थैर्यं विनाऽनुपपन्नमित्यर्थः ॥ ३४ ॥

( विवृ० ) शब्दनित्यतायां हेत्वन्तरमुपन्यस्यति—प्रथमाशब्दादिति । शब्दस्यावश्यं नित्यत्वमुपेयम् ' त्रिः प्रथमामन्वाह त्रिरुत्तमामन्वाह ' इति श्रुतौ प्रथमोत्तमयोः सामिधेन्योः त्रिरुच्चारणस्य विहितत्वात् । नहि स्थैर्यमन्तरेण त्रिरुच्चारणं संभवतीति पूर्वोक्तन्यायेन नित्यतायाः सिद्धेरित्यर्थः ॥ ३४ ॥

( भाष्यम् ) प्रथमा सामिधेनी मध्यमा सामिधेन्युत्तमा सामिधेनीति प्रथमादयः शब्दास्तदा भवन्ति, यदि नित्यः शब्दः स्यात् । अवस्थितानां वै प्रथमादयो व्यपदेशा लोके, न त्वनवस्थितानाम् । तस्मात्प्रथमादिशब्दादनुमीयते, यः प्रथमो यश्चोत्तमः तावेतौ सह भवत इति ॥ ३४ ॥

## संप्रतिपत्तिभावाच्च ॥ ३५ ॥

( उप० ) शब्दनित्यत्वे हेत्वन्तरमाह–संप्रतिपत्तीति । संप्रतिप्रत्तिः प्रत्यभिज्ञा तद्भावात् तत्सद्भावादित्यर्थः । प्रतिपत्तिशब्दादेव तद्विशेषस्य प्रत्यभिज्ञाया लाभात् संपूर्वः सत्यत्वमाह । तथाच यैव गाथा मैत्रेणोच्चारिता ताmet-

---

१ प्रथमादिशब्दादिति चन्द्रकान्तधृतः पाठः ।

वायमुच्चरति तमेव श्लोकं पुनः पुनः पठति उक्तमेव वचनं पुनः पुनरभिधत्से यदेव वाक्यं परारि परुच्च त्वयोक्तं तदेवेदानीमपि ब्रूपे स एवायं गकार इत्यादिप्रत्यभिज्ञाबलात्स्थैर्यं शब्दस्येति ॥ ३५ ॥

( विवृ० ) इतश्च शब्दनित्यतेत्याह—संप्रतिपत्तीति। शब्दस्यावश्यं स्थैर्यं संप्रतिपत्तेः प्रत्यभिज्ञाया भावात्सत्त्वात्। यः श्लोकश्चैत्रेण पठितस्तमेव मैत्रः पठति, स एवायं गकार इत्यादिका प्रत्यभिज्ञा शब्दस्य स्थिरतामन्तरेणानुपपन्नेति भावः ॥ ३५ ॥

( भाष्यम् ) नित्यः शब्द इति प्रकृतम्। का पुनरियं संप्रतिपत्तिः? सम्यगभेदेन प्रतिपत्तिर्ज्ञानं संप्रतिपत्तिः। ज्ञायते खल्वयमनुवाको देवदत्तेनाधीतोऽयमेव यज्ञदत्तेनाप्यधीयते इति। यद्यनित्यः शब्दः, समानवर्णराशिरप्यनुवाको नैको भवतीति नेयं संप्रतिपत्तिर्भवितुमर्हति। भवति चैवं संप्रतिपत्तिः। संप्रतिपत्तिभावाच्चानुमीयते नित्यः शब्द इति ॥ ३५ ॥

**संदिग्धाः सति बहुत्वे ॥ ३६ ॥**

( उप० ) सर्वानिमान्हेतून्दूषयन्नाह—संदिग्धा इति। संदिग्धा अनैकान्तिका इत्यर्थः। तदुक्तम् ‘ विरुद्धासिद्धसंदिग्धमलिङ्गं काश्यपोऽब्रवीत् ’ इति। तथाच बहुत्वे नानात्वेऽपि अध्ययनमभ्यसनं प्रत्यभिज्ञानं च दृष्टमित्यनैकान्तिकत्वं हेतूनाम्। तथाहि नृत्यमधीते नृत्यमभ्यस्यति द्विरनृत्यत् यदेव नृत्यं परुदकार्षीरेषमोऽपि तदेव करोषि यदेव नृत्यमेकेन चारणेन कृतं तदेवायमपि करोतीति नृत्ये दृष्टत्वात्, तस्य च कर्मविशेषस्य त्वयाऽपि स्थैर्यानभ्युपगमात् ॥ ३६ ॥

( विवृ० ) मीमांसकमतं दूषयति—संदिग्धा इति। नृत्यादीनामङ्गक्रियाविशेषाणां बहुत्वेऽपि नानात्वेऽपि—अस्थैर्येऽपीति यावत्—सति अध्यापनाभ्यासप्रत्यभिज्ञानां दर्शनात्। अध्यापनाद्याः स्थैर्ये साध्ये संदिग्धा अनैकान्तिकाः नृत्यमधीते त्रिर्नृत्यति यदेव नृत्यं चैत्रेण कृतं मैत्रस्तदेव करोतीत्यनुभवस्य सर्वसिद्धत्वादित्यर्थः ॥ ३६ ॥

( भाष्यम् ) त इमे हेतवः—* संदिग्धाः। कस्मात्? नृत्यादीनामसहभुवामप्यध्यापनेऽध्ययने च द्वयोः प्रवृत्त्योर्भावात् प्रथमादिशब्दात् संप्रतिपत्तिभावाच्च। नृत्यादयो वै बहवो भवन्त्यनित्याः। तत्रापि द्वयोः प्रवृत्तिर्भवति। सेयं प्रवृत्तिरनित्येऽपि भवन्ती न नित्यत्वपक्षे व्यवतिष्ठते इति। न वै खल्वाचार्यस्थस्य शब्दस्यान्तेवासिनि प्राप्तिरध्यापनम्। किं तर्हि,

१ चन्द्रकान्तस्तु ‘ सति बहुत्वे ’ इतीममंशमुत्तरसूत्रावयवत्वेन पठति।

नृत्योपदेशवद्गृहीतस्यानुकरणमिति। नृत्यमधीते बटुरध्यापयत्येनं नास्त्याचार्य इति। प्रथमं नृत्यं द्वितीयं नृत्यं प्रथमं भोजनं द्वितीयं भोजनमित्यादावनित्येऽपि प्रथमादयः शब्दाः प्रयुज्यमाना न नित्यत्वहेतवो भवन्ति। संप्रतिपत्तिभावः खल्वपि, तदेवेदं नृत्यं त एवामी केशास्तदेवैतदौषधमित्यनित्येऽपि दृष्टो न नित्यत्वहेतुरिति। ये चान्ये हेतवः शब्दत्वात् अस्पर्शत्वात् अभ्यासादित्येवमादयः, तेऽपि संदिग्धाः। शब्दत्वं यथा नित्यतायां तथैवानित्यतायामपि शक्यं प्रयोक्तुम्। स्पर्शवांश्चाणुर्नित्यश्च, अस्पर्शं च कर्मानित्यं चेति। द्विर्नृत्यतु द्विर्भुङ्क्ते द्विरग्निहोत्रं जुहोतीति। यदि नित्यः शब्दः, पञ्चाशद्वर्णाः चतुर्दश च इत्येवमादिका संख्योपपद्यते। अथानित्यः शब्दः, एकैक एव वर्णो भवन्त्यपरिसंख्येया इति पञ्चाशदाद्याः संख्या नोपपद्यन्ते। अस्ति चेयं संख्योपपत्तिः। तस्मादनुमीयते नित्यः शब्द इति। अयमपि संदिग्धो हेतुः॥ ३६॥

**संख्याभावः सामान्यतः॥ ३७॥**

(उप०) ननु पञ्चाशद्वर्णाः, अष्टाक्षरो मन्त्रः, त्र्यक्षरो मन्त्रः, अष्टाक्षराऽनुष्टुबित्यादिसंख्या कथं वर्णानामनित्यत्वे उच्चारणभेदेनानन्त्यसंभवादित्यत आह—संख्याभाव इति। संख्यायाः पञ्चाशदादिसंख्याया भावः सद्भावः सामान्यतः कत्वगत्वादिजातित इत्यर्थः। ककारादीनामानन्त्येऽपि कत्वगत्वाद्यवच्छिन्नानां पञ्चाशत्त्वं त्रित्वमष्टत्वं वा द्रव्यगुणादीनामान्तर्गणिकभेदेनानन्त्येऽपि नवत्वचतुर्विंशतित्वादिवदिति भावः। ननु स एवायं गकार इति प्रत्यभिज्ञैव स्थैर्यसाधिका नचैषा तीव्रो गकारो मन्दो गकार इति प्रतीत्या विरुद्धधर्मं गोचरयन्त्या बाध्यते तीव्रत्वादेस्तत्रौपाधिकत्वात्। नचोपाधिभेदादपि भेदो माभूत्तर्हि जवातापिञ्छादिसंयोगान्नीलपीतादिभावेन प्रथमानः स्फटिकमणिरपि नाना, कृपाणमणिदर्पणेषु दीर्घादिभावेन भासमानं मुखमपि वा नाना न भासते। ननु कस्यायं तीव्रत्वादिधर्मो गकारौपाधिक इति चेन्न। वायुधर्मो नादधर्मो ध्वनिधर्मो वा भविष्यति किं तत्र विशेषचिन्तया। त्वयापि तारत्वादेः कत्वगत्वादिना परापरभावानुपपत्त्या स्वाभाविकत्वाभ्युपगमादिति चेन्मैवम्। उत्पन्नो गकारः, नष्टो गकारः, श्रुतपूर्वो गकारो नास्ति, निवृत्तः कोलाहल इत्यादि विरोधिप्रतीतौ सत्यामपि चेत् इयं प्रत्यभिज्ञा न निवर्तते तदास्या जातिविषयताकल्पनात्। अन्यथा व्यक्तिस्थैर्यमालम्बमानायामस्यां सत्यामुक्तविरोधिप्रत्यया एव नोत्पद्येरन्। नचायं वायुधर्मस्तद्धर्माणां श्रोत्राविषयत्वात्। नापि नादधर्मः,

नादो यदि वायुरेव तदा दोषस्योक्तत्वादन्यस्य निर्वक्तुमशक्यत्वात् । नापि ध्वनिधर्मः, शङ्खादिध्वनावनुपलभ्यमानेऽपि गकारे तारत्वादिप्रतीतेः । स्वाभाविकत्वे तु न जातिसांकर्यं गत्वादिव्याप्यस्य तस्य नानात्वाभ्युपगमात् । किंच शुकसारिकामनुष्यप्रभवेषु गकारादिषु स्फुटतरा रूपभेदप्रथास्ति, एवं स्त्रीपुंसप्रभवेषु स्त्रीपुंसभेदप्रभवेषु च, यतः काण्डपटाद्यावृता अपि शुकादयोऽनुमीयन्ते । औपाधिकत्वं त्वस्य नानुभूयमानोपाधिनिबन्धनं कुङ्कुमारुणा तरुणीतिवत् । नाप्यौपपत्तिकमौपाधिकत्वम् उपपत्तेस्तादृशप्रमाणस्याभावादिति संक्षेपः ॥ ३७ ॥

इति वैशेषिकसूत्रोपस्कारे शांकरे द्वितीयस्याध्यायस्य द्वितीयमाह्निकम् ।

( विवृ० ) ननु वर्णानामनित्यतया नानात्वे पञ्चाशत्वसंख्या स्मृत्याद्युक्ता कथं संगच्छतेऽत आह–संख्याभाव इति । सामान्यतः सामान्येषु कत्वखत्वादिषु जातिषु संख्यायाः पञ्चाशत्त्वादिसंख्यायाः भावः सद्भावः । तथाच पञ्चाशद्वर्णा इत्यादौ जातिगतैव संख्या विवक्षिता पञ्च मूर्ता इत्यादाविवेति भावः । लूनपुनर्जातकेशादौ त एवामी केशा इत्यादिवत्स एवायं गकार इत्यादिका प्रत्यभिज्ञापि साजात्यविषयिण्येव न स्थैर्यसाधिकेति । अपिच शब्दोऽनित्यः कृतकत्वाद्घटादिवदित्याद्यनुमानतः शब्दस्यानित्यत्वं सिध्यतीति । तत्र शब्दोत्पत्तिर्वीचीतरङ्गन्यायेनेति केचित् । तेषां मते भेरीदण्डाद्यभिघातात्तद्देशावच्छेदेन आद्यशब्दस्योत्पत्तिः । अनन्तरं तद्बहिर्देशदिगवच्छेदेन प्रथमशब्दात्तद्व्यापको द्वितीयः शब्दः । ततस्तद्बहिर्देशदिगवछिन्नस्तृतीयः शब्दो द्वितीयशब्दाद्भवतीत्येवं क्रमेण चतुर्थादिशब्दानामप्युत्पत्तिर्बोध्या । केचित्तु कदम्बगोलकन्यायाच्छब्दस्योत्पत्तिरित्याहुः । एतन्मते द्वितीयादिशब्दो नैको न वा दशदिगवच्छिन्नः किंतु दशसु दिक्षु द्वितीयाद्याः शब्दा दश उत्पद्यन्ते इति विशेषः ॥ ३७ ॥

इति श्रीजयनारायणतर्कपञ्चाननकृताया कणादसूत्रविवृतौ द्वितीयस्याध्यायस्य द्वितीयमाह्निकम् ।

( भाष्यम् ) बह्वीषु वीणासु वाद्यमानासु प्रयुज्यते वीणा वाद्यत इति । कुत एतदित्यत आह–*सति बहुत्वे संख्याभावः सामान्यतः । ये वै केचित् ककाराः सर्वेऽप्यमी ककारा एव । एवं खकाराः एवं गकारा इत्यादि । तदेवं सर्वे ककाराः समाना इत्येको भवति ककारः । तथैकः खकार एको गकारः । एवं शेषेषु । सेयं ककारादीनां सामान्यमाश्रित्य पञ्चाशद्वर्णा इत्येवमादिका संख्या भवतीति ॥ ३७ ॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये द्वितियस्याध्यायस्य द्वितीयमाह्निकम् ।

समाप्तश्चायं द्वितीयाऽध्यायः ।

---

# तृतीयाध्यायस्य प्रथमाह्निकम् ।

**प्रसिद्धा इन्द्रियार्थाः ॥ १ ॥**

(उप०) तदेवं द्वितीयाध्याये बहिर्द्रव्यपरीक्षामुपपाद्य उद्देशक्रमादिदानीमात्मपरीक्षायै पीठमारचयितुमाह–प्रसिद्धा इति । इन्द्रियाणामर्था गन्धरसरूपस्पर्शशब्दा बाह्यैकैकेन्द्रियग्राह्याः । तत्र श्रोत्रग्रहणो योऽर्थः स शब्द इति । शब्दप्रसिद्धौ दर्शितायामर्थाद्गन्धादौ स्पर्शपर्यन्ते प्रसिद्धिर्दर्शितेत्यर्थः । तथाहि घ्राणग्रहणो योऽर्थः स गन्धः । रसनग्रहणो योऽर्थः स रसः । चक्षुर्मात्रग्रहणो योऽर्थः तद्रूपम् । त्वगिन्द्रियमात्रग्रहणो योऽर्थः स स्पर्शः । सर्वत्र चार्थशब्देन धर्मी भावभूत उच्यते, तेन गन्धत्वादौ गन्धाद्यभावे च नातिव्याप्तिः । तदेवं घ्राणग्रहणवृत्तिगुणत्वावान्तरजातिमत्त्वं गन्धत्वम् । एवं रसादावपि वाच्यं तेन नातीन्द्रियगन्धाद्यनुपग्रहः ॥ १ ॥

( विवृ० ) यदीयकरुणां विना वहति जाड्यजालं जन-
स्तथान्तरतमोऽर्णवं तरति यत्कृपालेशतः ।
कणादनयनीरधौ मम निमज्जतः साऽधुना
निहन्तु विपदां ततिं विबुधवासिवाग्देवता ॥ १ ॥

उद्देशक्रमप्राप्तामात्मपरीक्षामिदानीमारभते–प्रसिद्धा इति । इन्द्रियार्थाः रूपरसगन्धस्पर्शशब्दाः प्रसिद्धाः प्रत्यक्षनिश्चयविषया इत्यर्थः । तथाच रूपादिविषयकः साक्षात्कारः सर्वसिद्ध इति भावः ॥ १ ॥

( भाष्यम् ) स्थानवतां परीक्षेत्यात्मानं परीक्षितुमारभते–*प्रसिद्धा इन्द्रियार्थाः । घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि, गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाश्च प्रसिद्धाः । घ्राणमिन्द्रियं गन्धं गृह्णाति, रसनं रसं, चक्षू रूपं, त्वक् स्पर्शं, श्रोत्रं शब्दमिति प्रतिनियतमेषां ग्रहणं प्रसिद्धम् । न खल्वपि घ्राणं रूपं गृह्णाति, न चक्षुर्गन्धं, न रसनं शब्दं, न त्वक् रसं, न श्रोत्रं स्पर्शमिति । यदिन्द्रियं यदुपादानं, तदुपादानस्य द्रव्यस्य गुणमसाधारणं गृह्णाति न गुणान्तरमिति प्रसिद्धमेव । प्रसिद्धत्वान्न हेत्वपेक्षा । कथं स्वोपादानगुणमेव गृह्णाति न गुणान्तरमित्यत्र न खल्वपि हेत्वपेक्षा भवतीति ॥ १ ॥

**इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः ॥ २ ॥**

( उप० ) इन्द्रियार्थप्रसिद्धेरात्मपरीक्षायामुपयोगमाह–इन्द्रियार्थप्रसि-

द्धिरिति—हेतुर्लिङ्गमर्थान्तरस्य आत्मनः इन्द्रियार्थेभ्य इति इन्द्रियेभ्योऽर्थेभ्यश्च रूपादिभ्यस्तद्वन्द्वश्च यदर्थान्तरमात्मा तस्य लिङ्गमित्यर्थः । यद्यपि ज्ञानमेव लिङ्गमिह विवक्षितं तथापीन्द्रियार्थप्रसिद्धे रूपादिसाक्षात्कारस्य प्रसिद्धतरतया ताद्रूप्येणैव लिङ्गत्वमुक्तम् । तथाहि प्रसिद्धिः क्वचिदाश्रिता कार्यत्वात् घटवत् गुणत्वाद्वा क्रियात्वाद्वा । सा च प्रसिद्धिः कारणजन्या क्रियात्वात् छिदिक्रियावत् । यच्च प्रसिद्धेः करणं तदिन्द्रियम् । तच्च कर्तृप्रयोज्यं करणत्वात् वास्यादिवत् । तथा यत्रेयं प्रसिद्धिराश्रिता यः घ्राणादीनां करणानां प्रयोक्ता स आत्मा ॥ २ ॥

( विवृ० ) एतावतात्मनः किमायातमित्यत आह—इन्द्रियार्थेति—इन्द्रियार्थप्रसिद्धिः रूपादिसाक्षात्कारः इन्द्रियार्थेभ्यः इन्द्रियेभ्यः अर्थेभ्यश्च अर्थान्तरस्य भिन्नस्यात्मनामकद्रव्यस्य हेतुः साधिकेत्यर्थः । तथाच रूपादिसाक्षात्कारो द्रव्याश्रितो गुणत्वाद्रूपवादित्यनुमानेन इतरबाधसहकृतेन आत्मनः सिद्धिरिति भावः । यद्यपि प्रसिद्धेः पक्षतया हेतुत्वकथनमसङ्गतं तथापि हेतुपदमत्रानुमितिजनकपरामर्शविशेष्यपरमिति न किंचिदनुपपन्नम् ॥ २ ॥

( भाष्यम् ) सेयम्—*इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः । इन्द्रियेभ्योऽर्थेभ्यश्च योऽयमन्योऽर्थ आत्मा तस्य हेतुर्भवति ॥ २ ॥

## सोऽनपदेशः ॥ ३ ॥

( उप० ) ननु शरीरमिन्द्रियाणि वा प्रसिद्धेराश्रयोऽस्तु, प्रसिद्धिं प्रति तदुभयान्वयव्यतिरेकयोः स्फुटतरत्वात् किं तदन्याश्रयकल्पनया । तथाहि चैतन्यं शरीरगुणः तत्कार्यत्वात् तद्रूपादिवत् । एवमिन्द्रियगुणत्वेऽपि वाच्यमित्याशङ्क्याह—सोऽनपदेश इति । अपदेशो हेतुः तदाभासोऽनपदेशः । तथाच तत्कार्यत्वं प्रदीपजन्यज्ञानादावनैकान्तिकत्वादनपदेश इत्यर्थः ॥३॥

( विवृ० ) ननु रूपादिप्रसिद्धिर्देहाश्रिता तत्कार्यत्वात्तदीयरूपादिवदित्यनुमानेन देहवृत्तित्वे सिद्धे नाऽतिरिक्तात्मसिद्धिरित्यत आह—स इति । सः देहवृत्तित्वसाधको हेतुः अनपदेशः देहकार्यत्वस्य घटपटादौ सत्त्वेन तत्र देहाश्रितत्वाभावात् उक्तहेतोर्व्यभिचारित्वान्न प्रसिद्धेर्देहवृत्तित्वसिद्धिरित्यर्थः ॥ ३ ॥

( भाष्यम् ) किं प्रसिद्धमिन्द्रियमात्मनो हेतुराहोस्वित्प्रसिद्धोऽर्थ इति । न वै खल्विन्द्रियं न चार्थ आत्मनो हेतुः । यस्मात्—*सोऽनपदेशः ।

येनापदिश्यते सोऽयमपदेशो हेतुर्लिङ्गमित्यनर्थान्तरम् । इन्द्रियेणार्थेन च न खल्वात्मा शक्यतेऽपदेष्टुमित्यात्मनोऽनपदेशोऽर्थश्चेन्द्रियं चेति। इन्द्रियार्थ प्रसिद्धिस्त्वपदेशः प्रसिद्धिर्ज्ञानं रूपमिति वा रस इति वा भवति । तत्खलु गुणः किंचिद्द्रव्यमाश्रयति रूपवत् । यच्चाश्रयति तद्द्रव्यमात्मेति ॥ ३ ॥

## कारणाज्ञानात् ॥ ४ ॥

( उप० ) ननु तत्कार्यत्वं चैतन्यत्वावच्छिन्नस्यैव कार्यत्वं विवक्षितं प्रदीपादीनां च समस्तमेव चैतन्यं न कार्यमिति न व्यभिचार इत्याशङ्क्याह—कारणाज्ञानादिति । शरीरकारणानां करचरणादीनां तदवयवानां वा अज्ञानाज्ज्ञानशून्यत्वादित्यर्थः । पृथिव्यादिविशेषगुणानां हि कारणगुणपूर्वकता दृष्टा । तथाच शरीरकारणेषु यदि ज्ञानं स्यात्तदा शरीरेऽपि संभाव्येत न चैवम् । नन्वस्तु शरीरकारणेष्वपि चैतन्यमिति चेन्न, ऐकमत्याभावप्रसङ्गात् । नहि बहूनां चेतनानामैकमत्यं दृष्टम्, करावच्छेदेनानुभूतस्य करच्छेदेऽस्मरणप्रसङ्गात् । यतो 'नान्यदृष्टं स्मरत्यन्यः' इति । किंच शरीरनाशे तत्कृतहिंसादिफलानुपभोगप्रसङ्गात् । नहि चैत्रेण कृतस्य पापस्य फलं मैत्रो भुङ्क्ते ततश्च कृतहानिरकृताभ्यागमश्च स्यात् ॥ ४ ॥

( विवृ० ) ननु ज्ञाननिष्ठं यद्देहकार्यत्वं तदेव हेतुर्भविष्यति व्यतिरेकेण घटादेर्दृष्टान्तत्वसंभवादित्यत आह—कारणेति । कारणेषु देहकारणेषु अवयवेषु अज्ञानाज्ज्ञानाभावात् । तथाच ज्ञानं न शरीरविशेषगुणः, अपाकजत्वे सति अकारणगुणपूर्वकत्वात् शब्दवदित्यनुमानेन ज्ञानसामान्यस्य देहवृत्तित्वाभावसिद्धिः प्रागुक्तशरीरकार्यत्वहेतोरप्रयोजकत्वमेवेति भावः ॥ ४ ॥

( भाष्यम् ) अस्तु तर्हि संघात इन्द्रियं वा प्रसिद्धेराश्रयः न—* कारणाज्ञानात् । न खल्विन्द्रियं संघातं वा प्रसिद्धिराश्रयति । न ह्येतेषां कारणेषु पृथिव्यादिषु ज्ञानमस्ति । कारणगुणपूर्वको हि कार्यगुणः पृथिव्यादौ दृष्ट इति ॥ ४ ॥

## कार्येषु[1] ज्ञानात् ॥ ५ ॥

( उप० ) ननु शरीरकारणेषु सूक्ष्ममात्रया ज्ञानमस्ति शरीरे तु स्फुटमतो नाकारणगुणपूर्वकता । नचैकमत्यानुपपत्तिरित्याशङ्क्याह—कार्येष्विति । यदि हि शरीरमूलकारणेषु परमाणुषु चैतन्यं स्यात्, तदा तदारब्धेषु कार्येषु घटादिष्वपि स्यात् । किंच पार्थिवविशेषगुणानां सर्व-

१ कार्येषुज्ञानादज्ञानाच्चेत्येकं सूत्रं चन्द्रकान्तमते ।

पार्थिववृत्तिताया व्याप्तेः कार्येष्वपि घटादिषु चैतन्यं स्यान्न च तत्र चैतन्यमुपलभ्यते इत्यर्थः ॥ ५ ॥

( विवृ० ) ननु शरीरावयवेषु सूक्ष्मज्ञानक्रमेण शरीरे स्फुटतरं ज्ञानं कारणगुणपूर्वकमेव स्वीकार्यमतः प्रागुक्तहेतोः स्वरूपासिद्धत्वान्न देहावृत्तित्वसाधकत्वमत आह–कार्येष्विति। यदि शरीरे चैतन्यं कारणगुणपूर्वकं स्वीक्रियते तदा तत्परमाणुष्वप्यवश्यं ज्ञानं स्वीकार्यम्। तथाच शरीरनाशे तत्परमाण्वारब्धेषु कार्यान्तरेष्वपि ज्ञानाज्ज्ञानप्रसङ्गाद्गन्धादिवदित्यर्थः ॥५॥

( भाष्यम् ) अथापि खल्विन्द्रियसंघातकारणेष्वसती प्रसिद्धिः कार्येष्विन्द्रियसंघातेषु प्रादुर्भविष्यति तच्च नैवं प्रतिपत्तुमर्हति। कस्मात्–* कार्येषु ज्ञानादज्ञानाच्च। क्वचित् कार्ये ज्ञानमुपलभ्यते संघातादौ, क्वचिच्च नोपलभ्यते घटादौ। तस्मात्प्रतिपद्यामहे न खल्वपि कारणे ष्वसज्ज्ञानं कार्येषुप्रादुर्भवति इति। कारणेष्वसच्चेत् कार्ये प्रादुर्भवेत्, सर्वत्राविशेषेण प्रादुर्भवेत्, नवा प्रादुर्भवेत्, न जात्वपि क्वचित् प्रादुर्भवेत्, विशेषहेतुर्वा वक्तव्य इति। तदेवं नेन्द्रियं न चार्थो न खल्वपि संघातः प्रसिद्धेराश्रयः। इन्द्रियमर्थश्चात्मनो न हेतुः ॥ ५ ॥

अज्ञानाच्च ॥ ६ ॥

( उप० ) ननु घटादावपि सूक्ष्ममात्रया चैतन्यमस्त्येवेत्याशङ्क्याह–अज्ञानाच्चेति। सर्वैः प्रमाणैरज्ञानात् कुम्भादौ न चैतन्यमित्यर्थः। सर्वप्रमाणागोचरस्याप्यभ्युपगमे शशविषाणादेरप्यभ्युपगमप्रसङ्गः। नहि घटादौ चैतन्यं केनापि प्रमाणेन ज्ञायत इति ॥ ६ ॥

( विवृ० ) ननु तत्तत्कार्येषु सूक्ष्ममेव ज्ञानं स्वीकार्यमतो नोपलब्धिरित्यत आह–अज्ञानाच्चेति। अज्ञानात्केनापि प्रमाणेन तत्तत्कार्ये तज्ज्ञानस्य ज्ञानाजननात्। तथाच निष्प्रमाणकत्वान्न तत्तत्कार्येषु ज्ञानमित्यर्थः। चकारो गौरवं समुच्चिनोति। तथाच नानावयवेषु नानाचैतन्यकल्पनापेक्षया चैतन्याधारतया एकं द्रव्यान्तरमेव कल्पयितुमुचितमिति भावः। इदमुपलक्षणं देहे चैतन्यस्वीकारे बाल्येऽनुभूतस्य यौवनादौ स्मरणानुपपत्तिस्तदानीमनुभवितुरभावात्। परिमाणनाशेन बाल्यशरीरनाशाभ्युपगमस्यावश्यकत्वात्। एवमद्यजातबालकस्य स्तनपाने प्रवृत्तिर्न स्यात्। प्रवृत्तिजनकस्य इष्टसाधनत्वानुभवस्य तदानीमसंभवात्। एवं गर्भनिःसरणदशायां वानरशिशूनां शाखावलम्बने प्रवृत्तिरपि नोपपद्यते तदानीमि-

ष्टसाधनत्वानुभावकाभावात् । अतिरिक्तचेतनवादिमते च जन्मान्तरीयेष्ट-साधनत्वानुभवजनितसंस्कारवशात् स्मरणसंभवेन स्तनपाने शाखावलम्बने च पूर्वोक्ता प्रवृत्तिर्नानुपपन्ना । नच जन्मान्तरानुभूतानामन्येषामपि स्मरणं कथं न भवतीति वाच्यम्, उद्बोधकाभावात् । अत्र त्वनायत्या जीवनादृष्टमेवोद्बोधकं कल्प्यते । अन्यथा शुष्ककण्ठतया उच्चपतनेन च बालस्य मरणप्रसङ्गादित्यादिकं द्रष्टव्यमिति संक्षेपः ॥ ६ ॥

## अन्यदेव हेतुरित्यनपदेशः ॥ ७ ॥

( उप० ) ननु श्रोत्रादिभिः करणैरधिष्ठाताऽनुमीयते इत्युक्तं तदयुक्तं, नहि श्रोत्रादिभिरात्मनस्तादात्म्यं तदुत्पत्तिर्वा, न च ताभ्यामन्तरेणाविनाभावसिद्धिः, न चाविनाभावमन्तरेणानुमितिरित्यत आह—अन्यदिति । हेतुः साध्यादन्य एव भवति न तु साध्यात्मा साध्याविशेषप्रसङ्गात् । तस्मात्तादात्म्यघटितो हेतुरहेतुरनपदेश इत्यर्थः ॥ ७ ॥

( विवृ० ) ज्ञानस्य गुणत्वहेतुना द्रव्याश्रितत्वं कथं सिध्यति अतदात्मनस्तदनुत्पन्नस्य वा तदसाधकत्वादिति सांख्यैकदेशिनामाशङ्कां निरस्यति—अन्यदेवेति । अन्यदेव साध्यादन्यदेव वस्तु हेतुर्भवति । इति हेतौ यतः साध्याभिन्नोऽनपदेशः हेत्वाभासः साध्यस्यासिद्धत्वेन तदभिन्नस्याप्यसिद्धत्वादिति भावः ॥ ७ ॥

( भाष्यम् ) कस्तर्हि हेतुः—*अन्यदेव हेतुरित्यनपदेशः एवशब्दादिन्द्रियमर्थं च व्यवच्छिनत्ति । इन्द्रियेभ्यश्चार्थेभ्यश्चान्यदेव हेतुरितीन्द्रियमर्थश्चानपदेशोऽहेतुः । नैताभ्यामात्मा शक्योऽपदेष्टुमिति । किं पुनरन्यत् ‘ आत्मेन्द्रियार्थसंनिकर्षाद्यन्निष्पद्यते तदन्यत् ’—इति वक्ष्यति ॥ ६ ॥

## अर्थान्तरं ह्यर्थान्तरस्यानपदेशः ॥ ८ ॥

( उप० ) ननु श्रोत्रादिभिरिन्द्रियैरात्मनो यथा न तादात्म्यं तथा तदुत्पत्तिरपि नास्ति । नहि वह्नेर्धूम इव आत्मनः श्रोत्रादि करणमुत्पद्यते इत्यत आह—अर्थान्तरमिति । हि यतः कार्यं धूमादि यथा रासभादेरर्थान्तरं तथा कारणाद्वह्न्यादेरप्यर्थान्तरमेव । तथा चार्थान्तरत्वाविशेषात् धूमो रासभं न गमयति किंतु वह्निमेव गमयतीत्यत्र स्वभावविशेष एव नियामकः । स च स्वभावो यदि कार्यादन्यस्यापि भवति तदा सोऽप्यपदेशो भवत्येव । तथाच कार्यमविवक्षितस्वभावभेदमनपदेशः । तथाच तादात्म्यतदुत्पत्ती एवाविनाभावः तयोरेवाविनाभावपर्यवसानं ताभ्यां समानो-

पायो वा, तदुभयमात्रग्रहाधीनग्रहो वेति स्वशिष्यव्यामोहनाय परिभाषामात्रमिति भावः ॥ ८ ॥

( विवृ० ) ननु साध्यादनुत्पन्नस्य गुणत्वस्य कथमनुमापकत्वम्, तथा सति धूमादिना वह्न्यादेरिव रासभादेरप्यनुमानापत्तेरित्यत आह–अर्थान्तरमिति । हि हेतौ यतोऽर्थान्तरं वस्त्वन्तरमर्थान्तरस्य वस्त्वन्तरस्य अनपदेशः अहेतुः । रासभादेर्व्याप्तिशून्यो हि धूमादिः रासभादौ साध्ये हेत्वाभासः नतु वह्न्यादौ, तद्व्याप्यत्वस्य तत्र सत्त्वात् । प्रकृते तु व्याप्तिसत्त्वान्नागमकत्वमिति भावः ॥ ८ ॥

( भाष्यम् ) कस्मादिन्द्रियमर्थश्चानपदेशः–* अर्थान्तरं ह्यर्थान्तरस्यानपदेशः । यस्मादर्थान्तरमर्थान्तरस्यानपदेशो भवति न तेनासौ शक्योऽपदेष्टुमिति । तत्र यादृगिदं भवति रूपमात्मनो हेतुरिति, तादृगेतद्भवति इन्द्रियमर्थश्चात्मनो हेतुरिति । अस्तु तर्हि इन्द्रियार्थप्रसिद्धिरात्मनोऽनपदेशः । अर्थान्तरमिन्द्रियार्थप्रसिद्धिरर्थान्तरं चात्मेति । तच्च नैवं भवति । प्रसिद्धिपूर्वकत्वादपदेशस्य । अप्रसिद्धो ह्यनपदेशः । तदेतत्सिध्यति ययोरर्थान्तरभूतयोः प्रसिद्धिर्नास्ति, तयोरेकमन्यस्यानपदेश. । ययोस्त्वस्ति प्रसिद्धिस्तयोरर्थान्तरमपदेशो भवत्यर्थान्तरस्येति । ज्ञानस्यात्मनश्चास्ति प्रसिद्धिरिति ज्ञानमात्मनोऽपदेशः । आत्मनि खल्वेतत्समवैति । इन्द्रियार्थाभ्यां न तस्य प्रसिद्धिरितीन्द्रियमर्थश्चानपदेश एवात्मन इति । ज्ञानं च खल्वेतदात्मनः कार्यं नात्यन्तमर्थान्तरभूतमिति । अर्थान्तरं तर्ह्यर्थान्तरस्यानपदेश एव ? यत्र प्रसिद्धिर्नास्ति तत्रार्थान्तरमर्थान्तरस्यानपदेशः । यत्र त्वस्ति प्रसिद्धिस्तत्र भवत्यपदेशोऽर्थान्तरमर्थान्तरस्येति ॥ ७ ॥

## संयोगि समवाय्येकार्थसमवायि विरोधि च ॥ ९ ॥

( उप० ) संप्रत्यविनाभावस्य तदुभयव्यभिचारमेव स्फुटयितुमाह–संयोगीति । शरीरं त्वग्वत् शरीरत्वादित्ययं हेतुः संयोगी । वृद्धिक्षयवद्द्रव्यसहजावरणं हि त्वगित्युच्यते । तच्च न शरीरस्य कार्यं कारणं वा, किंतु सहोत्पत्तिकमात्रं नियतसंयोगवत् । एवं समवायि यथाकाशं परिमाणवद्द्रव्यत्वाद्घटादिवदिति । अत्र परिमाणं साध्यं द्रव्यत्वेनाकाशसमवायिना धर्मेण साध्यते, यद्वा परिमाणतारतम्यं क्वचिद्विश्रान्तमित्यनेनाणुत्वं परिमाणविशेषः सिद्धः । तेन तदाश्रयः परमाणुरनुमीयते । शब्दादिना त्वाकाशस्य,ज्ञानादिना त्वात्मानुमानं कार्येणैव कारणानुमानमिति नोदाहृतम्॥९॥

( विवृ० ) ननु गुणत्वहेतौ व्याप्यत्वमपि दुर्घटं व्याप्यत्वस्य तादात्म्यतदुत्पत्तिनियतत्वादित्यत आह—संयोगीति । संयोगि संयोगानुयोगि लिङ्गमिति सर्वशेषः । तथाच संयोगानुयोगि संयोगप्रतियोगिनो लिङ्गं व्याप्यं, कथमन्यथा अयं देशः सारथिमान् विलक्षणगतिमद्रथादित्यादावनुमितिः । साध्यतावच्छेदकसंबन्धश्चात्र स्वसंयुक्तसंयोगः । एवं समवाय्यपि समवेतस्य लिङ्गं, कथमन्यथा पश्वाद्यवयवमात्रदर्शनदशायां विशिष्टावयवेनाऽवयविनः पश्वादेरनुमितिः । नचावयवचक्षुःसंयोगदशायामवयविन्यपि संयोगसत्त्वात् तस्यापि प्रत्यक्षं दुर्वारमिति वाच्यं, तथापि सिषाधयिषया तादृशानुमानसंभवात् । तथाच सारथ्यादिभिन्नस्य सारथ्याद्यकार्यस्य च रथादेः सारथ्यादेर्व्याप्यत्वात्, व्याप्यत्वं न तादात्म्यतदुत्पत्तिनियतमिति भावः ॥ ९ ॥

( भाष्यम् ) किं पुनरर्थान्तरमर्थान्तरस्यापदेशो लिङ्गं भवति, तदुच्यते—*संयोगि समवाय्येकार्थसमवायि विरोधि च । अर्थान्तरमर्थान्तरस्यापदेशः । ययोः खल्वर्थान्तरभूतयोः संयोगादिरस्ति, तयोरर्थान्तरमर्थान्तरस्य लिङ्गं भवति । इन्द्रियं तु नात्मनः संयोगि, न समवायि, नैकार्थसमवायि, न विरोधीत्यनपदेश एवेति । एतेनार्थो व्याख्यातः । एभ्यश्चान्यत्रानुमानाभिमानः संभावनामूलो न खल्वपि प्रमितावुपयुज्यते । प्रमाणतो ह्युपलब्धेस्तथाभावो न्याय्यो न विपर्ययः । विपर्येति चान्यदनुमानमिति न तत्प्रमाणम् । कार्यं न कारणादत्यन्तमर्थान्तरभूतमिति नात्र तयोरुपसंख्यानम् । यदर्थान्तरमपदेशो भवत्यर्थान्तरस्य, तत्खल्वत्रोपसंख्यायते । नवमे तु लैङ्गिकोपसंख्याने तदप्युपसंख्यास्यतीति ॥ ८ ॥

## कार्यं कार्यान्तरस्य ॥ १० ॥

( उप० ) एकार्थसमवायिनं सूत्रकृदुदाहरति—कार्यमिति । कार्यं रूपं कार्यान्तरस्य स्पर्शस्य लिङ्गम् । उपलक्षणं चैतत्, अकार्यमप्याकाशैकत्वमाकाशैकपृथक्त्वे लिङ्गम् । एवं परममहत्त्वे ॥ १० ॥

( विवृ० ) एकार्थसमवायिनो लिङ्गस्योदाहरणं स्वयमेव दर्शयति—कार्यमिति । कार्यं पृथिव्याः कार्यं गन्धादिकं कार्यान्तरस्य रसादेर्लिङ्गमिति शेषः । एकार्थसमवायः समवायघटितसामानाधिकरण्यम् । एवं नित्यरसादिकमपि नित्यरूपादेर्लिङ्गं द्रष्टव्यम् । तथाच गन्धादे रसाद्यभेदस्य रसादिजन्यत्वस्य चाऽभावात् । व्याप्तेस्तदुभयनैयत्यं बाधितमेवेति भावः ॥१०॥

(भाष्यम्) एषामुदाहरणम्–*कार्यं कार्यान्तरस्य । कार्यं शरीर-संयोगि त्वग्द्रव्यं कार्यान्तरस्य संयोगिनः शरीरद्रव्यस्य लिङ्गमर्थान्तरभू-तम् । सहजं खल्वावरणं शरीरस्य त्वगुच्यते । तच्चैतच्छरीरस्य न कार्यं न कारणं केवलं सहोत्पद्यमानं नियतसंयोगि शरीरेणेति । कार्यं खल्वपि रूपं द्रव्यसमवेतं कार्यान्तरस्य समवायिनो लिङ्गं, कार्यं च शब्दः कार्या-न्तरस्याकाशस्य लिङ्गमिति । कार्यं खल्वपि रूपं स्पर्शश्चैकस्मिन्नर्थे सम-वैति । तयोरर्थान्तरमेकमर्थान्तरभूतस्यापरस्य लिङ्गमिति ॥ ९ ॥

## विरोध्यभूतं भूतस्य ॥ ११ ॥

(उप०) विरोधिलिङ्गमुदाहरति–विरोध्यभूतमिति । अभूतं वर्षं भूतस्य वाय्वभ्रसंयोगस्य लिङ्गम् । एवं स्फोटादेर्विरोधी मन्त्रपाठः । तथाचाभूत-मनुत्पन्नं स्फोटादि भूतस्य मन्त्रपाठस्य लिङ्गम् ॥ ११ ॥

(विवृ०) विरोधिनो व्याप्यत्वमुदाहरति–विरोध्यभूतमिति । अभूतम् असंनिहितं विरोधि विरोध्यसंनिधानमिति यावत् । भूतस्य जातस्य स्थितस्य वा विरोधिनो लिङ्गमिति शेषः । अयमनुमानप्रकारः अयं काष्ठो दाहवान् वह्निसंयुक्तत्वे सति मण्याद्यसंनिधानात् भस्मीभूतवस्त्वन्तरवत्, अयं देशो निर्भयाहिमान् अहिमत्वे सति नकुलशून्यत्वात्तादृशानिश्चितदे-शान्तरवदित्यादि ॥ ११ ॥

(भाष्यम्) अथ विरोधि–*विरोध्यभूतं भूतस्य । अभूतं नास्तीत्यन-र्थान्तरम् । असत् खल्वपि विरोधि सतो विरोधिनो लिङ्गम् । नकुलः खल्व-सन्नहेर्लिङ्गं भवति । निराकुला हि तत्र तस्यावस्थितिरवस्थित्युचिते देशे ॥१०॥

## भूतमभूतस्य ॥ १२ ॥

(उप०) विरोधिलिङ्गस्योदाहरणान्तरमाह–भूतमिति । भूतं स्फोटा-दिकमभूतस्य मन्त्रपाठस्य लिङ्गम् । एवंभूतो वाय्वभ्रसंयोगोऽभूतस्य वर्षस्य लिङ्गम् । एवंभूतो दाहोऽभूतस्य मण्यादिसमवधानस्य लिङ्गम् । एव-मन्यदप्यूह्यम् ॥ १२ ॥

(विवृ०) विरोध्यन्तरमुदाहरति–भूतमभूतस्येति । भूतमुत्पन्नं स्थितं वा अभूतस्य विरोधिनो विरोध्यसंनिधानस्य लिङ्गमित्यर्थः । यथायं काष्ठो मण्याद्यसंनिहितो दाहवत्त्वात् । अयं देशो नकुलशून्यः भीतिरहिताहिम-त्त्वादित्यादि ॥ १२ ॥

(भाष्यम्) सच्च विरोधि विरोध्यन्तरस्यासतो लिङ्गम् । नकुलेन सता-ऽनुमीयते नास्त्यत्राहिरिति ॥ ११ ॥

## भूतो भूतस्य ॥ १३ ॥

( उप० ) लिङ्गान्तरमुदाहरति—भूत इति । विद्यमानेनैव विरोधिना विद्यमानस्यैव विरोधिनः क्वचिदनुमानं—यथा विस्फूर्जन्तमहिं दृष्ट्वा झाटान्तरितस्य नकुलस्य । अत्र हि विस्फूर्जन्नहिर्भूतो विद्यमानो झाटान्तरितो नकुलोऽपि विद्यमान एवेति भवति भूतो भूतस्य लिङ्गमित्यर्थः । वर्षवाय्वभ्रसंयोगयोस्तु नैकस्मिन् काले विद्यमानता न वा स्फोटमन्त्रपाठयोरिति॥१३॥

( विवृ० ) सद्विरोधिनः सद्विरोधिलिङ्गत्वमुदाहरति—भूत इति । भूतो वर्तमानो विरोधी भूतस्य वर्तमानस्य विरोधिनो लिङ्गमित्यर्थः । यथा विस्फूर्जनवदहिदर्शनेन गुल्माद्यन्तरितस्य विद्यमानस्य नकुलस्यानुमानम् ॥ १३ ॥

( भाष्यम् ) भूतो विरोधी भूतस्य विरोधिनो लिङ्गम् । गतिविशेषात्प्रसर्पता नकुलेनानुमीयते अस्त्यत्राहिरलक्ष्य इति । तथाभूतेन वाऽहिना नकुलस्यानुमानम् ॥ १२ ॥

## प्रसिद्धिपूर्वकत्वादपदेशस्य ॥ १४ ॥

( उप० ) इदानीं परिगणनस्य प्रयोजनमाह—प्रसिद्धीति । प्रसिद्धिः स्मर्यमाणा व्याप्तिः, अपदेशो हेतुवचनं, तेन स्मर्यमाणव्याप्तिविशिष्टो हेतुर्हेत्ववयवेनोपनयावयवेन वोच्यते इति भवति प्रसिद्धिपूर्वकोऽपदेश इति । तथाच श्रोत्रादिना करणेनाधिष्ठातुः, ज्ञानादिना च गुणेन तदाश्रयस्यात्मनो यदनुमानमुक्तं तत्र सर्वत्र व्याप्तिरस्ति, त्वया तु शरीरकार्यत्वेन हेतुना ज्ञानस्य यच्छरीरगुणत्वं साधितं तत्र न व्याप्तिरिति भावः । ननु केयं व्याप्तिर्न तावदव्यभिचरितः संबन्धः अव्यभिचारस्य साध्यात्यन्ताभावसामानाधिकरण्यानधिकरणत्वस्य केवलान्वयिन्यप्रसिद्धेः साध्यानधिकरणानधिकरणत्वस्यापि केवलान्वयिन्यसंभवात् । धूमादेरपि यत्किंचित्साध्यानधिकरणाधिकरणत्वात् । नाप्यविनाभावः । स हि साध्यं विनाऽभावो वा हेतोः, अविना साध्यान्वये सति भावो वा । धूमस्यापि क्वचिद्रासभाभावेऽभावात् रासभसत्त्वे सत्त्वाच्च । नियतव्यतिरेको नियतश्चान्वयो विवक्षित इति चेन्न, नियमस्यैव निरूप्यमाणत्वात् । नापि कार्त्स्न्येन संबन्धः, स हि यदि कृत्स्नस्य साध्यस्य साधनसंबन्धः, स विषमव्याप्ते धूमादावपि नास्ति । अथ कृत्स्नस्य साधनस्य साध्यसंबन्धः, सोऽप्येकस्य साध्यस्य कृत्स्नसाधने संबन्धाभावादनुपपन्नः । अथ कृत्स्नस्य साध्यस्य

कृत्स्नेन साधनेन संबन्धः, एतदप्ययुक्तं नहि कृत्स्नेन साधनेन क्वचिदपि कृत्स्नस्य साध्यस्य संबन्धः संभवति, प्रत्येकमेव साध्यसाधनयोः संबन्धात् विषमव्याप्ते चाव्याप्तेः। नापि स्वाभाविकः संबन्धः, स्वभावो हि स्वस्य भावो वा स्वमेव भावो वा, तत्र तज्जन्यत्वं चेत्तद्धितार्थः, तदा समवायलक्षणायां व्याप्तावव्याप्तेः। तदाश्रितत्वं चेत्तद्धितार्थः, तदापि समवायेऽव्याप्तिः। नहि समवायः क्वचिदाश्रितः। संयोगस्यापि हेतुधर्मधूमत्वाद्यनाश्रितत्वात् हेतुधर्मधूमत्वाद्यजन्यत्वाच्च। नाप्यनौपाधिकः संबन्धः उपाधेरेव दुर्वचत्वात्, सुवचत्वेऽपि दुर्ग्रहत्वात्, सुग्रहत्वेऽप्यन्योन्याश्रयात् साध्यव्यापकत्वे सति साधनाव्यापकत्वादेर्व्याप्तिग्रहाधीनग्रहत्वात्। नापि संबन्धमात्रं व्याप्तिः, व्यभिचारिसंबन्धस्यापि देशविशेषकालविशेषगर्भतया व्याप्तिरूपत्वेऽपि तज्ज्ञानस्यानुमितावतन्त्रत्वात्। अनुमितिकारणीभूतज्ञानविषयव्याप्तेरेव निरूपयितुमुचितत्वात्। नापि साधनवन्निष्ठात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः वह्नेरपि धूमवन्निष्ठात्यन्ताभावप्रतियोगित्वात्। नहि धूमवति महानसे पर्वतीयवह्नेर्नात्यन्ताभावः इदं संयोगि द्रव्यत्वादित्यादौ संयोगात्यन्ताभावस्य साधनसमानाधिकरणत्वादव्यापकताप्रसङ्गात्प्रतियोगिविरुद्धस्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिरण्यं व्याप्तिः संयोगात्यन्ताभावस्य प्रतियोगिविरुद्धत्वाभावादिति चेन्न। संयोगात्यन्ताभावस्यापि प्रतियोगिविरुद्धत्वात्। अन्यथावच्छेदकभेदकल्पनावैयर्थ्यात्। नहि कृतकत्वानित्यत्वयोर्वृत्त्यर्थमवच्छेदकभेदः कल्प्यते, नापि साध्यवैयधिकरण्यानधिकरणत्वम्, केवलान्वयिनि साध्यवैयधिकरण्याप्रसिद्धेः साध्यानधिकरणाधिकरणत्वं हि तत्। नापि यत्संबन्धितावच्छेदकरूपवत्त्वं यस्य तस्य सा व्याप्तिः वह्नित्वस्यापि धूमसंबन्धितावच्छेदकत्वात्, अधिकदेशवृत्तितया तन्न तथेति चेन् व्यापकतावच्छेदकस्याधिकदेशवृत्तेरप्यभ्युपगमात् धूमत्वस्यापि गगनतलावलम्बिधूमवृत्तितयाऽधिकदेशवृत्तित्वात्। अत एव तद्वारणार्थं विशेषणमिति चेत्तर्हि यद्व्याप्यतावच्छेदकं तदेव संबन्धितावच्छेदकत्वेनाभिमतमित्यभिमतं तथाचात्माश्रयः। एवंच यत्सामानाधिकरण्यावच्छेदकरूपवत्त्वं यस्य तस्य सा व्याप्तिरित्यप्युक्तदोषाक्रान्तमिति चेदत्रोच्यते— अनौपाधिकः संबन्धो व्याप्तिः। अनौपाधिकत्वं तु यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यं यावत्स्वसमानाधिकरणात्यन्ताभावप्रतियोगिप्रतियोगिकात्यन्ताभावसमानाधिकरणसाध्यसामानाधिकरण्यं वा। याव-

त्साधनाव्यापकाव्याप्यसाध्यसामानाधिकरण्यमिति निरुक्तिद्वयार्थः । यावत्साध्यव्यापकव्यापकत्वं वा, बहुव्रीहिणा दुर्ग्रहमिदमिति चेत् अत एव तत्र भूयोदर्शनापेक्षा तर्कापेक्षा च । यद्वा साधनसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः । अत्यन्ताभावश्च वह्नित्वादिसामान्यावच्छिन्नप्रतियोगिताको विवक्षितः । तेन महानसीयधूमे पर्वतीयवह्न्यत्यन्ताभावसामानाधिकरण्येऽपि न दोषः । धूमवति वह्निर्नास्तीति प्रतीतेरनुदयात् । द्रव्यत्वं तु संयोगित्वात्यन्ताभावासमानाधिकरणमेव । नहि भवति द्रव्यं न संयोगीति प्रतीतिः । संयोगानां प्रत्येकमव्याप्यवृत्तित्वेऽपि संयोगित्वसामान्यस्य व्याप्यवृत्तित्वात्तस्यैव च व्यापकत्वात् । नन्वनौपाधिकत्वमुपाधिविरहः उपाधिरेव दुष्परिकलनीय इति चेन्न । साध्यव्यापकत्वे सति साधनाव्यापकस्योपाधित्वात् । तदुक्तम् 'साधने सोपाधिः साध्ये निरुपाधिरुपाधिः' । ननु केवलसाध्याव्यापकोपाध्यव्यापकमेतत् । यथा वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वम्, स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वम्, नह्युद्भूतरूपवत्त्वं प्रत्यक्षत्वव्यापकम् आत्मनि गुणकर्मादौ च प्रत्यक्षे तदभावात् । नापि शाकपाकजत्वं श्यामत्वव्यापकम् काककोकिलजलदजम्बूफलादौ श्यामे तदभावादिति चेन्न । पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वस्य तथा विवक्षितत्वात् । पर्यवसितं च साध्यं यद्धर्मावच्छेदेनोपाधेर्व्यापकत्वमभग्नं तदवच्छिन्नम् । प्रकृते बहिर्द्रव्यत्वावच्छेदेन प्रत्यक्षत्वस्योद्भूतरूपवत्त्वं व्यापकम्, अन्वयव्यतिरेकाभ्यां गृहीतम्, औत्पत्तिकनरश्यामत्वावच्छिन्नं साध्यं प्रति चरकसुश्रुतादौ शाकपाकजत्वस्य व्यापकत्वावधारणादेवमन्यत्राप्यूह्यम् । ननु नायमुपाधिपदवाच्यः यद्धर्मोऽन्यत्र भासते स उपाधिः यथा स्फटिकादौ जवाकुसुमादि विषमव्याप्तोपाधौ च व्याप्यत्वाभावात्तद्धर्मस्य साधनाभिमतेऽनवभासनादिति चेत्सत्यं, समव्याप्त एवार्द्रेन्धनप्रभववह्निमत्त्वादौ मुख्य उपाधिपदप्रयोगः अन्यत्र तु गौणः । गुणश्च व्यभिचारोन्नायकत्वम् । यद्धि यद्व्यापकव्यभिचारि तस्य तद्व्यभिचारित्वनियमात् । भवति च साध्यव्यापकस्योपाधेर्व्यभिचारि साधनम्, अतः साध्यव्यभिचारीति । यद्व्यापकाव्याप्यं यत् तत् तदव्याप्यमिति व्याप्यत्वासिद्ध्युन्नायकत्वं वा सत्प्रतिपक्षोत्थापकत्वं वा । पक्षादु(क्षेउ)पाधेः साध्यव्यापकस्याभावात्साध्याभावसाधनात्, तदुक्तं 'वाद्युक्तसाध्यनियमच्युतोऽपि कथकैरुपाधिरुद्भाव्यः पर्यवसितं

नियमयन् दूषकताबीजसाम्यात्' इति उन्नीयते चायं बाधव्यभिचारानुकूलतर्काभावप्रतिकूलतर्कैः । यत्तु यद्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वं स उपाधिरिति तत्र तृतीया न करणे न हेतौ न प्रकारे न लक्षणे । न च यद्व्यभिचारित्वेन ज्ञातेन साधनस्य साध्यव्यभिचारित्वं ज्ञायते इति पूरणीयम् । अज्ञायमानोपाध्यव्यापनात्, स्फुटव्यभिचारस्थलोपाध्यव्यापनात् । योग्यतागर्भा तु दुर्निरूपा, व्यभिचारोन्नायकत्वमव्यवस्थाप्य उपाध्युद्भावनाशक्यत्वाच्च । पक्षेतरत्वं तु उपाधिलक्षणाक्रान्तमपि स्वव्याघातकत्वान्नोपाधिः यथा पक्षे संदिग्धानैकान्तिकत्वम् । यदि हि तत्र न संदेहस्तदा न पक्षता यदि पक्षता तदा संदेहस्यावश्यकतया संदिग्धानैकान्तिकत्वध्रौव्यात् । अवशिष्टं मयूखेऽन्वेष्टव्यम् ॥ १४ ॥

( विवृ० ) ननूक्तस्थलेषु अनुमितिर्न भवत्येव व्याप्तिविरहादित्यत आह–प्रसिद्धिरिति । प्रसिद्धिर्व्याप्तिप्रमा तत्पूर्वकत्वात्तदधीनत्वात् अपदेशस्य सद्धेतूद्भावनस्य तथा चोक्तस्थलेषु सन्न्यायप्रयोगस्य कथकसंप्रदायसिद्धत्वात् तन्निर्वाहकव्याप्तिप्रमोपपादकव्याप्तिस्वीकार आवश्यक इति भावः । व्याप्तिश्च साध्यतावच्छेदकसंबन्धावच्छिन्नं यत् साध्यवत्त्वं तदवच्छिन्नप्रतियोगिताकस्यान्योन्याभावस्य स्वप्रतियोगितावच्छेदकवत्त्वबुद्धिविरोधिताघटकसंबन्धेन यदधिकरणं तन्निरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तितानवच्छेदकहेतुतावच्छेदकधर्मवत्त्वम् । केवलान्वयिस्थले सत्तावाञ्जातेरित्यादिस्थले च व्याप्तिभ्रमादेवाऽनुमितिः । आकाशादिहेतौ व्याप्तिरस्त्येव । परन्तु पक्षधर्मत्वविरहादसद्धेतुत्वव्यवहारः । अथवा यादृशप्रतियोगितावच्छेदकावच्छिन्नसाध्यतावच्छेदकसंबन्धानवच्छिन्ननिरूपकताकाधिकरणतावदन्यत्वं हेतुतावच्छेदकसंबन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्ननिरूपकताकाधिकरणतावतस्तन्निरूपितसाध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताशून्यं यत्साध्यतावच्छेदकं तदवच्छिन्ननिरूपकताकाधिकरणतावद्वृत्तिवृत्ति यत् हेतुतावच्छेदकं तद्वत्त्वं व्याप्तिः । गुरुधर्मस्य प्रतियोगितावच्छेदकत्वस्वीकाराच्च कम्बुग्रीवादिमत्त्वान् द्रव्यत्वादित्यादौ नातिव्याप्तिः कालो घटवान् महाकालत्वादित्यादौ महाकालान्यत्वविशिष्टघटाद्यभावप्रतियोगितामादाय लक्षणसमन्वयः । उक्तयोर्लक्षणयोः संबन्धादिनिवेशव्यावृत्तिः सुधीभिरूहनीया, विस्तरभयात्परित्यक्ताऽस्माभिः ॥ १४ ॥

( भाष्यम् ) अथापि खल्वेतदर्थान्तरमर्थान्तरस्यापदेशो न त्वन्यदिति ।

---

१ साम्राज्यादिति बाँ. रा. आ. सो. ग्र पु. पाठ. ।

कुत एतत् प्रतिपत्तव्यम् ?—*प्रसिद्धिपूर्वकत्वादपदेशस्य । प्रसिद्धिपूर्वकः खल्वपदेशो भवति । अस्ति चैतेषु प्रसिद्धिर्नियतसंबन्धात् । तस्मादेभिरर्थान्तरभूतैरप्यर्थान्तरभूतान्येतान्यपदिश्यन्ते इति भवन्त्येतेऽपदेशाः । अन्ये त्वनपदेशाः, न खल्वपि तेषु प्रसिद्धिरस्ति नियतसंबन्धस्याभावात् ॥ १३ ॥

[१]अप्रसिद्धोऽनपदेशोऽसन् संदिग्धश्चानपदेशः ॥ १५ ॥

( उप० ) इदानीं वृत्तानां वर्तिष्यमाणानां च हेतूनां हेत्वाभासाद्विवेकाय हेत्वाभासप्रकरणमारभमाण आह—अप्रसिद्ध इति । अप्रसिद्ध इति अव्याप्तोऽगृहीतव्याप्तिकश्च विपरीतव्याप्तिकश्च विरुद्धः । एतेन व्याप्यत्वासिद्धविरुद्धयोः संग्रहः । असन् इति पक्षेऽसन् अपक्षधर्म इत्यर्थः । स च क्वचित् स्वरूपविरहात् क्वचित् संदेहसिषाधयिषयोरभावात् सिद्धसाधने । संदिग्ध इति पक्षे साध्यसदसत्त्वकोटिकसंशयजनकः, स च संशयः समानधर्मदर्शनात् क्वचिदसाधारणधर्मदर्शनात् क्वचित् पक्ष एव हेतोः साध्यतदभावसाहचर्यदर्शनात् । आद्यः साधारणानैकान्तिकः, द्वितीयस्त्वसाधारणानैकान्तिकः तृतीयोऽनुपसंहारी ॥ १५ ॥

( विवृ० ) प्रसङ्गाद्धेत्वाभासं निरूपयति—अप्रसिद्ध इति । अप्रसिद्धः अप्रमितः व्याप्त्या पक्षधर्मतया च । तथाच यत्र व्याप्तिः पक्षधर्मत्वं वा नास्ति स असिद्ध इति यावत् । असन् साध्यवतीत्यादि साध्यवदवृत्तिर्विरुद्ध इति फलितार्थः । संदिग्ध इति यतः पक्षे साध्यरूपो धर्म इत्यादिः । तथाच साध्यसंदेहजनकपक्षधर्मताज्ञानविषय इत्यर्थः । सव्यभिचार इति तु फलितार्थः । चकारादनुक्तयोः गौतमीयतन्त्रोक्तयोः सत्प्रतिपक्षबाधितयोः संग्रहः । तथाच हेत्वाभासाः पञ्च, असिद्धविरुद्धसव्यभिचारसत्प्रतिपक्षबाधिताः । तादृशपञ्चान्यतमत्वं हेत्वाभाससामान्यलक्षणमित्यर्थः । विरुद्धासिद्धसंदिग्धमलिङ्गं काश्यपोऽब्रवीत् इत्य(त्रा)प्युपलक्षणं ज्ञेयम् । एवमेव वृत्तिकारः । हेतुवदाभासन्ते इति व्युत्पत्त्या हेत्वाभासपदं दुष्टहेतुपरं, हेतोराभासा इति व्युत्पत्त्या तु हेतुदोषबोधकमेव तत् । तत्र दोषा अपि पञ्च, तत्र दोषसामान्यलक्षणं प्रकारान्तरमपि संभवति । तथाहि अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयादृशविशिष्टविषयिताव्यापिका पक्षः साध्यवान्, साध्यव्याप्यहेतुमांश्चेति समूहालम्बनानु-

१ अप्रसिद्धोऽनपदेश इति पृथक् सूत्रं चन्द्रकान्तमते ।

मितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तादृशविशिष्टत्वं हेतुदोषत्वम्। अत्र तादृशविशिष्टान्तराघटितत्वे सतीति विशेषणं देयं, तेन प्रमेयत्वविशिष्टव्यभिचारादौ नातिप्रसङ्गः। यद्यपि विशेषगुणसामान्याभाववान् द्वितीयक्षणावच्छिन्नो घटो गुणसामान्याभाववानित्यादौ बाधघटिताया आश्रयासिद्धेरसंग्रहस्तथापि स्वावच्छिन्नविषयकत्वावच्छिन्नं यत्किंचित्प्रतिबन्धकतावच्छेदकविषयिताकविशिष्टनिरूपितविषयितात्वव्यापकस्वावच्छिन्ननिरूप्यताकधर्मवत्त्वं हेतुदोषत्वमित्यस्य विवक्षितत्वान्न दोषः। लक्षणसङ्गमनादिकं तु सुधीभिः स्वयमूहनीयं विस्तरभयादुपेक्षितमस्माभिः। निर्वह्निः पर्वतो वह्निमानित्यादौ तु हेतुदोषो न स्वीक्रियते अविज्ञाताख्यनिग्रहेणैव वादिनस्तत्र निग्रहात्। अथवा यादृशविशिष्टविषयकानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयोत्तरानुमितित्वव्यापकः विरोधिविषयताप्रयुक्तः पक्षविशेष्यतानिरूपितसाध्यप्रकारत्वतादृशविशेष्यतानिरूपितसाध्यव्याप्यहेतुप्रकारत्वोभयाभावः तादृशविशिष्टत्वं हेतुदोषत्वम्। अत्रापि निरुक्तबाधघटिताश्रयासिद्धिसंग्रहाय प्रमेयत्वादिविशिष्टदोषवारणाय च स्वविषयताप्रयोज्यविशिष्टान्तरविषयत्वाप्रयोज्यतादृशोभयाभावप्रयोजकाभावाधिकरणताकत्वं विवक्षणीयम्। लक्षणसङ्गमनादिकं सुधीभिः स्वयमूहनीयं ग्रन्थगौरवभयाद्विरम्यतेऽस्माभिः। तत्रासिद्धिदोषस्त्रिविधः स्वरूपासिद्ध्याश्रयासिद्धिव्याप्यत्वासिद्धिभेदात्। पक्षे हेत्वभावः स्वरूपासिद्धिः। पक्षे पक्षतावच्छेदकाभाव आश्रयासिद्धिः। व्यर्थविशेषणघटितं हेतुतावच्छेदकम्, साध्ये साध्यतावच्छेदकाभावः, साधने साधनतावच्छेदकाभावश्च व्याप्यत्वासिद्धिः। यत्र योऽसिद्धिस्तत्र तद्व्याप्योऽप्यसिद्धिरेव। तावदन्यतमत्वमसिद्धित्वम्। हेतौ साध्यसामानाधिकरण्याभावतद्व्याप्यौ साध्ये हेतुसामानाधिकरण्याभावतद्व्याप्यौ च विरोधः। तदन्यतमत्वं विरोधत्वम्। साधारण्यासाधारण्यानुपसंहार्यभेदाद्व्यभिचारस्त्रिविधः। हेतौ साध्याभाववद्वृत्तित्वतद्व्याप्यौ साधारण्यं, साध्यव्यापकीभूताभावप्रतियोगिप्रकृतहेतुरसाधारण्यम्, अत्यन्ताभावाप्रतियोगिसाध्यादिकं हेतौ व्यतिरेकव्याप्त्यभावश्चानुपसंहार्यम्। अत्रापि व्याप्यो विवक्षणीयः साधारण्यादित्रितयान्यतमत्वं व्यभिचारत्वम्। साध्याभावव्याप्यवान् पक्षः सत्प्रतिपक्षः। साध्याभाववान् पक्षो बाधः। असिद्ध्यादिपञ्चदोषान्यतमत्वं हेतुदोषत्वं, स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसंबन्धेन दोषवान् हेतुर्दुष्ट इत्यपि केचित्॥ १५॥

(भाष्यम्) यस्मात् प्रसिद्धिपूर्वको भवत्यपदेशस्तस्मात्—*अप्रसिद्धो-

ऽनपदेशः । यत्र नास्ति प्रसिद्धिः, सोऽनपदेशः यत्रानुमीयते तत्र यो न भवति हेतुः, सोऽयमसन्ननपदेशः । संदिग्धश्च हेतुरनपदेशोऽहेतुः । नैताभ्यां शक्यमपदेष्टुमिति । संदिग्धश्चानैकान्तिकः सव्यभिचार इत्यनर्थान्तरम् । व्यभिचारश्चैकत्राव्यवस्था । सोऽयमनैकान्तिकः । साध्यं चैकोऽन्तः, तदभावश्चैकोऽन्तः । यः खल्वेकस्मिन्नन्ते वर्तते स ऐकान्तिकः । विपर्ययादनैकान्तिकः यो द्वयोरप्यन्तयोर्वर्तते इति । तन्त्रान्तरे च, सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकालाः पञ्चानपदेशा उक्ताः । सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः । यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः । साध्याविशिष्टः साध्यत्वात् साध्यसमः । कालात्ययापदिष्टः कालातीतः इति । त इमेऽप्रसिद्धा असन्तः संदिग्धाश्चेति ॥ १४ ॥

**यस्माद्विषाणी तस्मादश्वः ॥ १६ ॥**

( उप० ) तत्र व्याप्यत्वासिद्धविरुद्धस्वरूपासिद्धानामुदाहरणमाह—यस्मादिति । यत्र रासभपिण्डं पक्षीकृत्यायमसावश्वः विषाणित्वात् यस्तु नाश्वो नासौ विषाणी, यथा शशशृगालनरवानरादिरिति व्यतिरेकसहचारदर्शनाहितव्यामोहः प्रयुङ्क्ते, तत्र व्याप्यत्वासिद्धस्वरूपासिद्धविरुद्धानामुदाहरणमिदम् ॥ १६ ॥

( विवृ० ) हेत्वाभासानामुदाहरणमाह—यस्मादिति । यत्र शशादिः पक्षः अश्वत्वं साध्यं विषाणित्वं हेतुस्तत्र पञ्चैव हेतुदोषाः सन्ति । तत्समन्वयः स्वयमूहनीयः ॥ १६ ॥

( भाष्यम् ) अनपदेशस्योदाहरणम्—*यस्माद्विषाणी तस्मादश्वः । अश्वविषाणिनोः प्रसिद्धिर्नास्तीत्यप्रसिद्धोऽनपदेशः । न चाश्वे विषाणमस्तीत्यसन्ननपदेशः । यश्च विषाणी नासावश्व इति संदिग्धश्चानपदेशः । अथापि खल्वश्वेऽपि दशनमस्ति गव्यपीति अप्रसिद्धः संदिग्धश्चानपदेशः । अश्वेऽपि कदाचिन्नास्ति दशनमित्यसंश्चानपदेश इति ॥ १५ ॥

**यस्माद्विषाणी तस्माद्गौरिति चानैकान्तिकस्योदाहरणम् ॥ १७ ॥**

( उप० ) अनैकान्तिकमुदाहरति—यस्मादिति । यत्र महिषं पक्षयित्वा अयं गौर्विषाणित्वादिति साधयति तत्र साधारणानैकान्तिकता, यदा त्वाकाशं नित्यं शब्दाश्रयत्वादिति साधयति तदाऽस्यासाधारणानैकान्तिकता, एवं शब्दोऽनित्यः शब्दत्वादित्याद्यप्यगृह्यमाणदशायामसाधारणानैकान्ति-

कमेव, यदा तु विपक्षबाधकतर्कावतारात् पक्ष एव साध्यं सिध्येत् तदा सपक्षवृत्तिताज्ञानदशायां सद्धेतुरेव, पक्षस्यापि सपक्षत्वात्तत्र । व्याप्तपक्षधर्मतयाऽप्रमितोऽसिद्धः । स च त्रिविधः व्याप्यत्वासिद्धः स्वरूपासिद्धः आश्रयासिद्धश्च । तत्रागृहीतव्याप्तिको व्याप्यत्वासिद्धः, सत्या एव व्याप्तेरग्रहात् व्याप्तेरभावाच्च उभयथापि, तेनानुकूलतर्काभावादयोऽसिद्धभेदाः, स चायमसमर्थविशेषणासमर्थविशेष्यासमर्थोभयसन्दिग्धासमर्थविशेषणसन्दिग्धासमर्थ विशेष्यसन्दिग्धासमर्थोभयभेदप्रपञ्चेन सहस्रधा भिद्यते । सर्वत्र चात्र सिद्धिविरह एवोद्भाव्यः । अत्रेदं तत्त्वम्–हेतुस्तावत् केवलान्वय्यन्वयव्यतिरेकिकेवलव्यतिरेकिभेदात्त्रिविधः तत्र सर्वधर्मिगतो धर्मः केवलान्वयी यथा प्रमेयत्वाभिधेयत्वविशेष्यत्वविशेषणत्वानित्यद्रव्यात्यन्ताभावाश्रय नाशनाश्यगुणादिध्वंसात्यन्ताभावादयः । नह्यस्ति तादृशं किंचित्, यत्रैते धर्मा न विद्यन्ते, तथाच सर्वगतत्वमत्यन्ताभावाप्रतियोगित्वं वा केवलान्वयित्वम् । एतेषां च स्वात्मवृत्तित्वेऽपि न दोषः। तदुक्तं "प्रमाणं शरणं वृत्तौ न भिन्नाभिन्नते यतः" इति । केवलान्वयिसाध्यको हेतु. केवलान्वयी अस्य च पक्षसत्त्वसपक्षसत्त्वाबाधितत्वासत्प्रतिपक्षितत्वानि चत्वारि रूपाणि गमकत्वौपयिकानि, अन्वयव्यतिरेकिणस्तु हेतोर्विपक्षासत्त्वेन सह पञ्च, केवलव्यतिरेकिणः सपक्षसत्त्वव्यतिरेकेण चत्वारि, तथाच यस्य हेतोर्यावन्ति रूपाणि गमकतौपयिकानि तदन्यतररूपहीनः स हेतुराभासः । एवं च गमकतौपयिकान्यतररूपशून्यत्वं हेत्वाभासत्वं, तेनान्यतररूपशून्यत्वस्य निश्चयवत्संदेहोऽप्यनुमितिप्रतिबन्धकः वादिहेतोरसाधकतासाधकश्च । न च केवलान्वयिकेवलव्यतिरेकिणोर्हेत्वोरन्यतररूपशून्यतया हेत्वाभासत्वापत्तिः। केवलान्वयिनि विपक्षासत्त्वस्य केवलव्यतिरेकिणि सपक्षसत्त्वस्य गमकत्वौपयिकत्वाभावात् । एवंचाश्रयासिद्धस्वरूपासिद्धभागासिद्धानां पक्षसत्त्वरूपविरहादाभासत्वम्, व्याप्यत्वासिद्धविरुद्धसाधारणानैकान्तिकानां विपक्षासत्त्वरूपवैकल्यात्, असाधारणानैकान्तिकानुपसंहारिणोः सपक्षसत्त्ववैकल्यात्, बाधितसत्प्रतिपक्षितयोरबाधितत्वासत्प्रतिपक्षितत्वविरहात् । एवं सोपाधिकत्वाप्रयोजकत्वयोरपि विपक्षासत्त्वनिश्चयाभावादगमकत्वम्, अनुकूलतर्काभावप्रतिकूलतर्कयोरपि विपक्षासत्त्वनिश्चयविरहात् । एवं साध्यविकलसाधनविकलोभयविकलदृष्टान्ताभासानां यदि हेत्वाभासविधया दोषत्वं तदा सपक्षसत्त्वानिश्चयात्, यदि स्वातन्त्र्येण दृष्टान्ताभासतया तथापि द्वारं हेतोः सपक्षसत्त्वानिश्चय एव, अनुपदर्शितान्वयानुपदर्शितव्यतिरेकवि-

परीतोपदर्शितान्वयविपरीतोपदर्शितव्यतिरेकास्तुन्यूनाप्राप्तकालनिग्रहस्थापर्यवसन्ना एव । आत्माश्रयान्योन्याश्रयचक्रकानवस्थास्तु व्याप्तिनिश्चयं विघटयन्तः सपक्षसत्त्वविपक्षासत्त्वान्यतररूपविकला एव हेत्वाभासतामासादयन्ति, तत्र पक्षे साध्यसदसत्त्वकोटिकसंशयजनकोहेत्वाभासः सव्यभिचारः, पक्षे साध्याभावनिश्चयफलको हेत्वाभासो विरुद्धः, व्याप्तिपक्षधर्मताप्रमितिविरहोऽसिद्धः, बाधसत्प्रतिपक्षौ तु काश्यपीये मते न स्वतन्त्रौ तत्र बाध आश्रयासिद्धावनैकान्तिके वा पर्यवस्यति । तदुक्तं "बाधायामपक्षधर्मो हेतुरनैकान्तिको वा" इति सत्प्रतिपक्षोऽप्यन्यतरत्र व्याप्त्यादिसंशयमापादयन् अनैकान्तिकादावेव पर्यवस्यति । वृत्तिकारस्तु "अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चानपदेशः" इति सूत्रस्थचकारस्य बाधसत्प्रतिपक्षसमुच्चयार्थतामाह । तेन "सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकालाः पञ्च हेत्वाभासाः" इति गौतमीयमेव मतमनुधावति । परन्तु "विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत्" इत्याद्यभिधानात्सूत्रकारस्वरसो हेत्वाभासाना त्रित्वे, चकारस्तूक्तसमुच्चयार्थ इति तत्त्वम् । ग्रन्थगौरवभयात् प्रपञ्चो न कृतो मयूखे विस्तरोऽन्वेष्टव्यः ॥ १७ ॥

(विवृ०) सव्यभिचारस्योदाहरणमाह—यस्मादिति । अत्र यदि गोपिण्डस्य पक्षता तदा बाधः सत्प्रतिपक्षश्च नास्ति यदि महिषपिण्डादिः पक्षः तदा तावपि विद्येते । अत्र गोत्वाभाववद्वृत्तिविषाणित्वं साधारण्यम् । गोत्वव्यतिरेकव्याप्यभाववद्विषाणित्वमनुपसंहार्यम् । असाधारण्यं तु अत्र नास्ति एवं गोत्वव्याप्यभाववद्विषाणित्वं व्याप्यत्वासिद्धिरप्यत्र वर्तते । हेत्वाभासविशेषाणां लक्षणमुदाहरणं च स्वयमूह्यं विस्तरभयात्त्यक्तमस्माभिः ॥ १७ ॥

(भाष्यम्) यस्माद्विषाणी तस्मादश्व इति चार्थः । तद्व्याख्यातम् गवि यद्विलक्षणं विषाणं न तस्य प्रतिसंधानेन हेतुः प्रवर्तते । विषाणमात्रस्य त्वभिसंधानामिति ॥ १६ ॥

## आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत् ॥ १८ ॥

(उप०) इदानी हेत्वाभासविवेचनस्य फलमाह—आत्मेन्द्रियार्थेति । आत्मेन्द्रियार्थसन्निकर्षात्तावज्ज्ञानमुत्पद्यते तच्चात्मनि लिङ्गम् । असिद्धविरुद्धानैकान्तिकेभ्योऽन्यत् अनाभासमित्यर्थः । तथाहि ज्ञानमात्मन्युभयथा लिङ्गम्, ज्ञानं क्वचिदाश्रितं कार्यत्वाद्रूपादिवदिति वा, प्रत्यभिज्ञारूपतया वा योऽहमद्राक्षं सोऽहं स्पृशामीति, तत्र ज्ञानगतं कार्यत्वं नासिद्धं

यन्निष्पद्यत इत्यभिधानात्, न विरुद्धं सामान्यतोदृष्टेऽत्र विरोधाभावात्, न चानैकान्तिकम्, तत एव। तथाच स्वगतकार्यत्वगुणत्वद्वारा सामान्यतोदृष्टेन ज्ञानमेवात्मानि लिङ्गम्, प्रत्यभिज्ञानं तु भिन्नकर्तृकेभ्यो व्यावर्तमानमेककर्तृकतायां पर्यवस्यति । न च बुद्धिचैतन्येऽपि कार्यकारणभावनिबन्धनमेव प्रतिसंधानम्, शिष्यगुरुबुद्ध्योरपि प्रतिसंधानप्रसङ्गात् । उपादानोपादेयभावस्तत्र नास्ति । स च प्रतिसन्धानप्रयोजक इति चेदुपादानत्वस्य द्रव्यधर्मतया बुद्धावसंभवात्, संभवे वा बुद्धीनां क्षणिकतया पूर्वानुभूतप्रतिसंधानानुपपत्तेः । नहि पूर्वबुद्ध्या उत्तरासु बुद्धिषु कश्चित् संस्कार आधीयते स्थिरस्य तस्य त्वयाऽनभ्युपगमात्, क्षणिकबुद्धिधारारूपस्य च कालान्तरस्मृतौ प्रतिसन्धाने वाऽसामर्थ्यात्। आलयविज्ञानसन्तानः प्रवृत्तिविज्ञानसन्तानादन्य एव स्मर्ता च प्रतिसंधाता चेति चेत् स यदि स्थिरः तदा सिद्धं नः समीहितम्, क्षणिकबुद्धिधारारूपश्चेत् तदा पूर्वदोषानतिवृत्तेः । नहि तत्रापि स्थिरः कश्चित् संस्कारः । किंच प्रवृत्तिविज्ञानातिरिक्ते तत्र प्रमाणाभावः । अहमिति बुद्धिधारैव प्रमाणमिति चेत् भवतु तत्र यदि प्रवृत्तिविज्ञानान्यालयविज्ञानमेव चेदुपादत्ते तदा प्रवृत्तिविज्ञानानामुपादानताविरहे निमित्ततापि न स्यात् । उपादानताव्याप्तत्वान्निमित्ततायाः । माऽस्तु निमित्तताऽपीति चेत् तर्हि सत्त्वमपि गतम्, अर्थक्रियाकारित्वस्य सत्त्वलक्षणत्वात् । प्रवृत्तिसन्तानालयसन्तानाभ्यां संभूय संतानद्वयमुपादीयत इति चेत् तर्हि किमपराद्धमवयविसंयोगादिभिः, व्यासज्यवृत्तितायास्त्वयाप्यभ्युपगमात् । तस्माज्ज्ञानेनाश्रयतयाऽनुमितमात्मानं प्रतिसंधानं स्थिरत्वेन साधयतीति न किंचिदनुपपन्नम्। यद्वा नित्या बुद्धिर्नात्मानं कारणत्वेन गमयितुमर्हतीति सांख्यमतनिरासाय सूत्रमिदमुपतिष्ठते 'आत्मेन्द्रियार्थसन्निकर्षाद्यान्निष्पद्यते तदन्यत्' बुद्धितत्त्वं यत्त्वयोच्यते तज्ज्ञानमेव, बुद्धिरुपलब्धिर्ज्ञानमिति हि पर्यायाभिधानं तच्चात्मादिसन्निकर्षादुत्पन्नम्, अन्यदेव त्वदभ्युपगतादन्तःकरणादित्यर्थः । तथाच भवति तदात्मनो लिङ्गमिति भावः ॥ १८ ॥

(विवृ०) आत्मनि प्रमाणान्तरमपि दर्शयति, यद्वात्मसाधको हेतुर्न हेत्वाभास इत्याह—आत्मेन्द्रियार्थेति। आत्मरूपो य इन्द्रियार्थस्तत्र यः सन्निकर्षः अर्थान्मनसः आत्ममनःसंयोग इति यावत्। तस्मात् यज्ज्ञानमुत्पद्यते अहं सुखीत्याद्याकारकं तदन्यत् तत् ज्ञानम् अनुमानादन्यत् आत्मनि प्रमाणमिति शेषः। आत्ममनःसंयोगजन्यज्ञानस्य प्रत्यक्षत्वज्ञापनाय एवं वक्रोक्तिः

इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमिति प्रत्यक्षलक्षणात् । यद्यपि तादृशप्रत्यक्षं न शरीरादिभिन्नात्मसाधकं तथाप्यात्ममात्रसाधकतायास्तत्र निराबाधत्वैवेति भावः । अथवा यन्निष्पद्यते इत्यन्तेन ज्ञानमेव प्रतिपाद्यते तदन्यदित्यस्य च तज्ज्ञानम् आत्मानुमापकं हेत्वाभासादन्यत् इत्यर्थः । तथाच ज्ञानं द्रव्याश्रितं गुणत्वादित्यस्माकं य आत्मसाधको हेतुः स न हेत्वाभासः किंतु ज्ञानं शरीराश्रितं तत्कार्यत्वादित्यादिना त्वयोद्भावितो हेतुरेव हेत्वाभास इति भावः ॥ १८ ॥

(भाष्यम्) अन्यदेव हेतुरिति यदन्यदात्मनो हेतुरित्युक्तं, तदन्यदिदानीमभिधीयते—*आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत् । आत्मना इन्द्रियस्य तस्य चार्थेन सन्निकर्षाद्यदुत्पद्यते तदन्यत् । किं पुनरात्मेन्द्रियार्थसन्निकर्षादुत्पद्यते ? ज्ञानमुपलब्धिर्बोध इति । तच्चैतदात्मनो हेतुः नत्विन्द्रियमर्थश्च । कार्यभूतं खल्वेतत्कारणभूतस्यात्मनोऽपदेश इति । न वै खल्विन्द्रियं ज्ञानेन शक्यमपदेष्टुम् । कस्मात् ? दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् । यः खल्वर्थो दर्शनेन गृहीतः स्पर्शनेनापि सोऽर्थो गृह्यते । यमहमद्राक्षं चक्षुषा तमेवैतर्हि स्पर्शनेन स्पृशामि, यं चास्प्राक्षं स्पर्शनेन तमेवैतर्हि चक्षुषा पश्यामीति । तावेतावेकविषयौ प्रत्ययावेककर्तृकौ प्रतिसंधीयेते । तत्र योऽसौ चक्षुषा स्पर्शनेन चैकमर्थं गृह्णात्येककर्तृकौ च प्रत्ययौ प्रतिसंधत्ते, सोऽयमर्थान्तरमात्मा । इन्द्रियं खलु स्वं स्वं विषयग्रहणं प्रतिसंधातुमर्हति न त्विन्द्रियान्तरस्य विषयान्तरग्रहणमिति । संघातोऽप्यवस्थाभेदाद्भिद्यमानो नैक इति न भिन्ननिमित्तौ विभिन्नकालीनौ प्रत्ययावेककर्तृकौ प्रतिपत्तुमर्हति, योऽहं बाल्ये पितरावन्वभवं स एवाहमेतर्हि प्रणप्तृननुभवामीति । तस्मादिन्द्रियेभ्योऽर्थेभ्यः संघाताच्चार्थान्तरमात्मेति ॥ १८ ॥

**प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम् ॥ १९ ॥**

(उप०) आत्मन्यनुमानमभिधाय इदानी परमात्मानुमानमाह— प्रवृत्तीति । प्रत्यगात्मनीति स्वात्मनीत्यर्थः, इच्छाद्वेषजनिते प्रवृत्तिनिवृत्ती प्रयत्नविशेषौ । ताभ्यां च हिताहितप्राप्तिपरिहारफलके शरीरकर्मणी चेष्टालक्षणे जन्येते । तथाच परशरीरे चेष्टां दृष्ट्वा इयं चेष्टा प्रयत्नजन्या चेष्टात्वात् मदीयचेष्टावत्, स च प्रयत्न आत्मजन्यः आत्मनिष्ठो वा प्रयत्नत्वात् मदीयप्रयत्नवदिति परात्मानुमानम् ॥ १९ ॥

इति शांकरे वैशेषिकसूत्रोपस्कारे तृतीयाध्यायस्याद्यमाह्निकम् ।

(विवृ०) परात्मनि प्रमाणमाह—प्रवृत्तीति । प्रवृत्तिरुत्कटरागजन्यः प्रयत्नविशेषः, निवृत्तिरुत्कटद्वेषजन्यो यत्नविशेषः । ते च प्रत्यगात्मनि स्वात्मनि दृष्टे साक्षात्कृते परत्र परात्मनि लिङ्गमिति सौत्रमेकवचनम् । परात्मसाधकानुमितिसंपादिके इत्यर्थः । चैत्रशरीरादिगता चेष्टा चेतनप्रयत्नसाध्या चेष्टात्वात् मच्छरीरचेष्टावदित्यनुमाने साध्यतावच्छेदककोटौ परात्मनः सिद्धेरिति । यद्यपि गमनादिक्रियायां प्रवृत्तिरेव हेतुर्दृश्यते नतु निवृत्तिरिति तथापि हिंसादिनिवृत्तितो गन्तव्यदेशावस्थितानां क्षुद्रजन्तूनां व्यजनादिना अपसारणादिरूपा चेष्टाऽपि दृश्यत एवेति नानुपपत्तिरिति संक्षेपः ॥ १९ ॥

इति श्रीजयनारायणतर्कपञ्चाननभट्टाचार्यकृताया कणादसूत्रविवृतौ तृतीयाध्यायस्याद्यमाह्निकम् ।

(भाष्यम्) चेष्टया परस्य प्रवृत्तिं निवृत्तिं चानुमाय ताभ्यां रागद्वेषावनुमिनोति । ताभ्यामपि सुखदुःखहेतुभावज्ञानस्य । तेन च परात्मनोऽनुमानम् । तदेवं चेष्टानुमिता प्रवृत्तिर्निवृत्तिश्च परत्रात्मनि लिङ्गं भवति इति ॥ १९ ॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये तृतीयस्याध्यायस्याद्यमाह्निकम् ।

---

# तृतीयाध्याये द्वितीयाह्निकम् ।

**आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम् ॥१॥**

(उप०) हेतुहेत्वाभासविवेकः आह्निकार्थः । इदानीमात्मपरीक्षाशेषं वर्तयिष्यन्नुद्देशक्रमलङ्घनेन मनःपरीक्षामवतारयन्नाह—आत्मेन्द्रियार्थेति । मनोगतिमात्मनो लिङ्गं वक्ष्यति । तद्यदि मनो ज्ञानकरणत्वेन मूर्तत्वेन च परीक्षितं भवति तदा यत्प्रेरितं मनः इन्द्रियान्तरादभिमतविषयग्राहिणि इन्द्रिये संबध्यते स आत्मेति सिद्धं भवतीत्येतदर्थं क्रमलङ्घनम् । आत्मेन्द्रियार्थसन्निकर्षे सति यस्मिन् इन्द्रियसन्निकृष्टे ज्ञानस्य भावः उत्पादः, असन्निकृष्टे ज्ञानस्याभावोऽनुत्पादस्तन्मन इत्यर्थः । ननु मनोवैभवेऽपि करणधर्मत्वादेव ज्ञानायौगपद्यमुपपद्यते । किंच मनो विभु विशेषगुणशून्यद्रव्यत्वात् कालवत्, ज्ञानासमवायिकारणसंयोगाधारत्वादात्मवत्, स्पर्शात्यन्ताभाववत्त्वादाकाशवदित्यादि वैभवसाधकं प्रमाणमिति चेत् मैवं, यदि मनो विभु स्यात्तदा सर्वेन्द्रियसन्निकृष्टात्ततः सर्वेन्द्रियकमेकमेव ज्ञानं स्यात् । कार्यविरोधान्नैवमिति चेन्न, नहि सामग्री विरोधाविरोधमाकलयति येन चाक्षुषत्वरासनत्वादिविरोधाय बिभ्येत्, चित्ररूपवत् चित्राकारमेव वा स्यात् । भव-

त्येव दीर्घशष्कुलीभक्षणस्थले इति चेन्न, तत्रापि व्यासङ्गदर्शनात्क्रमानुमानात् । तर्हि रूपरसगन्धस्पर्शान् युगपत्प्रत्येमीति कथमनुव्यवसाय इति चेन्न, शीघ्रसंचारिमनोजनितेषु पञ्चसु स्मृत्युपनीतज्ञानेषु यौगपद्याभिमानात् । व्यासङ्गोऽपि करणधर्माधीन इति चेन्न, उक्तोत्तरत्वात् । बुभुत्साधीनो व्यासङ्ग इति चेन्न, सर्वबुभुत्सायां सर्वविषयकसर्वोदयप्रसङ्गात्, बुभुत्साया अपि अभिमतार्थग्राहीन्द्रियमनःसंबन्धमात्रफलकत्वात् । तस्माज्ज्ञानायौगपद्यान्यथानुपपत्त्या सिध्यति अणु मनः। ततो धर्मिग्राहकमानबाधिताः वैभवहेतवः । किंच मनोवैभवे पादे मे सुखं शिरसि मे वेदनेति प्रादेशिकत्वं सुखादीनां न स्यात् विभुकार्याणामसमवायिकारणावच्छिन्नदेशे उत्पादनियमात् । तवापि सुखादीनामणुदेशापत्तिरिति चेन्न, असमवायिकारणं विभुकार्यं स्वदेशे जनयत्येवेति नियमात् । तथाच निमित्तचन्दनाद्यवच्छेदादधिकदेशेऽपि जननाविरोधात्, ममापि निमित्तसमवधानानुरोध इति चेन्न, उक्तनियमभङ्गप्रसङ्गात् । किंचात्मना विभुनो मनसः संयोगोऽपि कथं स्यात् अजोऽसाविति चेन्न, विभागस्याप्यजत्वप्रसङ्गात् । अवच्छेदभेदेनोभावप्यविरुद्धाविति चेन्न, संयोगविभागयोरवच्छेदभेदस्य स्वकारणाधीनत्वात् । अजयोस्तु तदभावादिति दिक् ॥ १ ॥

(विवृ०) आत्मपरीक्षाशेषसंपादकं मनोनिरूपणमारभते—आत्मेति। आत्मा च इन्द्रियं चार्थश्च ते आत्मेन्द्रियार्थास्तेषु यः सन्निकर्षस्तस्मिन् सतीत्यर्थः । अत्रात्मनि इन्द्रिये च मनसः संयोगरूपः सन्निकर्षः। अर्थे च रूपादौ चक्षुरादेः सन्निकर्षो बोध्यः । तथाच चक्षुर्मनोयोगदशायां सत्यां रासनप्रत्यक्षसामग्र्यां चाक्षुषमेव भवति न रासनादिकमिति तन्नियामकतयाऽवश्यं अणु मनः स्वीकार्यम् । तथाच मनसोऽणुतया नैकदा द्वाभ्यामिन्द्रियाभ्यां योगः किंतु येन योगस्तदेव प्रत्यक्षं जनयति नेतरत् । न च ज्ञानसामान्यं प्रति त्वङ्मनोयोगस्य हेतुतया चक्षुर्मनोयोगदशायां कथं त्वङ्मनोयोग इति वाच्यं, त्वगिन्द्रियस्य देहव्यापित्वेन मनसश्चक्षुषा संयोगदशायां त्वचापिसंयोगसंभवात्। न च चाक्षुषकाले त्वाचापत्तिरिति वाच्यं, त्वाचं प्रति चाक्षुषसामग्र्याप्रतिबन्धकत्वस्यानायत्त्या कल्पनात् चर्ममनःसंयोगस्यैव ज्ञानसामान्यं प्रति हेतुतायाः पक्षधरमिश्रादिसंमतत्वेनोक्तापत्त्यसंभवाच्चेति संक्षेपः ॥ १ ॥

( भाष्यम् ) मनोगतिरात्मनो लिङ्गमिति वक्तुं मनः परीक्ष्यते—*आत्मेन्द्रियार्थसंनिकर्षे ज्ञानस्य भावाभावश्च मनसो लिङ्गम्। स्मृत्यनुमानागमसंशयस्वप्नज्ञानोहसुखादिप्रत्यक्षादयश्चेति चार्थः । आत्मना इन्द्रियाणां

तैश्चार्थस्य सन्निकर्षे सत्यपि न युगपदुत्पद्यन्ते सर्वेन्द्रियनिमित्तानि ज्ञानानि । किंतु किंचिदिन्द्रियनिमित्तमेव ज्ञानमुत्पद्यते । तेनानुमीयते,अस्ति किंचिन्निमित्तान्तरं यस्यासन्निधानाज्ज्ञान नोत्पद्यते संनिधानाच्चोत्पद्यते इति । सोऽयं ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम् । तच्चैतत् येनेन्द्रियेण सन्निकृष्यते तदिन्द्रियनिमित्तं ज्ञानमुत्पद्यते, येन त्विन्द्रियेण न संनिकृष्यते तदिन्द्रियनिमित्तं ज्ञानं नोत्पद्यते इति । स्मृत्यादयश्च न घ्राणादिनिमित्ताः घ्राणाद्युपरमेऽपि गन्धादिस्मृत्याद्युपलब्धेः । न चानिमित्ताः स्मृत्यादय इति यदेषां निमित्तं तन्मन इति । सुखाद्युपलब्धिः खल्वपि करणजन्या भवितुमर्हति रूपाद्युपलब्धिवत् । तच्च करणं मन इति । यथा घ्राणेन रसो न गृह्यते इति करणान्तरं रसनं, घ्राणरसनाभ्यां रूपं न गृह्यते इति करणान्तरं चक्षुः । एवं सर्वत्र । तथा घ्राणादिभिः सुखादयो न गृह्यन्ते इति करणान्तरं मनः । तत्प्रत्याख्याने सर्वत्रैवं प्रसङ्गः । अथ सुखाद्युपलब्धेः करणं प्रत्याख्यायते, गन्धाद्युपलब्धेरपि करणान्यविशेषाच्छक्यन्ते प्रत्याख्यातुमिति सर्वत्र प्रत्याख्यानं प्रसज्यते ।नियमश्च निरनुमानः । यश्च नियमो गन्धाद्युपलब्धिः करणनिमित्ता न सुखाद्युपलब्धिरिति, सोऽयं निरनुमानः । नात्र किंचिदनुमानमस्ति यतो नियमप्रतिपत्तिर्भवति । ज्ञातुर्ज्ञानसाधनवत्तु मन्तुर्मतिसाधनोपपत्तिः । यथा ज्ञातुर्ज्ञानसाधनानि घ्राणादीनि तथा मन्तुर्मतिसाधनं मन इति । घ्राणेन खल्वयं ज्ञाता गन्धं जानीते, रसनेन रसं, चक्षुषा रूपमित्यादि यथाविषयं वेदितव्यम् । एवं मनसा सर्वं मन्यते इति । तच्चैतत्सर्वविषयं मनः, घ्राणादिकं तु प्रतिनियतविषयमिति ॥ १ ॥

तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ २ ॥

( उप० ) ननु सुखाद्युपलब्धिः करणसाध्या क्रियात्वात् रूपोपलब्धिवदित्याद्यनुमानात् युगपज्ज्ञानानुत्पत्त्या वा यन्मनः सिद्धं तत्करणतया । तथाच तस्य द्रव्यत्वं नित्यत्वं च कुत इत्यत आह—तस्येति । यथाऽवयविद्रव्यानुमितो वायुपरमाणुर्गुणवत्त्वात् क्रियावत्त्वाच्च द्रव्यम्, तथा युगपज्ज्ञानानुत्पत्त्याऽनुमितं मनो गुणवत्त्वाद् द्रव्यं, नहि तस्य इन्द्रियसंयोगमन्तरेण ज्ञानोत्पादकत्वं येन गुणवत्त्वं न स्यात् । किंच सुखादिसाक्षात्कारः इन्द्रियकरणकः साक्षात्कारत्वात् रूपादिसाक्षात्कारवदितीन्द्रियत्वेन मनः सिद्धम् । इन्द्रियत्वं च ज्ञानकारणमनःसंयोगाश्रयत्वमित्ययत्नसिद्धमेव मनसो द्रव्यत्वम् । नित्यत्वं च तस्यानाश्रितत्वात्, तस्यावयवकल्पनायां प्रमाणाभावादनाश्रितत्वमिति ॥ २ ॥

(विवृ०) ननु भवतु मनसः सिद्धिस्तथापि मनसो नित्यत्वं द्रव्यत्वं च कथं स्वीकर्तव्यमित्यत आह—तस्येति । यथा वायवीयपरमाणौ आरम्भकसंयोगादिरूपगुणवत्त्वाद्द्रव्यत्वं तदवयवकल्पनायां प्रमाणाभावान्नित्यत्वं तथा ज्ञानजनकसंयोगादिरूपगुणवत्त्वात् तदुत्पादविनाशयोः प्रमाणाभावाच्च मनस्यपि द्रव्यत्वं नित्यत्वं चेत्यर्थः ॥ २ ॥

(भाष्यम्) ॐतस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते । मनो हि प्रागुत्पन्नसदा विमोक्षमनुवर्तते ॥ २ ॥

**प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम् ॥ ३ ॥**

(उप०) तत् किं प्रतिशरीरमेकमनेकं वेति संदेहे निर्णायकमाह—प्रयत्नेति । मनः प्रतिशरीरमिति शेषः । यद्येकैकस्मिन्नपि शरीरे बहूनि मनांसि स्युस्तदा ज्ञानप्रयत्नानां यौगपद्यं स्यात् । यत्तु नर्तकीकरचरणाङ्गुलीषु युगपत् कर्मदर्शनाद्युगपदेव बहवः प्रयत्ना उत्पद्यन्ते इति मतं तदयुक्तं, मनसः शीघ्रसंचारादेव तदुपपत्तेः । अविनश्यदवस्थयोग्यात्मविशेषगुणानां यौगपद्यानभ्युपगमात् । एतेनैकस्मिन्नपि शरीरे पञ्च मनांसि तेषां द्वित्रिचतुःपञ्चानां तत्तदिन्द्रियसंयोगे द्वे त्रीणि चत्वारि पञ्च वा ज्ञानानि युगपज्जायन्ते इति मतं निरस्तं, कल्पनागौरवप्रसङ्गात् । यौगपद्याभिमानस्तु समर्थित एव । रसनेन्द्रियावच्छेदेन त्वगिन्द्रियसंबन्धेन मनसस्तिक्तो गुड इति ज्ञानद्वययौगपद्यापत्तिरपि करणधर्मत्वादेव नास्ति, द्वित्रिच्छिन्नगोधाभुजगादावपि अवयवद्वये कर्म, खड्गाद्यभिघाताद्वा, मनस आशु संचाराद्वा, तदानीमेवादृष्टेन पण्डमनोन्तरग्रहणाद्वा । यत्तु मनोऽवयव्येव जलौकावत् तत्संकोचविकाशाभ्यां ज्ञानयौगपद्यायौगपद्ये इति तत् तदवयवकल्पनागौरवप्रतिहतमिति दिक् ॥ ३ ॥

(विवृ०) प्रतिशरीरं मनस एकत्वं व्यवस्थापयति—प्रयत्नेति । यदङ्गेन मनसः संयोगो यदा भवति तदा तदङ्गावच्छेदेन प्रयत्न उत्पद्यते नान्यावच्छेदेन । एवं च मनसो नानात्वे एकदाऽङ्गद्वयेनापि एकैकस्य मनसः संयोगसंभवात् प्रयत्नद्वयमुत्पद्येत । न च विंशत्यङ्गुल्यवच्छेदेन एकदैव विंशतिः प्रयत्ना उत्पद्यन्ते कथमन्यथा एकदैव तेषां क्रिया उत्पद्यन्ते इति वाच्यम्, उत्पलपत्रशतव्यतिभेद इव तासु यौगपद्यप्रतीतेर्भ्रमरूपत्वात् । मनस आशुसंचारादेव भिन्नभिन्नक्षणेषु तासामुत्पादात् । एवं मनसो नानात्वे युगपदेव घ्राणरसनादिभिः सह तेषामेकैकस्य संयोगसंभवात्

घ्राणजरासनादीनामपि युगपदुत्पादापत्तिरतः प्रतिशरीरं मन एकमेव न तु नानेत्यर्थः । ननु छिन्नवृश्चिकादिखण्डद्वय एव क्रियादर्शनान्मनसो नानात्वमावश्यकमिति चेन्न, तदानीमदृष्टवशेन मनोन्तरसन्निवेशादेव तत्संभवात् । अन्यत्र प्रयत्नायौगपद्यस्य ज्ञानायौगपद्यस्य च प्रामाणिकत्वेन मनसो नानात्वस्वीकारस्य कर्तुमशक्यत्वादिति । कूर्मशुण्डाडिवन्मनसः संकोचविकाशाभ्यामेव प्रयत्नानां ज्ञानानां च यौगपद्यायौगपद्ययोर्निर्वाहः । वस्तुत एकमेवैकस्मिन् शरीरे मन इति केचित्, तदपि न मनोरमम्, अनन्तावयवानां तत्प्रागभावानां तत्प्रध्वंसानामनन्ततत्परमाणूनां च कल्पने महागौरवादिति संक्षेपः । एकमित्यनेन प्रथमसूत्रस्थस्य मनस इत्यस्य विभक्तिविपरिणामेन प्रथमान्ततयाऽन्वयः ॥ ३ ॥

(भाष्यम्) तच्चैतन्मनः–*प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम् । न युगपत्प्रयत्ना उत्पद्यन्ते, न युगपज्ज्ञानान्युत्पद्यन्ते, यस्य संनिधेरसन्निधेश्च तयोरुत्पत्तिरनुत्पत्तिश्च, तन्मनः प्रतिशरीरमेकं न नाना । न खल्वपि ज्ञानस्य भावाभावेनानुमितं मनो नाना भवितुमर्हति । नानात्वे तु मनसोऽनेकैरिन्द्रियैरेकदा संनिधानोपपत्तेर्युगपज्ज्ञानानि प्रयत्नाश्चोत्पद्येरन् । नानैव मनांस्येकैकस्मिन्निति तेषां द्वित्राणां सन्निधेर्द्वित्राणि ज्ञानानि कदाचिदुत्पद्यन्ते दीर्घशष्कुलीभक्षणादाविति प्रावादुकानां दृष्टिभिः शिष्या न मुह्येरन्निति त्वाचार्यस्य प्रवृत्तिरिति । युगपदनेकक्रियोपलब्धेर्नेति चेन्नालातचक्रदर्शनवत्तदुपलब्धिराशुसंचारात् । एका खलु नर्तकी करचरणादीनि चालयति गायति भ्रमति शृणोत्यातोद्यजान् शब्दान् स्मरति गेयं पदं नृत्यं चाभिमतमिति नैषां क्रमो गृह्यते, क्रमस्याग्रहणात् युगपदेताः क्रिया इति । तच्च नैवम् । कस्मात्? यस्मादलातस्य संभ्रमतः खल्वाशुसंचारःद्विद्यमानः क्रमो यथा न गृह्यते, क्रमस्याग्रहणाच्चाविच्छेदबुद्ध्या चक्रवद्बुद्धिर्भवति । एवं मनसोऽप्याशुसंचाराद्बुद्धीनां क्रियानां च विद्यमानः क्रमो न गृह्यते क्रमस्याग्रहणाद् युगपद्भवन्तीत्यभिमन्यते । तस्मादुत्पलशतपत्रभेदवन्नर्तकीकरचरणादिषु क्रियायौगपद्योपलब्धिरिति । छिन्नवृश्चिकादिशकलानां च या क्रिया, सेयं खड्गाद्यभिघातादुत्पद्यते न प्रयत्नादिति । एतेनावैभवं व्याख्यातम् । आत्मप्रतिपत्तिहेतूनां मनसि संभव इति चेत्, ज्ञातुर्ज्ञानसाधनवन्मन्तुर्मतिसाधनोपपत्तेः संज्ञाभेदमात्रम् । ये खल्वात्मनः प्रतिपत्तौ हेतवस्ते मनसि संभवन्तीति मन एवात्मा स्यात् । एवमपि यथा ज्ञातुर्ज्ञा-

नसाधनानि घ्राणादीनि, तथा मन्तुर्मतिसाधनमन्यदुपपद्यते । तस्मात्संज्ञाभेदमात्रं न त्वर्थे विवादः । येयं मन्तुरात्मसंज्ञा सा न मृश्यते, मनःसंज्ञा त्वभ्यनुज्ञायते । या च मतिसाधनस्य मनःसंज्ञा सा न मृश्यते मतिसाधनसंज्ञा त्वभ्युपेयते इति ॥ ३ ॥

**प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि ॥ ४ ॥**

( उप० ) इदानीं क्रमलङ्घनप्रयोजनमादर्शयन्नेवात्मपरीक्षाशेषं वर्तयिष्यन्नाह—प्राणेत्यादि । प्रसिद्धिर्ज्ञानमेव केवलमात्मनो लिङ्गमिति न मन्तव्यं प्राणादयोऽपि सन्ति आत्मनो लिङ्गानि । तथाहि शरीरान्तश्चारिणि समीरणे प्राणापानलक्षणे ऊर्ध्वाधोगती उत्क्षेपणावक्षेपणे मुसलादाविव प्रयत्नं विनाऽनुपपद्यमाने यस्य प्रयत्नाद्भवतः स नूनमात्मा । नहि तिर्यग्गमनस्वभावस्य वायोरेवं स्वभावविपर्ययो विना प्रयत्नात् । न च विरुद्धदिक्क्रिययोर्वाय्वोः सलिलयोरिवोर्ध्वगतिः स्यादिति वाच्यम्, एवं सत्यूर्ध्वगमनमेव स्यान्न त्वधोगमनं फूत्कारादौ वा तिर्य्यग्गमनम् । तथाचास्ति कश्चित् ? यः प्रयत्नेन वायुमूर्ध्वमधो वा प्रेरयति । सुषुप्तिदशायां कथं प्राणापानयोरूर्ध्वाधोगती इति चेन्न, तदानीं योग्यप्रयत्नाभावेऽपि प्रयत्नान्तरस्य सद्भावात् । स एव जीवनयोनिः प्रयत्न इत्युच्यते । एवं निमेषोन्मेषावपि शरीरस्याधिष्ठातारमनुमापयतः । तथाहि निमेषस्तावत् अक्षिपक्ष्मणोः संयोगजनकं कर्म । उन्मेषस्तयोरेव विभागजनकं कर्म । एते च कर्मणी नोदनाभिघातादिदृष्टकारणान्तरमन्तरेण निरन्तरमुत्पद्यमाने प्रयत्नं विना नोत्पद्येते । यथा दारुपुत्रकनर्तनं कस्यचित्प्रयत्नात् तथाऽक्षिपक्ष्मनर्तनमपि । तेन प्रयत्नवाननुमीयते । एवं जीवनमप्यात्मलिङ्गम् । तथाहि जीवनपदेन लक्षणया जीवनकार्यं वृद्धिक्षतभग्नसंरोहणादि लक्षयति । तथाच यथा गृहपतिर्भग्नस्य गृहस्य निर्माणं करोति, लघीयो वा गृहं वर्धयति तथा देहाधिष्ठाता गृहस्थानीयस्य देहस्याहारादिना वृद्धिमुपचयं करोति क्षतं च भेषजादिना प्ररोहयति भग्नं च करचरणादि संरोहयति । तथाच गृहपतिरिव देहस्याप्यधिष्ठाता सिध्यतीति । एवं मनोगतिरप्यात्मलिङ्गम् । तथाहि मनस्तावन्मूर्तमणु चेति पूर्वप्रकरणे साधितम् । तस्य चाभिमतविषयग्राहिणि इन्द्रिये निवेशनमिच्छाप्रणिधानाधीनम् । तथाच यस्येच्छाप्रणिधाने मनः प्रेरयतः स आ-

त्मेत्यनुमीयते । यथा गृहकोणावस्थितो दारकः कन्दुकं लाक्षागुटकं वा गृहाभ्यन्तर एव इतस्ततः प्रेरयति । ननु दारुपुत्रनर्तयिता गृहपतिर्दारको वा न शरीरादन्यो यो दृष्टान्तः स्यात्, किंच शरीरमेव चैतन्याश्रयः अहंकारास्पदत्वात् । भवति हि गौरोऽहं स्थूलोऽहमित्याद्यहंकारसामानाधिकरण्येन प्रत्ययः । यत्तु बाल्येऽनुभूतं यौवने वार्धके वा स्मरति तत्र चैत्रमैत्रवच्छरीरभेदेऽपि स्मरणं न स्यात् 'नान्यदृष्टं स्मरत्यन्यः' इति । तत्र चैत्रमैत्रयोर्भिन्नसन्तानत्वेन प्रतिसंधानं माऽस्तु बाल्यकौमारभेदेऽपि संतानैकत्वात् कार्यकारणभावेन प्रतिसंधानमुपपत्स्यत इति । तत्र ब्रूमः पित्राऽनुभूतस्य पुत्रेणापि स्मरणप्रसङ्गः, तत्र शरीरभेदग्रहो बाधक इति चेत् वृद्धेन बालशरीराद्भेदेनैव स्वशरीरस्य ग्रहात् प्रतिसंधानानुपपत्तेः,अनुपलब्धपितृकस्य बालस्य शरीरभेदाग्रहस्यापि सत्त्वात् । मम शरीरमिति ममकारसामानाधिकरण्येनाहंकारस्य भानान्ममात्मेत्यत्रापि तथेति चेन्न,तत्र ममकारस्यौपचारिकत्वात् । राहोः शिर इतिवदभेदेऽपि षष्ठ्युपपत्तेः । हिंसादिफलं च कर्तरि न स्यात्, शरीरस्यान्यान्यत्वात्, पातकमिच्छतो भूतचैतनिकस्य कृतहानमकृताभ्यागमश्च दोष इति दिक् । इन्द्रियान्तरविकारात्खल्वपि दृश्यते हि नागरङ्गस्य चिरबिल्वस्य वा रूपविशेषसहचरितं रसविशेषमनुभूय पुनस्तादृशं फलमुपलभमानस्य रसगर्द्धिप्रवर्तिनो(तो?)[1] दन्तोदकसंप्लवः । स च नाम्लरसानुमितिमन्तरेण, अनुमितिर्न व्याप्तिस्मृतिमन्तरेण, सा च न संस्कारं विना, स च न व्याप्त्यनुभवमन्तरेण, स च न भूयोदर्शनमन्तरेण, इतीयं ज्ञानपरम्परा नैकं कर्तारमन्तरेण कार्यकारणभूता संभवतीति । तथाच गौतमीयं सूत्रम् 'इन्द्रियान्तरविकारात्' इति । सुखादयश्च ज्ञानवदेवात्मलिङ्गानि द्रष्टव्याः । तथाहि सुखादिकं क्वचिदाश्रितं द्रव्याश्रितं वा कार्यवस्तुत्वात् गुणत्वाद्वा रूपादिवदितीतरबाधसहकृतं सामान्यतोदृष्टमेव अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं विषयीकरोति । नहि पृथिव्याद्यष्टकानाश्रिता इच्छा द्रव्याश्रितेति प्रतिज्ञा अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं प्रकारमनादाय पर्यवस्यति । यत्र तु प्रथमं न बाधावतारस्तत्राष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं व्यतिरेकिसाध्यमिति विभागः । व्यापकतावच्छेदकप्रकारिकैवानुमितिरिति तु तुच्छम्, येन विना प्रतीतिर्न पर्यवस्यति तस्यैव तत्र प्रकारत्वात् । अन्यथा द्व्यणुकं कार्यानाश्रितं सत् क्वचिदाश्रितम् अवयवित्वादित्यादावकार्याश्रितत्वप्रकारिकानुमितिर्न स्यात् ॥ ४ ॥

---

१ पुरोवर्तिन इति बॉ. रा. आ. सो. पु. पाठः ।

( विवृ० ) आत्मसाधकानि लिङ्गान्तराण्यपि सन्तीत्याह—प्राणेत्यादि । प्राणादयोऽपि आत्मनो लिङ्गानि । तथाहि तिर्यग्गमनस्वभाववायुविशेषस्य प्राणस्योर्ध्वगमनमपानस्याधोगमनं वा चेतनप्रयत्नसाध्यम् ऊर्ध्वगतित्वाद्-अधोगतित्वाद्वा लोष्टाद्यूर्ध्वाधोगतिवत् इत्यनुमानेनात्मसिद्धिः। न च सुषुप्तौ प्रयत्नाभावेन तदानीन्तनतादृशक्रियायामंशतो बाध इति वाच्यम्। तदानीमपि जीवनयोनियत्नस्य सत्त्वात् । एवमक्षिपक्ष्मणोः संयोगजनकं कर्म निमेषः तयोर्विभागजनकं कर्म उन्मेषस्तयोरपि दारुपुत्रकनर्तनदृष्टान्ते चेतनप्रयत्न-साध्यत्वानुमानं बोध्यम् । तथा जीवनं देहस्य वृद्धिक्षतसंरोहणादिकं जीवनकार्यमित्यर्थः । तच्चाधिष्ठातारमनुमापयति यथा गृहाधिष्ठाता ह्रस्वं गृहं वर्धयति भग्नं च संस्कुरुते तथा देहस्याहारादिना वृद्धिं जनयति भग्नं च करचरणादिकमौषधादिना संरोहयति कश्चिच्चेतनोऽधिष्ठा-तेति । एवमणुतया व्यवस्थितस्य मनसोऽभिलषितज्ञानसाधनेन्द्रिये गतिरपि चेतनाभिलाषाधीनेति साप्यात्मनि लिङ्गम् । यथा गृहकोणावस्थितो बालकः कन्दुकादिकं गृहमध्य एव इतस्ततः प्रेरयति तथात्माऽपि देहाव-स्थिते इन्द्रिये मनः प्रेरयतीति । ननु इन्द्रियेष्वेव चैतन्यं स्वीकार्यं देहा-धिष्ठातृत्वमपि तेषामेवेत्यत आत्मन इन्द्रियातिरिक्तत्वं साधयति इन्द्रियान्तर विकारा इति । चिरबिल्वाद्याम्लद्रव्ये दृष्टे तद्रसस्मरणात् दन्तोदकसंप्लवरूप-रसनेन्द्रियविकारादिन्द्रियव्यतिरिक्त आत्मा सिध्यतीत्यर्थः । सुखादीनां पञ्चानामात्मलिङ्गत्वं ज्ञानवदेव बोध्यम् ।। ४ ।।

( भाष्यम् ) सति च मनसि—*प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रि-यान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि । शरीरान्तश्चा-रिणो वायोर्यत्प्रागप चाननं तेनानुमीयते अस्त्यात्मा यस्तिर्यग्गमनस्वभावं वायुमूर्ध्वमधश्चानयतीति । संमूर्च्छनादिति चेन्नापाने तदभावात् । अथ मन्येत, संमूर्च्छितः खल्वान्तरो वायुरूर्ध्वमनितीति । तच्च नैवं मन्तव्यम् । कस्मात् ? अपाने तदभावात् । अधः खल्वेषोऽनिति नोर्ध्वम् । न चैत-त्प्रयत्नमन्तरेणोपपद्यते इति । अक्षिपक्ष्मणी येन संयुज्येते तदुन्मेषः, येन च संयुक्तयोस्तयोर्विभागः तन्निमेषः । ते खल्वेते निमेषोन्मेषकर्मणी यस्य प्रयत्नादुत्पद्येते, सोऽयमर्थान्तरभूत आत्मा । अचेतनस्य दारुपुत्रकस्य नर्तनं चेतनकारितं दृष्टमिति । जीवनं चाध्यात्मिकवायुसंबन्धो नियतसहभावादा-त्मनोहेतुः । न खल्वन्यत्र शिलादौ तदुपलब्धिरिति । जीवनकार्यं खल्वपि वृद्धिक्षतसंरोहणादिकमचेतनेष्वदृष्टं चेतनस्यानुमितौ हेतुर्भवति । मनस-

श्चेन्द्रियविशेषे योऽयं सन्निधिर्ज्ञानोत्पत्तिहेतुः स मनसो गतिविशेषादुत्पद्यते। प्रणिधाय खल्वयं ज्ञाताऽभिमतेष्विन्द्रियेषु मनः प्रेरयति, उदवसितान्तःपृथुक इवाभिमतप्रदेशेषु कन्दुकम्, अथाभिमतं जानीते इति शरीरेण च खल्वात्मनः संबन्धे सति पुरुषः प्राणिति अपानिति निमिषत्युन्मिषति जीवति मनश्चाभिमते प्रदेशे गमयति। आत्मनस्तु संबन्धस्यापगमे न प्राणिति नापानिति न निमिषति नोन्मिषति न जीवति न मनो गमयति। तस्मादेभिरनुमीयते अस्त्यात्मा यत्संबन्धादेते भवन्तीति। इन्द्रियान्तरविकारः खल्वपि कस्यचिदम्लरसस्य फलस्य गृहीतसाहचर्ये रूपे गन्धे वा चक्षुषा घ्राणेन वा गृह्यमाणे इन्द्रियान्तरस्य रसनस्य योऽयं विकारः नियतसहचरितेन रूपेण गन्धेन वा गृह्यमाणेन रसानुस्मृतौ रसगर्धिप्रवर्तितो दन्तोदकसंप्लवः प्रवर्तते तदात्मनो लिङ्गम्। गृहीतसाहचर्यं रूपं गन्धं वा गृह्णन् खल्वयमात्मा रसमनुस्मरति। तं चानुस्मरतो रसगर्धिः प्रवर्तते। ततो रसनस्य विकार इति। अथेन्द्रियाणि चेतयन्ते, नायमिन्द्रियान्तरविकार उपपद्यते। न खल्वन्यदृष्टमन्यः स्मरतीति। संघातोऽपि न पूर्वापरयोरेकोऽस्तीति। सुखदुःखेच्छाद्वेषप्रयत्नाश्च ज्ञानवद्व्याख्याताः॥ ४॥

**तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते॥ ५॥**

(उप०) ननु सिध्यतु आत्मा स्थिरः स तु नित्य इति कुतः कुतश्च द्रव्यमित्यत आह—तस्येति। यथा वायुपरमाणोरवयवकल्पनायां न प्रमाणमतो नित्यत्वं तथात्मनोऽपि, यथा गुणवत्त्वाद्वायुपरमाणुर्द्रव्यं तथात्माऽपीत्यर्थः॥ ५॥

(विवृ०) सिद्धे इन्द्रियादिव्यतिरिक्ते आत्मनि तस्य नित्यद्रव्यत्वमतिदेशेन साधयति—तस्येति। यथा वायुपरमाणोर्निरवयवत्वात् गुणवत्त्वाच्च नित्यद्रव्यत्वं तथात्मनोऽपीत्यर्थः॥ ५॥

(भाष्यम्)*तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते॥ ५॥

**यज्ञदत्त इति संनिकर्षे प्रत्यक्षाभावाद्दृष्टं लिङ्गं न विद्यते॥ ६॥**

(उप०) पूर्वपक्षमाह—यज्ञदत्त इति। संनिकर्षे सति अयं यज्ञदत्त इति चेत् प्रत्यक्षं नास्ति तदा दृष्टं प्रत्यक्षतो गृहीतव्याप्तिकं लिङ्गं नास्ति। यथा वह्निना प्रत्यक्षेण सहचरितो गृहीतो धूमो वह्नौ दृष्टं लिङ्गं तथात्मसाधकं लिङ्गं दृष्टं नास्तीत्यर्थः॥ ६॥

( विवृ० ) पूर्वोक्तमात्मानुमानमाक्षिपति—यज्ञदत्त इति । यज्ञदत्तशरीरे चक्षुरादिसन्निकर्षे सत्यपि तदधिष्ठातुरात्मनश्चाक्षुषाद्यभावात् दृष्टं व्याप्यत्वेन प्रत्यक्षविषयीभूतं लिङ्गं नास्तीत्यतः कथमात्मानुमानं सुघटम् । वह्न्यादौ सन्निकर्षे तत्प्रत्यक्षानन्तरं तद्व्याप्तिप्रत्यक्षाद्वह्न्याद्यनुमानं तु निराबाधमेवेति भावः ।। ६ ।।

( भाष्यम् ) तदेवं सिद्धमात्मनोऽनुमानम् । अतः परं प्रावादुकानां दृष्टयः प्रदर्श्यन्ते । तत्रात्मनोऽनुमानमसंभवं मन्यमानः कश्चिदाह । न वै खल्वात्मा शक्योऽनुमातुम् । यस्मात्—*यज्ञदत्तइति संनिकर्षे प्रत्यक्षाभावाद्दृष्टं लिङ्गं न विद्यते । यदा वै यज्ञदत्ते चक्षुः संनिकृष्यते, तदाऽपि नात्मनः प्रत्यक्षं भवति । अतो नास्ति दृष्टं लिङ्गं येनायमात्मेत्यनुमीयेत ।। ६ ।।

**सामान्यतोदृष्टाच्चाविशेषः ।। ७ ।।**

( उप० ) ननु प्रत्यक्षदृष्टव्याप्तिकस्य दृष्टलिङ्गस्याभावेऽपि सामान्यतोदृष्टमेव लिङ्गं भविष्यति, नहि ततो नानुमितिरित्याशङ्क्य पुनः पूर्वपक्षी[1] आह—सामान्यत इति । सामान्यतोदृष्टमपि लिङ्गं भवति न तु तत आत्मत्वेन अष्टद्रव्यातिरिक्तद्रव्यत्वेन वा स्यादात्मसिद्धिः किंतु तेनेच्छादीनां क्वचिदाश्रितत्वमात्रं सिध्येत्, तच्च नात्ममननौपयिकमित्यर्थः । तदेतदाह—अविशेष इति ।। ७ ।।

( विवृ० ) ननु द्रव्यत्वरूपेण द्रव्यान्तरस्य प्रत्यक्षाद्द्रव्याश्रितत्वव्याप्यत्वस्य गुणत्वादौ प्रत्यक्षसंभवादात्मानुमानं न दुर्घटं सामान्यधर्मावच्छिन्नव्याप्यत्वज्ञानादपि इतरबाधादिस्थले विशेषधर्मप्रकारेणानुमितिसंभवादित्यत आह—सामान्यतोदृष्टाच्चेति । सामान्यतोदृष्टात् सामान्यधर्मावच्छिन्नव्याप्यत्वग्रहात् अविशेषः विशेषधर्मप्रकारेण नानुमितिः व्यापकतावच्छेदकत्वग्रहस्यैवानुमितिविधेयतावच्छेदकत्वे तन्त्रत्वादित्यर्थः ।। ७ ।।

( भाष्यम् ) न च सामान्यतोदृष्टाल्लिङ्गादयमात्मेत्यनुमानं संभवतीत्याह—*सामान्यतोदृष्टाच्चाविशेषः । अस्ति किंचिद्वस्त्विति शक्यमनुमातुं न त्वस्त्यात्मेति ।। ७ ।।

**तस्मादागमिकः ।। ८ ।।**

( उप० ) तत् किं योऽपहतपाप्मा स आत्मा इत्याद्यागमोऽनर्थक एवेत्याशङ्क्य स एवाह—तस्मादिति । आगममात्रसिद्ध एवात्मा नत्वनुमेयः दृष्टसामान्यतोदृष्टयोर्लिङ्गयोरभावात् । तस्मात् सम्यगुपनिषदां श्रवणात्

---

१ पूर्वपक्षमाहेति बॉ. रा. आ. पु पाठ ।

तत्त्वसाक्षात्कार उत्पद्यते न तु मननप्रणालिकया । तथाच मननप्रयोजनकमिदं तन्त्रमतन्त्रम्, दृष्टं हि भूतदशकनदीसंतरणादावुपदेशमात्रादेव साक्षात्कारि ज्ञानम् ॥ ८ ॥

( विवृ० ) पूर्वपक्षी उपसंहरति–तस्मादिति । आगमिक इत्यस्य आत्मेत्यादि यतो गृहीतव्याप्तिकलिङ्गाभावादात्मनोऽनुमितिर्न संभवति अत आत्मा आगममात्रप्रमाणक इत्यर्थः । तथा चात्ममननार्थमेतच्छास्त्रं विफलमिति भावः ॥ ८ ॥

( भाष्यम् ) प्रतिषेधस्त्वस्य वायुपरीक्षायामुक्तः ॥ ८ ॥

**अहमितिशब्दस्य व्यतिरेकान्नागमिकम् ॥ ९ ॥**

( उप० ) तदेवं त्रिभिः सूत्रैः पूर्वपक्षे सिद्धान्तवाद्याह–अहमितीति । नागममात्रं प्रमाणमात्मनि किंत्वहमितिपदमात्मपदं वा साभिधेयं पदत्वात् घटादिपदवत् इत्यनुमानादप्यात्मसिद्धेः । ननु पृथिव्याद्येव तदभिधेयं स्यादित्यत आह–व्यतिरेकादिति । पृथिव्यादितोऽहमितिपदस्य व्यतिरेकाद्व्यावृत्तेरित्यर्थः । नहि भवत्यहं पृथिवी अहमापः अहं तेजः अहं वायुः अहमाकाशम् अहं कालः अहं दिक् अहं मन इति व्यपदेशः प्रत्ययो वा । शरीरे भवतीति चेन्न, परशरीरेऽपि तत्प्रसङ्गात् । स्वशरीरे भवतीति चेन्न, स्वस्यात्मभिन्नस्यानिरुक्तेः,मम शरीरमिति वैयधिकरण्येन प्रत्ययाच्च।नन्विदमपि सामान्यतोदृष्टमेव तच्च विशेषापर्यवसन्नमिति दूषितमेवेति चेन्न, अहंपदेऽहंत्वमात्मत्वमेव प्रकारः । तथाच पक्षधर्मताबलादेवाहंत्वस्य प्रवृत्तिनिमित्तत्वं पर्यवसन्नम् । तच्चानन्यसाधारणमेवेति विशेषसिद्धेः । एवं सामान्यतोदृष्टादपि बाधसहकृताद्विशेषसिद्धिः । यच्चोक्तं श्रवणादेव साक्षात्कारः किमनेनेति तदयुक्तम्, नहि मननमन्तरेण सङ्कशुकस्याश्रद्धामलक्षालनम्, न च तदन्तरेण तत्र निदिध्यासनाधिकारः नच निदिध्यासनमन्तरेण सवासनमिथ्याज्ञानोन्मूलनक्षमस्तत्त्वसाक्षात्कारः, अभ्यासादेव हि कामातुरस्याकस्मात् कामिनीसाक्षात्कारः । नहि शाब्दमानुमानकं वा ज्ञानं मिथ्याज्ञानोन्मूलनक्षमं दिङ्मोहादौ दृष्टमिति भावः । ननु तथापि परोक्षे आत्मनि कथं संकेतग्रहः? दृष्टोह्ययं घटपदवाच्य इति प्रत्यक्षे संकेतग्रह इति चेन् क एवमाह नात्मा प्रत्यक्ष इति, किंतु मनसा संयोगप्रत्यासत्त्यात्मग्रहात् । कथमन्यथाऽहं सुखी जानामीच्छामि यते द्वेष्मीत्यादिप्रत्ययः । नह्ययमवस्तुकः संदिग्धवस्तुको वा, नीलादिप्रत्ययवदस्यापि निश्चितव-

स्तुकत्वात् । नच लैङ्गिकः, लिङ्गज्ञानमन्तरेणापि जायमानत्वात् । नापि शाब्दः, तदनुसंधानाननुविधानात् । प्रत्यक्षाभासोऽयमिति चेत् तर्हि क्वचिदनाभासविषयोऽपि, नह्यप्रमितमारोप्यते इत्यावेदयिष्यते ॥ ९ ॥

( विवृ० ) समाधत्ते—अहमितिशब्दस्येति । आगमिकमिति आत्मवस्तु इति शेषः । आत्मरूपं वस्तु न आगमिकम्, आगममात्रप्रमाणकमहमिति-शब्दस्य व्यतिरेकात् पृथिव्यादिषु अष्टसु द्रव्येषु अप्रयोगात् । तथाचाहमिति पदं सप्रवृत्तिनिमित्तकं साधुपदत्वात् घटपदवदित्यनुमानादहंपदे आत्म-त्वावच्छिन्नशक्तत्वस्य सिद्धौ आत्मापि सिध्यतीत्यर्थः । न चात्रापि सामान्य-धर्मे व्यापकतावच्छेदकत्वग्रहाद्विशेषधर्मप्रकारेण कथमनुमितिरिति वाच्यम् । इतरबाधादिस्थले व्यापकतावच्छेदकत्वेनागृहीतस्यापि विशेषधर्मस्य विधे-यतावच्छेदकत्वस्वीकारात् अन्यथा महानसीयवह्नीतरवह्न्यभाववान् पर्वत इत्यादीतरबाधसहकृतेन वह्निपरामर्षेन जनिताया अनुमितेर्भ्रमत्वानुपपत्ते-रिति संक्षेपः । इदमुपलक्षणं पूर्वोक्तानि ज्ञानादिलिङ्गकान्यनुमानान्यपि दर्शितरीत्यात्मानि प्रामाणानि वेदितव्यानि ॥ ९ ॥

( भाष्यम् ) आत्मनः प्रत्यक्षाभावममृष्यन्नपर आह—*अहमितिशब्दस्य व्यतिरेकान्नागमिकम् । अहमिति योऽयं प्रत्ययस्तत्र शब्दस्य व्यतिरेको भवति । शब्दात्खल्वसौ व्यतिरिच्यते । तस्मादहमिति यज्ज्ञानं नैतदाग-मिकं भवति । सोऽयं प्रत्यक्ष एवात्मा नागमिको न खल्वप्यनुमेय इति ॥९॥

**यदि दृष्टमन्वक्षमहं देवदत्तोऽहं यज्ञदत्त इति ॥ १० ॥**

(उप०) एवंचेत् किमनुमानेनेति पूर्वपक्षवादी आह—यदीति । इतिशब्दो ज्ञानप्रकारमाह । दृष्टमिति भावे क्तप्रत्ययान्तम्, अन्वक्षमित्यध्यक्षं तेनायमर्थः अयं देवदत्तः अयं यज्ञदत्त इतिप्रकारकं दृष्टं दर्शनमध्यक्षमेवास्ति यदि किम-नुमानप्रयासेन, नहि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातारः॥१०॥

( विवृ० ) ननु मनःसंयोगरूपसन्निकर्षेण आत्मनो लौकिकमानसप्रत्य-क्षमेवात्मनि प्रमाणमस्तीति प्रमाणान्तरगवेषणं व्यर्थमित्याशङ्कते—यदीति । अन्वक्षं प्रत्यक्षं दृष्टं दर्शनं ज्ञानमिति यावत्, भावे निष्ठाप्रत्ययात् । तथाच अहं देवदत्तः अहं यज्ञदत्तः सुखी दुःखीवेत्याद्याकारकं प्रत्यक्षमेव ज्ञानं यदि वर्तते तदा भवतामनुमानप्रयासः किमर्थमिति समुदितार्थः । सिद्धिदशायां सिषाधयिषयानुमितेः संभवेऽपि तस्या अनावश्यकत्वात् तत्रेच्छैव नोदेति । तदुक्तं तात्पर्यटीकायां वाचस्पतिमिश्रैः—नहि करिणि दृष्टे चीत्कारेण तम-नुमिमतेऽनुमातार इति ॥ १० ॥

( भाष्यम् ) अथापि खल्वयमात्मा प्रत्यक्षोऽप्यनुमेयः स्यादित्यत आह–*यदि दृष्टमन्वक्षमहं देवदत्तोऽहं यज्ञदत्त इति । यदि इन्द्रियेणासौ गृह्यते अहं देवदत्तोऽहं यज्ञदत्त इति प्रत्यात्मं, न तर्ह्यात्मन इदानीमनुमानं भवति । यदि प्रत्यक्षोऽयमात्मा किं तत्रानुमानेनेति । अथापि खल्वात्मा नाम द्रव्यं नागमिकम् । कस्मात् ? अहमितिशब्दस्य व्यतिरेकात् । किंत्वहं देवदत्तोऽहं यज्ञदत्त इत्यन्वक्षं दृष्टमिति । अथापि खल्वात्मद्रव्यमहमितिशब्दस्य व्यतिरेकान्नागमिकम् । यदि अहं देवदत्तोऽहं यज्ञदत्त इत्यन्वक्षं दृष्टमात्मा नाम द्रव्यं, कथमिदानीमागमिकं स्यादित्यपरो हेतुस्तत्रैव प्रवर्तते । महत्खल्वेतद्वचसो वैचित्र्यमाचार्यस्येति । अथास्य प्रतिषेधः न वै खल्वयमात्मा प्रत्यक्षः ॥ १० ॥

**दृष्ट आत्मनि लिङ्गे एक एव दृढत्वात्प्रत्यक्षवत्प्रत्ययः ॥ ११ ॥**

( उप० ) अत्र सिद्धान्त्याह–दृष्ट इति । दृष्टे प्रत्यक्षेण गृहीते आत्मनि लिङ्गे संभूतसामग्रीके सति एक एव एकवैषयिक एव प्रत्ययः । प्रत्यय इति निरस्तसमस्तविभ्रमाशङ्कित्वमाह । कुत एवमित्यत आह–दृढत्वात् प्रमाणसंप्लवेनान्यथाभावशङ्कानिवर्तनपटुत्वात् । अत्र दृष्टान्तमाह प्रत्यक्षवदिति । यथा दूरात्तोयप्रत्यक्षे सत्यपि संवादार्थं बलाकालिङ्गेनापि तदनुमानम् । तदुक्तम् ‘ प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः’ इति । इदमत्राकूतम्–यद्यात्मा कदाचित्प्रत्यक्षे चैतसे भासत एव तथापि अहं गौरः अहं कृश इत्यादिविरोधिप्रत्ययान्तरतिरस्कृतो न तथा स्थेमानमासादयति विद्युत्संपातसंजातज्ञानवत्, तत्र लिङ्गेन अनन्यथासिद्धेन ज्ञानान्तरमुत्पद्यमानं पूर्वज्ञानविषयमेव स्थिरीकरोति । किंच ‘श्रोतव्यो मन्तव्यः’ इत्यादिविधिबोधितस्यात्ममननस्य इष्टसाधनत्वावगतावनुमित्सयाऽवश्यमात्मानुमानप्रवृत्तिः, तद्व्यतिरेके निदिध्यासनासंभवे साक्षात्काराभावेऽपवर्गासंभवादिति भावः । अहं देवदत्तोऽहं यज्ञदत्त इति प्रतीतिद्वयाभिधानमात्मनः प्रत्यात्मवेदनीयत्वं सूचयितुम् ॥ ११ ॥

( विवृ० ) आशङ्कां निरस्यति—दृष्ट इति । दृष्टे मनसा गृहीते आत्मनि लिङ्गे अनुमाने सति प्रत्यक्षवत् प्रत्यक्षसमानाकारक एक एव मुख्य एव प्रत्ययः, भवतीति शेषः । मुख्यत्वं कुतः दृढत्वात् अप्रामाण्यशङ्कानिवर्तनक्षमत्वात् । मुख्यत्वं च गृहीतप्रामाण्यकत्वम्, यथा दूरस्थे सरोवरादिसलिले दृष्टेऽपि मरीचिकादिसंदेहात्तादृशप्रत्यक्षेऽप्रामाण्यशङ्का उदेति, ततो बला-

कादिलिङ्गेन तदनुमाने सति संवादेन तत्र प्रामाण्यग्रहात्तादृशशङ्का निवर्तते, तथात्मनि दृष्टेऽपि विपरीतसंभावनादिना तज्ज्ञानेऽप्रामाण्यशङ्का संजायते ततोऽनुमानेनात्मनि गृहीते संवादेन तत्र प्रामाण्यग्रहादप्रामाण्यशङ्कानिवर्तनक्षमत्वरूपं दृढत्वं तादृशग्रहस्य सुघटमेव । तदुक्तं मिश्रैः—प्रत्यक्षपरिकलितमप्यनुमानेन बुभुत्सन्ते तर्करसिका इति ॥ ११ ॥

(भाष्यम्) किंतु—*दृष्टयात्मनि लिङ्गे एक एव दृढत्वात्प्रत्यक्षवत्प्रत्ययः। यदिदमात्मनि लिङ्गं दृश्यते ज्ञानप्रभृतिकम्, तस्मिँल्लिङ्गे सति अनुमानमेक एव प्रत्ययो भवति, न प्रत्यक्षमनुमानं चेति द्वयमात्मनि प्रवर्तते । स खल्वयं दृढत्वात्प्रत्यक्षवदवभासते, न त्वेतत्प्रत्यक्षमिति । विप्रतिपत्त्युपलब्धेश्चाप्रत्यक्षः । नायमात्मा प्रत्यक्षः । कस्मात् ? विप्रतिपत्त्युपलब्धेः । उपलभ्यते खल्वात्मनि विप्रतिपत्तिरस्ति नास्तीति । येऽप्यहंप्रत्ययमास्थिषत तेऽपि केचिन्नास्तित्वमात्मनः संघातव्यतिरिक्तस्य प्रतिजानते । न खलु प्रत्यक्षे कश्चिद्विप्रतिपद्यते इदमस्ति नास्तीति । तस्मादहमन्धोऽहं बधिरोऽहं स्थूलोऽहं गौर इति संघात एवाहंप्रत्ययविषयो न तद्व्यतिरिक्त आत्मा। योऽपि 'अहमिहैवास्मि सदने जानानः' इति प्रत्ययः, सोऽपि व्यापकस्यात्मनः प्रादेशिकत्वानुपपत्तेर्गौरोऽहं जानामीतिवत्संघातालम्बनो भ्रम एव । तत्रैव ज्ञानमपि कयाचिद्विवक्षया मन्यते इति । बाल्यस्थाविरशरीरभेदेऽपि यत्सोऽहमित्येकत्वप्रतिसंधानम्, तदपि स एवायं हस्त इतिवत्संघातविषयमेव कयाचिद्विवक्षयेति । परीक्षकाश्च खल्वेतदात्मविषयं प्रतिसंधानं मन्यन्ते न लौकिकाः, ते हि संघातमेव तथा प्रतियन्ति इति । भवन्नप्ययमात्मनि प्रत्ययो न पृथिव्यादिवदात्मानं गोचरयति । योऽयं प्रतीयते सोऽयं संघात इन्द्रियमन्यो वेत्यहंप्रत्ययवतामपि विमर्शोपलब्धेः । तस्मादनुमेय आत्मा न प्रत्यक्ष इति। यथा खल्वर्थं दूरादुपलभमानो नावधारयति जलाशयो वा मरीचिका वा इति । ततो बलाकादिलिङ्गेनानुमिनोति योऽयं दूरादुपलभ्यते जलाशयोऽसाविति । तत्र यदनवधारणं ज्ञानं जलाशयो वा मरीचिका वेति न तत्प्रत्यक्षं, तथैवाहमिति जानानो नावधारयति संघातं वा इन्द्रियाणि वा तद्व्यतिरिक्तं वोपलभे इति । तदेतदनवधारणं ज्ञानं न प्रत्यक्षमिति । तदुक्तम् 'तत्रात्मा मनश्चाप्रत्यक्षे' इति । "इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्"—इति तन्त्रान्तरे चोक्तमिति । तच्चैतदात्मनः प्रत्यक्षं निरूपितेरभावादसत्कल्पं नात्रभवान् सूत्रकारो मर्शयाञ्चकार इति ॥ ११ ॥

**देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचाराच्छरीरे प्रत्ययः ॥१२॥**

(उप०) ननु यदि यज्ञदत्तोऽहमित्याकार. प्रत्यय आत्मनि तदा यज्ञदत्तो गच्छतीति गमनसामानाधिकरण्यभानमनुपपन्नमित्यत आह–देवदत्त इति । अस्ति हि अहं गौरः अहं स्थूल इति प्रत्ययः, अस्ति च मम शरीरमिति भेदप्रत्ययः । तत्र देवदत्तो गच्छतीति गतिसामानाधिकरण्यानुभवो व्यवहारश्च भाक्तः, ममेति प्रत्ययस्य यथार्थत्वात् । यद्यपि देवदत्तत्वं शरीरवृत्तिर्जाति-स्तेन देवदत्तो गच्छतीति मुख्य एव प्रयोगो यथार्थ एव च प्रत्ययः तथापि देवदत्तपदं तदवच्छिन्नात्मनि प्रयुक्तं चेत् तदौपचारिको बोद्धव्य ॥ १२ ॥

(विवृ०) नन्वहं यज्ञदत्त इत्यादिप्रत्यक्षं यद्यात्मविषयकं तदा यज्ञ-दत्तो गच्छतीति प्रत्ययः कथं स्यादात्मनि गतिमत्त्वस्याभावादित्यत आह–देवदत्त इति । देवदत्तो गच्छतीति वाक्यजन्यप्रत्ययो देवदत्तादिपदस्य शरीरे लक्षणाग्रहाद्भवति, देवदत्तो जानाति इच्छति करोति द्वेष्टीत्यादि-प्रयोगानां मुख्यतया देवदत्तादिपदस्य विजातीयशरीरावच्छिन्नात्मनि शक्तेरावश्यकत्वात्तदर्थे भूरिप्रयोगसत्त्वेन गौरवस्याकिंचित्करत्वात् । गच्छ-तीत्यत्राख्यातस्य यत्नार्थकत्वे तादृशप्रयोगस्य मुख्यत्वमपि संभवतीत्यपि द्रष्टव्यम् ॥ १२ ॥

(भाष्यम्) यश्च प्रत्ययोऽहं देवदत्तोऽहं यज्ञदत्त इति सोयम्–*देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचाराच्छरीरे प्रत्ययः । शरीरं खल्वेकस्माद्देशा-द्देशान्तरं गच्छति । उपचर्यते च देवदत्तो गच्छति यज्ञदत्तो गच्छतीति । तस्माद्योऽयं प्रत्ययोऽहं देवदत्तोऽहं यज्ञदत्त इति सोऽयं शरीरे प्रत्ययो न त्वात्मनि । शरीरे हि देवदत्तत्वादेरुपचार इति । देवदत्तत्वादिकं खलु शरीरमाश्रयति नत्वात्मानम् । तस्मादहं देवदत्त इत्येवमादिकः प्रत्ययः शरीरे भवतीति ॥ १२ ॥

**संदिग्धस्तूपचारः ॥ १३ ॥**

(उप० ) अत्र शङ्कते–संदिग्ध इति । तुशब्दः पूर्वपक्षद्योतकः । आत्म-शरीरयोस्तावदहमितिप्रत्ययः प्रयोगश्च दृश्यते तत्र क्व मुख्यः क्व वौपचा-रिक इति संदेहः ॥ १३ ॥

(विवृ०) ननु देवदत्तो जानातीति प्रयोगस्यौपचारिकत्वं देवदत्तो गच्छतीत्यस्य वेत्यत्र किं विनिगमकमित्याशङ्कते—संदिग्ध इति । उप-चारः संदिग्धः देवदत्तादिपदस्यात्मनि शरीरे वौपचारिकत्वमिति संदेहः । तुशब्द आशङ्काद्योतकः ॥ १३ ॥

(भाष्यम्) अत्रापर आह—*संदिग्धस्तूपचारः। योऽयं शरीरे देवदत्त-त्वादेरुपचारो नात्मनीति, स तु संदिग्धः। किमात्मनि चोपचारः शरीरे च, किंवा शरीर एवेति न निर्णयहेतुरस्ति। यथैव प्रतीयते देवदत्तो गच्छतीति तथैव प्रतीयते देवदत्तो जानातीति। संदेहाच्चानिर्णयस्तत्त्वस्य ॥ १३ ॥

**अहमिति प्रत्यगात्मनि भावात् परत्राभावादर्थान्तरप्रत्यक्षः ॥१४॥**

( उप० ) समाधत्ते—अहमितीति । अर्थान्तरमात्मस्वरूपं प्रत्यक्षं यत्र प्रत्यये स प्रत्ययोऽर्थान्तरप्रत्यक्षः। अयमर्थः—अहमितिप्रत्ययस्य प्रत्यगात्मनि स्वात्मनि भावात् परत्र परात्मनि अभावात् अर्थान्तरे स्वात्मन्येव मुख्यः कल्पयितुमुचितः। यदि तु शरीरे मुख्यः स्यात् तदा बहिरिन्द्रियजः स्यात्। नहि शरीरं मानसप्रत्यक्षं मानसश्चायमहमिति प्रत्ययः, बहिरिन्द्रियव्या-पारमन्तरेणापि जायमानत्वात्, अहं दुःखी अहं सुखी जाने यते इच्छा-म्यहमिति योग्यविशेषगुणोपहितस्यात्मनो मनसा विषयीकरणात्। नायं लैङ्गिको लिङ्गानुसंधानमन्तरेणापि जायमानत्वात्। न शाब्दः शब्दाकलन-मन्तरेणापि जायमानत्वात्। तस्मान्मानस एव, मनसश्च बहिरस्वातन्त्र्येण शरीरादावप्रवृत्तेरिति भावः। किंच यदि शरीरे स्यात् परशरीरे स्यात्, स्वात्मनि यदि स्यात् तदापि परात्मनि स्यादिति चेन्न, परात्मनः परस्याती-न्द्रियत्वात्, तद्विशेषगुणानामयोग्यत्वात्, योग्यविशेषगुणोपग्रहेण तस्य योग्यत्वात्। न केवलमात्मन इदं शीलं किंतु द्रव्यमात्रस्य। द्रव्यं हि योग्यवि-शेषगुणोपग्रहेणैव प्रत्यक्षं भवति। आकाशमपि तर्हि शब्दोपग्रहेण प्रत्यक्षं स्यादिति चेत्, स्यादेवं यदि श्रोत्रं द्रव्यग्राहकं भवेत्, आकाशं वा रूपवत् स्यात्। आत्मनोऽपि नीरूपत्वं तुल्यमिति चेत्, बहिर्द्रव्यमात्र एव प्रत्य-क्षतां प्रति रूपवत्त्वस्य तन्त्रत्वात्। प्रत्यगित्ययं शब्दोऽन्यव्यावृत्तमाह ॥१४॥

( विवृ० ) समाधत्ते—अहमितीति । अहं यज्ञदत्तः सुखीत्यादिव्य-वहारः अर्थान्तरप्रत्यक्षः अर्थान्तरस्य शरीरादिभिन्नस्य प्रत्यक्षं ज्ञानं यस्मात्; शरीरादिभिन्नविषयकशाब्दबोधजनक इति फलितार्थः। तथा च शरीरादिभिन्न एवात्मनि तादृशप्रयोगो मुख्यः शरीरे त्वौपचारिकः। कुत एवमत आह—प्रत्यगात्मनि स्वात्मनि भावात् अर्थात् सुखादेः सत्त्वात् परत्र शरीरेऽभावात् सुखादेरसत्त्वात्। तथा च भूरिप्रयोगस्यात्मन्येव सत्त्वा-त्तत्रैव तादृशप्रयोगस्य मुख्यत्वं शरीरादावौपचारिकत्वमिति न संदेह-गन्धोऽपीति । न चाहं सुखीत्यादाववच्छेदकतासंबन्धेन सुखादेर्वैशिष्ट्यं

शरीरे भासत इति वाच्यम्, करोऽहं सुखीत्यादेरपि प्रमाण्यापत्तेः करा॰ देरप्यवच्छेदकतासंबन्धेन सुखादिमत्त्वात्, अहमित्यस्मच्छब्दस्यात्मन्येव शक्ततया शरीरादौ तदभेदस्यासंभवाच्च ॥ १४ ॥

( भाष्यम् ) तस्मात्–*अहमिति प्रत्यगात्मनि भावात्परत्राभावादर्थान्तरप्रत्यक्षः । अहमिति योऽयं प्रत्ययः स खल्वर्थान्तरप्रत्यक्षः । यत्खलु शरीरादर्थान्तरमात्मा तत्प्रत्यक्षः । कुत एतत् ? प्रत्यगात्मनि भावात्परत्राभावाच्च । अहं जानामीति खल्वयं प्रत्ययः प्रत्यगात्मनि भवति शरीरे च न भवतीति ॥ १४ ॥

**देवदत्तो गच्छतीत्युपचारादभिमानात्तावच्छरीरप्रत्यक्षोऽहंकारः॥१५॥**

( उप० ) पुनः शङ्कते–देवदत्त इति । अहंकारोऽहमितिप्रत्ययः । स च शरीरप्रत्यक्षः, शरीरं प्रत्यक्षं विषयो यत्र स शरीरप्रत्यक्षः । देवदत्तो गच्छतीत्युपचारात्तावत्प्रयोगः प्रत्ययो वा त्वया समाहितः । स चोपचार आभिमानिकः यतोऽहं गौरः, अहं कृशः, सौभागिनोऽहं पुनरुक्तजन्मा, इत्यादयः प्रत्ययाः प्रयोगाश्चोपचारेण समर्थयितुमशक्या इत्यर्थः ॥ १५ ॥

( विवृ० ) पुनराक्षिपति–देवदत्त इति । अहंकारः अहमितिप्रयोगः शरीरप्रत्यक्षः शरीरस्य प्रत्यक्षं प्रतिपत्तिर्यस्मात् सः शरीरप्रतिपादक इति यावत् । तथा च यज्ञदत्तोऽहमिति सामानाधिकरण्यानुभवाद्यज्ञदत्तादिपदमपि शरीरप्रतिपादकमेव । तावदिति हेतौ । तस्मात् यज्ञदत्तो गच्छतीत्युपचारादिति यदुक्तं तदभिमानात्, नतु तद्वास्तवं भवितुमर्हति । अहं गौरः अहं स्थूल इत्यादिभूरिप्रयोगाणां शरीरपरताया आवश्यकतया अस्मच्छब्दस्य तत्समानाधिकरणयज्ञदत्तादिशब्दस्य च शरीरे शक्तत्वादिति पर्यवसितार्थः ॥ १५ ॥

( भाष्यम् ) अस्य प्रतिषेधः–*देवदत्तो गच्छतीत्युपचारादभिमानात्तावच्छरीरप्रत्यक्षोऽहंकारः । योऽयमहंकारोऽहमितिप्रत्ययः स तावच्छरीरप्रत्यक्षो नात्मप्रत्यक्षः । कस्मात् ? देवदत्तो गच्छतीत्युपचारात् । यच्चाहं जानामीति प्रत्येति, तदप्यात्मनो धर्मं ज्ञानं तत्संबन्धाच्छरीरेऽभिमन्यते । स्थूलोऽहं सुखीतिवत् ॥ १५ ॥

**संदिग्धस्तूपचारः ॥ १६ ॥**

( उप० ) सिद्धान्तमाह–संदिग्ध इति । तुशब्दोऽयं सिद्धान्तमभिव्यनक्ति । उपचारोऽयमाभिमानिकः किंतु शरीर एवायमहंप्रत्यय इति यदुक्तं तत्रापि संदेह एवेत्यर्थः । तथाच प्रत्ययस्योभयत्रापि कूटसाक्षित्वेन विशे

षावधारणाय यतितव्यम् । तत्र यत्ने क्रियमाणे निमीलिताक्षस्याप्यहमिति-प्रत्ययदर्शनाच्छरीरभिन्ने बहिरिन्द्रियागोचरे वस्तुनि स मन्तव्यः । शरीरे भवन् परशरीरेऽपि स्यात्, चक्षुर्नैरपेक्ष्येण च न स्यात् । अहं कृशः स्थूलो वा सुखीति कथं सामानाधिकरण्यमिति चेन्न, सुखाद्यवच्छेदकत्वेनापि तत्र शरीरभानसंभवात् सिहनादवदिदं गहनमितिवत् । अहन्त्वमात्रं शरीरे समारोप्यते मनसोपस्थितम्, त्वगिन्द्रियोपनीतमौष्ण्यम्, उष्णं जलम्, उष्णं शरीरमित्यादिवत् ॥ १६ ॥

( विवृ० ) आशङ्कां निरसितुमाह—संदिग्ध इति । उपचारः संदिग्धः, किं यज्ञदत्तो गच्छतीत्यत्रोपचारः उत यज्ञदत्तोऽहं सुखीत्यत्र, शरीरे आत्मनि च भूरिप्रयोगस्याविशिष्टत्वेनैकशेषस्य कर्तुमशक्यत्वादित्यर्थः । तुशब्दः सिद्धान्तद्योतनार्थः ॥ १६ ॥

( भाष्यम् ) पुनरपर आह—*संदिग्धस्तूपचारः। देवदत्तो गच्छतीति किं शरीरसंबन्धादात्मनि गतेरुपचारः, आहोस्विदगच्छति शरीरे आत्मसंबन्धाद्देवदत्तत्वादेरुपचार इति । सोऽयं संदेहान्न तत्त्वनिर्णयाय कल्प्यते इति । सोऽयमनिर्णयहेतुं संदेहमसकृदुपन्यस्यन्नहंप्रत्ययगोचरं चात्मानं प्रतिजानानोऽनवधेयवचनो भवतीत्युपेक्षितवानाचार्यः । निमीलिताक्षस्योपलब्धेरात्मनीति चेन्नान्यत्रापि तदुपलब्धेः । अथ निमीलिताक्षोऽप्यहमित्युपलभते, सा चेयमुपलब्धिरात्मनि विज्ञायते इति । तच्च न । यथा खल्वयं पुरुषो निमीलिताक्ष उपलभते जानाम्यहमिति, तथैव खल्वयमुपलभते स्थूलोऽहमिति। तस्मात् नेयमुपलब्धिरात्मन्येव शक्या विज्ञातुमिति॥१६॥

**न तु शरीरविशेषाद्यज्ञदत्तविष्णुमित्रयोर्ज्ञानं विषयः ॥ १७ ॥**

( उप० ) सिद्धान्तमुपबृंहयन्नाह—नेति । ज्ञानमिति योग्यं सुखदुःखादिकमात्मगुणमुपलक्षयति । यथा यज्ञदत्तविष्णुमित्रयोः शरीरं परस्परभिन्नं तथा ज्ञानसुखादिकमपि भिन्नमेव । तथाच यथा यज्ञदत्तस्येदं शरीरं तथा यज्ञदत्तस्य ज्ञाने सुखादौ वा समुत्पन्ने अहं सुखी जाने यते इच्छामीति ज्ञानादिकं विषयो भवति योग्यशरीरविषयकत्वेन तदीयरूपादिवत्तदीयज्ञानादीनामपि प्रत्यक्षत्वसंभवात् । न च संभवति, तस्मात् ज्ञानसुखादीनां शरीरादन्य एवाश्रयो वक्तव्य इति भावः । शरीरविशेषात् शरीरस्य भेदादित्यर्थः । तथाच शरीरभेदं प्राप्य ज्ञानं न तु विषय इति । ल्यब्लोपे पञ्चमी ॥ १७ ॥

---

१ च स्यादिति बाँ रा आ सो पु पाठ । २ अनुत्पन्न इति मु. पु पाठः ।

(विवृ०) ननु संदेह एव किं भवतां सिद्धान्तः, किंच यज्ञदत्तो गच्छतीत्यत्रोपचारो भवद्भिः पूर्वमभिहितस्तत्र प्रतिज्ञाहानिस्तदवस्थैवेत्यत आह–नन्विति । ननु नहि शरीरविशेषात् शरीरविशेषविषयकत्वात् यज्ञदत्तविष्णुमित्रयोर्ज्ञानमपि विषयो भवति शरीरसाक्षात्कारे इत्यर्थः। ज्ञानपदं योग्यात्मविशेषगुणसामान्यपरम्, तथाच यथाऽस्माकमात्मसाक्षात्कारे ज्ञानादिकं विषयो भवति अहं जानामि इच्छामि यते सुखी दुःखी द्वेष्मीत्याद्यनुभवस्य सर्वसिद्धत्वात् । तथा शरीरचाक्षुषादावपि ज्ञानादेर्भानं स्याद्यदि शरीरमहंपदवाच्यं ज्ञानादिगुणकं च स्यात्, नहि स्थूलो यज्ञदत्तोऽहं जानामीति चाक्षुषप्रत्यक्षं कस्यचिद्भवति, तस्माच्छरीरेऽहमादिव्यवहार औपचारिक एवेति नास्माकं प्रतिज्ञाहानिरिति भावः ॥ १७ ॥

(भाष्यम्) अस्तु तर्हि यत्र मुक्तसंशयं प्रत्यक्षं तदेव शरीरमात्मा, चक्षुषा ह्येतद्दृश्यते इत्यत आह–*ननु शरीरविशेषाद्यज्ञदत्तविष्णुमित्रयोर्ज्ञानं विषयः । न वै खलु शरीरविशेषाद्यज्ञदत्तविष्णुमित्रयोर्ज्ञानं विशेषेण बध्यते विशिष्यते इति । ज्ञानं यदि शरीरगुण स्यात्, शरीरविशेषात्तत्र विशेषो भवेत् । शरीरगुणस्य रूपादेः खलु शरीरविशेषाद्विशेषो दृष्टः, न त्वेतत्तथा भवति । यथा खल्वेको रूपं रूपमिति जानीते, रसं रस इति, परोऽपि तथेति नैतत् शरीरस्य गुणः किंत्वर्थान्तरस्यात्मन इति । स खल्वविशेष. सर्वत्रेति न तस्य गुणे विशेषः संभवति । असिद्धमितिचेन्न कारणवशात् । ज्ञानं खल्वपि यज्ञदत्तविष्णुमित्रयोर्विशिष्यते, यज्ञदत्तः खल्वयं प्रभूततरं जानाति शास्त्रं, स्मरति स्मर्तव्यस्य, शक्नोति चोहापोहौ कर्तुं, विष्णुमित्रस्तु न जानाति शास्त्रं, न स्मरति स्मर्तव्यस्य, न शक्नोत्यूहापोहौ कर्तुमिति । तत्रैवं सति यज्ञदत्तविष्णुमित्रयोर्ज्ञानं न विशिष्यते इत्येतदसिद्धमिति । तच्च नैवं मन्तव्यम् । कस्मात् ? कारणवशात् । यदयं विष्णुमित्रो न जानाति शास्त्रं न स्मरति स्मर्तव्यस्य न शक्नोत्यूहापोहौ कर्तुमिति, करणदोषादेतद्भवति । कुत एतत्प्रतिपत्तव्यम् ? दर्शनात् । दृश्यते ह्युपदेशविशेषाद्यतमानः खल्वयमेव शक्नोति शास्त्राणि ज्ञातुं स्मर्तव्यस्य स्मर्तुमूहापोहौ च कर्तुमिति । कुतश्चिच्च कारणादुपहतकरणो यज्ञदत्तोऽपि तत्कालं न शक्नोति शास्त्राणि ज्ञातुं स्मर्तव्यस्य स्मर्तुमूहापोहौ च कर्तुमिति । तदेवमुत्तममध्यमाधमकरणवशाज्ज्ञानतारतम्यं न त्वात्मस्वभावभेदादिति । अथापि खल्वात्मधर्मो ज्ञानं शरीरग्रहणे न गृह्यते, शरीरधर्मस्तु रूपादिकं गृह्यते, तस्मान्न शरीरमात्मा । ज्ञानं खल्वेवं शरी-

रस्य ग्रहणे रूपवद्गृह्येत इति । तदेवं संघातादर्थान्तरमात्मा । न तत्र प्रत्यक्षं नो खल्वप्यनुमानम् । प्रत्यक्षपूर्वकं खल्वनुमानमिष्यते । सामान्यतोदृष्टाच्चाविशेषः । तस्मादागमिकोऽयमात्मेति ॥ १७ ॥

**अहमिति मुख्ययोग्याभ्यां शब्दवद्व्यतिरेकाव्यभिचाराद्विशेषसिद्धेर्नागमिकः ॥ १८ ॥**

( उप० ) नन्वात्मा न प्रत्यक्षः नीरूपद्रव्यत्वात् निरवयवद्रव्यत्वाद्वा आकाशवत्, तथाचाहं कृशो गौर इति बुद्धेः शरीरमेव विषयो वाच्यः, क्वचिदहं सुखीत्यादिधीरपि यद्यप्यस्ति, तथाप्याश्रयमन्तरेण भासमानानां सुखादीनां शरीरे समारोप इत्येव कल्पयितुमुचितं यथोष्णं सुरभि जलमित्याश्रयमन्तरेण प्रतीयमानयोरौष्ण्यसौरभयोर्जले समारोपः । न त्वेतदनुरोधेन जलप्रत्ययस्यापि प्रसिद्धजलमन्तरेणान्यविषयत्वम् , तथाऽहमित्यहन्त्वं शरीर एव वास्तवम्, सुखादिकं तु कदाचित्तत्रारोप्यते तेनात्मनि प्रत्यक्षाकारं ज्ञानं नास्त्येव । सुखाद्याधारत्वेन यत् कल्पनीयं तदागमसिद्धं भवतु न तत्रापि ग्रह इत्यत आह–अहमितीति । अयमर्थः–अहं सुखी अहं दुःखीति प्रत्ययो नागमिको न शाब्दो नापि लैङ्गिकः शब्दलिङ्गयोरनुसंधानमन्तरेणापि जायमानत्वात् । प्रत्यक्षत्वे च नीरूपत्वं निरवयवत्वं च यद्बाधकमुक्तं तद्बहिरिन्द्रियप्रत्यक्षतायां भवति तत्र हि रूपवत्त्वानेकद्रव्यवत्त्वयोः प्रयोजकत्वात् , मानसप्रत्यक्षता च तदन्तरेणापि । ननु स्यादेवं यद्यात्मनि प्रमाणं स्यात् तदेव तु नास्तीत्यत आह–शब्दवद्व्यतिरेकाव्यभिचाराद्विशेषसिद्धेरिति । यथा क्षित्यादिषु द्रव्येषु शब्दस्य व्यतिरेकोऽव्यभिचारी नियतस्तेन तदाश्रयस्याष्टद्रव्यातिरिक्तस्याकाशरूपविशेषस्य सिद्धिः एवमिच्छायाः पृथिव्यादिषु व्यतिरेकस्याव्यभिचारात् तदाश्रयेणापि अष्टद्रव्यातिरिक्तेन द्रव्येण भवितव्यम् । नन्वेतावताऽप्यानुमानिक एव आत्मा न तु प्रत्यक्ष इत्यत आह–अहमिति । मुख्ययोग्याभ्यामिति । अहमितीतिकारेण ज्ञानाकारमाह–तेनाहमिति । ज्ञानं शब्दलिङ्गानुसंधानमन्तरेण निमीलिताक्षस्य यदुत्पद्यते तन्मुख्येन अहन्त्ववता योग्येन प्रमाणसिद्धेन उपपादनीयम्, न तु शरीरादिना, तत्रेच्छाया व्यतिरेकाव्यभिचारात् । मुख्ययोग्याभ्यामित्यनन्तरमुपपादनीयमिति पूरणीयम् । आत्मनि प्रमाणानि बहूनि ग्रन्थगौरवभिया त्यक्तानि मयूखेऽन्वेष्टव्यानि ॥ १८ ॥

( विवृ० ) वेदान्तिनस्तु नित्यविज्ञानमेवात्मा 'अविनाशी वाऽरेऽयमात्मा सत्यं ज्ञानमनन्तं ब्रह्म' इतिश्रुतेः। स च वस्तुगत्या एकोऽपि मायाकार्याणां अन्तःकरणरूपोपाधीनां भेदान्नानेव प्रतिभाति 'एकमेवाद्वितीयम्' इति 'एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बभूव' इत्यादिश्रुतेरित्याहुस्तन्मतं दूषयति—अहमितीति । प्रत्ययविषय इति शेषः । तथाचाहं सुखीत्यादिलौकिकमानसप्रत्यक्षविषयः न आगमिकः 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्याद्यागमप्रतिपाद्येश्वराभिन्नः । अत्र हेतुमाह मुख्ययोग्याभ्यामित्यादि । मुख्यं सत् यत् योग्यं सुखं दुःखं च ताभ्यां विशेषसिद्धेरीश्वरभेदसिद्धेः इष्टेषु सुखस्य मुख्यत्वम्, अन्येच्छानधीनेच्छाविषयत्वात् । दुःखस्य तु द्विष्टेषु मुख्यत्वमन्यद्वेषानधीनद्वेषविषयत्वात् । योग्यत्वं च प्रत्यक्षविषयत्वम् । एतत् कथनं च हेत्वसिद्धिशङ्कानिरासार्थमीश्वरे नित्यसुखाङ्गीकारपक्षे व्यभिचारवारणार्थं च नित्यसुखस्यायोग्यत्वात् । तथाच जन्यं सुखं दुःखं च जीवस्येश्वरभेदसाधकम् । उपलक्षणं चैतत् जन्या ज्ञानेच्छायत्ना द्वेषश्च ईश्वरभेदसाधका द्रष्टव्याः । नन्वहमिति प्रत्यक्षविषय आत्मा ईश्वरभिन्नः जन्यसुखवत्त्वादित्यादौ दृष्टान्ताभावेन अन्वयसहचाराग्रहाद्व्याप्तिज्ञानं दुर्घटमत उक्तं व्यतिरेकाव्यभिचारादिति । व्यतिरेकव्याप्तेरित्यर्थः । प्रयोज्यत्वं पञ्चम्यर्थस्तस्य च विशेषसिद्धावन्वयः । तथाचान्वयदृष्टान्ताभावेऽपि व्यतिरेकेण ईश्वरस्य दृष्टान्तत्वसंभवेन व्यतिरेकसहचारग्रहाधीनव्यतिरेकव्याप्तिग्रहादेवोक्तस्थलेऽनुमितिः संभवतीति भावः । ननु व्यतिरेकव्याप्त्येश्वरभेदसाधकत्वं न दृष्टचरमित्याशङ्कानिरासायोक्तं शब्दवदिति, शब्दादिवेत्यर्थः । आकाशस्य यथा शब्दरूपाद्धेतोर्व्यतिरेकव्याप्तिप्रकारेण ज्ञायमानादीश्वरभेदसिद्धिस्तथात्मनो जन्यसुखादिमत्त्वात्तत्सिद्धिरित्यर्थः॥१८॥

( भाष्यम् ) तदेवं प्रावादुकानां दृष्टीरुपन्यस्य सिद्धान्तमाह,—*अहमिति मुख्ययोग्याभ्यां शब्दवद्व्यतिरेकाव्यभिचाराद्विशेषसिद्धेर्नागमिकः । योऽयमहमिति प्रत्ययस्तस्य मुख्य आश्रय आत्मैव भवति आत्मसंबन्धात्तु शरीरमपि तस्य कदाचिदाश्रयो व्यपदिश्यते, पादे मे वेदना सुखं वपुषीतिवत् । योग्यश्चास्य प्रत्ययस्यात्मा न शरीरादिः । आत्मा खल्वेतस्य प्रत्ययस्याश्रयो युज्यते न शरीरादिः । कस्मात्? तथा स्वभावात् । तथाहि स्वभावः शरीरादेर्यदेतदेतस्य प्रत्ययस्याश्रयो भवितुं न योग्यं, तथाच स्वभाव आत्मनो यदेष योग्य इति । कारणाज्ञानात्कार्येषु ज्ञानादज्ञानाच्च न शरीरादिकं प्रत्ययस्याश्रयो भवितुमर्हति । तदेवमहमितिप्रत्ययादनुमीयते अस्त्यात्मा-

ऽर्थान्तरभूत इति । तत्र दृष्टान्तः शब्दवदिति । यथा खल्वाकाशं शब्दस्य मुख्यं योग्यं चाश्रयः न पृथिव्यादिकमेवमात्मा अहंप्रत्ययस्येति । कुत एतत्प्रतिपत्तव्यम्? व्यतिरेकाव्यभिचारात्। यथा खलु शब्दः पृथिव्यादिष्वनुपलब्धेः पृथिव्यादिव्यतिरेकं न व्यभिचरति,तथाऽहमितिप्रत्ययोऽपीति। यथा खलु शब्दः पृथिव्यादिष्वनुपलब्धेः पृथिव्यादिव्यतिरिक्तस्याकाशस्यानुमितौ हेतुः, तथैवाहमितिप्रत्ययोऽपि व्यतिरिक्तमात्मानमनुमापयतीति । यथा च शब्दोऽव्यभिचारात् कारणभूतस्य वायोरनुमितौ हेतुः, तथा खल्वहमितिप्रत्ययोऽप्यव्यभिचारात् कारणभूतस्यात्मनोऽनुमाने हेतुर्भवतीति । तदेवमहमितिप्रत्ययो नात्मानं गोचरयति, अनुमितौ त्वात्मनो हेतुर्भवतीति । अहमितिप्रत्ययान्नात्मा गम्यते इति ब्रुवाणमुपहसन्निवाहमिति मुख्ययोग्याभ्यामित्याह । सोऽयमहमिति प्रत्ययो निदर्शनमात्रम् । प्रत्ययमात्रात्त्वात्मा अनुमीयते । तस्मान्नागमिक आत्मा इति ॥ १८ ॥

सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम् ॥ १९ ॥

(उप०)आत्मपरीक्षाप्रकरणं समाप्य इदानीमात्मनानात्वप्रकरणमारभते। तत्र पूर्वपक्षसूत्रम्—सुखेति। एक एव आत्मा चैत्रमैत्रादिदेहभेदेऽपि । कुतः? सुखदुःखज्ञानानां निष्पत्तेरुत्पत्तेरविशेषात् । सर्वशरीरावच्छेदेन सुखदुःखज्ञानानामुत्पत्तिरविशिष्टैव। यतः यद्यात्मभेदसाधकं लिङ्गान्तरं भवेत्तदा सिध्येदात्मभेदः। न च तदस्ति, यथा तत्तत्प्रदेशावच्छेदेन शब्दनिष्पत्तावपि शब्दलिङ्गाविशेषादेकमेवाकाशम्, यौगपद्यादिप्रत्ययलिङ्गाविशेषादेक एव कालः, पूर्वापरादिप्रत्ययलिङ्गाविशेषादेकैव दिक् ॥ १९ ॥

(विवृ०) ननु 'एकमेवाद्वितीयम्', 'तत्त्वमसि श्वेतकेतो' इत्यादि श्रुतिबलाज्जीवेश्वरयोरभेदोऽवश्यं स्वीकार्यः। नचोक्तानुमानाद्भेदसिद्धिरिति वाच्यं, सुखदुःखादीनामन्तःकरणधर्मत्वेन स्वरूपासिद्धत्वात् । तथा च श्रुतिः—'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरेतत् सर्वं मन एव' इति । अत्र कामशब्दस्य सुखपरत्वाद्धीशब्दस्य वृत्तिरूपज्ञानपरत्वाच्च दुःखस्यापि सुखसामानाधिकरण्येन प्रतीतेरात्मधर्मत्वाभावादित्याशङ्कते—सुखेत्यादि । सुखदुःखज्ञानानां निष्पत्त्या निश्चयेन अविशेषाज्जीवात्मनः ईश्वरभिन्नत्वासिद्धेः । उक्तश्रुत्या मनस्येव तेषां सिद्धत्वेन आत्मन्यसिद्धत्वादिति भावः ॥ १९ ॥

( भाष्यम् ) स खल्वयमर्थान्तरभूत आत्मा किं सर्वशरीरेष्वेक आहो-

स्विन् प्रतिशरीरं भिन्न इति। कुतः संशयः? उभयथोपपत्तेः। यदप्रत्यक्षं लिङ्गेनानुमीयते, तत् खलु लिङ्गस्याविशेषे न विशिष्यते, एकस्यैवानुमानं भवति। अथापि खल्वेकः सुखी एको दुःखी कश्चिदिभ्यः कश्चिद्रङ्कः कश्चिदनूचानः कश्चिज्जाल्मः कश्चित् जायते कश्चिन्म्रियते चेति विरुद्धधर्माणामुपलब्धेः प्रतिशरीरमात्मनो भेदः स्यात्। सेयमुपलब्धिर्यथाऽऽत्मभेदादुपपद्यते तथैकस्यात्मनः प्रदेशभेदादुपपद्यते। स्फटिकः खल्वेकोऽपि महान् तैस्तैरुपाधिभिरुपरज्यमानस्तेषु तेषु प्रदेशेषु लोहितनीलपीताद्यनेकप्रकारमुपलभ्यमानो दृष्ट इति। सेयं विरुद्धोपलब्धिः कालभेदवद्देशभेदेनैकस्मिन् युगपद्भवन्ती न शक्याऽपलपितुमिति। यथैकस्मिन् शरीरे घनसारकण्टकयोः संभेदात् देशभेदेन सुखदुःखयोरुपलब्धिः। मनस्तत्रैकमिति विद्यमानस्य क्रमस्याग्रहणाद्युगपदुपलब्ध्यभिमानो भ्रमः। शरीरभेदे तु मनसो भेदान्न खल्वपि युगपदुपलब्धिर्न भवति। मनसः खल्वेते धर्मास्तदनुबन्धान्मिथ्याज्ञानाच्चात्मन्यवभासन्ते। सोऽयं संयोगो नाश्रयं व्याप्य भवतीति। तदेवमुभयथोपपत्तेर्न ज्ञायते किमियमेकस्यात्मनः शरीरभेदादुपाधिनिमित्ता विरुद्धोपलब्धिरथानेकस्यात्मन पारमार्थिकीति। उपाधिनिमित्तेयमुपलब्धि.। कस्मात्? यस्मात्—*सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम्। सुखादीनां निष्पत्तिरात्मनो लिङ्गम्। तच्च न विशिष्यते। यथा खलु सदितिलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैको भावः, शब्दलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैकमाकाशम्। तथैव सुखदुःखज्ञाननिष्पत्तिलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैक आत्मा सर्वत्रेति। यच्च व्यवस्था विशेषलिङ्गमिति मन्यते तच्च नैवम्, एकस्यापि व्यवस्थोपपत्तेः। तद्व्याख्यातम्। दृष्टं खल्वेकमाकाशं तेषु तेषु प्रदेशेषु तत्तच्छब्दादीनां सद्भावासद्भावाभ्या तेन तेनोपाधिना भिन्नं परमार्थतो न भिद्यते इति। तदेतन् तत्त्वम्॥ १९॥

## व्यवस्थातो नाना॥ २०॥

(उप०) सिद्धान्तमाह—व्यवस्थात इति। नाना आत्मानः। कुतः? व्यवस्थातः। व्यवस्था प्रतिनियमः यथा कश्चिदाढ्यः कश्चित् रङ्कः, कश्चित्सुखी, कश्चिद्दुःखी, कश्चिदुच्चाभिजनः, कश्चिन्नीचाभिजनः, कश्चिद्विद्वान्, कश्चित् जाल्म इतीयं व्यवस्था आत्मभेदमन्तरेणानुपपद्यमाना साधयत्यात्मनां भेदम्। न च जन्मभेदेन बाल्यकौमारवार्धकभेदेन वा एकस्याप्यात्मनो यथा व्यवस्था तथा चैत्रमैत्रादिदेहभेदेऽपि स्यादिति वाच्यं, कालभेदेन विरुद्धधर्माध्यासंभवात्॥ २०॥

( विवृ० ) आशङ्कां निरस्यति—व्यवस्थात इति । नाना नात्मैक्यं जीवात्मान ईश्वरभिन्ना इति यावत् । कुतः ? व्यवस्थातः । व्यवस्था निश्चयः तस्याः सुखदुःखज्ञानानामात्मनीति शेषः । नहि सुखादयो मनसो धर्मास्तस्य महत्त्वाभावेन सुखादीनामप्रत्यक्षत्वापत्तेः । ज्ञानायौगपद्यनियामकतया मनसोऽणुत्वस्यावश्यमङ्गीकार्यत्वात् । कामः संकल्प इत्यादिश्रुतिस्तु 'आयुर्घृतम्' इत्यादिवत् मनसः कामादिजनकत्वमवगमयति नतु तदाधारत्वं तदभेदं वेति ॥ २० ॥

( भाष्यम् ) व्यवहारभूमिकायां खलु—*व्यवस्थातो नाना । तदेतत्कृतभाष्यं पुरस्तादिति ॥ २० ॥

## शास्त्रसामर्थ्याच्च ॥ २१ ॥

( उप० ) प्रमाणान्तरमाह—शास्त्रेति । शास्त्रं श्रुतिः, तयाप्यात्मनो भेदप्रतिपादनात् । श्रूयते हि 'द्वे ब्रह्मणी वेदितव्ये' इत्यादि । तथा 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते' इत्यादि च ॥२१॥

इति श्रीशाङ्करे कणादसूत्रोपस्कारे तृतीयाध्यायस्य द्वितीयाह्निकम् ।

( विवृ० ) इतोऽपि जीवस्येश्वरभिन्नत्वमित्याह—शास्त्रसामर्थ्याच्चेति । शास्त्रस्य श्रुतेः सामर्थ्यात् जीवेश्वरयोर्भेदबोधकत्वात् । तथाहि 'द्वे ब्रह्मणी वेदितव्ये' 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति' इत्यादिश्रुतेः जीवेश्वरयोर्भेदोऽवश्यमङ्गीकार्यः । नच 'तत्त्वमसि श्वेतकेतो । ब्रह्मविद्ब्रह्मैव भवति' इत्यादिश्रुतीनां का गतिरिति वाच्यम्' 'तत्त्वमसि' इति श्रुतेस्तदभेदेन तदीयत्वप्रतिपादनेनाभेदभावनापरत्वात् । 'ब्रह्मविद् ब्रह्मैव' इति श्रुतिश्च निर्दुःखत्वादिनेश्वरसाम्यं जीवस्याभिधत्ते नतु तदभेदम् 'निरञ्जनः परमं साम्यमुपैति' इतिश्रुतेर्गत्यन्तरासंभवात् । अस्ति हि लौकिकवाक्येषु संपदाधिक्ये पुरोहितोऽयं राजा संवृत्त इत्यादिषु सादृश्यपरेषु अभेदोपचारः । नच मोक्षदशायामज्ञाननिवृत्तावभेदो जायते इति वाच्यं, भेदस्य नित्यत्वेन नाशायोगात्, भेदनाशाङ्गीकारेऽपि व्यक्तिद्वयावस्थानस्यावश्यकत्वाच्चेति संक्षेपः । भेदसाधकानि युक्त्यन्तराणि श्रुत्यन्तराणि च ग्रन्थगौरवभिया परित्यक्तानि ॥ २१ ॥

इति श्रीजयनारायणतर्कपञ्चाननकृताया कणादसूत्रविवृतौ तृतीयाध्यायस्य द्वितीयमाह्निकम् ।

( भाष्यम् ) 'एकमेवाद्वितीयं, एको देवः सर्वभूतेषु गूढः, द्वितीयाद्वै भयं

भवति, ब्रह्मैव सन् ब्रह्माप्येति, सर्वे आत्मान एकीभवन्ति, तद्य इह रमणीयचरणाः, एतस्मादात्मनः सर्वे आत्मानो व्युच्चरन्ति, द्वासुपर्णौ' इत्यादिशास्त्रसामर्थ्याच्च प्रतिपद्यामहे एक एवात्मा व्यवहारभूमौ भिद्यते इति । 'एक एव हि भूतात्मा भूते भूते व्यवस्थित. । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' स्मृतयश्चैवमाद्या भवन्तीति ॥ २१ ॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये तृतीयस्याध्यायस्य द्वितीयमाह्निकम् ।

॥ समाप्तश्च तृतीयोऽध्याय. ॥

# चतुर्थाध्याये प्रथमाह्निकम् ।

## सदकारणवन्नित्यम् ॥ १ ॥

( उप० ) पृथिव्यादीनां नवानामुद्देशलक्षणपरीक्षं[1] निर्वर्त्य प्रकृतेर्मूलकारणतां सांख्याभिमतां निराचिकीर्षुः परमाणूनां मूलकारणत्वं पृथिव्याद्यन्तर्भावं च सिषाधयिषुर्नित्यत्वसामान्यलक्षणं तावदाह–सदिति । न कारणवदित्यकारणवन् पदसंस्कारान् । तदेवं घटादीनां व्यवच्छेदः । तथापि प्रागभावेऽतिव्याप्तिरित्यत आह–सदिति । सत्तायोगीत्यर्थः । समवायविशेषपदार्थयोः सत्तैकार्थसमवाय एव सत्तायोगः, सामान्यान्तरस्य, सत्तायाश्च सत्प्रत्ययविषयतैव सत्तायोगः, स च प्रत्ययो वस्तुस्वरूपमात्रनिबन्धन इत्यन्यदेतत् । न चान्यत्रापि[2] तथैवास्तु किं सत्तयेति वाच्यम्, अनुगतमतेस्तात्सिद्धेरुक्तत्वात् ॥ १ ॥

( विवृ० ) यः शंकरोऽपि प्रलयं करोति स्थाणुस्तथा य. परपूरुषोऽपि ।
उमागृहीतोऽप्यनुमागृहीत' पायादपायात् सहि नः स्वयंभूः ॥

असतः सज्जायते इति केचिद्वदन्ति तेषामयमभिप्रायः बीजादिर्नाङ्कुरादिकार्यजनक तथा सति कुशूलस्थबीजादेरप्यङ्कुराद्यापत्तेः । किंतु क्षेत्रादौ स्थितस्य बीजस्यावयवविभागेन प्रध्वंसानन्तरमेवाङ्कुरोत्पादाद्बीजादिप्रध्वंस एवाङ्कुरादेः कारणमिति । तथाच गौतमीयं पूर्वपक्षसूत्रम् 'अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात्' इति । तदेतन्मतं निराकुर्वन्नेव परमाण्वादिक्रमेणारम्भवादं द्रढयति–सदिति । सत् भावरूप

१ उद्देश लक्षणपरीक्षामिति मुद्रितपु पाठ , उद्देश लक्षणपरीक्षमिति बॉ रा सो पाठ ।
२ नचात्रेति बॉ रा सो पु पाठ ।

किंचित्, अकारणवत् अजन्यं, नित्यं विनाशाप्रतियोगि वस्तु, अवयविनां मूलकारणं नासदित्यर्थः । प्रध्वंसस्य कारणत्वे चूर्णीकृतादपि बीजादङ्कुरापत्तेरिति भावः ॥ १ ॥

( भाष्यम् ) परीक्षितानि द्रव्याणि । तेष्वेव कश्चिद्विचारः प्रवर्तते । तत्र सदनित्यमित्यादिना अनित्यमिति द्रव्यगुणकर्मणामविशेष इत्युक्तम् । सर्वं चेदनित्यं यदेषां कारणं तदनित्यं तस्यापि यत्कारणं तदप्यनित्यमेवं तत्र तत्रेत्यव्यवस्था प्राप्नोति इत्यत आह—*सदकारणवन्नित्यम् । यत् सदकारणवच्च भवति तन्नित्यमाख्यायते । सद्धि नात्यन्तमुच्छिद्यते रूपान्तरेणावस्थानात् । सच्च खलु स्वेन रूपेण प्रागसदपि रूपान्तरेण सदेवोत्पद्यते । यच्चैतेषां कारणानां कारणं तत्खलु सदेव न कदाचिदसत् । कस्मात् ? कारणादनुत्पत्तेः । यद्धि कारणादुत्पद्यते तत्कारणात्मना सदपि कार्यात्मना भवत्यसत्कदाचित् । यत्तु कारणान्नोत्पद्यते अस्ति च, तत्खलु सर्वदैव सन्न कदाचिदसत् । तच्चैतत्कारणानां कारणं निमित्तविशेषात्तेन तेन रूपेण विपरिणममानं कार्यबुद्धिविषयः । तदेतत्प्रागुत्पत्तेरुत्पद्यमानं नासन्न सन्न सदसदसत्सतोर्वैधर्म्यात् । बुद्धिसिद्धं तु तदसत् । दधि खल्वयं निष्पादयिष्यन्क्षीरमुपादत्ते । तच्च प्रयत्नेन तथा परिणमयति । अथ दधि निष्पद्यते । सोऽयमतिशयः क्षीरदध्नोरेव न दधिपयसोरिति । तदेतद्घटकपालादौ यथाविषयं वेदितव्यम् । तच्चैतत्क्षीरे केनाचिद्रूपेण सदपि दधिरूपेण त्वसदेवोत्पद्यते । बुद्ध्या खल्वेतत्सिध्यति । तदेवं कार्यकारणयोः संबन्धः कार्यस्योत्पत्तिश्चेति द्वयमुपपद्यते न त्वन्यथा । असंबन्धोत्पत्तौ सर्वत्र सर्वोत्पत्तिप्रसङ्गः । यश्च मन्यते, कार्यं खल्वेतन्न कारणेन संबध्यते तत उत्पद्यते चेति । तस्यासंबन्धाविशेषात्सर्वत्र सर्वस्योत्पत्तिः प्रसज्यते । शक्तिविशेषे चाभ्यनुज्ञा । अथ मन्येत वस्तुशक्तिरेवैतादृशी यत्किंचित्किंचिदुत्पादयति न सर्वं सर्वमिति । एवं सति शक्तिविशेषे अभ्यनुज्ञा प्राप्नोति । ओमिति ब्रुवतश्चाभ्युपगमविरोधः । तस्माद्घटकपालादावुपलब्धेः कारणविपरिणामः कार्यमिति । मृत्पिण्डं हि तेन तेन रूपेण विपरिणममानं घटबुद्धिमुत्पादयत् दृष्टमिति । तैलं खल्वपि सदेव निष्पीड्यमानात्तिलादुत्पद्यते, तन्तवश्च तेन तेन रूपेणावस्थिताः पटमुत्पादयन्तीति । अनित्यमिति द्रव्यगुणकर्मणामविशेष इत्येतच्च मूलकारणं द्रव्यं विहाय मन्तव्यम् । परमात्मानं चापेक्ष्य सदप्यसद्भवतीति ॥ १ ॥

## तस्य कार्यं लिङ्गम् ॥ २ ॥

( उप० ) नित्यसामान्यमभिधायेदानीं परमाणुमधिकृत्याह–तस्येति ॥ तस्य परमाणोः कार्यं घटादि, लिङ्गम् । तथाच गौतमीयं सूत्रम् "व्यक्तात् व्यक्तस्य निष्पत्तिः प्रत्यक्षप्रामाण्यात्" इति अवयवावयविप्रसङ्गस्तावदनुभूयते स यदि निरवधिः स्यात्तदा मेरुसर्षपयोः परिमाणभेदो न स्यात्, अनन्तावयवारब्धत्वाविशेषात् । न च परिमाणप्रचयविशेषाधीनो विशेषः स्यादिति वाच्यं, संख्याविशेषाभावात्तयोरप्यनुपपत्तेः प्रलयावधिः स्यादिति चेत् अन्त्यस्य कस्यचिन्निरवयवत्वे प्रलयस्यैवानुपपत्तेः अवयवविभागविनाशयोरेव द्रव्यनाशकत्वात् । विभागश्च नावधिः तस्यैकाश्रयत्वानुपपत्तेः । तस्मान्निरवयवं द्रव्यमवधिः स एव परमाणुः । न च त्रसरेणुरेवावधिः, तस्य चाक्षुषद्रव्यत्वेन महत्त्वादनेकद्रव्यवत्त्वाच्च, महत्त्वस्य चाक्षुषप्रत्यक्षत्वे कारणत्वमनेकद्रव्यवत्त्वमादायैव, अन्यथा महत्त्वमेव न स्यात् कस्य कारणत्वं भवेत्, न च त्रसरेणोरवयवा एव परमाणवः, महद्द्रव्यारम्भकत्वेन तेषामपि सावयवत्वानुमानात्तन्तुवत्, कपालवच्च । तस्मात् यत् कार्यद्रव्यं तत् सावयवम्, यच्च सावयवं तत् कार्यद्रव्यम् । तथाच यतोऽवयवात् कार्यत्वं निवर्तते तत्र सावयवत्वमपीति निरवयवपरमाणुसिद्धिः । तदुक्तं प्रशस्तदेवाचार्यैः 'सा च द्विविधा नित्या चानित्या च' इति ॥ २ ॥

( विवृ० ) ननु तादृशे मूलकारणे किं मानमत आह–तस्येति । तस्य मूलकारणस्य, कार्यं त्रसरेण्वादिकार्यद्रव्यम्, लिङ्गमनुमापकम्, तथाहि अवयवावयविधाराया अनन्तत्वे मेरुसर्षपयोरपि साम्यप्रसङ्गः अनन्तावयवारब्धत्वाविशेषात्, अतः क्वचिद्विश्रामो वाच्यः । नच त्रसरेणौ विश्रामः, त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वाद्घटवदित्यनुमानेन द्व्यणुकरूपतदवयवसिद्धेः । नापि द्व्यणुक एव विश्रामः, त्रसरेणोरवयवाः सावयवा महदवयवत्वात् कपालवदित्यनुमानेन द्व्यणुकावयवस्य परमाणुरूपस्य मूलकारणस्य सिद्धेः । नचैवं क्रमेण तदवयवधाराऽपि सिध्येत्, अनवस्थाभयेनानुकूलतर्काभावेन च तत्कल्पनाया असंभवात् । मम तु अनेकद्रव्यवत्त्वप्रयोज्यं त्रसरेणोर्जन्यमहत्त्वमेवानुकूलतर्कसंपादकमिति संक्षेप ॥ २ ॥

( भाष्यम् ) अथापि खल्वस्ति किंचित्कारणं यस्य विपरिणामेनैतानि कार्याणीति । कुत एतत्प्रतिपत्तव्यम् ? लिङ्गादित्याह–तस्य कार्यं लिङ्गम् कार्येण हि लिङ्गेन कारणमनुमीयते इति । यच्च परमं कारणं यदेतत्कार्य-

कारणभावप्रसङ्गस्यावधिभूतं तन्निरवयवम्। सावयवानि खलु कार्याणि भवन्तीति। यथैतल्लोष्टस्य खलु प्रविभज्यमानावयवस्याल्पमल्पतरमल्पतममुत्तरमुत्तरं भवति। स चाल्पाल्पतरप्रसङ्गो यस्मान्नाल्पतरमस्ति यः परमोऽल्पस्तत्र निवर्तते। सोऽयं परमाणुरिति। स खल्वयं परमाणुर्मूर्तिमान् परिच्छिन्नो भवति द्वाभ्यां चाणुभ्यां पार्श्वद्वये संयुज्यमानस्तयोर्व्यवधानं करोति। सोऽयं स्पर्शवानणुरण्वोर्व्यवधानहेतुरिति भागभक्तिरिति। स्पर्शवत्त्वादणुर्याभ्यामणुभ्यां संयुज्यते तयोर्व्यवधानहेतुरिति तस्य भागभक्तिर्भवति ॥ २ ॥

## कारणभावात् कार्यभावः ॥ ३ ॥

(उप०) इदानी परमाणौ रूपादिसिद्धये प्रमाणमाह—कारणेति। रूपादीनां कारणे सद्भावात् कार्ये सद्भावः, कारणगुणपूर्वका हि कार्यगुणा भवन्ति घटपटादौ तथा दर्शनादित्यर्थः ॥ ३ ॥

(विवृ०) अभावस्य मूलकारणत्वे बाधकमाह—कारणभावादिति। कारणस्य मूलकारणस्य भावात्कार्याणामवयविनां भावः सत्ता, अन्यथा मृदुपादानकस्य मृण्मयत्ववदसदुपादानकत्वेन कार्याणामवयविनामसत्त्वप्रसङ्गादित्यर्थः ॥ ३ ॥

(भाष्यम्) अणुसंयोगो हि नाश्रयं व्याप्य भवतीति। यदि कारणात्मना कार्यस्यावस्थानं, मूलकारणं नित्यमिति सर्वं नित्यं स्यात्, ततश्चानित्यमिति द्रव्यगुणकर्मणामविशेषो नोपपद्यते इत्यत आह—*कारणभावात्कार्यभावोऽनित्य इति। योऽयं कारणभावो भावानां स खलु नित्यः। कारणभावं चापेक्ष्य योऽयं कार्यभावः सोऽयमनित्य इति। अतः कार्यभावविवक्षया अनित्यमिति द्रव्यगुणकर्मणामविशेष इत्युक्तमिति ॥ ३ ॥

## अनित्य इति विशेषतः प्रतिषेधभावः ॥ ४ ॥

(उप०) इदानी सर्वानित्यतावादिनिराकरणायाह—अनित्य इति। विशेषत इति षष्ठ्यन्तात्तसिः। तथाच विशेषस्य नित्यस्य प्रतिषेधस्तदा स्यात् यद्यनित्य इति प्रत्ययः शब्दप्रयोगश्च न स्यात्। नञ उत्तरपदार्थनिषेधार्थत्वात् तत् कथं नित्याभावेऽनित्य इति स्यात्। भवति च ततो नित्यमस्तीति सिद्धम्। यद्वा अनित्य इति न नित्यः परमाणुरित्यनेन प्रकारेण नित्यस्य त्वया

१ चन्द्रकान्तस्तत्तरसूत्रमस्मादविभक्त पठति।

प्रतिषेधः कर्तव्यः । अनेन च प्रकारेण प्रतिषेधो न सिध्यति सिद्ध्यसिद्धि-प्रतिहतत्वात् । सूत्रं चैवं योजनीयम्—अकारः स्वतन्त्र एव प्रतिषेधवचनः 'अमानोनाः प्रतिषेधवचनाः' इति । तथाचानित्य इति न नित्य इत्यर्थः । प्रतिषेधभावः प्रतिषेधस्वरूपं, तेन न नित्य इति विशेषस्य नित्यस्य प्रति-षेधस्वरूपम्, तच्च न संभवतीति शेषः ॥ ४ ॥

( विवृ० ) सर्वमेवानित्यं नहि किंचिदपि नित्यमिति मतं निरस्यति-अनित्य इति । अ इति नञ्समानार्थकमव्ययम् । तथाच न नित्य इति प्रतिषेधस्य भावो भवनं विशेषतः वस्तुविशेषमाश्रित्य, तथाचावयवी न नित्य-इति प्रतिषेधो भवति । नतु सर्वः पदार्थो न नित्य इति सामन्यतः प्रति-षेधः संभवति, प्रतियोगिनो नित्यस्य सिद्ध्यसिद्धिभ्यां पराहतत्वादिति समुदितार्थः ॥ ४ ॥

( भाष्यम् ) यश्च विशेषतः कारणभावप्रतिषेधो भावानां कार्यं न जात्वपि कारणात्मना सदिति, सोऽयं प्रतिषेधभावेऽविद्या भ्रान्तिरिति । तदेवमाचार्यप्रवृत्तिर्ज्ञापयति अस्ति कारणभावः कार्यभावश्च भावानां, तयोः पूर्वो नित्य उत्तरश्चानित्य इति कारणस्य विपरिणामः कार्यमिति ॥

अथेयमपरा योजना—*सदकारणवन्नित्यमिति नित्यं मूलकारणमाह । *तस्य कार्यं लिङ्गमिति तत्रानुमानं प्रमाणमाचष्टे । *कारणभावात्कार्यभाव इति कार्ये गन्धाद्युपलब्धेः कारणेऽपि तदनुमिनोति । *अनित्य इति विशेषतः प्रतिषेधभाव इति अस्ति किंचिन्नित्यमित्यभ्यनुजानाति । *अविद्या इति सर्वमनित्यमिति प्रवादं प्रत्याचष्टे इति । अथापि खलु यो विशेषत एकान्ततः प्रतिजानीते सर्वमेवानित्यं नास्ति किंचिन्नित्यमिति, तस्यैतत्स्यात, अ-नित्यमिति विशेषतः प्रतिषेधभावोऽविद्येति ॥ ४ ॥

## अविद्या ॥ ५ ॥

(उप०) ननु परमाणुर्न नित्यः मूर्तत्वात्, घटवत् एवं रूपवत्त्वरसवत्त्वादयः प्रत्येकं हेतव उन्नेयाः, एवं षट्केन युगपद्योगात् परमाणोः षडंशता, तथाच सावयवत्वात् अव्याप्यवृत्तिसंयोगाश्रयत्वात् । किंच परमाणोर्मध्ये यद्या-काशमस्ति तदा सच्छिद्रत्वेनैव सावयवत्वम्, अथ नास्ति तदाकाशस्यासर्व-गतत्वप्रसङ्गः । किंच छायावत्त्वात् आवृत्तिमत्वात् (?) । अपिच यत् सत् तत् क्षणिकमित्यादिक्षणिकत्वसाधकानुमानादपि परमाणोरनित्यता, तथा चैतावती चेदनुमितिपरम्परा तदा कथमुच्यते परमाणुर्नित्य इत्यत आह-

अविद्येति । परमाणोरनित्यत्वविषया सर्वाप्यनुमितिः अविद्या भ्रमरूपा आभासप्रभवत्वात् आपाततो धर्मिग्राहकमानबाधः सर्वत्र विपक्षबाधकप्रमाणशून्यत्वाद्व्याप्यत्वासिद्धिः क्वचित् स्वरूपासिद्धिरित्यादि समानतन्त्रेऽन्वेष्टव्यम् ॥ ५ ॥

( विवृ० ) ननु परमाणुर्नित्यः द्रव्यत्वात्, मूर्तत्वात्, रूपवत्त्वात्, सावयवत्वादव्याप्यवृत्तिसंयोगाश्रयत्वाद्वा घटवदित्याद्यनुमानसाम्राज्यात्परमाणोरनित्यत्वं सेत्स्यतीत्यत आह—अविद्येति । अविद्या अप्रमा । अर्थात् परमाणोरनित्यत्वानुमितिः दुष्टहेतुजन्यत्वात्पूर्वोक्तानां हेतूनामनैकान्तिकत्वादिति भावः ॥ ५ ॥

( भाष्यम् ) यद्वै खल्वेतत्कारणानां कारणं, कुत एतन्नोपलभ्यते । नैतदनेकद्रव्यवत् । न चैकस्मिन्संस्कृतं रूपम् । तस्मान्नोपलभ्यते । यतः—महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिः महत्युपलब्धिर्न सूक्ष्मे सा चोपलब्धिरनेकद्रव्यवत्त्वाद्रूपाच्च संस्कृताद्भवति न त्वन्यथा । यच्च कारणानां कारणं तदेतन्नानेकद्रव्यवत् । न च तत्र रूपमस्त्यभिव्यक्तम् । अतो नोपलभ्यते । महत्त्वात्सिद्धिरिति चेत्तुल्यम् । अथ मन्येत, महत्त्वादुपलब्धिः सिध्यति इत्यनेकद्रव्यवत्त्वमहेतुरुपलब्धाविति । तच्च नैवं मन्तव्यम् । तुल्यं खल्वेतद्भवति । यथा महत्त्वादुपलब्धिसिद्धिरित्यनेकद्रव्यवत्त्वमहेतुरेवमनेकद्रव्यवत्त्वादुपलब्धिसिद्धिरिति महत्त्वमहेतुरिति । तुल्यत्वाच्चोभयं हेतुर्भवति । न खल्विदं हेतुर्नेदमिति शक्यमध्यवसितुमिति । तद्भावाच्चोपलब्धेः । दूरात्खल्वयमुपलब्धा उत्कृष्टमहत्त्वमपि लूतातन्तुजालं नोपलभते, अनेकद्रव्यवत्त्वात्तु लूतामात्रमुपलभते । तदेवमनेकद्रव्यवत्त्वस्य भावादुपलब्धिर्भवतीत्यनेकद्रव्यवत्त्वमुपलब्धिहेतुरिति । अनेकद्रव्यवतः खल्वपि द्व्यणुकस्य महत्त्वाभावान्नोपलब्धिरिति । मध्यन्दिनोल्काप्रकाशस्य तु सौरेण प्रकाशेन बलवताऽभिभवान्नोपलब्धिरिति । यस्तु मन्यते, गुणा एव लोहितशुक्लादयो द्रव्यस्योपलभ्यन्ते न द्रव्यमिति तं प्रत्युच्यते—न गुणमात्रं विवेकोपलब्धेः । न वै खलु गुणमात्रस्योपलब्धिः किंतु द्रव्यस्यापि । कस्मात् ? विवेकोपलब्धेः । समानेऽपि स्थैर्यशुक्लादौ योऽयमुपलब्धुर्जलस्थलविवेकः उपलभ्यते, स नोपपद्यते, यदि न द्रव्यं प्रत्यक्षम् । अप्रत्यक्षं हि द्रव्यं गुणश्च समान इति । भवति त्वस्य विवेको जलमेतत्स्थलं चेदमिति । यदि वै न भवेत् स्थलवज्जले-

१ मूलत्वादिति बा रा सो पु पाठ ।

ऽपि विचरितुं प्रयतेत, जलवद्वा स्थलेऽपि नैवं कुर्यात्। न त्वेवम्। तस्मान्न गुणमात्रस्योपलब्धिरपि तु द्रव्यस्यापीति। अनुभवाच्च प्रतिपद्यामहे द्रव्यस्योपलब्धिर्भवतीति। सर्वः खलु लोकोऽनुभवति कालायससमानकान्ति गर्जन्तं हस्तिनमुपलभे इति। यतोऽपसरति। न त्वेतद्द्रव्यस्यानुपलब्धावुपपद्यते। अथापि खलु गुणान्यत्वेऽपि प्रत्यभिज्ञानाद्गुणव्यतिरेको द्रव्यस्य। अथापि स्यात्, गुणसमुदायो द्रव्यं न तेभ्यो व्यतिरिच्यते इति। एवं सति गुणान्यत्वे प्रत्यभिज्ञानं न स्यात्। अस्ति त्वेवं प्रत्यभिज्ञानं य एव पटः पूर्वं शुक्ल आसीत्स एवैतर्हि रक्तो जात इति। तत्खल्वेतदेकं पूर्वापरकालावस्थायिनं गुणाश्रयं विषयीकुर्वद्गुणव्यतिरिक्तं द्रव्यं ज्ञापयति॥ ५॥

महत्यनेकद्रव्यवत्त्वात् रूपाच्चोपलब्धिः॥ ६॥

( उप० ) ननु यदि परमाणुरस्ति कथमिन्द्रियेण न गृह्यते रूपवत्त्वस्पर्शवत्त्वादयश्चैन्द्रियकत्वप्रयोजकास्त्वयैवोपपादिता इत्यत आह—महतीति। महति महत्त्ववति द्रव्ये महच्छब्दात् परिमाणवाचकात् गुणवचनान्मतुपो लोपात्। अनेकद्रव्यवत्त्वादिति अनेकं द्रव्यमाश्रयो यस्य तदनेकद्रव्यम् तद् यस्यास्ति तदनेकद्रव्यवत् तद्भावस्तस्मात् अनेकद्रव्यवत्त्वात्। एवं सति वायुरपि प्रत्यक्षः स्यादत उक्तम्—रूपाच्चेति। उद्भूतादनभिभूतादिति वक्ष्यते, उपलब्धिरिति बहिरिन्द्रियेणेति शेषः। तथाच परमाणोर्महत्त्वाभावादनुपलब्धिरित्युक्तं भवति, अनेकद्रव्यवत्त्वं च अनेकद्रव्याश्रिताश्रितत्वम्, अवयवबहुत्वाधीनमहत्त्वाश्रयत्वं वा। न च महत्त्वेनैवानेकद्रव्यवत्त्वमन्यथासिद्धमिति वाच्यं, वैपरीत्यस्यापि संभवात्, जन्येन जनकस्यान्यथासिद्धिर्न तु जनकेन जन्यस्येति चेन्न, जन्यजनकयोर्युगपदन्वयव्यतिरेकग्रहेऽन्यथासिद्ध्यभावात्। अन्यथा भ्रामणादिना दण्डादीनामन्यथासिद्धिप्रसङ्गात्। महत्त्वोत्कर्षात् प्रत्यक्षतोत्कर्षो दूरादाविति चेन्न। अनेकद्रव्यवत्त्वोत्कर्षस्यापि तत्र संभवाद्विनिगमनाविरहात्। किंच मर्कटकीटसूत्रजाले हस्तचतुष्टयादिमिते दूरादप्रत्यक्षे मर्कटमात्रप्रत्यक्षताऽनेकद्रव्यवत्त्वोत्कर्षाधीनैव महत्त्वोत्कर्षस्य जाले वर्तमानत्वात्। एवं सूक्ष्मतन्तुघटितपटादौ दूरत्वे महत्त्वोत्कर्षेऽपि स्वल्पपरिमाणमुद्गरादिप्रत्यक्षत्वे द्रष्टव्यम्॥ ६॥

( विवृ० ) ननु परमाणोः सत्त्वे कथं तस्य न चाक्षुषादिकमत आह—महतीति। उपलब्धिः चाक्षुषं स्पार्शनं च प्रत्यक्षं महति महत्परिमाणवति भवतीति शेषः। तथाच परमाणोर्महत्त्वाभावान्न प्रत्यक्षमिति भावः। ननु

वाय्वादिरपि महत्परिमाणसत्त्वात्कथं न प्रत्यक्षमत उक्तं रूपादिति । उद्भूतरूपादित्यर्थः । तेन चक्षुरादौ रूपसत्त्वेऽपि न प्रत्यक्षम् । ननु त्रसरेण्वादावेव कथं महत्त्वं न परमाणावित्यत उक्तमनेकद्रव्यवत्त्वादिति । तथाच जन्यमहत्त्वं प्रति अनेकद्रव्यवत्त्वस्य प्रयोजकत्वात् परमाण्वादौ च तदभावान्न महत्त्वम् । अनेकद्रव्यवत्त्वं च अनेकसमवेतसमवेतत्वमिति । अनेकद्रव्यवत्त्वादिति पञ्चम्याः प्रयोज्यत्वमर्थः । अन्वयश्चास्य महत्परिमाणे तत्र च उपलब्धिप्रयोजकत्वं तात्पर्यबलात्पारतन्त्र्येण भासते । अतो न चकारासङ्गतिरिति ध्येयम् ॥ ६ ॥

( भाष्यम् ) यदि द्रव्यस्योपलब्धिर्भवति वायुर्नाम द्रव्यं कथं नोपलभ्यते इत्यत आह—सत्यपि द्रव्यत्वे महत्त्वे रूपसंस्काराभावाद्वायोरनुपलब्धिः। महतो द्रव्यस्य वायोरस्त्यनेकं द्रव्यं, रूपसंस्काराभावात्तु न तस्योपलब्धिरिति । आचार्यप्रवृत्तिर्ज्ञापयति वायोः खलु रूपमस्ति संस्कारस्तु तस्य नास्तीति ॥ ६ ॥

**सत्यपि द्रव्यत्वे महत्त्वे रूपसंस्काराभावाद्वायोरनुपलब्धिः ॥ ७ ॥**

(उप०) नन्वेवमपि मध्यन्दिनोल्काप्रकाशस्य चाक्षुषस्य रश्मेर्वायोर्वा स्पर्शसमवायेन रूपसमवायिनो महतश्चोपलम्भः स्यादत आह—सत्यपीति । रूपसंस्कारपदेन रूपसमवायो रूपोद्भवो रूपानभिभवश्च विवक्षितः । तेन यद्यपि वायौ य एव स्पर्शसमवायः स एव रूपसमवायः तथापि रूपनिरूपितो नास्ति तत्र रूपात्यन्ताभावसत्त्वात् । चाक्षुषे च रश्मौ रूपसंस्कारः रूपोद्भवो नास्ति, मध्यन्दिनोल्काप्रकाशे च रूपसंस्कारो रूपानभिभवो नास्ति इति न तेषां प्रत्यक्षता, एवं ग्रीष्मोष्मभर्जनकपालानलकनकादिषु रूपसंस्काराभाव उन्नेयः । वृत्तिकृतस्तु रूपं च रूपसंस्कारश्चेत्येकरूपपदलोपः तेन रूपाभावाद्वायोरनुपलब्धिः, रूपसंस्काराभावाच्चक्षुरादीनामनुपलब्धिरित्याहुः ॥ ७ ॥

( विवृ० ) ननु समवाय एक एव स्पर्शस्य रूपस्य च । तथाच वायौ स्पर्शसत्त्वेन रूपवत्त्वमप्यावश्यकं संबन्धसत्तायाः संबन्धिसत्ताप्रयोजकत्वात् । इत्थंच कथं न वायोः प्रत्यक्षमत आह—सत्यपीति । रूपसंस्कारः संस्कृतं रूपं कृद्विहित इति न्यायात् । उद्भूतानभिभूतरूपमिति यावत् । तदभावात्तादृशरूपत्वावच्छिन्नाधिकरणत्वाभावान्न वायोः उपलब्धिः प्रत्यक्षमित्यर्थः । न च संबन्धसत्तायाः संबन्धिसत्तानियामकत्वात्कथं न वायौ रूपाधिकरणत्वमिति वाच्यम्, वायौ रूपं नास्तीति प्रत्यक्षसिद्धेन रूपाभावेन विरोधि-

त्वात् । वायू रूपवानिति प्रत्ययासत्त्वेन तदधिकरणतायां साधकाभावाच्च । यत्र तु न बाधकं किंतु साधकान्तरं तत्रैव संबन्धसत्ता संबन्धिसत्तानियामिका इत्यभ्युपगमस्यावश्यकत्वात् । द्रव्यत्वस्य सत्त्वकथनं तु रूपसंबन्धसत्त्वज्ञापनार्थम्, महत्परिमाणसत्त्वाभिधानं तु प्रत्यक्षकारणसम्पत्त्यर्थम्, उद्भूतत्वविशेषणं भर्जनकपालादिस्थवह्निग्रीष्मोष्मचक्षुराद्युपलब्धिवारणार्थम्, अनाभिभूतत्वविशेषणं मध्यंदिनोल्काप्रकाशादिप्रत्यक्षवारणार्थमिति संक्षेपः ७

( भाष्यम् ) वायोर्यदि रूपमस्ति कुत एतन्नोपलभ्यते इत्यत आह–अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः । यत्खलु रूपमनेकद्रव्यवति समवैति यत्र च विशेषः संस्कारो विद्यते, तस्य रूपस्योपलब्धिर्भवति वायोस्तु यद्रूपं, न तत्र संस्कारोऽस्तीति न तस्योपलब्धिरिति ॥ ७ ॥

**अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः ॥ ८ ॥**

( उप० ) एवं परमाणुनित्यताप्रकरणानन्तरं परमाणुलिङ्गतयोपोद्धातसङ्गत्या बहिर्द्रव्यप्रत्यक्षताप्रकरणं समाप्य तदुपोद्धातेन गुणप्रत्यक्षताप्रकरणं वर्तयिष्यन्नाह–अनेकेति । रूपगतो विशेषो रूपविशेषः तच्चोद्भूतत्वमनभिभूतत्वं रूपत्वं च तस्माद्रूपस्योपलब्धिः । नन्वेवं परमाणोर्द्व्यणुकस्य च रूपं गृह्येतेत्यत उक्तमनेकद्रव्यसमवायादिति । अनेकपदं भूयस्त्वपरं तेनानेकानि भूयांसि द्रव्याणि आश्रयतया यस्य तदनेकद्रव्यं त्रसरेणुप्रभृति तत्समवायाद्धटादयोऽप्यवयवद्वयारब्धाः परम्परयाऽनेकद्रव्याश्रया एव, रसस्पर्शादौ रूपत्वविरहाच्चाक्षुषत्वाभावः, चाक्षुषे तेजसि च उद्भूतविरहात् । उद्भवश्च रूपादिविशेषगुणगतो जातिविशेष एव रूपत्वादिव्याप्यः । नन्वेवं शुक्लत्वसुरभित्वशीतत्वकटुत्वादिभिरपि परापरभावानुपपत्तिरेव, तत्तद्व्याप्यतन्नानात्वकल्पने तु कल्पनागौरवमुद्भवपदस्य नानार्थत्वं चेति चेन्न, बाह्यैकैकेन्द्रियग्रहणयोग्यगुणत्वस्यैवोपाधेरुद्भवत्वात् तदुपाधिविरहस्यैवानुद्भवत्वात् । अनुद्भवाभाव एव उद्भव इति केचित्तच्चिन्त्यम् । अनुद्भवस्याप्येवं व्यवस्थापयितुमशक्यत्वात् । अतीन्द्रियविशेषगुणत्वमनुद्भूतत्वमिति चेत्, एवं तर्हि ऐन्द्रियकविशेषगुणत्वस्यैवोद्भवत्वापत्तेः । ऐन्द्रियकत्वावच्छेदकं किमिति चेत् तुल्यम् । विशेषगुणेष्वेकैवोद्भूतत्वं जातिः, गुणगतजातौ परापरभावानुपपत्तिर्न दोषायेत्यपि वदन्ति ॥ ८ ॥

(विवृ०) ननु परमाण्वादीनां प्रत्यक्षं न भवतु तद्रूपस्य तु प्रत्यक्षं कथं न भवति बहिर्द्रव्यप्रत्यक्ष एव महत्परिमाणोद्भूतानभिभूतरूपयोर्हेतुत्वादन्यथा घटरू-

पादीनामपि प्रत्यक्षं न स्यादित्यतो गुणप्रत्यक्षताप्रकरणमारभते—अनेकेति । अनेकं द्रव्यमाश्रयो यस्य तदनेकद्रव्यम्, अनेकाश्रितमित्यर्थः तत्समवायादनेकसमवेतसमवेतत्वादिति यावत् । तादृशसमवेतत्वं जन्यमहत्त्वप्रयोजकमिति महत्परिमाणमेवात्र विवक्षितम्, रूपविशेष उद्भूतानभिभूतरूपम्, तस्मात् पञ्चम्यर्थो जन्यत्वं, तथाच रूपप्रत्यक्षे महत्परिमाणमुद्भूतानभिभूतरूपं च सामानाधिकरण्यसंबन्धेन कारणं तत्कार्यतावच्छेदकं तु बहिरिन्द्रियजन्यद्रव्यसमवेतप्रत्यक्षत्वम् । तथाच परमाणुरूपादौ महत्त्वस्य ग्रीष्मोष्मादिरूपादौ उद्भूतानभिभूतरूपस्य सामानाधिकरण्यसंबन्धेनासत्वान्न तेषां प्रत्यक्षमिति भावः ॥ ८ ॥

( भाष्यम् ) तेनेति संनिकृष्टतरं विशेषं परामृशति । संस्कारेण खलु रसगन्धस्पर्शेषु ज्ञानं व्याख्यातमिति । यश्च गन्धो वायुनोपनीयते, तस्य संस्कारभावादेव द्रव्यस्यानुपलब्धावप्युपलब्धिर्भवति ॥ ८ ॥

## तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम् ॥ ९ ॥

( उप० ) स्पर्शातिरिक्तानां रूपसामानाधिकरण्यमेव बहिरिन्द्रियग्राह्यताप्रयोजकमिति रूपप्रत्यक्षसामग्रीमभिधाय तामन्यत्रातिदिशन्नाह—तेनेति । तेनेति रूपप्रत्यक्षज्ञानेनेत्यर्थः । यथा रूपविशेषाद्रूपत्वानभिभूतत्वोद्भूतत्वाद्रूपोपलब्धिस्तथा रसविशेषात् रसत्वानभिभूतत्वोद्भूतत्वलक्षणाद्रसोपलब्धिरेवमितरत्रापि योज्यम् । अनेकद्रव्यसमवायश्चातिदेश्यः, घ्राणरसनत्वगिन्द्रियाणामनुद्भवाद्गन्धरसस्पर्शानामग्रहणम्, पाषाणादावनुद्भवाद्गन्धरसयोः, तद्भस्मनि तयोरुपलम्भात्, तयोः पाषाणादावुपलम्भ एव न तु स्पष्ट इत्येके । विभक्तावयवाप्यद्रव्यरूपानुद्भवात्तदग्रहणम् । एवं रसस्यापि उष्णजले तेजोरूपस्यानुद्भवात् स्पर्शस्य चाभिभवात् विततकर्पूरचम्पकादौ रूपरसस्पर्शानामनुद्भवादनुपलम्भः । कनकादौ रूपमुद्भूतमेव शुक्लत्वभास्वरत्वे परमभिभूते, रूपमप्यभिभूतमित्येके । कनकग्रहणं तु रूपान्तरसाहचर्यात्, अभिभवश्च बलवत्सजातीयग्रहणकृतमग्रहणं न तु बलवत्सजातीयसंबन्धमात्रम् बलवत्सजातीयसंबन्धस्याप्यग्रहणानिरूप्यतया अग्रहणस्यैवोपजीव्यत्वात् । नचाग्रहणप्रयोजकत्वेन बलवत्सजातीय एवोपजीव्यः, अग्रहणस्य ग्रहणप्रागभावस्य तदत्यन्ताभावस्य वा तदप्रयोज्यत्वात्, ग्रहणध्वंसस्य च तत्राभावात् । तवापि तर्हि बलवत्सजातीयग्रहणकृतमग्रहणमनुपपन्नमेवेति चेत्, अस्त्वेवं तथापि सजातीयस्य बलवत्त्वे दुर्ब-

त्वे वा तादृशसंबन्धसत्त्वे वा ग्रहणाग्रहणे एव प्रयोजके इति स एवाभिभवपदार्थः ॥ ९ ॥

( विवृ० ) परमाण्वादिगतगुणान्तराणामपि प्रत्यक्षमत एव न भवतीत्याह–तेनेति । तेन रूपस्थलीयहेतुकथनेन रसगन्धस्पर्शेषु ज्ञानं प्रत्यक्षं व्याख्यातमुक्तप्रायमित्यर्थः । तथाच परमाणुद्व्यणुकगतानां रसगन्धस्पर्शानां महत्त्वाभावान्न प्रत्यक्षम् । यद्यपि रूपस्य कार्यतावच्छेदकं नोक्तप्रत्यक्षत्वं वायूपनीतसुरभिभागादेर्गन्धस्य वाय्वादेः स्पर्शस्य च प्रत्यक्षानुपपत्तेस्तथापि द्रव्यसमवेतचाक्षुषं प्रति उद्भूतानभिभूतं रूपं सामानाधिकरण्यसंबन्धेन कारणम् । तथाविधरासनं प्रति उद्भूतानभिभूतरसः तथाविधघ्राणजं प्रति उत्कटगन्ध तादात्म्यसंबन्धेन, तथाविधस्पार्शनं प्रति उद्भूतानभिभूतस्पर्शः सामानाधिकरण्यसंबन्धेन हेतुरिति विशिष्यैव कार्यकारणभावो वक्तव्यः ॥ ९ ॥

## तस्याभावादव्यभिचारः ॥ १० ॥

( उप० ) ननु गुरुत्वमप्यनेकद्रव्यसमवेतं रूपमहत्त्वसमानाधिकरणं चेति कथं न प्रत्यक्षमत आह–तस्येति । तस्य रूपत्वादेः सामान्यस्य उद्भवस्य च गुरुत्वेऽभावान्न गुरुत्वं प्रत्यक्षम् । ननु मा भून् तत्र रूपत्वादिकं तथापि तत्प्रत्यक्षं स्यादत आह–अव्यभिचार इति । एकैकेन्द्रियग्राह्यत्वं प्रति रूपत्वादीनां पञ्चानां जातीनामव्यभिचारो नियम एव यत्रैव रूपत्वादिपञ्चकान्यतमं तत्रैव बाह्यैकैकेन्द्रियग्राह्यत्वं तद्व्यतिरेकादित्यर्थः । सूत्रे तु गुरुत्वाधिकारस्यास्फुटत्वात् प्रशस्तदेवैरतीन्द्रियेषु मध्ये परिगणितमपि वल्लभाचार्यैः स्पार्शनमुक्तं गुरुत्वम् ॥ १० ॥

( विवृ० ) ननु गुरुत्वादेः कथं न प्रत्यक्षं महत्त्वस्य उद्भूतरूपस्य च सामानाधिकरण्यसंबन्धेन तत्र सत्त्वादित्यत आह–तस्येति । अत्र तत्पदेन अप्रक्रान्तस्यापि कारणकलापस्य परामर्शः कार्योत्पत्तिप्रयोजकतया तस्य प्रसिद्धत्वात् । तथाच तस्य कारणकलापस्य अभावात् असत्त्वात् अव्यभिचारः उद्भूतरूपादेः कार्यकारणभावकल्पनायां गुरुत्वादौ नान्वयव्यभिचार इत्यर्थः । तथाच लौकिकविषयतासंबन्धेन प्रत्यक्षसामान्यं प्रत्येवातीन्द्रियाणां गुरुत्वादीनां गुरुत्वत्वादिना प्रतिबन्धकतास्वीकारस्यावश्यकत्वेन तदन्योन्याभावस्य गुरुत्वादावसत्त्वेन सामग्र्यभावान्न गुरुत्वादेः प्रत्यक्षमिति भावः । वल्लभाचार्यैस्तु एतत्सूत्रमन्यथैव व्याख्यातं स्वीकृतं च गुरुत्वादेः स्पार्शनप्रत्यक्षमिति संक्षेपः ॥ १० ॥

( भाष्यम् ) अथापि खल्वियमुपलब्धिः संस्कारं व्यभिचरति पाषाणादौ रसगन्धयोरनुपलब्धेरिति । तच्च नैवं मन्तव्यमित्याह--*तस्याभावाद्व्यभिचारः । पाषाणरसगन्धादौ तस्य विशेषस्य संस्कारस्याभावात् नास्ति व्यभिचारः । अव्यभिचाराच्च संस्कारो हेतुरुपलब्धाविति । संस्कारः खल्वयं कार्येणानुमीयते । न च पाषाणरसगन्धादौ तदनुमाने हेतुरस्ति । पाषाणभस्मनि तु संस्काराभावात्तदुपलब्धिरिति ।। ९ ।।

**संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि ।। ११ ।।**

(उप०) एवमेकैकेन्द्रियग्राह्यानभिधाय द्वीन्द्रियग्राह्यानाह—संख्या इति। एतेषां चाक्षुषत्वे स्पार्शनत्वे वा परस्परानपेक्षत्वसूचनायासमासः । यद्यपि महत्त्वापेक्षाऽस्ति तथापि न परिमाणत्वेन, चकारः स्नेहद्रवत्ववेगानामुपसंग्रहार्थ. । चाक्षुषाणीति स्पार्शनत्वमप्युपलक्षयति यद्वा चकार एव चाक्षुषाणि चेत्यत्रापि योज्यः । संख्या इति बहुवचनमेकत्वादिकाः सर्वा एव संख्याः संगृह्णाति । एकत्वं सामान्यमेव न तु गुण इति चेत् तद्यदि द्रव्यमात्रवृत्ति तदा द्रव्यत्वेन सहान्यूनानतिरिक्तवृत्तित्वम् । अथ गुणकर्मणोरपि वर्तते तदा सत्तया सहान्यूनानतिरिक्तवृत्तित्वम् । कथं तर्हि गुणादावप्येकत्वादिप्रत्यय इति चेत् आरोपितेनैकत्वेन, एकार्थसमवायप्रत्यासत्त्या सम्यगे वैकत्वप्रत्ययो वा । तदेतदेकत्वं नित्यद्रव्येषु नित्यम् अनित्येषु च कारणैकत्वासमवायिकारणकम् । द्वित्वादिकं तु अपेक्षाबुद्धिजन्यम् । अपेक्षाबुद्धिश्च नानैकत्वसमूहालम्बनरूपा सजातीययोर्विजातीययोर्वा द्रव्ययोश्चक्षुषासंनिकर्षे ।। ११ ।।

( विवृ० ) द्वीन्द्रियग्राह्यानाह—संख्या इति । चाक्षुषाणीत्यत्रापि पूर्वचकारो योजनीयः तेन सङ्ख्यादीनि कर्मपर्यन्तानि रूपवद्द्रव्यसमवेतानि चाक्षुषाणि स्पार्शनानि चेत्यर्थः । कर्म चेति चकारादुद्भूतरूपवद्द्रव्याणां योग्यगतानां स्नेहवेगद्रवत्वानां जातीनां च संग्रहः । रूपिपदं योग्यपरं तेन परमाण्वादिगतानामेतेषामप्रत्यक्षत्वेऽपि नासंगतिः ।। ११ ।।

( भाष्यम् ) संस्कृतरूपवद्द्रव्यसमवायाच्चाक्षुषाण्येतानि । तदभावान्न मूलकारणस्यैतानि चाक्षुषाणीति । स्नेहस्तु गुणो न चाक्षुषः । कार्येण खल्वयमनुमीयते । वेगः खल्वपि न चक्षुषा गृह्यते कर्मणा त्वनुमीयते इति । द्रवत्वं तु चाक्षुषमपि न सूत्रितमसूत्रणादिति ।। १० ।।

**अरूपिष्वचाक्षुषाणि ॥ १२ ॥**

( उप० ) एतान्येव कर्मपर्यन्तान्यभिप्रेत्याह–अरूपिष्विति । रूपरहितेषु द्रव्येषु वर्तमानानि कर्मान्तानि संख्यादीन्यचाक्षुषाणि न स्पार्शनानीत्यपिद्रष्टव्यम् । अप्रत्यक्षाणीति नोक्तम्, तथा सत्यात्मैकत्वमपि प्रत्यक्षं न स्यात् ॥ १२ ॥

(विवृ०) अयोग्यसमवेतानामेतेषामचाक्षुषत्वमर्थायातमपि स्पष्टार्थमाह–अरूपिष्विति । अरूपिषु अयोग्येषु एतानि अचाक्षुषाणि अस्पार्शनानि चेत्यर्थः । आत्मैकत्वस्य मानसप्रत्यक्षोदयादप्रत्यक्षाणीति नोक्तम् ॥१२॥

( भाष्यम् ) तानि खल्वेतानि–※अरूपिष्वचाक्षुषाणि । स्पार्शनानि तु क्वचिद्भवन्ति । फूत्कारादौ खलु संख्यादीनामुपलब्धिर्भवति । दोषात्तु क्वचिन्न भवत्युपलब्धिरिति ॥ ११ ॥

**एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम् ॥ १३ ॥**

( उप० ) रूपादीनामेकैकेन्द्रियग्राह्यत्वं संख्यादीनां द्वीन्द्रियग्राह्यत्वं सुखादीनां मानसत्वं तथाच गुणत्वसत्तयोः सामान्ययोः सर्वेन्द्रियग्राह्यत्वमायातमित्याह–एतेनेति । व्यक्तिग्रहणयोग्यतैव जातिग्रहणयोग्यता । व्यक्तयश्च यथायथं यदि सर्वेन्द्रियैर्गृह्यन्ते तदा जात्योरपि गुणत्वसत्तयोः सर्वेन्द्रियग्राह्यत्वं पर्यवसन्नमित्यर्थः ॥ १३ ॥

इति शाङ्करे वैशेषिकसूत्रोपस्कारे चतुर्थाध्यायस्याद्यमाह्निकम् ।

( विवृ० ) सत्तागुणत्वयोः सर्वेन्द्रियग्राह्यत्वमाह–एतेनेति । भावः सत्ता सर्वेन्द्रियं सर्वेन्द्रियजन्यं ज्ञानं प्रत्यक्षं तथाच तयोः सर्वेन्द्रिययोग्यवृत्तित्वात्सर्वैरेवेन्द्रियैस्ते गृह्येते इति भाव. ॥ १३ ॥

इति श्रीजयनारायणतर्कपञ्चाननभट्टाचार्यकृताया कणादसूत्रविवृतौ चतुर्थाध्यायस्याद्यमाह्निकम् ।

( भाष्यम् ) गुणत्वं गुणभावः । भावस्त्वविशेषितो द्रव्यगुणकर्मणामिति । चक्षुषा गुणभावो विज्ञायते, स्पर्शनेन गुणभावो विज्ञायते । एवं शेषेषु । तदेवं सर्वैरिन्द्रियैर्गुणभावो विज्ञायते इति । एतेन भावो व्याख्यातः । अथापि गुणत्वं भावश्चार्थान्तरभूतं सर्वेन्द्रियनिर्ग्राह्यमिति यो मन्यते, तस्यैतत् । एतेन सर्वेन्द्रियं ज्ञानं व्याख्यातमिति । नास्त्येतत् गुणत्वभावयोः सर्वेन्द्रियं ज्ञानमिति व्याख्यातम् । यदि वै स्यात्, नैव तत्र कश्चिद्विप्रतिपद्येत । नहि चक्षुर्विषये कश्चिद्विप्रतिपद्यते । प्रागेव तु सर्वेन्द्रियनिर्ग्राह्ये । अथाप्येतदुक्तम् । सा चेयं प्रमितिः प्रत्यक्षपरा, जिज्ञासितमर्थमाप्तोपदेशात्प्रतिपद्यमानो लिङ्गदर्शनेनापि बुभुत्सते, लिङ्गदर्शनानुमितं तु प्रत्यक्षतो दिदृक्षते

प्रत्यक्षत उपलब्धेऽर्थे जिज्ञासा निवर्तते इति । तस्मान्नास्ति तत्र सर्वेन्द्रिय-ज्ञानमिति व्याख्यातम् । नह्येतत्तत्र तत्र समवैति । तत्र तत्र समवायाद्धि तत्तदिन्द्रियं ज्ञानमिति । यदि त्वेतदपि द्रव्यं तत्र तत्र समवेयात्, उपपद्यते सर्वेन्द्रियं ज्ञानमिति। अथापि खलु परिभाषामात्रं गुणत्वं परिभाषामात्रं भावः, ततो विषयस्य सर्वेन्द्रियज्ञानाद्विषयिणि तस्योपचारः॥ १२॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये चतुर्थस्याध्यायस्याद्यमाह्निकम् ।

## चतुर्थाध्याये द्वितीयाह्निकम् ।

**तत्पुनः पृथिव्यादि कार्यद्रव्यं त्रिविधं शरीरेन्द्रियविषयसंज्ञकम् ॥१॥**

( उप० ) स्पर्शवद्द्रव्यपरीक्षार्थे चतुर्थाध्याये मूलकारणपरमाणुपरीक्षानन्तरं कार्यद्वारा स्पर्शवन्त्येव द्रव्याणि परीचिक्षिषुराह—तदिति । तत्र शरीरत्वं प्रयत्नवदात्मसंयोगासमवायिकारणवत् क्रियावदन्त्यावयवित्वमुपाधिभेदः । न तु शरीरत्वं जातिः पृथिवीत्वादिना परापरभावानुपपत्तेः । इन्द्रियत्वं च स्मृत्यजनकज्ञानकारणमनःसंयोगाश्रयत्वम्, शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वं वा । नक्तंचरनयनरश्मिस्तु तेजोऽन्तरमेव । चक्षुष्ट्वे तु शब्दरूपेतरोद्भूतविशेषगुणानाश्रयत्वे सतीति देयम् । न त्विन्द्रियत्वं जातिः, पृथिवीत्वादिना परापरभावानुपपत्तेः । विषयत्वं च यद्यपि प्रतीयमानतया भोगसाधनत्वम्, तच्च लौकिकसाक्षात्कारविषयत्वमेव द्रव्यगुणकर्मसामान्याभावसाधारणम्, तथापि सूत्रानुरोधात् लौकिकसाक्षात्कारविषयकार्यद्रव्यत्वं द्रष्टव्यम् । पृथिव्यादिकार्यद्रव्यं त्रिविधमिति हि सूत्रम्, तथाच विषयत्वमपि न जातिः ॥ १ ॥

( विवृ० ) परमाणुरूपमूलकारणपरीक्षां प्रथमाह्निके संपाद्य कार्यद्रव्यं विभजते—तदिति । अत्र शरीरत्वम् अन्त्यावयविमात्रवृत्तिचेष्टावद्वृत्तिजातिमत्त्वं हस्तत्वपृथिवीत्वद्रव्यत्वसत्त्वादिवारणाय प्रथमवृत्यन्तम् । घटत्वादिवारणाय चेष्टावद्वृत्तीति । घटशरीरसंयोगादिवारणाय जातीति । मनुष्यत्वचैत्रत्वादिजातिमादाय मानुषादिशरीरे लक्षणसमन्वयः । वृक्षादावपि चेष्टाऽस्त्येव आध्यात्मिकवायुसंबन्धात् । अन्यथा भग्नक्षतसंरोहणादिकं न स्यात् । कल्पभेदेन नृसिंहशरीरस्य नानात्वान्नृसिंहत्वजातिमादाय तत्र लक्षणसमन्वयः । नतु शरीरत्वं जातिः पृथिवीत्वादिना संकरात् । नापि चेष्टाश्रयत्वम्, निश्चेष्टशरीरेऽव्याप्तेः । इन्द्रियत्वमपि न जाति-

पृथिवीत्वादिना संकरप्रसङ्गात् किंतु शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम् इन्द्रियमनःसंयोगचर्ममनःसंयोगात्ममनःसंयोगा ज्ञानकारणानीति चर्मण्यात्मनि चातिव्याप्तिवारणाय सत्यन्तम्। श्रोत्रेऽव्याप्तिवारणाय शब्देतरेति। व्याघ्रादिनयनरश्मेश्चक्षुष्ट्वस्वीकारे तु रूपेतरेत्यपि वक्तव्यम्। घ्राणादौ गन्धादिसत्त्वादुद्भूतेति। शुक्लत्वादिव्याप्यमनुद्भूतत्वं जातिर्नैव तदभावकूटवत्त्वमुद्भूतत्वम्। तच्च संयोगेऽप्यस्तीत्यसंभववारणाय विशेषेति। कालदिगादावतिव्याप्तिवारणाय ज्ञानकारणेति। चक्षुरवयवविषयसंयोगस्यापि चक्षुर्विषयसंयोगद्वारा ज्ञानजनकत्वस्वीकाराच्चक्षुरवयवादौ, चक्षुःसंयुक्तकालविशेषणतायाः कालादौ रूपाभावचाक्षुषस्य जनकतया तद्घटकसंयोगस्यापि स्वाश्रयविशेषणतासंबन्धेन चाक्षुषकारणत्वात् तमादाय कालादौ चातिव्याप्तिवारणाय मनःपदम्। विषयत्वं च साक्षात्परम्परया वोपभोगसाधनत्वे सति जन्यद्रव्यत्वम्, तस्य शरीरेन्द्रियवृत्तित्वेऽपि शिष्यबुद्धिवैशद्यार्थं तयोः पृथगुत्कीर्तनमिति संक्षेपः॥ १॥

(भाष्यम्) परीक्षितं कारणद्रव्यम्। कार्यद्रव्यमिदानीं परीक्ष्यते—
*तत्पुनः पृथिव्यादि कार्यद्रव्यं त्रिविधं शरीरेन्द्रियविषयसंज्ञकम्। चेष्टेन्द्रियार्थाश्रयः शरीरम्। घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि। शिष्टं विषयः॥ १॥

**प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात्पञ्चात्मकं न विद्यते॥ २॥**

(उप०) इदानीं शरीरस्य त्रैभौतिकत्वचातुर्भौतिकत्वपाञ्चभौतिकत्वप्रवादं निराकर्तुमाह—प्रत्यक्षेति। गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकं यदि शरीरं भवेदप्रत्यक्षं भवेत् यथा प्रत्यक्षाप्रत्यक्षाणां वायुवनस्पतीनां संयोगोऽप्रत्यक्षस्तथा शरीरमप्यप्रत्यक्षं स्यादिति दृष्टान्तद्वारकं सूत्रम्, पञ्चात्मकं न विद्यत इति शरीरमिति शेषः। क्लेदपाकादयस्तु उपष्टम्भकजलानलगता एव, चातुर्भौतिकोऽप्येवम्। नन्वस्तु त्रैभौतिकम्, त्रयाणां भूतानां प्रत्यक्षत्वादिति चेन्न, विजातीयारम्भस्य प्रतिषेधादेकस्य गुणस्यावयविनि गुणानारम्भकत्वात्। तद्यदि पृथिवीजलाभ्यामारम्भः स्यात् तदा तदारब्धमगन्धमरसं च स्यात्। एवं पृथिव्यनलाभ्यामगन्धमरूपमरसं च स्यात्। पृथिव्यनिलाभ्यामगन्धमरसमरूपमस्पर्शं च स्यादित्याद्यूह्यम्॥ २॥

( विवृ० ) शरीरस्य चातुर्भौतिकत्वं पाञ्चभौतिकत्वं च निराकुरुते—प्रत्यक्षेति । 'गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौन्तिकम्' इति न्यायपूर्वपक्षसूत्रम् । मानुषादिशरीरेषु गन्धादीनां भूतपञ्चककार्याणा पञ्चानां सत्त्वात् तानि पाञ्चभौतिकान्येवेति केचिद्वदन्ति, तन्मतं खण्डयति—पञ्चात्मकं शरीरं न विद्यते प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात् तदारब्धस्याप्यप्रत्यक्षतापत्तेः । नहि वायोराकाशस्य वा प्रत्यक्षं कस्यचिद्भवति तस्माच्छरीरं न पाञ्चभौतिकमित्यर्थः । चातुर्भौतिकत्वमपि अनया युक्त्या खण्डनीयम् ॥ २ ॥

( भाष्यम् ) तत्र यदेतत्त्रिविधं कार्यद्रव्यं, तत्किं पञ्चभिर्भूतैरेकैकमारभ्यते आहोस्विदेकैकमेकैकेनेति । कुतः संशयः ? विशेषानुपलब्धेः । गन्धक्लेदादयस्तावदत्रोपलभ्यन्ते, ते कि भूतानां प्रकृतिभावात्तद्धर्मा उपलभ्यन्ते, आहोस्विदप्रकृतिभावानां भूतानां संयोगस्याप्रतिषेधात्संनिधेरिति नोपलभ्यते विशेष । अत संशय इति । कि तत्र तत्त्वम् ?—*प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात्पञ्चात्मकं न विद्यते । प्रत्यक्षाणामप्रत्यक्षाणां च यः परस्परं संयोगः, स खलु न प्रत्यक्षः । कस्मात् ? तदाश्रयाणामप्रत्यक्षत्वात् । प्रत्यक्षाणां खल्वेष प्रत्यक्ष इति । तस्मात्कार्यद्रव्यं न पञ्चात्मकं विद्यते । अप्रत्यक्षं हि तदेतत्स्यादिति। तदेवं न पञ्चभिरेकैकमारभ्यते, कि त्वेकैकमेकैकेनेति ॥ २ ॥

## गुणान्तराप्रादुर्भावाच्च न त्र्यात्मकम् ॥ ३ ॥

( उप० ) एतदेवाह—गुणेति । पृथिव्यप्तेजसां प्रत्यक्षाणामेवारब्धं शरीरं प्रत्यक्षं स्यादपि, यदि तत्र गुणान्तरं कारणगुणपूर्वकं प्रादुर्भवेत्, न त्वेतदस्ति एकस्य गन्धादेरनारम्भकत्वस्योक्तत्वात् । तथाच न त्र्यात्मकमपि शरीरं न रूपवद्भूतत्रयारब्धमपीत्यर्थः ॥ ३ ॥

( विवृ० ) ननु पृथिव्यादीनां त्रयाणां प्रत्यक्षत्वात् त्रैभौतिकत्वमेव मानुषादिशरीराणामङ्गीकार्यमित्यत आह—गुणेति । चकारस्त्वर्थे । मानुषादिशरीरं न त्र्यात्मकं पृथिव्यादित्रयारब्धम्, गुणान्तरस्य स्नेहस्य चित्ररूपस्य चित्रस्पर्शस्य चाप्रादुर्भावादनुत्पत्तेः । यथा स्नेहवदवयवारब्धस्यावयविनः स्नेहः कारणगुणपूर्वको दृश्यते, यथा वा नानावर्णावयवैरारब्धस्यावयविनश्चित्ररूपमुत्पद्यते तथा मानुषादिशरीरेऽपि कथं न भवति कारणस्याविशेषात् ॥ ३ ॥

( भाष्यम् ) इतश्चैतदेवं प्रतिपत्तव्यम्–*गुणान्तराप्रादुर्भावाच्च । यदि भूतपञ्चकोपादानकमेतत्स्यात्, अपूर्वः कश्चिद्गुणो हरिद्राचूर्णोपादानकद्रव्ये लौहित्यवदत्र प्रादुर्भवेत् । गुणान्तराप्रादुर्भावाच्च प्रतिपद्यामहे नैतत्पञ्चात्मकमिति । तदिदमनेकभूतोपादानं गुणान्तरवद्वा स्यात्, अगन्धमरूपमरसमस्पर्शं च वा प्रकृत्यनुविधानात्स्यादिति ॥ ३ ॥

(भाष्यम्) अत एव–*न त्र्यात्मकम् । प्रत्यक्षैः पृथिव्यप्तेजोभिरपि नैतदारभ्यते । गुणान्तरप्रादुर्भावाभावात् । प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात्त्वस्य प्रतिषेधो न भवतीति ॥ ४ ॥

अणुसंयोगस्त्वप्रतिषिद्धः ॥ ४ ॥

( उप० ) कथं तर्ह्येकस्मिन्नेव शरीरे पाकादीनामुपलम्भ इत्यत आह–अण्विति । मिथः पञ्चानां भूतानां परस्परमुपष्टम्भकतया संयोगो न निषिध्यते किंतु, विजातीययोरण्वोर्द्रव्यं प्रत्यसमवायि कारणं संयोगो नेष्यते । तथाच तदुपष्टम्भात् पाकादीनां शरीरे भवत्युपलम्भ इति । तर्हि किंप्रकृतिकमिदं मानुषशरीरमित्यत्र गोतमीयं सूत्रमुपतिष्ठते–' पार्थिवं तद्विशेषगुणोपलब्धेः ' पृथिवीविशेषगुणो गन्धो मानुषशरीरे आनाशमनपायी दृश्यते, पाकादयस्तु शुष्कशरीरे नोपलभ्यन्ते इति तेषामौपाधिकत्वं गन्धस्य स्वाभाविकत्वमिति पार्थिवत्वव्यवस्थितेः ॥ ४ ॥

( विवृ० ) ननु कथं तर्हि शरीरे गन्धक्लेदपाका भूतत्रयजन्या अनुभूयन्ते इत्याशङ्क्याह–अण्विति । अणूनां पार्थिवजलीयतैजसानां परस्परं संयोगस्तु न प्रतिषिद्धः नास्माभिर्निषिध्यते किंतु तादृशसंयोगरूपादसमवायिकारणाद्द्रव्यान्तरमेवेत्यर्थः । तथाच मानुषादिशरीरस्यापि जलाद्युपष्टम्भकत्वस्वीकारात् क्लेदपाकादीनां नासङ्गतिः एकस्य शरीरस्य त्र्यात्मकत्वे पृथिवीत्वजलत्वादिजातीनां परस्परसांकर्यप्रसङ्गादिति भाव. । न च सांकर्यभयात् कि पार्थिवत्वं स्वीकार्यम् उत जलीयत्वं वेत्यत्र किं विनिगमकमिति वाच्यं, स्वाभाविकगन्धवत्त्वस्यैव पार्थिवत्वे विनिगमकत्वात् । अनुभूयते हि शुष्कशरीरेऽपि गन्धः नतु क्लेदादिरिति गन्धस्य स्वाभाविकत्वम् । तथाच गोतमसूत्रम् 'पार्थिवं तद्विशेषगुणोपलब्धेः' इति ॥४॥

( भाष्यम् ) क्लेदादीनां तर्ह्युपलब्धिः शरीरादौ नोपपद्येत इत्यत आह–*अणुसंयोगस्त्वप्रतिषिद्धः । न ब्रूमः सूक्ष्माणां पृथिव्यादीनां परस्परसंयोगो नास्तीति । अस्ति त्वयं परस्परं संयोगः । तदेवं परस्परसंयुक्तानां भूयस्त्वात्

पृथिव्यादिव्यपदेशमुपादानभावं चाचक्ष्महे, नत्वणूनां परस्परसंयोगं प्रतिषेधाम इति ॥ ५ ॥

तत्र शरीरं द्विविधं योनिजमयोनिजं च ॥ ५ ॥

(उप०) पार्थिवं शरीरं विभजते—तत्रेति । तत्र पार्थिवाप्यादिशरीरेषु मध्ये पार्थिवं शरीरं द्विविधम् । के ते द्वे विधे इत्यत्राह—योनिजमयोनिजं चेति । आप्यतैजसवायवीयशरीराणां वरुणादित्यवायुलोकेषु प्रसिद्धानामयोनिजत्वमेव । अयोनिजत्वं शुक्रशोणितसन्निपातानपेक्षत्वम् । अयोनिजं च देवानामृषीणां च । श्रूयते हि ब्रह्मणो मानसा मन्वादयः इति । कारणमन्तरेण कथं कार्यमिति चेत् योनेः शरीरत्वावच्छेदेनाकारणत्वात् उष्मजकृमिमशकादिशरीरे व्यभिचारात् संस्थानविशेषत्वस्य चासिद्धेः देवर्षिशरीरापेक्षयाऽस्मदादिशरीराणामन्यादृशत्वात् । योनिजमपि द्विविधं जरायुजमण्डजं च । जरायुजं मानुषपशुमृगाणां गर्भाशयस्य जरायुत्वात् । पक्षिसरीसृपाणामण्डजम् परितः सर्पणशीलत्वात् । सर्पकीटमत्स्यादयोऽपि सरीसृपा एव । यद्यपि वृक्षादयोऽपि शरीरभेदा एव भोगाधिष्ठानत्वात् । न खलु भोगाधिष्ठानत्वमन्तरेण जीवनमरणस्वप्नजागरणभेषजप्रयोगबीजसजातीयानुबन्धानुकूलोपगमप्रतिकूलापगमादयः संभवन्ति । वृद्धिक्षतभग्नसंरोहणे च भोगोपपादके स्फुटे एव । आगमोऽप्यस्ति—'नर्मदातीरसंभूताः सरलार्जुनपादपाः । नर्मदातोयसंस्पर्शात् ते यान्ति परमां गतिम् ॥' इत्यादिः । 'श्मशाने जायते वृक्षः कङ्कगृध्रादिसेवितः' इत्यादिश्च । तथापि चेष्टावत्त्वमिन्द्रियवत्त्वं च नोद्भिदां स्फुटतरमतो न शरीरव्यवहारः ॥ ५ ॥

( विवृ० ) पार्थिवं शरीरं विभजते—तत्रेति । योनिजमपि द्विविधं जरायुजमण्डजं च । जरायुजं मनुष्यपश्वादीनाम् अण्डजं पक्षिसर्पादीनाम् । अयोनिजं स्वेदजोद्भिज्जादिकम् स्वेदजं दंशमशकादीनाम्, उद्भिज्जं तरुगुल्मादीनाम् । मानसं च शरीरं सप्तर्षीणाम् । मन्वादीनां च तैजसमेव नतु पार्थिवम् । वृक्षादीनां शरीरत्वे मानं च 'शरीरजैः कर्मदोषैर्याति स्थावरतां नरः' इति मनुवचनम् । 'गुरुं त्वंकृत्य हुंकृत्य विप्रं निर्जित्य वादतः । श्मशाने जायते वृक्षः कङ्कगृध्रादिसेवितः ॥' इत्यादिवचनं चेति संक्षेपः ॥ ५ ॥

(भाष्यम्) योनिरुत्पत्तिस्थानविशेषस्ततो जातं योनिजं, विपर्ययादयोनिजमिति । तत्राप्यादिशरीरमयोनिजमेव । पार्थिवंतु योनिजमयोनिजं चेति द्विविधं भवति । योनिजं खल्वपि जरायुजस्वेदजाण्डजोद्भि-

ज्ञभेदाच्चतुर्विधम् । सेयं चतुर्विधा नियतोत्पत्तिस्थली योनिरित्याख्यायते। एताभ्यः खलु येषामुत्पत्तिस्ते भवन्ति योनिजाः ॥ ६ ॥

अनियतदिग्देशपूर्वकत्वात् ॥ ६ ॥

( उप० ) अयोनिजशरीरोत्पत्तिकारणमाह—अनियतेति । अनियतदिग्देशाः परमाणवो धर्मविशेषजनितकर्माणस्तत्पूर्वकत्वादयोनिजशरीराणाम् ॥ ६ ॥

( विवृ० ) ननु मन्वादीनामयोनिजं शरीरं कथमुत्पद्यते शुक्रशोणितारम्भकपरमाणूनामेव विशिष्टशरीरारम्भकत्वेन तत्र तदभावादित्याशङ्कायामाह—अनियतेति । अनियतौ दिग्देशौ येषां ते अनियतदिग्देशाः परमाणवस्तत्पूर्वकत्वात् तदधीनत्वात्, 'सन्त्ययोनिजाः' इति दशमसूत्रेण पञ्चम्यन्तानां चतुर्णां सूत्राणामन्वयः । तथाच वरुणलोकादौ अयोनिजा आप्या तैजसा वायवीया मानसाश्च देहाः सन्ति । तेषां शुक्रशोणिताद्यनपेक्षोत्पत्तिकानामारम्भकाः परमाणवः कुत आगच्छन्ति योनिजेषु शुक्रशोणितपरमाणव एवारम्भका दृष्टा इत्याशङ्कानिरासार्थमुक्तमिदम् । पार्थिवा जलीया तैजसा वायवीयाश्च परमाणवः सर्वासु दिक्षु सर्वेषु देशेषु च सन्ति । तेषां दिग्देशनियमाभावात् अयोनिजशरीरोत्पत्तौ न परमाणुदुर्भिक्षम् । नहि शुक्रशोणितपरमाणुभिन्ना परमाणवो न देहारम्भका. दंशमशकतरुगुल्मादिदेहानुत्पत्तिप्रसङ्गादित्यर्थः ॥ ६ ॥

(भाष्यम् ) अथापि खल्वाभ्योऽन्याप्यस्त्युत्पत्तिस्थली ? अस्ति चायोनिजं शरीरमिति। कुत एतत्प्रतिपत्तव्यम्—*अनियतदिग्देशपूर्वकत्वात् । नियतदिग्देशपूर्विका खलु जरायुजादीनामुत्पत्तिरयोनिजानां तु अनियतदिग्देशपूर्विकोत्पत्तिरिति । मरीच्यादय. खल्वात्मभुवो मानसाः पुत्राः और्वश्चोरुज इत्येतेषां न नियता दिगस्त्युत्पत्तौ न नियतो देशः । सेयमनियतदिग्देशपूर्वकोत्पत्तिस्थली अयोनिरित्युच्यते ॥ ७ ॥

धर्मविशेषाच्च ॥ ७ ॥

( उप० ) ननु परमाणूनां कर्म विना कथं द्रव्यासमवायिकारणं संयोग कथं वा संयोगमन्तरेण द्रव्योत्पत्तिरत आह—धर्मेति । अदृष्टवदात्मसंयोगादेव सर्गादौ परमाणूनां कर्म तेन च कर्मणा संभूय परमाणवो द्व्यणुकादिप्रक्रमेण अयोनिजं देवर्षीणां शरीरमारभन्ते इत्यर्थः । उपलक्षणं चैतत् अधर्मविशेषाच्चक्षुद्रजन्तूनामुष्मजानां मशकादीनां यातनामयानि शरीराण्युत्पद्यन्ते इत्यपि द्रष्टव्यम् ॥ ७ ॥

(विवृ०) नन्वयोनिजशरीरारम्भकपरमाणूनां द्व्यणुकारम्भकसंयोगेषु असमवायिकारणानां तादृशपरमाणुकर्मणां कथमुत्पत्तिस्तदसमवायिकारणस्याभावादत आह—धर्मेति । धर्मविशेषात् सृज्यमानप्राणिनां पुण्यविशेषादेव तेषामयोनिजानि शरीराण्युत्पद्यन्ते, तादृशादृष्टवदात्मसंयोगेन परमाणूनां क्रिया भवन्ति, ततः परमाणूनां द्व्यणुकारम्भकाः संयोगा जायन्ते, ततो द्व्यणुकादिक्रमेणायोनिजानि शरीराण्युत्पद्यन्ते इत्यर्थः ॥७॥

(भाष्यम्)*धर्मविशेषाच्च । योगसमाधिजाद्धर्मविशेषादयोनिजशरीराण्युत्पद्यन्ते । योगी खल्विच्छया कायव्यूहं निर्मिमीते इति ॥ ८ ॥

## समाख्याभावाच्च ॥ ८ ॥

(उप०) देवर्षीणामयोनिजे शरीरे प्रमाणान्तरमाह—समेति । समाख्या अन्वर्था संज्ञा श्रुतिस्मृतीतिहासपुराणादिषु प्रसिद्धा । तथाहि दुर्वासःप्रभृतयो मानसाः अहङ्कारेभ्यः समभवदङ्गिरा इत्यादिका, तयाऽपि ज्ञायते सन्त्ययोनिजानि शरीराणि देवर्षीणामिति ॥ ८ ॥

(विवृ०) नन्वयोनिजशरीराणां संज्ञा कथं भवति पित्रादीनामभावात् । अनुभूयन्ते हि लोके चैत्रमैत्रादिसंज्ञाः पित्रादिनिवेशिता इत्याशङ्कायामाह—समेति । समाख्या संज्ञा तस्या भावात् सत्त्वात् बीजिपित्रादिकं विनैवेति शेषः । नहि सर्वाः संज्ञाः पित्रादिनैव निवेशिता घटापटादिसंज्ञानां तथात्वाभावात् । तथाच येनेश्वरेण घटपटाद्यचेतनेषु संज्ञा निवेशितास्तेनैव मनुमरीच्यादिसंज्ञा अयोनिजेषु शरीरेषु निवेशिता इति भावः ॥ ८ ॥

(भाष्यम्) यः खलु प्रजापतेर्मनसः प्रादुर्भूतः स दुर्वासाः, यश्चोरुतः सोऽयमौर्वः । या चेयं नारायणस्योरुदेशादुत्पन्ना, सेयमुर्वशी । भृगुर्भर्जनात्, अङ्गिरा अङ्गारात्, तत्रैव योऽयमर्चिषि जातस्तृतीयः सोऽयमत्रिरित्येवमादिका समाख्या भवति । समाख्याभावाच्च प्रतिपद्यामहे अस्त्यन्या उत्पत्तिस्थली, अस्ति चायोनिजं शरीरमिति । या चेयं जराय्वादिभ्योऽन्या उत्पत्तिस्थली, तस्याः खल्वयोनिरिति समाख्या भवति, न त्वेतस्याः पञ्चमी योनिरिति समाख्या भवतीति ॥ ९ ॥

## संज्ञाया आदित्वात् ॥ ९ ॥

(उप०) प्रमाणान्तरमाह—संज्ञयेति । सर्गादौ या ब्रह्मादिसंज्ञा आदिभूता प्राथमिकी तया ज्ञायते अस्त्ययोनिजं शरीरमिति । नहि तदा ब्रह्मणो मातापितरौ स्तः याभ्यां ब्रह्मादिसंज्ञा कृता स्यादिति भावः ॥ ९ ॥

(विवृ०) ननु ईश्वरे प्रमाणाभावात् कथं घटपटादिसंज्ञानां तत्कृतत्वमित्यत आह–संज्ञाया इति। संज्ञाया आदित्वात् कारणत्वात् ईश्वरस्येति शेषः। तथाच 'संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम्' इतिसूत्रेण संज्ञाकर्तृत्वेनेश्वरसिद्धेरुक्तत्वादीश्वरस्य संज्ञाकर्तृत्वं निराबाधमेवेति भावः॥ ९ ॥

(भाष्यम्) कुत एतत्–*संज्ञाया आदित्वात्। आदिः खल्वेषा संज्ञा, न त्वधुना क्रियते इति न तत्र पर्यनुयोग.। या चादिभूता स्वयंभ्वादिसंज्ञा, तया ज्ञायते अस्त्ययोनिजं शरीरमिति। न वै स्वयंभूर्जरायुजो न स्वेदजो नाण्डजो नोद्भिज्ज इति॥ १० ॥

**सन्त्ययोनिजाः॥ १० ॥**

(उप०) उपसंहरति–सन्तीति। शरीरविशेषा इति शेष॥ १० ॥

(विवृ०) इदानी चतुर्णामुक्तानां सूत्राणां साध्यं निर्दिशति–सन्तीति। मनुमरीच्यादीनां देहविशेषा इति शेषः॥ १० ॥

(भाष्यम्) तस्मात्–*सन्त्ययोनिजाः। मरीच्यादयः। अयोनिजाना सद्भावे उक्ते अयोने सद्भावमुक्तं मन्यते सूत्रकारः। न वै खल्वेतैरेव हेतुभिर्ज्ञायते सन्त्ययोनिजा इति॥ ११ ॥

**वेदलिङ्गाच्च॥ ११ ॥**

(उप०) उपसंहृतेऽतिदार्ढ्यार्थं प्रमाणान्तरमाह–वेदेति। वेदो मन्त्रः स च लिङ्ग्यते ज्ञाप्यतेऽनेनेति वेदलिङ्गं ब्राह्मणम्। ततोऽप्ययोनिजं शरीरं प्रतिपद्यते इत्यर्थः। तथाहि ब्राह्मणम् 'प्रजापतिः प्रजा अनेका असृजत् स तपोऽप्यत प्रजाः सृजेयमिति स मुखतो ब्राह्मणमसृजत्, बाहुभ्या राजन्यमूरुभ्यां वैश्यं पद्भ्यां शूद्रम्' इति। वेदोऽपि 'ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत' इत्यादिः। तदेवं योनिजमयोनिजं च पार्थिवशरीरमुक्तम्। आप्यं तैजसं वायवीयं चायोनिजमेव, शुक्रशोणितयोर्नियमेन पार्थिवत्वात्। पार्थिवेन च पाथसीयानारम्भात्। इन्द्रियं तु पार्थिवं घ्राणं सर्वप्राणभृत्साधारणं जलाद्यनभिभूतैः पार्थिवभागैरारब्धं घ्राणम्, घ्राणं पार्थिवं रसाद्यव्यञ्जकत्वे सति गन्धव्यञ्जकत्वान्मृगमदगन्धाभिव्यञ्जककुङ्कुटोच्चारवत्। एवं रसनमाप्यं रूपाद्यव्यञ्जकत्वे सति रसस्यैव व्यञ्जकत्वात्सक्तुरसाभिव्यञ्जकसलिलवत्। एवं चक्षुस्तैजसं रसाद्यव्यञ्जकत्वे सति रूपस्यैव

व्यञ्जकत्वादालोकवत् । त्वगिन्द्रियं वायवीयं गन्धाद्यव्यञ्जकत्वे सति स्पर्शस्यैव व्यञ्जकत्वात् । अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनवातवत् । विषयस्तु पार्थिवो मृत्पाषाणस्थावरलक्षणः तत्र भूप्रदेशाः प्राकारेष्टकादयो मृद्विकाराः । ग्रावमणिहीरकगैरिकादयः पाषाणाः । स्थावरास्तृणौषधिवृक्षगुल्मलतावतानवनस्पतयः । आप्यास्तु विषयाः सरित्समुद्रहिमकरकादयः । तैजसस्तु विषयो भौमदिव्योदर्याकरजभेदाच्चतुर्विधः । भौमं काष्ठेन्धनप्रभवम्, दिव्यमबिन्धनं विद्युदादि, उदर्यमन्नादिरसार्जनक्षमं जाठरम्, आकरजं च हिरण्यादि । वायवीयस्तु विषयः उपलभ्यमानस्पर्शाश्रयो वायुः, वायोश्चतुर्थः कार्यः प्राणोन्तःशरीरे रसमलधातूनां प्रेरणादिहेतुरेकः सन् क्रियाभेदादपानादिसंज्ञां लभत इति ॥ ११ ॥

इति श्रीशाङ्करे वैशेषिकसूत्रोपस्कारे चतुर्थाध्यायस्य द्वितीयमाह्निकम् ।

( विवृ० ) अयोनिजशरीरविशेषसत्त्वे वेदा अपि प्रमाणतामासादयन्तीत्याह—वेदेति । वेदरूपं यल्लिङ्गं ज्ञापकं तस्मात् तथा 'ब्राह्मणोऽस्य मुखमासीत् । स मुखतो ब्राह्मणमसृजत्' इत्यादिकेभ्यो वेदेभ्य एव अयोनिजाः शरीरविशेषाः सन्तीति ज्ञायते । परन्तु जलीयतैजसवायवीयशरीराणां पार्थिवभागोपष्टम्भादुपभोगसाधनत्वम् । पार्थिवमिन्द्रियं घ्राणं तच्च गन्धस्य गन्धगतजातीनां च ग्राहकम् । घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात् कुङ्कुमगन्धाभिव्यञ्जकघृतादिवत् । वायूपनीतसुरभिभागवद्वा । रसनेन्द्रियं जलीयं परकीयरूपाद्यव्यञ्जकत्वे सति परकीयरसव्यञ्जकत्वात् सक्तुरसाभिव्यञ्जकोदकवत् । एतच्च रसस्य तद्गतजातीनां च ग्राहकं द्रव्यग्रहणे घ्राणरसनयोर्न सामर्थ्यम् । चक्षुरिन्द्रियं तैजसं गन्धाद्यव्यञ्जकत्वे सतिरूपव्यञ्जकत्वात् दीपप्रभावत् । इदं च इन्द्रियं संयोगरूपसन्निकर्षेण उद्भूतरूपवन्ति महत्त्वविशिष्टानि च द्रव्याणि गृह्णाति । संयुक्तसमवायरूपसन्निकर्षेण तादृशद्रव्यवृत्तीनि रूपसंख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वापरत्ववेगस्नेहद्रवत्वकर्मसामान्यानि च गृह्णाति । संयुक्तसमवेतसमवायरूपसन्निकर्षेण योग्यवृत्तिवृत्तीनि सामान्यानि गृह्णाति । संयुक्तविशेषणतासंयुक्तसमवेतविशेषणतादिभिर्योग्यप्रतियोगिकान् संसर्गाभावान् योग्यगतान् अयोग्यप्रतियोगिकानप्यन्योन्याभावान् गृह्णाति । काणादनये समवायस्य प्रत्यक्षं न भवति । त्वगिन्द्रियं देहव्यापि उद्भूतस्पर्शग्राहकं तद्गतसामान्यग्राहकं च । एवं रूपभिन्नान् रूपमात्रगतसामान्यभिन्नांश्च चक्षुर्ग्राह्यान् गृह्णाति । वायुमपि गृह्णातीति नव्याः । सन्निकर्षस्तु पूर्ववत् ।

नदेतदिन्द्रियं वायवीयं रूपाद्यव्यञ्जकत्वे सति स्पर्शव्यञ्जकत्वात् अङ्गसङ्गिसलिलशैत्यव्यञ्जकव्यजनवातवदित्यादिरनुमानप्रकारः। सर्वेपूक्तानुमानेषु आत्ममनःप्रभृतिषु व्यभिचारवारणाय सत्यन्तम्। एवं सन्निकर्षे व्यभिचारवारणाय द्रव्यत्वे सतीति विशेषणं देयम्। कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमिन्द्रियम्। तच्च समवायेन शब्दान् समवेतसमवायेन तद्गतानि सामान्यानि च गृह्णाति। यदिन्द्रियं यद्ग्राहकं तत्प्रतियोगिकसंसर्गाभावानां तद्गतानामन्योन्याभावानां च ग्राहकमपि तदिन्द्रियं भवति। इति बाह्येन्द्रियाणि पञ्च। मनस्तु अन्तरिन्द्रियम्। तच्च संयोगेन आत्मानं विशेषगुणोपरक्तमेव गृह्णाति। संयुक्तसमवायेन बुद्धिसुखदुःखेच्छाद्वेषयत्नान् आत्मत्वजातिं च गृह्णाति। संयुक्तसमवेतसमवायेन बुद्ध्यादिगतानि सामान्यानि गृह्णातीत्यन्यत्र विस्तरः॥ ११॥

इति श्रीजयनारायणतर्कपञ्चाननभट्टाचार्यकृताया कणादसूत्रविवृतौ
चतुर्थाध्यायस्य द्वितीयमाह्निकम्।

(भाष्यम्) किंतु—*वेदलिङ्गाच्च। प्रजापतिः खल्वात्मनः शुक्रमग्नौ हुतवान्। ततोऽर्चिषि ज्वालायां भृगुरुत्पन्नः। व्यपगते त्वर्चिषि योऽयमङ्गारेपु जातः, सोऽङ्गिराः। यश्च तत्रैव जातस्तृतीयः, सोऽयमत्रिः। अथापि खलु प्रजापतिरात्मनो वपामुदक्खिदत्, तामग्नौ प्रागृह्णान्, ततोऽजस्तूपर उद्गादिति। ब्राह्मणः खल्वपि प्रजापतेर्मुखादुदपद्यत, क्षत्रियो बाह्वोरूर्वोर्वैश्यः, पद्भ्यां शूद्र इति। आचार्यप्रवृत्तिर्ज्ञापयति स्वेदजादयो योनिजा इति। महता खल्वसौ प्रयत्नेनायोनिजं शरीरं प्रतिपादयति, न त्वेतदनायासेन प्रतिपत्तुमर्हतीति मन्यते। सुकरा हि प्रतिपत्तिः स्वेदजादीनामिति। अथाप्येतदुक्तम्। 'द्विविधानीह भूतानि चराणि स्थावराणि च। त्रसानां त्रिविधा योनिरण्डस्वेदजरायुजा' इति। स्थावराणां खल्वेकैव योनिरिति न तत्र विभागापेक्षेति त्रसानामेव योनिविभागमभिधत्ते इति॥ १२॥

इति श्रीचन्द्रकान्तीये वैशेषिकभाष्ये चतुर्थस्याध्यायस्य द्वितीयाह्निकम्।

समाप्तश्चायं चतुर्थोऽध्यायः।

---

## पञ्चमाध्याये प्रथमाह्निकम्।

---

**आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म॥ १॥**

(उ०) कर्मपरीक्षा पञ्चमाध्यायार्थः। प्रयत्ननिष्पाद्यकर्मपरीक्षा प्रथ-

माह्निकार्थः । तत्राप्युत्क्षेपणप्रकरणम्, अप्रयत्नसिद्धोत्क्षेपणप्रकरणम्, पुण्यहेतुकर्मप्रकरणम्, पुण्यपापोदासीनकर्मप्रकरणं च । चेष्टाविशेषमधिकृत्याह—आत्मेति । संयोगश्च प्रयत्नश्च संयोगप्रयत्नौ आत्मनः संयोगप्रयत्नौ ताभ्यां हस्ते समवायिकारणे कर्म । तस्य च कर्मणः प्रयत्नवदात्मसंयोगोऽसमवायिकारणम्, प्रयत्नश्च निमित्तकारणम् । इयमेव चेष्टा, प्रयत्नवदात्मसंयोगासमवायिकारणकक्रियायाश्चेष्टात्वात् स्वासमवेतस्वातिरिक्तस्पर्शवदन्यजन्यप्रयत्नजन्यक्रियाया वा ॥ १ ॥

( विवृ० ) सरस्वती मम महती विवर्धतां
तथा मतिः स्फुरतु गभीरगाहिनी ।
कृपावती भवतु भवप्रिया सदा
ददातु नः शुभनिवहं भवोऽभवः ॥

कर्मपरीक्षामारभमाण आह—आत्मेति । आत्मनः संयोगेन प्रयत्नेन च शरीरे तदवयवे च चेष्टारूपं कर्म भवतीत्यर्थः । हस्ते इत्युपलक्षणम् । अत्र चेष्टारूपकर्मणि शरीरतदवयवादिकं समवायिकारणम् । आत्मसंयोगोऽसमवायिकारणम्, प्रयत्नो निमित्तकारणम् । तदुक्तम्—'आत्मजन्या भवेदिच्छा इच्छाजन्या भवेत्कृतिः । कृतिजन्या भवेच्चेष्टा तज्जन्यैव क्रिया भवेत्' इति ॥ १ ॥

( भाष्यम् ) परीक्षितानि द्रव्याणि । अथ गुणेषु परीक्षणीयेषु शरीरोत्पत्तिमूलत्वादल्पत्वाच्च व्युत्क्रमेण कर्मैव तावत्परीक्ष्यते । तच्चोत्क्षेपणादीत्युत्क्षेपणमधिकृत्याह—*आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म । आत्मनः संयोगात् प्रयत्नाच्च हस्तस्योत्क्षेपणमुत्पद्यते । यतमानो हि हस्तमूर्ध्वं क्षिपति । न चैतदात्मसंयोगव्यतिरेकेण हस्ते जायते इति ॥ १ ॥

**तथा हस्तसंयोगाच्च मुसले कर्म ॥ २ ॥**

( उप० ) हस्तोत्क्षेपणमुक्त्वा तदधीनं मुसलोत्क्षेपणमाह—तथेति । चकारेण गुरुत्वं निमित्तकारणान्तरं समुच्चिनोति । तादृशमुत्क्षेपणरूपमेवेत्यर्थः । यद्वा तथाहस्तसंयोगादुत्क्षेपणवद्धस्तसंयोगादित्यर्थः । अत्र च प्रयत्नवदात्मसंयुक्तेन हस्तेन मुसलस्य संयोगोऽसमवायिकारणम्, मुसलं समवायिकारणम्, प्रयत्नगुरुत्वे निमित्तकारणे ॥ २ ॥

( विवृ० ) चेष्टाजन्यां क्रियामाह—तथेति । तथाहस्तसंयोगात्प्रयत्नवदात्मसंयुक्तचेष्टावद्धस्तसंयोगान्मुषले कर्म भवतीति शेषः । चकारेणानुक्तस्य

गुरुत्वादेः संग्रहः। तथाच मुषलकर्मणि मुषलं समवायिकारणम्, तादृशहस्तसंयोगोऽसमवायिकारणम्, आत्मप्रयत्नहस्तचेष्टादीनि निमित्तकारणानीत्यर्थः ॥ २ ॥

( भाष्यम् ) गुरुत्वाच्चेति चार्थः। उत्क्षेपणवता हस्तेन संयोगाद्गुरुत्वाच्च मुषलस्योत्क्षेपणमुत्पद्यते। उत्क्षेपणवद्धस्तसंयोगात् खलु मुषले संस्कार आधीयते। ततो ह्येतस्योत्क्षेपणं भवति। प्रयत्नेन खल्वयं हस्तेन मुषलमुत्क्षिपतीति ॥ २ ॥

**अभिघातजे मुसलादौ कर्मणि व्यतिरेकादकारणं हस्तसंयोगः ॥३॥**

( उप० ) उदूखलाभिहतस्य[1] मुसलस्याकस्माद्यदुत्पतनं जायते तत्र कारणमाह–अभिघातज इति। अत्र यद्यपि मुसलेन उत्पतता हस्तस्य संयोगोऽप्यस्ति तथाऽपि स संयोगोऽन्यथासिद्धः किंतु उदूखलाभिघात एव असमवायिकारणम्। कुत एवमित्यत आह व्यतिरेकादिति। प्रयत्नस्य व्यभिचारादित्यर्थः। यदि तदा प्रयत्नः स्यान्मुसलस्यैवाकस्मिकमुत्पतनं न भवेत्, विधारकेण प्रयत्नेन मुषलस्य धारणमेव भवेत्, चेष्टाधीनं मुसलस्य पुनरुत्पतनं वा भवेदिति भावः ॥ ३ ॥

( विवृ० ) हस्तचेष्टादिकं विनाऽपि मुषले उत्पतनाख्यं कर्म भवतीत्याह–अभिघातज इति। उदूखलाद्यभिघातजन्ये मुषलस्योत्पनाख्ये कर्मणि हस्तसंयोगोऽकारणं नासमवायिकारणम्। संयोग इत्युपलक्षणम्। प्रयत्नश्चेष्टा च न निमित्तकारणमित्यपि बोध्यम्। अत्र हेतुमाह व्यतिरेकादिति। विलक्षणहस्तसंयोगप्रयत्नचेष्टाव्यतिरेकेऽपि जायमानत्वात्। दृढतरहस्तसंयोगप्रयत्नविशेषविलक्षणहस्तचेष्टानां सत्त्वे प्रत्युत मुषलस्योत्पतनमेव न भवतीति तेषां प्रतिबन्धकत्वमेव नतु कारणत्वं प्रयत्नजन्यं मुषलस्योदूखलादुत्पतनं तु आकस्मिकोत्पतनाद्विलक्षणमेवेति भाव. ॥ ३ ॥

( भाष्यम् ) यत्पुनरन्तरेण प्रयत्नमुदूखलादिष्वभिहतं मुषलादिकमकस्मादुत्पतति, तदेतस्मिन्–*अभिघातजे मुषलादौ कर्मणि व्यतिरेकादकारणं हस्तसंयोगः। न हस्तसंयोगः कारणम्। कस्मात्? व्यतिरेकात्। यदा वै पुरुष ऊर्ध्वमुत्तोलितं मुषलादिकमुदूखलादौ क्षिपन् त्यजति, तदाऽपि खल्वेतदुदूखलाभिहतं उत्पततीत्यभिघातस्तत्र निमित्तं न हस्तसंयोगो न खल्वपि प्रयत्न इति ॥ ३ ॥

---

१ अभिभूतस्येति बाँ. रा. सो. पाठः।

## तथात्मसंयोगो हस्तकर्मणि ॥ ४ ॥

( उप० ) मुषलेन सहोत्पततो हस्तस्य कर्मणि कारणविशेषमभिधातुं प्रयत्नवदात्मसंयोगस्यासमवायिकारणत्वं निराकर्तुमाह—तथेति । मुसलेन सहोत्पततो हस्तस्य कर्मणि आत्मसंयोगः प्रयत्नवदात्मसंयोगस्तथा अकारणमित्यर्थः । अकारणमिति पूर्वसूत्रस्थं तथेत्यतिदिश्यते ॥ ४ ॥

( विवृ० ) उदूखलाभिहतमुषलेन सह हस्तस्य यदाकस्मिकमुत्पतनं तत्र प्रयत्नवदात्मसंयोगो न कारणमित्याह—तथात्मेति । हस्तकर्मणि उदूखलप्रतिहतमुषलसंयुक्तस्य हस्तस्य उत्पतनाख्ये कर्मणि आत्मसंयोगः प्रयत्नवदात्मसंयोगस्तथा नासमवायिकारणमित्यर्थः । तथाशब्देन पूर्वसूत्रे प्रक्रान्तस्य अकारणस्य परामर्शात् । इदमुपलक्षणं प्रयत्नोऽपि नासाधारणनिमित्तमित्यपि बोध्यम् ॥ ४ ॥

( भाष्यम् ) तथोत्पतता मुषलेन संयुक्तो हस्तो यदुत्पतति, न तत्र प्रयत्नवदात्मसंयोग' कारणम् । कस्मात् ? व्यतिरेकात् ॥ ४ ॥

## अभिघातान्मुसलसंयोगाद्धस्ते कर्म ॥ ५ ॥

( उप० ) कुतस्तर्हि हस्ते तदोत्पतनमत आह—अभिघातादिति । यथा मुसले उत्पतति मुसलमुखस्थं लोहमुत्पतति तथा हस्तोऽपि तदोत्पतति । अत्राभिघातशब्देन अभिघातजनितः संस्कार उच्यते उपचारात्, उत्पततो मुसलस्य पटुतरेण कर्मणा अभिघातसहकृतेन स्वाश्रये मुसले संस्कारो जनितस्तत्कृतं संस्कारमपेक्ष्य हस्तमुसलसंयोगादसमवायिकारणाद्धस्तेऽप्युत्पतनं न तु तदुत्पतनं प्रयत्नवदात्मसंयोगासमवायिकारणम्, अवशो हि हस्तो मुसलेन सहोत्पततीति भावः ॥ ५ ॥

( विवृ० ) किं तर्हि तादृशकर्मकारणमित्यत आह—अभिघातादिति । अभिघातादिति प्रयोज्यत्वं पञ्चम्यर्थः । तच्च स्वजन्यमुषलगतवेगजन्यत्वम् । अन्वयश्चास्य कर्मणि । तथाच उदूखलाभिघातान्मुषले वेगो जायते । वेगवन्मुषलसंयोगाच्च हस्तेऽपि वेगो भवतीति तेन हस्तोत्पतनम् । एवं च वेगवन्मुषलसंयोगो वेगश्च द्वयमेव हस्तोत्पतनस्य कारणं नतु प्रयत्नस्तद्वदात्मसंयोगो वेति भावः ॥ ५ ॥

( भाष्यम् ) किंतु—*अभिघातान्मुषलसंयोगाद्धस्ते कर्म । उत्पतता मुषलेन संयुक्तस्य हस्तस्य मुषलमुखस्थलोहवद्यदुत्पतनं भवति, तत्खलु मु-

---

१ समुत्पतत इति बॉ. रा. आ सो. पाठ. ।

षलस्योदूखलाभिघातात् यः संस्कारस्तत्राधीयते तद्वता मुषलेन संयोगाद्धस्तेऽपि तदुत्पत्त्या उत्पद्यते। अवशो हि हस्तः सह मुषलेनोत्पततीति॥५॥

## आत्मकर्म हस्तसंयोगाच्च ॥ ६ ॥

( उप० ) ननु शरीरे शरीरावयवे वा यत्कर्मोत्पद्यते तत्र प्रयत्नवदात्मसंयोगः कारणं प्रकृते कथं न तथेत्यत आह—आत्मकर्मेति । आत्मशब्दः शरीरावयवपर उपचारात्। अन्वयानुपपत्तिरेवोपचारबीजम्। तथाचात्मनः शरीरावयवस्यापि हस्तस्य यत्कर्म तद्धस्तसंयोगाद्धस्तमुसलसंयोगात, चकाराच्च वेगसमुच्चयः। हस्तकर्मणि हस्तसंयोगस्तावदसमवायिकारणं तत्र व्यभिचारो नास्ति । स च क्वचित्प्रयत्नवदात्महस्तसंयोगः क्वचिद्वेगवन्मुसलादिहस्तसंयोगो यथा वातूलस्य शरीरावयवकर्मेति भावः ॥ ६ ॥

( विवृ० ) ननु शरीरतदवयवकर्मसु प्रयत्नवदात्मसंयोगस्यासमवायिकारणतानियमो भज्येतेत्यत आह—आत्मकर्मेति । आत्मशब्दस्यात्र चेष्टाश्रयोऽर्थः । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इति कोषात्। वर्ष्मपदमपि चेष्टावत्त्वेन शरीरतदवयवपरं, तथाच शरीरतदवयवकर्म प्रयत्नवदात्मसंयोगाद्वेगवद्द्रव्यसंयोगाच्च भवति । हस्तेन संयोगो हस्तस्य संयोगो वा हस्तसंयोगः । हस्तपदं चेष्टावत्परं चेष्टावद्वेगवद्द्रव्ययोः संयोग इति फलितार्थः। तथाच व्यभिचारादुक्तनियमोऽप्रामाणिक इति भावः ॥ ६ ॥

( भाष्यम् ) संस्काराच्चेति चार्थः । प्रक्रियाविशेषाद्वै वेगेनोत्पततो यन्त्रविशेषस्याधस्तात् दृढतरसंयुक्तहस्तः पुरुषोऽपि सह यन्त्रेणोत्पतति । तत्र खल्वात्मनि यदुत्पतनमुत्पद्यते, तदेतद्वेगवतोत्पतता यन्त्रेण हस्तस्य संयोगात्तदाहितसंस्काराच्चेति । एतेनाभिमन्त्रितकांस्यादिसंयुक्तहस्तस्यात्मकर्म व्याख्यातम् ॥ ६ ॥

## संयोगाभावे गुरुत्वात्पतनम् ॥ ७ ॥

( उप० ) प्रयत्नानधीनकर्मप्रकरणमारभते—संयोगाभाव इति । संयोगपदेन प्रतिबन्धकमात्रमुपलक्षयति । तेन प्रतिबन्धकाभावे गुरुत्वादसमवायिकारणात्पतनम् अधःसंयोगफलिका क्रिया जायते । तत्र गुरुत्ववति फलादौ प्रतिबन्धकः संयोगः विहङ्गमादौ तु विधारकः प्रयत्नः पतनप्रतिबन्धक. । काण्डादौ क्षिप्ते संस्कार एव पतनप्रतिबन्धकः । एतेषामभावे गुरुत्वाधीनं पतनमित्यर्थः । अभिध्यानादिना विषादेरन्तरिक्षस्थापने अदृष्टवदात्मसंयोगो मन्त्रादिरेव वा प्रतिबन्धकस्तेषामपि संयोगपदेन संग्रहः ॥ ७ ॥

( विवृ० ) प्रयत्नवदात्मसंयोगं विनाऽपि गुरुत्वहेतोः पतनाख्यकर्मणो निष्पत्तेर्नोक्तनियमः प्रामाणिक इत्याह—संयोगाभाव इति। वृक्षाद्युच्चदेशारूढस्य देहस्य अवलम्बनशाखादिभङ्गेन दैवात्स्खलनादिना वा यत्पतनं भवति तत्र गुरुत्वमेव कारणं, नतु प्रयत्नवदात्मसंयोगः तस्य पतनाप्रयोजकत्वात्कस्यचित्प्रतिबन्धकत्वाच्च। अत एव विहायसि विहरतां विहङ्गमादीनां प्रयत्नवदात्मसंयोगादेव प्रतिबन्धान्न पतनम्। एवं प्रयत्नवदीश्वरसंयोगात्प्रतिबन्धादेव भूरादिलोकानां न पतनम्। यत्र तु प्रतिबन्धकसंयोगादिकं नास्ति तत्र पतनकर्मणि गुरुत्वमसमवायिकारणं भवताऽपि स्वीकार्यमित्युक्तनियमे व्यभिचारः स्फुट एवेति भावः॥ ७॥

( भाष्यम् ) अत एव—*संस्काराभावे गुरुत्वात्पतनम्। दैवादन्तरिक्षे यन्त्रहस्तयोः संयोगस्योपरमे तेनैवात्मनः संस्कारो निवर्तते, अथ गुरुत्वात्पतनं भवति। यन्त्रस्य खल्वपि यावत्प्रक्रियाविशेषकारितः संस्कारोऽनुवर्तते तावत्तस्योत्पतनं भवति। संस्कारस्य त्वभावे गुरुत्वात् सहैव पुरुषेणैतत्पततीति॥ ७॥

**नोदनविशेषाभावान्नोर्ध्वं न तिर्यग्गमनम्॥ ८॥**

( उप० ) ननु गुरुत्वाद्यदि पतनं तदा लोष्टादेः क्षिप्तस्य क्वचिदूर्ध्वं क्वचिच्च तिर्यग्गमनं कथं भवेदित्यत आह—नोदनेति। गुरुत्ववतोऽपि लोष्टकाण्डादेर्यदूर्ध्वं तिर्यक् गमनं तन्नोदनविशेषात्तीव्रतरान्नोदनात्। तथाच फलपक्षिबाणादौ संयोगप्रयत्नसंस्काराभावे यत्पतनं तत्र नोदनविशेषो नास्ति तेन न तिर्यङ् वोर्ध्वं गमनमिति भावः॥ ८॥

( विवृ० ) ननु गुरुत्वस्यापि पतने कारणत्वं न संभवति गुरुत्ववतोऽपि लोष्टादेरुत्क्षिप्तस्योर्ध्वगमनदर्शनात्। एवं च वृक्षादितः स्खलितदेहादेः कथं लोष्टादिवत्तिर्यग्गमनमूर्ध्वगमनं वा न भवतीत्यत आह—नोदनेति। स्खलितस्य देहादेर्नोर्ध्वगमनं न वा तिर्यग्गमनम्। नोदनविशेषस्य बाणादेस्तिर्यग्गमनप्रयोजकसजातीयस्य लोष्टादेरूर्ध्वगमनप्रयोजकसजातीयस्य वा नोदनस्याभावात्। तथाचोर्ध्वगमनादिहेतुभूतस्य नोदनविशेषस्यासत्त्वात्तत्कार्यमूर्ध्वगमनादिकं न भवति, यत्र तु तादृशनोदनादिकं वर्तते भवत्येव तत्रोर्ध्वगमनादिकमिति भावः॥ ८॥

( भाष्यम् ) अथापि खल्वेतत्संस्काराभावात्पतति न पुनरूर्ध्वं न खल्वपि तिर्यग्गच्छति इति। कुत एतत्*—नोदनविशेषाभावान्नोर्ध्वं न तिर्य-

ग्गमनम् । नोदनः संयोगविशेषः । तद्विशेषो हेतुरूर्ध्वगमने, तद्विशेषश्च हेतुस्तिर्यग्गमने ॥ ८ ॥

**प्रयत्नविशेषान्नोदनविशेषः ॥ ९ ॥**

**नोदनविशेषादुदसनविशेषः ॥ १० ॥**

( उप० ) ननु नोदनविशेष एव कुत उत्पद्यते तत्राह-प्रयत्नेति। नोदनेति च। तिर्यक् ऊर्ध्वं दूरम् आसन्ने वा क्षिपामीतीच्छाकारणकः प्रयत्नविशेषः तज्जनितो नोदनविशेषस्ततो गुरुत्ववतो द्रव्यस्य लोष्टादेरूर्ध्वं तिर्यक् च गमनमुपपद्यते। उदसनं दूरोत्क्षेपणम् ॥ ९ ॥ १० ॥

( विवृ० ) ननु स्खलितदेहादौ नोदनविशेष एव कथं न जायते नोदनविशेषस्योर्ध्वगमनादौ हेतुत्वं वा कथमङ्गीक्रियते इत्याशङ्कायां सूत्रद्वयमुपतिष्ठते-प्रयत्नेति । नोदनेति च । प्रयत्नविशेषात् ऊर्ध्वमुत्क्षिपामीत्यादीच्छाजनिताद्विलक्षणप्रयत्नान्नोदनविशेषो जायते इति तादृशप्रयत्नाभावात्स्खलनादिस्थले न नोदनविशेष इत्यर्थः ॥ ९ ॥

( विवृ० ) नोदनविशेषात्पूर्वोक्तप्रयत्नजनितविजातीयनोदनात् उदसनमूर्ध्वोत्क्षेपणमूर्ध्वगमनं भवतीति शेषः । तथाचान्वयव्यतिरेकाभ्यां नोदनविशेषस्य ऊर्ध्वगमनहेतुत्वं सिध्यतीति। उदसनमित्युपलक्षणं तिर्यग्गमनादिकमपि बोध्यम् ॥ १० ॥

( भाष्यम् ) सोऽयम्-*प्रयत्नविशेषान्नोदनविशेषः।यथा खल्वयं प्रयतते तथैतत्संयुनक्ति ॥ ९ ॥

( भाष्यम् ) अथैतस्मात्-*नोदनविशेषादुदसनविशेषः । भवति उदसनमुपस(मुत्स)र्पणम् । तदेवं हेत्वभावान्नोर्ध्वं न खल्वपि तिर्यग्गमनं भवति, किंतु गुरुत्वात्पतनम् । गुरु खल्वाकृष्यते पृथिव्येति ॥ १० ॥

**हस्तकर्मणा दारककर्म व्याख्यातम् ॥ ११ ॥**

( उप० ) उदूखलाभिघातान्मुसलेन सह हस्ते यत्कर्म उत्पन्नं तत्तावन् प्रयत्नपूर्वकं न भवति । नापि पुण्यपापहेतुरतस्तत्तुल्यतां बालकस्य क्रीडया करचरणादिचालनं यत्तत्रातिदिशति-हस्तकर्मणेति । बालकस्य यद्यपि करचरणादिचालनं प्रयत्नपूर्वकमेव तथापि हिताहितप्राप्तिपरिहारफलकं न भवति न वा पुण्यपापहेतुरित्यतिदेशार्थः ॥ ११ ॥

( विवृ० ) ननु क्रोडस्थितस्य बालकस्य करचरणादिक्रिया तिर्यगूर्ध्वगमनरूपा कथमुत्पद्यते तत्कारणस्य नोदनविशेषस्य तत्रासत्त्वादित्यत

आह—हस्तकर्मणेति । लोष्टोत्क्षेपणकालीनेन हस्तकर्मणा उत्क्षेपणाद्यात्मकेन दारकस्य बालकस्य कर्म करचरणाद्युत्क्षेपणं व्याख्यातमुपपादितम् । तथाच उदसनमात्रे न नोदनविशेषो हेतुः किंतु उदसनविशेष एवेति न बालकस्य करचरणाद्युत्क्षेपणानुपपत्तिः । अन्यथा लोष्टाद्युत्क्षेप्तुः कराद्युत्क्षेपणानुपपत्तेरित्यर्थः ॥ ११ ॥

( भाष्यम् ) यथा खल्वभिघातान्मुषलसंयोगाद्धस्ते कर्म, तथाभ्यन्तरेण वेगवता वायुना संयोगात् दारकस्य करचरणादेः कर्म व्याख्यातम् । न त्वेतत्पुण्यपापयोर्हेतुरिति ॥ ११ ॥

**तथा दग्धस्य विस्फोटने ॥ १२ ॥**

( उप० ) इदानीं प्रयत्नपूर्वकेऽपि कर्मणि यत्र न पुण्यपापहेतुत्वं तत्र दारककर्मतुल्यतामतिदिशन्नाह—तथेति । आततायिना केनाप्यगारे दाह्यमाने तत्र दग्धस्य पुरुषस्य विस्फोटे वह्निकृते जाते सति तस्याततायिनो वधानुकूलेन प्रयत्नेन हस्तादौ यत्कर्म जनितं तन्न पुण्यहेतुर्न वा पापहेतुः । यथाहुः—'नाततायिवधे दोषो हन्तुर्भवति कश्चन । प्रकाशं वाऽप्रकाशं वा मन्युस्तं मन्युमृच्छति ॥ अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहा । क्षेत्रदारापहारी च षडेते आततायिनः ॥' ॥ १२ ॥

( विवृ० ) ऊर्ध्वमुत्क्षिपामीत्यादीच्छाजनितप्रयत्नविशेषानधीननोदनादपि कचिदुत्क्षेपणादिकं भवतीत्याह—तथेति । दग्धस्य शरीर ‥ ह फलादेर्विस्फोटने तदवयवानां तिर्यगूर्ध्वगमने तथा न प्रयत्नविशेषजनितनोदनं हेतुरित्यर्थः ॥ १२ ॥

( भाष्यम् ) दह्यमानस्य वस्तुनोंऽशविशेषस्य विस्फोटनाख्ये तिर्यगूर्ध्वगमनात्मके कर्मणि तथैव संयोगविशेषः संस्कारश्च हेतुः । सोऽयं संयोगविशेषो न प्रयत्नविशेषादुत्पद्यते किन्त्वग्निकारित इति ॥ १२ ॥

**यत्नाभावे प्रसुप्तस्य चलनम् ॥ १३ ॥**

( उप० ) इदानी यत्नं विना यानि कर्माणि भवन्ति तान्याह—यत्नाभावे इति । प्रसुप्तस्येति चैतन्याभावदशामुपलक्षयति तेन मूर्च्छितस्य जीवतोऽचैतन्येऽपि[1] वायुकृतं चलनं द्रष्टव्यमत्र ॥ १३ ॥

( विवृ० ) प्रयत्नानधीनं कर्मान्तरमपि दर्शयति—यत्नाभाव इति । ऊर्ध्वं क्षिपामीत्यादीच्छाजनितप्रयत्नाभावेऽपि प्रसुप्तस्य सुषुप्त्यवस्थान्वितस्य शरीरस्य चलनं तिर्यगूर्ध्वाङ्गचलनादिकर्म उत्पद्यते इत्यर्थः । तथाच प्रयत्नविशेषो न सर्वत्र हेतुरिति भावः ॥ १३ ॥

---

१ चैतन्यभाव ‥ मूर्च्छितस्य मृतस्य जीवतोऽपि चैतन्ये इति बाँ. रा सो. पुस्तके दृश्यते ।

( भाष्यम् ) प्रसुप्तस्य हस्तादीनां यच्चलनं भवति, तत्खलु यत्नस्याभावे वायुसंयोगादिति । एतेन मूर्च्छितस्य हस्तादिचलनं व्याख्यातम् ॥ १३ ॥

## तृणे कर्म वायुसंयोगात् ॥ १४ ॥

( उप० ) शरीरकर्माणि व्याख्याय तदितराण्याह–तृणे इति । तृणपदेन वृक्षगुल्मलताप्रतानादिकं सर्वमुपलक्षयति ॥ १४ ॥

( विवृ० ) अन्यान्यप्यतादृशानि कर्माणि दर्शयति–तृण इति । प्रयत्नविशेषाभावेऽपि वायुसंयोगात्तृणे कर्म उत्पद्यते । तृणपदमन्येषामप्युपलक्षकम् ॥ १४ ॥

( भाष्यम् ) वायुना नीयमाने तृणे यत्कर्मोत्पद्यते, चलता वायुना संयोगात्तदुत्पद्यते इति ॥ १४ ॥

## मणिगमनं सूच्यभिसर्पणमित्यदृष्टकारणकम् ॥ १५ ॥

( उप० ) अदृष्टाधीनं कर्म परिगणयन्नाह–मणिगमनमिति । मणिपदेन कांस्यादिकमुपलक्षयति । तेनाभिमन्त्रितं मणिकांस्यादि तस्कराभिमुखं यद्गच्छति तत्र गमने मण्यादि समवायिकारणम्, अदृष्टवत्तस्करात्ममणिसंयोगोऽसमवायिकारणम्, तस्करस्य पापं निमित्तकारणम् । सूच्यभिसर्पणमिति सूचीपदेन लौहमात्रं तृणं चोपलक्षयति तथाचायस्कान्ताभिमुखं यत्सूच्यादेर्गमनं तृणकान्ताभिमुखं यत्तृणस्य गमनं तत्र सूच्यादि समवायिकारणम्, यस्य हितमहितं वा तेन तृणसूच्यादिगमनेन तददृष्टवदात्मसंयोगोऽसमवायिकारणं तददृष्टमेव निमित्तकारणम् । एवमन्यदप्यूह्यम् । तद्यथा वह्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनं सर्गादौ परमाणुकर्मादि ॥ १५ ॥

( विवृ० ) प्रयत्नविशेषानधीनानि अदृष्टविशेषाधीनानि कर्माणि प्रदर्शयति–मणिगमनमिति । मणिपदेन जलपूर्णकाञ्चनादिमयपात्राण्यभिप्रेतानि । चौर्यधनलब्धये तादृशपात्रे मान्त्रिकैर्मन्त्रप्रयोगः क्रियते । तादृशपात्रं तु भूमौ तिष्ठति तदुपरि अपरेण केनचिद्दक्षिणहस्तः स्थाप्यते मन्त्रसामर्थ्यात्तत्पात्रं तादृशहस्तसहितमेव चौर्यधनावस्थानस्थानाभिमुखं गच्छति । तत्र स्थाने गत्वा स्थिरं भवतीति प्राचां किंवदन्ती । तादृशपात्रगमने न प्रयत्नविशेषो हेतुः किं तु पूर्वस्वामिनः सुकृतं चोरस्य दुष्कृतं वा निमित्तकारणम् । तादृशादृष्टवदात्मना तादृशपात्रस्य संयोगोऽसमवायिकारणम्, तादृशपात्रं तु समवायिकारणम् । एवमयस्कान्तसन्निधाने सति सूचीनां लोहशलाकानां यदयस्कान्ताभिमुखगमनं भवति तत्रापि अदृष्टमेव हेतुः ।

ननु कस्यादृष्टेन सूच्यादीनां गमनमिति चेत्तद्गमनेन यस्य हितमहितं वा भवति तददृष्टस्यैव तत्र हेतुत्वम् । सूचीत्युपलक्षणम्, अयस्कान्ताकृष्टलोहमात्रमभिप्रेतम् । तृणकान्तमण्याकृष्टानां तृणानां गमने वह्नेरूर्ध्वज्वलने वायोस्तिर्यग्गमने सर्गाद्यकालीनपरमाणुकर्मणि चादृष्टकारणकत्वमूहनीयमिति संक्षेपः ॥ १५ ॥

(भाष्यम्) यच्चैतत्तृणजातं तृणकान्तं मणिं गच्छति, यच्चायोऽयस्कान्तमुपसर्पति, तदेतददृष्टकारणं न तत्र दृष्टं कारणमस्तीति । किं पुनरत्रादृष्टम्? वस्तुशक्तिरेवैतादृशी यत्तेन तेन तत्तदाकृष्यते इति ॥ १५ ॥

**इषावयुगपत्संयोगविशेषाः कर्मान्यत्वे हेतुः ॥ १६ ॥**

(उप०) ननु शरविहङ्गमालातचक्रादीनामुपरमपर्यन्तमेकमेव कर्म नाना वेति संशये निर्णयहेतुमाह—इषाविति । इषाविति षष्ठ्यर्थे सप्तमी, इदमत्राकूतं वेगेन गच्छतां शरादीनां कुड्यादिसंयोगानन्तरं शरादौ सत्येव गत्युपरमो दृश्यते अत्राश्रयनाशस्तावन्न तन्नाशकः आश्रयस्य विद्यमानत्वाद्विरोधिगुणान्तरं च नोपलभ्यते तेन स्वजन्यः संयोग एव कर्मनाशक इत्युन्नीयते । स च संयोगश्चतुर्थक्षणे जातः पञ्चमक्षणे कर्म नाशयति । तथाहि कर्मोत्पत्तिरथ विभागः, अथ पूर्वसंयोगनाशः, उत्तरसंयोगः, कर्मनाशः, तेनायुगपत्संयोगविशेषाः कर्मनानात्वज्ञापका इत्यर्थः । संयोगविशेषा इति संयोगे विशेषः स्वजन्यत्वमेव अन्यथा संयोगमात्रस्य कर्मनाशकत्वे कर्म क्वचिदपि न तिष्ठेत् ॥ १६ ॥

( विवृ० ) विक्षिप्तशरादौ यत्कर्म जायते तच्छरपतनपर्यन्तमेकं नाना वेत्यत्राह—इषाविति । इषौ धनुर्मुक्तशरे अयुगपन्नानासमयोत्पन्ना ये संयोगविशेषा उत्तरसंयोगा जायन्ते त एव कर्मान्यत्वे शरगतकर्मणां नानात्वे हेतुरिति । एकवचनमार्षं हेतव इति विवक्षणीयम् । तथाच कर्मणः स्वजन्यस्वचतुर्थक्षणोत्पन्नोत्तरसंयोगनाश्यत्वनियमात्पञ्चमादिक्षणेष्ववस्थानासंभवेन शरस्याद्यगमनमारभ्य पतनपर्यन्तमेकस्य कर्मणोऽवस्थानासंभवात् भिन्नाभिन्नानि स्वस्वजन्योत्तरसंयोगनाश्यानि कर्माणि जायन्ते इत्यवश्यमङ्गीकार्यमिति भावः ॥ १६ ॥

( भाष्यम् ) अथापि खल्विषौ कार्मुकाद्विमुक्ते तरसा दूरं गच्छत्यनेकं कर्मेति । कुत एतत् प्रतिपत्तव्यम्? संयोगविशेषादित्याह—*इषावयुगपत्संयोगविशेषाः कर्मान्यत्वे हेतुः । यदेतदिषौ कर्मणामन्यत्वं भेदस्तत्र क्रमेण

भवन्तः संयोगविशेषा हेतुरिति । तदेतत्कृतभाष्यं कर्म कर्मसाध्यं न विद्यते इत्यत्र ॥ १६ ॥

**नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं च ॥ १७ ॥**

( उप० ) नोदननिष्पाद्यकर्मप्रकरणानन्तरं संस्कारनिष्पाद्यकर्मप्रकरणमारभते—नोदनादिति । पुरुषप्रयत्नेनाकृष्टया पतञ्जिकया नुन्नस्येषोराद्यं कर्म जायते तत्र नोदनमसमवायिकारणम्, इषुः समवायिकारणम्, प्रयत्नगुरुत्वे निमित्तकारणे । तेन चाद्येन कर्मणा समानाधिकरणो वेगाख्यः संस्कारो जन्यते । स च वेगेन गच्छतीति प्रत्यक्षप्रसिद्ध एव तेन संस्कारेण तत्रेषौ कर्म जायते तत्रासमवायिकारणं संस्कारः, समवायिकारणमिषुः, निमित्तकारणं तु तीव्रो नोदनविशेषः । एवं च यावदिषुपतनमनुवर्तमानेन संस्कारेण उत्तरोत्तरः कर्मसंतानो जायते स्वजन्योत्तरसंयोगेन कर्मणि नष्टे संस्कारेण कर्मान्तरजननादेक एव संस्कारः कर्मसंतानजनकः न तु कर्मसंतानवत्संस्कारसंतानोऽप्यभ्युपगन्तुमुचितो गौरवादिति दर्शयितुमाह—तथोत्तरमुत्तरं चेति, तत्कर्मकारितात्संस्कारादित्येकवचनं च । न्यायनये तु कर्मसंतानवत्संस्कारसंतानोऽप्यभ्युपगम्यते । तत्र नानासंस्कारस्वीकारे गौरवम् । यत्तु युगपत्प्रक्षिप्तशरयोरेकस्य तीव्रो वेगोऽपरस्य तु मन्दस्तत्र नोदनतीव्रत्वमन्दत्वे निमित्तम् ॥ १७ ॥

( विवृ० ) ननु विक्षिप्तशरादेराद्यं यत्कर्म तज्जनकस्य धनुषा नोदनस्य तेनैव कर्मणा स्वतृतीयक्षणे नाशोत्पादान्नोदनाभावेन पञ्चमादिक्षणे कथं कर्मान्तराण्युत्पत्स्यन्ते इत्यत आह—नोदनादिति । नोदनादाकृष्टया पतञ्जिकया सह इषोर्नोदनाख्यसंयोगात्, इषोः शरस्य, आद्यं प्राथमिकं कर्म गमनरूपम्, तत्कर्मकारिताच्च आद्यकर्मजनिताच्च, संस्काराद्वेगाख्यादुत्तरं द्वितीयम्, तथा तत्संस्कारात्, उत्तरमुत्तरं च तृतीयचतुर्थादिकं च कर्म जायते इत्यर्थः । तथाच प्राथमिके कर्मणि नोदनमसमवायिकारणम्, द्वितीयादौ तु वेग एवेति न द्वितीयादिकर्मोत्पादानुपपत्तिरिति भावः । अत्र पतनपर्यन्तमिषोरेक एव वेगो नतु नाना इति सूचयितुं संस्कारादित्येकवचनम्, उत्तरमित्यस्य द्विरभिधानं च । नहि कर्मसंतान इव वेगसंतानेऽपि किंचिन्मानमस्ति येन स स्वीकरणीय इति ॥ १७ ॥

( भाष्यम् ) तस्मात्—*नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्का-

रादुत्तरं तथोत्तरमुतरं च । आकृष्टया मौर्व्या नुन्नस्येषोः प्रथमं कर्मोत्पद्यते । कर्मणा संस्कारः तस्मात् द्वितीयं कर्म तथा तृतीयं चतुर्थमित्यादि यावत्कर्म वाच्यम् । एतेनालातभ्रमणं व्याख्यातम् ॥ १७ ॥

**संस्काराभावे गुरुत्वात्पतनम् ॥ १८ ॥**

( उप० ) ननु संस्कार एक एव चेत्कर्मसंतानजनकस्तदा कदाचिदपि शरपातो न स्यात्, कर्मजनकस्य संस्कारस्य सत्त्वादित्यत आह— संस्काराभाव इति । गुरुत्वं तावत्पतनकारणमनुवर्तमानमेव । तच्च गुरुत्वं संस्कारेण प्रतिरुद्धं पतनं नाजीजनत् । अथ प्रतिबन्धकाभावे तदेव गुरुत्वं पतनं करोतीत्यर्थः ॥ १८ ॥

इति श्रीशाकरे वैशेषिकसूत्रोपस्कारे पञ्चमाध्यायस्य प्रथमाह्निकम् ।

( विवृ० ) नन्वेवं शरश्चिरमेव गच्छेत्कदाचिदपि न पतेदित्यत आह— संस्काराभाव इति । संस्कारस्याद्यकर्मजनितस्य वेगस्य अभावे नाशे सति गुरुत्वात्कारणादेव पतनं शरादौ जायते इत्यर्थः । यादृशवेगविशेषो यावन्तं कालं तिष्ठति तावानेव कालोऽन्तिमक्षणावच्छिन्नस्तादृशं वेगं नाशयति, क्वचित्तु द्रव्यान्तरसंयोगोऽपि वेगनाशकः । तथाच प्रतिबन्धकस्य वेगस्य सत्त्वादेव पूर्वं शरादेर्न पतनं किंतु गतिसंतान एवाभूत्, उत्तरकालं तु गमनकर्मणः कारणविनाशान्न गमनं किंतु प्रतिबन्धकाभावात्पतनमेव भवतीति न किंचिदनुपपन्नम् ॥ १८ ॥

इति श्रीजयनारायणतर्कपञ्चाननकृतायां कणादसूत्रविवृतौ पञ्चमाध्यायस्य प्रथमाह्निकम् ।

( भाष्यम् ) एवं गच्छतः खल्विषोः—*संस्काराभावे गुरुत्वात्पतनम् । तदेतत्कृतभाष्यं पुरस्तादिति । सोऽयमेकः संस्कारः प्राथमिकेन कर्मणोत्पद्यते, ततः कर्मसंतानस्योत्पत्तिरिति । यावच्चासौ संस्कारो नोपरमति तावदिषुर्गच्छति । स चायं संस्कारः क्रमेण ह्रसतीत्युत्तरः कर्मसंतानः क्रमशो मन्दभावमापद्यते । संस्कारसंतानस्य चोत्पत्तौ नत्वेतदेवं भवतीति ॥१८॥

इति श्रीचन्द्रकान्तीये वैशेषिकभाष्ये पञ्चमस्याध्यायस्याद्यमाह्निकम् ।

---

## पञ्चमाध्याये द्वितीयाह्निकम् ।

**नोदनाभिघातात्संयुक्तसंयोगाच्च पृथिव्यां कर्म ॥ १ ॥**

( उप० ) नोदनादिनिष्पाद्यकर्मपरीक्षाप्रकरणम् । तत्राह—नोदनेति । नोदनं संयोगविशेष. येन संयोगेन जनितं कर्म संयोगिनोः परस्परं विभागहे-

तुर्न भवति यः संयोग. शब्दनिमित्तकारणं न भवति वा। यः संयोगः शब्द-निमित्तकारणं भवति यज्जनितं कर्म संयोगिनोः परस्परविभागहेतुश्च भवति स संयोगविशेषोऽभिघातः । ताभ्यामपि प्रत्येकं कर्म जन्यते । पङ्काख्यायां पृथिव्यां चरणेन नोदनाच्चरणाभिघाताच्च कर्म जायते तत्र पङ्कः समवायिकारणम्, नोदनाभिघातौ यथायथमसमवायिकारणम्, गुरुत्व-वेगप्रयत्ना यथासंभवं निमित्तकारणम् । संयुक्तसंयोगादिति नोदनादभिघाताद्वा पङ्के कर्म तत्पङ्कस्थिते घटादावपि तत्समकालमेव [ यत्कर्म तत्पादसंयुक्तपङ्कतत्संयोगादसमवायिकारणात् । संयुक्तसंयोगादित्युपलक्षणम् । संयुक्तसंयुक्तसंयोगादेवं संयोगान्तरप्रक्षेपादपि द्रष्टव्यम् । पङ्कस्थितघटतदुपरिस्थितशरावतन्निष्टविल्वफलादावपि पङ्ककर्मसमकालमेव ] कर्मदर्शनात् ॥१॥

( विवृ० ) नोदनाद्यधीनकर्मपरीक्षामारभते–नोदनेति । पृथिव्यां वंशादौ कदाचिद्वह्न्यादिनोदनात् कर्म जायते कदाचिच्च कुठाराद्यभिघातात् । एवं संयुक्तसंयोगाच्चलदश्वादिसंयुक्तरज्जुसंयोगाद्रथादौ कर्म जायते । तत्र प्रथमे वंशादिकर्मणि वह्न्यादिनोदनमसमवायिकारणम्, वंशादि. समवायिकारणम्, अदृष्टादिकं निमित्तकारणम् । द्वितीये कुठाराद्यभिघातोऽसमवायिकारणं तृतीयेऽश्वसंयुक्तरज्जुसंयोगोऽसमवायिकारणमिति ॥ १॥

( भाष्यम् ) वाय्वादिभिराभ्यन्तरवस्तूनां नोदनादभिघाताद्वा तेषु कर्मोत्पत्तिः, वाय्वादिभिः संयुक्तैश्चाभ्यन्तरैर्वस्तुभिः संयोगात्तु पृथिव्यां कर्मोत्पद्यते कम्पनाख्यम् । अशब्दपूर्वं खलु पृथिवी कम्पते विपर्ययेण चेति ॥ १ ॥

## तद्विशेषेणादृष्टकारितम् ॥ २ ॥

( उप० ) ननु भूकम्पादौ नोदनाभिघातावन्तरेण जायमाने किमसमवायिकारणमत आह–तदिति । तदिति पृथिवीकर्म परामृशति। पृथिव्यामेव-कर्म यदि विशेषेणातिशयेन भवति तदाऽदृष्टकारितम् । तेन भूकम्पेन यस्य दुःखं सुखं वा भवति अदृष्टवत्तदात्मसंयोगस्तत्रासमवायिकारणम्, भूः समवायिकारणम्, अदृष्टं निमित्तकारणम्, यद्वा तदिति नोदनाभिघातौ परामृशति विशेषो व्यतिरेकः । तथाच नोदनाभिघातव्यतिरेकेण यत्पृथिव्यां कर्म तददृष्टकारितमित्यर्थः ॥ २ ॥

( विवृ० ) नोदनादिव्यतिरेकेऽपि यद्भूकम्पादिकं जायते तत्र किमसमवायिकारणमित्याकाङ्क्षायामाह–तदिति । तेषां नोदनाभिघातसंयुक्तसं-

---

१ कुण्डलितो ग्रन्थः बॉ रा. आ. सो पुस्तक एव दृश्यते ।

योगानां विशेषेण व्यतिरेकेण जातं यद्भूकम्पादिकं कर्म तददृष्टकारितम् अदृष्टवदात्मसंयोगासमवायिकारणकमित्यर्थः । भूकम्पेन यस्य सुखं दुःखं वा भवति तददृष्टस्य तत्रासाधारणकारणत्वादिति भावः ॥ २ ॥

( भाष्यम् ) तच्चैतत्पृथिव्यां कर्म विशेषेणादृष्टैराभ्यन्तरैर्वस्तुभिश्चलद्भिः कार्यते । यद्वै खल्वन्यत् स्वाक्षं परितो भ्रमन्त्यां पृथिव्यां कर्मोत्पद्यते तद्वि-शेषेणादृष्टेन शक्तिविशेषेण कार्यते । वस्तुशक्तिरेवैतादृशी यदिदमित्थंभूतं भवति । सूर्यमण्डलाकृष्टा खल्वियमेवमनिशं भ्रमतीति ॥ २ ॥

## अपां संयोगाभावे गुरुत्वात्पतनम् ॥ ३ ॥

(उप०) इदानीं द्रवद्रव्यसमवेतकर्मपरीक्षाप्रकरणम्, तत्राह—अपामिति । अपां यत्पतनं वर्षणरूपं तद्गुरुत्वासमवायिकारणकम् । तत्संयोगस्य मेघसंयो-गस्याभावे सति भवति । तेन संयोगाभावस्तन्निमित्तकारणमित्यर्थः ॥ ३ ॥

( विवृ० ) जलादिकर्मपरीक्षामारभते—अपामिति । अपां धूमज्योतिः-सलिलमरुत्संघातात्मकमेघगतानां जलानां संयोगाभावे पतनप्रतिबन्धकसं-योगस्य नाशे सति गुरुत्वादसमवायिकारणात्पतनम् अधःसंयोगानुकूलं कर्म भवतीत्यर्थः ॥ ३ ॥

( भाष्यम् ) परीक्षितं पृथिव्याः कर्म । स्थानवतामिदानीमपां कर्म परीक्ष्यते । तासां खल्वासाम्—*अपां संयोगाभावे गुरुत्वात्पतनम् । मेघगतानामपां वायुसंयोगात्कर्मोत्पत्त्या मेघसंयोगस्योपरमे प्रतिबन्धाभा-वान् गुरुत्वात्पतनं भवति । तदेतद्वर्षणमुच्यते ॥ ३ ॥

## द्रवत्वात्स्यन्दनम् ॥ ४ ॥

( उप० ) तेषामेव वृष्टिबिन्दूनामन्योन्यसंयोगजनकं कर्म कथमत आह—द्रवत्वादिति । क्षितौ पतितानामपां बिन्दूनां परस्परसंयोगेन मह-ज्जलावयविस्रोतोरूपं यज्जायते तस्य यत्स्यन्दनं दूरसंसरणं तद्द्रवत्वादसम-वायिकारणादुत्पद्यते गुरुत्वान्निमित्तकारणादप्सु समवायिकारणेषु ॥ ४ ॥

( विवृ० ) ननु भूमौ पतितानां जलबिन्दूनां मिलनेन स्रोतोरूपेण यद्दूरदेशगमनरूपं स्यन्दनं जायते तत्र किमसमवायिकारणमित्याकाङ्क्षा-यामाह—द्रवत्वादिति । जलादीनां यत्स्यन्दनाख्यं कर्म तत्र द्रवत्वमेवास-मवायिकारणमित्यर्थः ॥ ४ ॥

( भाष्यम् ) पतितानां खल्वपाम्—*द्रवत्वात्स्यन्दनम् । द्रवाः खल्वापः पृथिव्यां पतिताः स्यन्दन्ते इति द्रवत्वं तत्र हेतुः ॥ ४ ॥

## नाड्यो वायुसंयोगादारोहणम् ॥ ५ ॥

( उप० ) ननु यदि भूमिष्ठानामपामूर्ध्वं गमनं भवति तदा गुरुत्वात्पतनं वर्षणं संभाव्यते। तदेव तु कुत इत्यत आह—नाड्य इति। कारयन्तीति शेषः। यदपामूर्ध्वमारोहणं तन्नाड्यः सूर्यरश्मयो वायुसंयोगात्कारयन्ति। ग्रीष्मे वाय्वभिहताः सूर्यरश्मय एव आरोहयन्त्यप इत्यर्थः। क्वचित् पाठो नाड्यवायुसंयोगादिति स च नाड्यो नाडीसंबन्धी यो वायुसंयोग इत्युपपादनीयः ॥ ५ ॥

( विवृ० ) ननु मेघसंपादकं जलानामूर्ध्वगमनं कथं भवतीत्यत आह—नाड्य इति। नाड्यः सूर्यखरकरा वायुसंयोगादारोहणमपामित्यनुवर्तते जनयन्तीति शेषः। वायुसंयुक्ताः ये तीक्ष्णाः सूर्यकरास्त एव भूमिगतानां जलानामूर्ध्वगमनं जनयन्तीत्यर्थः। नाड्यवायुसंयोगादिति पाठोऽपि क्वचिद्दृश्यते तत्र नाड्यः नाड्यां भवो यो वायुसंयोगः नाडीवाय्वोः संयोग इति यावत्। तस्मादपामारोहणं भवतीत्यर्थः ॥ ५ ॥

( भाष्यम् ) कुतः पुनरापोऽन्तरिक्षमारोहन्ति यतो मेघगतानामासा पतनरूपस्य वर्षणस्य निष्पत्तिरित्यत आह—*नाड्यवायुसंयोगादारोहणम्। योऽयं सूर्यरश्मिषु वायोः संयोगविशेषो भवति तासामूर्ध्वगमनहेतु', तस्मादपामन्तरिक्षारोहणं संपद्यते। अन्तरिक्षमारूढाः खल्वापो धूमेन ज्योतिषा वायुना च संसृज्यमानाः मेघभावमापद्यन्ते इति ॥ ५ ॥

## नोदनापीडनात्संयुक्तसंयोगाच्च ॥ ६ ॥

( उप० ) ननु सूर्यरश्मीनां कथमयं महिमा यद्भूमिष्ठा अप ऊर्ध्वं नयन्तीत्यत आह—नोदनेति। नोदनेन बलवद्वायुनोदनेन आपीडनादास्कन्दनात् वायुसंयुक्ता रश्मयस्तत्संयुक्ता आप ऊर्ध्वं धावन्ति यथा स्थालीस्था अपः क्वथ्यमानाः वायुनुन्नवह्निरश्मय ऊर्ध्वं नयन्ति। चकार इवार्थस्तत्र च उपमानं स्थालीस्था एवापो द्रष्टव्याः ॥ ६ ॥

( विवृ० ) ननु सूरकराणां कथमीदृशसामर्थ्यं तत्राह—नोदनेति। नोदनेन वेगवद्वायुनोदनेन आपीडनात् संबन्धात् तथाच वेगवद्वायुसंयोगादेव सूर्यकराणामूर्ध्वगमनसामर्थ्यम्, ननु सूर्यकरस्थो यो वायुसंयोगः स सूर्यकरस्यैवोर्ध्वगमनेऽसमवायिकारणं नतु जलानां व्यधिकरणत्वादत आह—संयुक्तसंयोगाच्चेति। वायुसंयुक्ताः ये सूर्यकरास्तत्संयोगादित्यर्थः। तथाच जलानामूर्ध्वगमने वायुसंयुक्तसूर्यकरसंयोग एवासमवायिकारणं सूर्यकरादिगतवायुसंयोगस्तु निमित्तकारणमिति न किंचिदनुपपन्नम् ॥ ६ ॥

( भाष्यम् ) कथं सूर्यरश्मिषु वायुसंयोगादाप ऊर्ध्वमारोहन्तीत्यत आह–*नोदनापीडनात्संयुक्तसंयोगाच्च । बलवता वायुना नोदनान्नाड्य आपीड्यन्ते ततस्तासामूर्ध्वगमनं भवति । तथाभूतवायुसंयुक्ताभिर्नाडीभिः संयोगादपामूर्ध्वमारोहणं संपद्यते । दृश्यते खल्वापः स्थालीस्थाः क्वथ्यमाना वायुनुन्नवह्न्यंशैः संसृज्यमाना ऊर्ध्वमारोहन्तीति ॥ ६ ॥

## वृक्षाभिसर्पणमित्यदृष्टकारितम् ॥ ७ ॥

( उप० ) ननु मूले सिक्तानामपां वृक्षाभ्यन्तरेणोर्ध्वगमनमस्ति । तत्र न नोदनाभिघातौ नवादित्यरश्मयः प्रभवन्ति तत्कथं तदित्यत्राह–वृक्षाभिसर्पणमिति । अभितः सर्पणमभिसर्पणं तदभिसर्पणं मूले निषिक्तानामपां वृक्षे तददृष्टकारितं पत्रकाण्डफलपुष्पादिवृद्धिकृतं सुखं दुःखं वा येषामात्मनामदृष्टवत्तदात्मसंयोगादसमवायिकारणाददृष्टान्निमित्तादप्सु समवायिकारणेषु तत्कर्म भवति येन कर्मणा आप उर्ध्वं गत्वा वृक्षं वर्धयन्तीत्यर्थः ॥ ७ ॥

( विवृ० ) ननु वृक्षादेर्मूलस्थानां कथं वृक्षाभ्यन्तरेणोर्ध्वगमनम्, उक्तहेतोस्तत्राभावादत आह–वृक्षाभिसर्पणमिति । वृक्षवर्धनेन यस्य सुखं दुःखं वा भवति अदृष्टवत्तदात्मसंयोग एव मूलस्थजलानां वृक्षाभ्यन्तरेणोर्ध्वगमनेऽसमवायिकारणं तादृशादृष्टं निमित्तकारणमित्यर्थः ॥ ७ ॥

( भाष्यम् ) वृक्षमूले निषिक्ताः खल्वापो वृक्षमभितः सर्पन्ति । ततो हि वृक्षस्य पुष्टिर्भवति । यच्चैतदपां वृक्षाभिसर्पणं तत्खल्वदृष्टेन शक्तिविशेषेण कार्यते । मूलमारभ्य यावदग्रं वृक्षनिविष्टः शिरासंतानः शक्तिविशेषादपां पार्थिवरसानां चाकर्षणं करोति । वृक्षः खल्वेवं जीवतीति ॥ ७ ॥

## अपां संघातो विलयनं च तेजःसंयोगात् ॥ ८ ॥

( उप० ) नन्वपां सांसिद्धिकद्रवत्वं लक्षणमुक्तं तादृशानामेवापामूर्ध्वमधस्तिर्यक् च गमनमुपपादितं हिमकरकादीनां च शैत्यादत्वमविवादसिद्धम्, तत्कथं तेषां संघातः काठिन्यम्, कथं च विलयनमित्यत आह–अपामिति । दिव्येन तेजसा प्रतिबन्धादाप्याः परमाणवो द्व्यणुकमारभमाणा द्व्यणुकेषु द्रवत्वं नारभन्ते ततो द्रवत्वशून्यैरवयवैर्द्व्यणुकादिप्रक्रमेण द्रवत्वशून्या हिमकरकादय आरभ्यन्ते तेन तेषां काठिन्यमुपलभ्यते । नन्वेवं हिमकरकादीनामाप्यत्वे किं प्रमाणमत उक्तं विलयनं च तेजःसंयोगादिति । तेजःसंयोगेन बलवता हिमकरकारम्भकपरमाणूनां क्रिया क्रियातो विभागस्तत आरम्भकसंयोगनाशपरंपरया हिमकरकादिमहावय-

विनाशस्तत्र द्रवत्वप्रतिबन्धकतेजःसंयोगविगमात्त एव परमाणवः द्व्यणुकेषु द्रवत्वमारभन्ते । ततो द्रवत्ववता हिमकरकादीनां विलयनं तत्र च बलवत्तेजोऽनुप्रवेशो निमित्तम् ॥ ८ ॥

( विवृ० ) ननु हिमकरकादीनां कथं प्रतिरुद्धद्रवत्वं कथं वा तद्विलयनमित्यत आह—अपामिति । अपां संघातः विलक्षणसंयोगो हिमकरकादिगतस्तेज संयोगाद् विलक्षणदिव्यतेजःसंयोगाद् भवति एवं विलयनं शिथिलाख्यसंयोगोऽपि तेजःसंयोगात्पूर्वोक्ततेजोभिन्नतेजःसंयोगाद्भवति, दिव्यतेजःसंयुक्तजलपरमाणुभ्यां यद्द्व्यणुकमारभ्यते तत्रानुद्भूतं द्रवत्वं जायते ऊष्मणा विलयनस्थले दिव्यतेजःसंयोगरहितत्वादेवोद्भूतद्रवत्वं द्व्यणुकादौ जायते, हिमकरकादौ काठिन्यप्रतीतिस्तु भ्रमरूपा कठिनस्पर्शस्य पृथिवीमात्रवृत्तित्वात् । हिमकरकादौ यदनुद्भूतद्रवत्वं तत्रादृष्टविशेषोऽपि हेतुरिति । केचित्तु हिमकरकादिस्थले दिव्यतेजःसंयोगेन प्रतिबन्धाद्द्रवत्वं नोत्पद्यत एवेत्याहुः ॥ ८ ॥

( भाष्यम् ) या चेयं करका पतति, सेयम्—*अपां संघातः। शैत्यातिशयेन संहन्यमानाः खल्वापो मेघगताः करकाभावमापद्यन्ते । प्रत्यक्षं खल्वपां संघातः शैत्यातिशयवशादुपजायमानो दृश्यते । हिमबिन्दूनां च तुषारभावेन घनीभावः । या चापां प्रक्रियाविशेषाद्घनीभावेन तुषारभावापत्तिः, साऽपि हिमर्तौ घृतादीनां घनीभाववच्छैत्यातिशयविशेषेणोष्मणोऽवजयादेव भवति । ऊष्मणश्चावजयात्करकादिषु शैत्यातिशयोपलब्धिरिति । तच्चैतत्प्रत्यक्षतः प्रतिपत्तुमर्हतीति मन्यते भगवान् सूत्रकारः । न त्वेतत्केनचिदपदिश्यते इति ॥ ८ ॥

( भाष्यम् ) यदि मेघगतानामपां शैत्यातिशयविशेषात्करकाभावः, कथमिदानीमपां धारासंपात इत्यत आह—*विलयनं च तेज.संयोगात् । तेजःसंयोगादपां विलयनं च भवतीति तेजःसंयोगेन शैत्यविशेषावजयाद्विलीनानामपां द्रवीभावः शैत्यातिशयविशेषेण तेजसोऽवजयाच्च करकाभाव इति । अथापि खल्वपां संघातो विलयनं च तेजःसंयोगात् । अप्सु दिव्यतेजःसंयोगेन द्रवत्वप्रतिरोधात्करकोत्पत्तिरितरतेजःसंयोगाद्विलयनमिति ॥ ९ ॥

**तत्र विस्फूर्जथुर्लिङ्गम् ॥ ९ ॥**

( उप० ) ननु बलवद्दिव्यतेजोऽनुप्रवेशस्तत्रेत्यत्र किं प्रमाणमित्यत आह—तत्रेति । तत्र दिव्यासु अप्सु दिव्यानां तेजसामनुप्रवेशे विस्फूर्जथुर्लिङ्गं वज्रनिर्घोष एव लिङ्गमित्यर्थः आत्यन्तिकविद्युत्प्रकाशस्तावत्प्रत्यक्ष

एव तदनुपदं च स्फूर्जथुः सोऽपि प्रत्यक्ष एव तेनानुमीयते यस्मान्मेघात्करकाः प्रादुर्भवन्ति तत्र दिव्यं तेजो विद्युद्रूपमनुप्रविष्टं तदुपष्टम्भेन करकारम्भिकाणामपां द्रव्यत्वप्रतिबन्ध इति ॥ ९ ॥

( विवृ० ) ननु जले दिव्यतेजःसंयोगे किं मानमित्यत्राह—तत्रेति । विस्फूर्जथुर्वज्रनिर्घोषः तत्र दिव्यतेजःसंयोगे लिङ्गम्, आदौ विद्युत्प्रकाशस्ततो विस्फूर्जथुस्तत्समकालमेव करकापतनं भवति अतो दिव्यतेजःसंयोगेन करका जाता इत्यनुमीयत इति, केचित्तु बलवद्दिव्यतेजसाऽनुद्भूतरूपवत्तेजोविशेषो यदा जलान्निःसार्यते तदैव जलस्य द्रवत्वं नश्यति तादृशतेजोविशेषस्तु हिमकरकादिभिन्नेषु जलेषु सर्वदैवास्ति अनुद्भूतरूपवत्त्वात्तु तस्य न प्रत्यक्षमित्याहुः ॥ ९ ॥

( भाष्यम् ) अथापि खल्वस्ति मेघेषु तेज इति कुत एतत्प्रतिपत्तव्यम्? लिङ्गादित्याह—*तत्र विस्फूर्जथुर्लिङ्गम् । मेघगतास्वप्सु तेजःसद्भावे वज्रनिर्घोषो लिङ्गम् ॥ १० ॥

## वैदिकं च ॥ १० ॥

( उप० ) अत्रैव प्रमाणान्तरमाह—वैदिकं चेति । अपा मध्ये तेजोऽनुप्रवेश आगमसिद्ध एवेत्यर्थः । तथाहि 'आपस्ता अग्नि गर्भमादधीरन्, 'या अग्नि गर्भं दधिरे सुवर्णम्' इत्यादि ॥ १० ॥

( विवृ० ) दिव्यतेजःसंयोगे प्रमाणान्तरं दर्शयति—वैदिकं चेति । वैदिकं च वाक्यं दिव्यतेजःसंयोगे लिङ्गं प्रमाणं तद्वाक्यं च 'आपस्ता अग्निं गर्भमादधीरन्" 'या अग्निं गर्भं दधिरे सुवर्णम्' इत्यादि ॥ १० ॥

( भाष्यम् ) न चैतावदेव लिङ्गं, किंतु—*वैदिकं च । 'आपस्ता अग्निं गर्भमादधीरन्' इति वैदिकमप्यस्ति लिङ्गमिति ॥ ११ ॥

## अपां संयोगाद्विभागाच्च स्तनयित्नोः ॥ ११ ॥

( उप० ) ननु विस्फुर्जथुः कथमुत्पद्यते संयोगविभागौ शब्दयोनी तौ च नानुभूयेते इत्यत आह—अपामिति । विस्फूर्जथुरिति शेषः । अद्भिः स्तनयित्नोः संयोगविभागौ निमित्तकारणीभूय स्तनयित्नोरेवाकाशेन संयोगादसमवायिकारणादाकाशे समवायिकारणे शब्दं गर्जितं जनयतः क्वचिच्च वायुबलाहकसंयोगविभागौ निमित्तकारणे बलाहकवियत्संयोगविभागावसमवायिकारणे, कर्मकारणाधिकारेऽपि प्रासङ्गिकमिदमुक्तम् । यद्वा मेघाकाशसंयोगे विभागे वा शब्दासमवायिकारणे कारणमपामेव नोदनाभिघातजनितं कर्मेति सूचितं कर्मण एवाधिकारप्राप्तत्वात् ॥ ११ ॥

( विवृ० ) ननु शब्दकारणस्याभिघातस्य विभागविशेषस्य चाननुभवाद्विस्फूर्जथुः कथमुत्पद्यते इत्यत्राह–अपामिति । अपां जलानां संयोगात् अर्थाद्वायुना अभिघातात्, स्तनयित्नोर्मेघाच्च विभागाद्विस्फूर्जथुर्भवतीत्यर्थः ॥ ११ ॥

(भाष्यम्) मेघगतास्वप्सु तेजःसंयोगाद्विस्फूर्ज्जथुरिति कुत. प्रतिपत्तिरित्यत आह–*अपां संयोगाद्विभागाच्च स्तनयित्नोः। तेजसा समं योऽयमपां संयोगस्तस्मात् स्तनयित्नोर्मेघाद्विभागाच्च विस्फूर्ज्जथुरुत्पद्यते । अद्भिः संयुक्तं स्तनयित्नोर्विभक्तं च तेज. सशब्दमधः पतति । प्रत्यक्षं खल्वेतदुपलभ्यते । तत्र योऽयं शब्दः स विस्फूर्ज्जथुराख्यायते । तत्संबन्धात्तेज.प्रतिपत्तिः । तेजश्चैतन्मेघगताभिः शैत्यविशेषात्संहताभिरद्भिः संसृज्यमानं तासां विलयन करोति, विलीनाश्चापो वृष्टिभावेन पतन्ति । तच्चैतदपां संहतानां विलयनहेतुस्तेजो न खल्वपि सर्वाभिः संहताभिर्मेघगताभिरद्भिः संसृज्यते इति न सर्वासां संहतानामपां विलयनं भवतीति । तुषारस्य च विलयने तेजोविविशेषसंयोगो हेतुरिति न बाह्यस्य तेजसः संयोगमात्रादसौ विलीयते । शैत्यविशेषेण तस्यावजयात् । सेयं वस्तुशक्तिर्न खल्वपि पर्यनुयोगमर्हतीति । परीक्षितमपां कर्म ॥ १२ ॥

**पृथिवीकर्मणा तेजःकर्म वायुकर्म च व्याख्यातम् ॥ १२ ॥**

( उप० ) भूकम्पं प्रत्यदृष्टवदात्मसंयोगः कारणमुक्तं तत्रैवाकस्मिकदिग्दाहहेतोस्तेजसः आकस्मिकवृक्षादिक्षोभहेतोश्च प्रभञ्जनस्य कर्म यत्संजायते तत्राप्यदृष्टवदात्मसंयोगोऽसमवायिकारणम्, वायुतेजसी समवायिकारणम्, अदृष्टं निमित्तकारणमित्यर्थः । कर्मशब्दस्य व्यावृत्तिर्महोल्कादिकर्मसूचनार्था ॥ १२ ॥

( विवृ० ) प्रसङ्गात्करकादिकमुक्त्वा पुनरदृष्टवदात्मसंयोगाधीनं कर्म प्रदर्शयति–पृथिवीति । भूकम्पादेरदृष्टविशेषाधीनत्वकथनेन दिग्दाहादिजनकस्य तेजःकर्मणः वृक्षादिक्षोभजनकस्य वायुकर्मणश्च अदृष्टाधीनत्वं व्याख्यातमित्यर्थः ॥ १२ ॥

( भाष्यम् ) तेजःप्रभृतीनां कर्मेदानी परीक्ष्यते–*पृथिवीकर्मणा तेजःकर्म वायुकर्म च व्याख्यातम् । तद्विशेषेणादृष्टकारितमिति यत्पृथिवीकर्म, तेन तेजसो वायोश्च कर्म व्याख्यातम् ॥ १३ ॥

**अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणूनां मनसश्चाद्यं कर्मादृष्टकारितम् ॥ १३ ॥**

( उप० ) अदृष्टवदात्मसंयोगासमवायिकारणकं कर्मान्तरमाह—अग्नेरिति। आद्यमिति सर्गाद्यकालीनमित्यर्थः। तदा नोदनाभिघातादीनामभावात् अदृष्टवदात्मसंयोग एव तत्रासमवायिकारणम् आद्यमूर्ध्वज्वलनम् आद्यं तिर्यक्पवनमिति इतरेषां ज्वलनपवनकर्मणां वेगासमवायिकारणकत्वमेव मन्तुमुचितं दृष्टे कारणे सत्यदृष्टकल्पनानवकाशात् ॥ १३ ॥

( विवृ० ) एतादृशं कर्मान्तरं दर्शयति—अग्नेरिति । पवनं गमनम् , आद्यमिति ज्वलनपवनयोरप्यन्वितम्, सर्गाद्यकालीनमिति तदर्थः । अदृष्टकारितमदृष्टवदात्मसंयोगासमवायिकारणकमित्यर्थः । तदानी कारणान्तरस्याभावादिति भावः ॥ १३ ॥

( भाष्यम् ) तदपि खल्वदृष्टेनैव शक्तिविशेषेण कार्यते इति—*अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणूनां मनसश्चाद्यं कर्मादृष्टकारितम् । यथा खल्वग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनं चादृष्टेन कार्यते, तथैवाणूनां । सूक्ष्माणां पृथिव्यादीनां मनसश्च यत्प्रथमं कर्म, तदप्यदृष्टेन कार्यते इति । अग्निवद्वायुवच्च सूक्ष्माणि पृथिव्यादीनि मनांसि चेत्थंभूतशक्तिमन्त्येव स्रष्ट्रा सृष्टानीति परमाणूनां खल्वप्याद्यं कर्म, यतो द्व्यणुकादिक्रमेणैते लोका बभूवुस्तच्चादृष्टेन स्रष्ट्रा कारितमिति । भोगसाधनं चैतत्सर्वं पुरुषस्येति पुरुषादृष्टेनाप्येतदुत्पत्तिनिमित्तमाद्यं कर्माणूनां कार्यते इति । एतेन मनस आद्यं कर्म व्याख्यातम् ॥ १४ ॥

**हस्तकर्मणा मनसः कर्म व्याख्यातम् ॥ १४ ॥**

( उप० ) अनाद्यं मनः कर्माधिकृत्याह—हस्तकर्मणेति । मुसलोत्क्षेपणादौ यथा प्रयत्नवदात्मसंयोगासमवायिकारणकं हस्तकर्म तथाऽभिमतविषयग्राहिणीन्द्रिये सन्निकर्षार्थं यन्मनसः कर्म तदपि प्रयत्नवदात्मसंयोगासमवायिकारणकमेव । यद्यपीन्द्रियं मनो न साक्षात्प्रयत्नविषयस्तथापि मनोवहनाडीगोचरेण प्रयत्नेन मनसि कर्मोत्पत्तिर्द्रष्टव्या, नाड्यास्तु त्वगिन्द्रियग्राह्यत्वमङ्गीकर्तव्यम्, अन्यथा प्राणवहनाडीगोचरेण प्रयत्नेनाशितपीताद्यभ्यवहरणमपि न संभवेत् ॥ १४ ॥

( विवृ० ) कर्मान्तरं दर्शयति—हस्तकर्मणेति । अनाद्यानि मनःकर्माणि प्रयत्नाधीनान्येव यथा मुषलाद्युत्क्षेपणादौ हस्तकर्माणि, मनसोऽतीन्द्रि-

यत्वेऽपि तद्वहनाड्यास्त्वगिन्द्रियग्राह्यत्वात् तद्गोचरप्रयत्नेन मनसः कर्म संभवति प्राणवहनाडीगोचरप्रयत्नेन प्राणादिक्रियाविशेषवत् ॥ १४ ॥

(भाष्यम्) अनाद्यं तु–* हस्तकर्मणा मनसः कर्म व्याख्यातम्। यथा खल्वयं पुरुष इच्छन्यतमानो हस्तं प्रेरयति, तथैव तेषु तेष्वभिमतेषु प्रदेशेषु इदानीं मनोऽपि प्रेरयतीति ॥ १५ ॥

**आत्मेन्द्रियमनोऽर्थसन्निकर्षात्सुखदुःखे॥ १५ ॥**

(उप०) ननु मनसि कर्म उत्पद्यत इत्यत्रैव न प्रमाणमत आह–आत्मेति। सुखदुःखे इत्युपलक्षणं ज्ञानप्रयत्नाद्यपि द्रष्टव्यम्। मनसो वैभवं पूर्वमेव निराकृतम्, अणुत्वं च साधितम्, युगपज्ज्ञानानुत्पत्तिश्च मनसो लिङ्गमित्युक्तं तेन तत्तदिन्द्रियप्रदेशेन मनःसंयोगमन्तरेण सुखदुःखे न स्यातामेव यदि मनसि कर्म न भवेत् न भवेच्च पादे मे सुखं शिरसि मे वेदनेत्याद्याकारोऽनुभव इत्यर्थः। यद्यपि मनःसन्निकर्षाधीनः सर्वोऽप्यात्मविशेषगुणस्तथापि सुखदुःखे तीव्रसंवेगितयाऽतिस्फुटत्वादुक्ते ॥ १५ ॥

(विवृ०) ननु मनसि कर्मोत्पादे किं मानमत आह–आत्मेति। आत्मेन्द्रियमनोऽर्थानां संनिकर्षात्सुखदुःखे भवतः तत्रात्मना मनसः संनिकर्ष इन्द्रियैश्च मनसः संनिकर्षः अर्थेन विषयेण सह इन्द्रियाणां संनिकर्षो विवक्षितः। तथाच मित्रं दृष्ट्वा सुखं वैरिणं दृष्ट्वा च दुःखं भवति तादृशदर्शनं च न चक्षुर्मनोयोगमात्ममनोयोगं चान्तरेण तादृशयोगोऽपि न मनःक्रियामन्तरेणेति सिद्धं मनसः कर्म। सुखदुःखे इत्युपलक्षणम्। आत्मविशेषगुणसामान्यं तु विवक्षितं सर्वत्रात्ममनःसंयोगस्यासमवायिकारणत्वादिति। 'चञ्चलं हि मनः कृष्ण प्रमाथिबलवद्दृढम्' इत्याद्यागमा अपि मनसः कर्मणि मानमिति ॥ १५ ॥

(भाष्यम्) अप्रत्यक्षं वै मनो ज्ञानायौगपद्यलिङ्गेनानुमीयते कर्म त्वस्य केन लिङ्गेनानुमातव्यम्? कार्यलिङ्गेनेत्याह–*आत्मेन्द्रियमनोऽर्थसन्निकर्षात्सुखदुःखे। आत्मा मनसा सन्निकृष्यते मन इन्द्रियेण इन्द्रियमर्थेन ततः सुखदुःखयोर्निष्पत्तिः। अभिमतं खल्वर्थं पश्यतः सुखं निष्पद्यते विपर्ययेण दुःखमिति। अणोर्वै मनसो न खल्वभिमतेनेन्द्रियेण सन्निकर्षोऽन्तरेण कर्म भवितुमर्हतीति मनसः कर्मणोऽनुमानमिति ॥ १६ ॥

**तदनारम्भ आत्मस्थे मनसि शरीरस्य दुःखाभावः स योगः॥१६॥**

(उप०) नन्वेवं यदि चपलं मनस्तदा चित्तनिरोधाभावाद्योगं विना

नात्मसाक्षात्कारो न वा तमन्तरेण मोक्ष इति शास्त्रारम्भवैफल्यमत आह–तदिति । विषयेष्वलंप्रत्ययवत उदासीनस्य बहिरिन्द्रियेभ्यो व्यावृत्तं मनो यदात्मस्थमात्ममात्रनिष्ठं भवति तदा तत्कर्मानुगुणप्रयत्नाभावात्कर्म मनसि नोत्पद्यते स्थिरतर मनो भवति स एव योगः चित्तनिरोधलक्षणत्वाद्योगस्य, तदनारम्भ इतिमनसः कर्मानारम्भ इत्यर्थः । यद्वा तत्पदेन सुखदुःखे एवाभिधीयेते प्रक्रान्तत्वात्, दुःखाभाव इति दुःखाभावसाधनत्वाद्योग एव दुःखाभावः 'अन्नं वै प्राणः' इतिवत् । यद्वा दुःखस्याभावो यत्रेति बहुव्रीहिः । शरीरस्येति शरीरावच्छिन्नस्यात्मनः, स योग इति प्रसिद्धिसिद्धतया तत्पदम्, अयं स योगः । यद्वात्मपदेनात्र प्राण उच्यते उपचारात्प्राणानुमेयत्वादात्मनः । तथाच प्राणवहनाड्यां कर्मणा प्राणकर्मापि जायते । यद्वा जीवनयोनियत्नवदात्मप्राणसंयोगासमवायिकारणकं प्राणकर्म, जीवनयोनिश्च यत्नोऽतीन्द्रियः प्राणसंचारानुमेयः कथमन्यथा सुषुप्त्यवस्थायामपि श्वासप्रश्वासगतागतमिति भावः ॥ १६ ॥

( विवृ० ) ननु मनश्चेच्चञ्चलस्वभावं तदा तस्य निरोधो न संभवति तथाच योगमन्तरेणात्मसाक्षात्कारस्यासंभवादपवर्गस्यासंभवेन मननशास्त्रं निष्प्रयोजनमापद्येतेत्याशङ्कायामाह–तदिति । आत्मस्थे मनसि षडङ्गयोगेन इन्द्रियादिकं परित्यज्य मनो यदा आत्ममात्रे तिष्ठति तदा तदनारम्भः तस्य मनःकर्मणः अनारम्भः अनुत्पादः, तदा मनो निश्चलं भवति, तदवस्थायां शरीरस्य दुःखाभावः शरीरावच्छेदेन दुःखं न जायते, स आत्मना बाह्यव्यावृत्तमनसः संयोगो योग उच्यते । 'वाताहतं तथाचित्तं तस्मात्तस्य न विश्वसेत् । अतोऽनेलं निरुन्धीत चित्तस्य स्थैर्यहेतवे ॥ मरुन्निरोधनार्थाय षडङ्गं योगमभ्यसेत् । आसनं प्राणसंरोधः प्रत्याहारश्च धारणा ॥ ध्यानं समाधिरेतानि योगाङ्गानि भवन्ति षट् ।' इति स्कन्दपुराणवचनमपि तथा प्रमापयति । तथाच तदनन्तरमात्मसाक्षात्कारोदयेन मिथ्याज्ञानादिनिवृत्तौ सत्यामपवर्गो निष्प्रत्यूह एवेति न मननशास्त्रं निष्फलमिति भावः ॥ १६ ॥

( भाष्यम् ) यश्चायम्–*तदनारम्भ आत्मस्थे मनसि शरीरस्य दुःखा-

---

१ बॉ. रा आ. सो. पुस्तके 'अय स योग'। यद्वात्मपदेन' इत्यस्य स्थाने–'अयं सयोग आत्मसाक्षात्कारस्य कारणम् । यथाहुः–अय स परमो धर्मो यद्योगेनात्मदर्शनम् । प्राणकर्मकारणमाह–कायकर्मणात्मकर्म व्याख्यातम् । शरीरस्य यथा प्रयत्नवदात्मसयोगासमवायिकारणक कर्म तथात्मनोऽपि । आत्मपदेन' इति दृश्यते ।

भाव: स योग:। विषयान्तराद्व्युपरतस्य मनसो यदात्मनि स्थितिस्तस्मिन्नात्मस्थे मनसि तस्य मनस: कर्मणोऽनारम्भ:। सोऽयं सार्वभौमश्चित्तस्य धर्म: शरीरस्य दु:खाभावहेतुर्योग:। अथापि खल्वात्मस्थे मनसि शरीरस्य कार्यकरणसंघातस्य तस्य कर्मणोऽनारम्भो दु:खाभावहेतुर्योग इति। स खल्वयमनेकशाखो बहुपरिकरस्तन्त्रान्तरसमाचारात्प्रतिपत्तव्य इति॥१७॥

**अपसर्पणमुपसर्पणमशितपीतसंयोगा: कार्यान्तरसंयोगाश्चेत्यदृष्टकारितानि ॥ १७ ॥**

(उप०) ननु प्राणस्य मनसश्च कर्म यदि प्रयत्ननिमित्तकं तदा प्राणमनसी यदा मरणावस्थायामपसर्पत: देहाद्बहिर्भवत:, देहान्तरोत्पत्तौ तत्र पुनरुपसर्पत: प्रविशत., तत्र प्रयत्नाभावात्तदुभयमनुपपन्नम्, अशितपीतं भक्तपानीयादि तस्यापि शरीरावयवोपचयहेतुर्य: संयोगस्तज्जनकं यत्कर्म, यच्च गर्भवासदशायां संयोगविभागजनकं कर्म तेषां कथमुत्पत्तिरत आह– अपसर्पणमिति। अत्र 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति नपुंसकनिर्देश:, संयोगपदं च तत्कारणे कर्मणि लाक्षणिकम्, अपसर्पणं देहारम्भककर्मक्षये देहादेव प्राणमनसोरुत्क्रमणम्, उपसर्पणं च देहान्तरोत्पत्तौ तत्र प्राणमनसो: प्रवेशनम्, अशितपीतादिसंयोगहेतुश्च कर्म, कार्यान्तरं गर्भशरीरं तत्संयोगहेतुश्च यत्कर्म तत्सर्वमदृष्टवदात्मसंयोगासमवायिकारणकम्। इतिकारेण धातुमलकर्मणामप्यदृष्टवदात्मसंयोगासमवायिकारणकत्वं सूचयति॥ १७ ॥

( विवृ० ) अदृष्टाधीनं कर्मान्तरं दर्शयति–अपसर्पणमिति। अपसर्पणं मरणावस्थायां देहान्मनस उत्क्रमणम्, उपसर्पणं देहान्तरोत्पत्तौ तत्र मनस प्रवेश:, अशितपीतयोरन्नजलयो: संयोगा:, कार्यान्तराणामिन्द्रियप्राणानां देहेन सह संयोगाश्च यस्मात्कर्मणो भवन्ति इति पूरणीयम्। इत्येतानि कर्माणि अदृष्टकारितानि अदृष्टवदात्मसंयोगासमवायिकारणकानि॥१७॥

( भाष्यम् ) यदेतत्प्रायणकाले पूर्वस्माद्देहादात्माऽपसर्पति, देहान्तरं चाभिमतमुपसर्पति, अशितपीतानां च तेन तेन प्रक्रियाविशेषेण धात्वादिरूपेण परिणममानानां ये संयोगास्तत्कारणानि यानि कर्माणि, ये च कार्यान्तरै: प्राणादिभि: शरीरादे: संयोगास्तद्धेतुभूतं यत्कर्म, यच्चान्यदित्थंभूतं किंचित्तानि सर्वाण्यदृष्टेन कार्यन्ते। निर्माणं खल्वीदृशं शरीरादीनां यत्तस्यां तस्यामवस्थायामेते भवन्तीति। अस्ति चान्यददृष्टं, यत: खल्वयं पुरुषो जीवति जायते च म्रियते चेति॥ १८ ॥

तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः ॥ १८ ॥

( उप० ) ननु देहान्तरोत्पत्तेरावश्यकत्वं चेत्तदा कथं मोक्ष इत्यत आह—तदिति। इदमत्राकूतं—योगबलेनात्मतत्त्वसाक्षात्कारे सति तेन च सवासनमिथ्याज्ञाने ध्वस्ते तन्निबन्धनानां रागद्वेषमोहानां दोषाणामपायात्प्रवृत्तेरपाये तन्निबन्धनस्य जन्मनोऽपाये तन्निबन्धनस्य दुःखस्यापाय इति तावद्वस्तुगतिः । तत्र योगिनो योगजधर्मबलेन तत्तद्देशकालतत्तत्तुरगमतङ्गजभुजङ्गविहङ्गमादिदेहोपभोग्यसुखदुःखासाधारणकारणधर्माधर्मनिकुरम्बमालोच्य तत्तत्कायव्यूहं निर्वाह्य भोगेन पूर्वोत्पन्नधर्माधर्मयोः क्षयः निवृत्तदोषस्य धर्माधर्मान्तरानुत्पत्तावपूर्वशरीरान्तरानुत्पत्तौ पूर्वशरीरेण सहात्मनो यः संयोगाभावः स एव मोक्षः। तदभाव इति अनागतशरीरानुत्पादे संयोगाभाव इत्यर्थः । नन्वियमवस्था प्रलयसाधारणीत्यत आह—अप्रादुर्भाव इति । यदनन्तरं शरीरादेः पुनः प्रादुर्भावो न भवतीत्यर्थ. । स मोक्ष इति तस्यामवस्थायां यो दुःखध्वंसः स मोक्ष इत्यर्थः ॥ १८ ॥

( विवृ० ) ननु देहप्रवाहस्यानाद्यनन्तत्वादपवर्गस्यासंभवस्तदवस्थ एवेत्यत आह—तदभावे इति । तदभावे तस्यादृष्टस्याभावे सति प्रारब्धेतरादृष्टानामात्मसाक्षात्कारेण प्रारब्धानां च भोगेन क्षये सतीति यावत् । संयोगाभावः देहप्रवाहसंबन्धस्य विच्छेदस्तदनन्तरं च अप्रादुर्भावः अर्थाद्दुःखस्यानुत्पत्तिर्देहरूपस्यादृष्टरूपस्य च कारणस्य विरहादिति तदानीमेव मोक्षः अपवर्ग. संभवतीति नापवर्गस्य शशविषाणसमानतेति भावः ॥१८॥

( भाष्यम् ) तस्य हेतोरदृष्टस्याभावे शरीरेण सहात्मनः संयोगो न भवति । स खल्वयं भूत्वा न भवत्यात्मप्रहाणाच्चोपरमतीति । हेतोः खल्वभावाच्छरीरान्तरेण न पुनरन्यः संयोगः प्रादुर्भवति । सोऽयं मोक्षः परमा मुक्तिर्विदेहकैवल्यं निर्वाणमिति । तत्त्वज्ञानाच्च मिथ्याज्ञानाद्युच्छेदक्रमेणास्य निष्पतिरिति तत्त्वज्ञानं मोक्षहेतुराख्यायते ॥ १९ ॥

द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तमः ॥ १९ ॥

( उप० ) ननु तमसोऽपि द्रव्यस्य कर्म दृश्यते चलति छायेति प्रत्ययात्तत्र न प्रयत्नो न वा नोदनाभिघातौ न वा गुरुत्वद्रवत्वे न वा संस्कारस्तथाच निमित्तान्तरं वक्तव्यं तच्च नानुभूयमानमित्यत आह— एतेन नवैव द्रव्याणीत्यवधारणमप्युपपादितं द्रव्यनिष्पत्तिस्तावत् स्पर्शवद्द्रव्याधीना न च तमसि स्पर्शोऽनुभूयते न चानुद्भूत एव स्पर्शः रूपो-

द्रवे स्पर्शोद्भवस्यावश्यकत्वात् । पृथिव्यामयं नियमः तमस्तु दशमं द्रव्यमिति चेन्न, द्रव्यान्तरस्य नीलरूपानधिकरणत्वात्, नीलरूपस्य च गुरुत्वनान्तरीयकत्वात्, रसगन्धनान्तरीयकत्वाच्च । यथाकाशं शब्दमात्रविशेषगुणं तथा तमोऽपि नीलरूपमात्रविशेषगुणं स्यादिति चेन्न, चाक्षुषत्वविरोधात् । यदि हि नीलरूपवन्नीलं रूपमेव वा तमः स्यात् बाह्यालोकग्रहमन्तरेण चक्षुषा न गृह्येत ॥ १९ ॥

( विवृ० ) नन्वन्धकारस्यापि कर्मानुभूयते नीलं तमश्चलतीतिप्रतीतेरन्तत्र च कर्मणि किमसमवायिकारणं कर्मासमवायिकारणत्वेनोक्तानां नोदनादीनामन्यतमस्य तत्राभावादित्याशङ्कायामाह–द्रव्यगुणेति । तमोऽभाव एव ननु भाव द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यान्निष्पन्नानां जन्यानां द्रव्यगुणकर्मणां वैधर्म्यादित्यर्थः, कृद्विहित इति न्यायात् । जन्यद्रव्यं हि अवयवारब्धं भवति तमस्तु नावयवारब्धमालोकापसरणे सहसैवानुभूयमानत्वात्स्पार्शनाभावाच्च । पृथिव्यामुद्भूतरूपस्योद्भूतस्पर्शव्याप्यत्वेनोद्भूतरूपस्य तमसि स्वीकर्तॄणामनुद्भूतस्पर्शस्वीकारस्यासंभवात्, गन्धशून्यत्वाच्च न तमः पृथिवी । नापि जलादावस्यान्तर्भावः नीलरूपवत्त्वस्वीकारात् । अत एव न गुणे न वा कर्मण्यस्यान्तर्भावः आलोकनिरपेक्षचाक्षुषविषयत्वाच्च । तर्हि द्रव्यान्तरं भवतु, न आवश्यकतेजोऽभावेनैव तम.प्रतीत्युपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वादिति ॥ १९ ॥

( भाष्यम् ) यो वै खल्वयमन्धकारस्तस्य तावद्गतिः परीक्षितव्या । नैव खल्वन्धकारो द्रव्यं येनास्य गतिः स्यात् । किं तर्हि–*द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद्भाभावस्तमः । यदेतत्तमस्तत्खल्वभावस्तेजसो न द्रव्यम् । कस्माद्द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यात् । तमसो द्रव्यवैधर्म्यात्, द्रव्यस्य येयं गुणकर्मणोर्निष्पत्तिस्तद्वैधर्म्याच्च तमसो गुणकर्मणोः । तमसः खलु रूपसंस्कार उपलभ्यते, स्पर्शस्तु नोपलभ्यते नीलं च रूपमवादीनां वैधर्म्यम् । न खल्वपि तमसि रसगन्धौ गुरुत्वं चास्ति । बाह्यं चालोकमन्तरेणैतच्चक्षुषा गृह्यते नत्वेतत्स्पृश्यते । तदेतद्द्रव्यवैधर्म्यं तमसः । गुणकर्मणोः खल्वपि, द्रव्यस्य रूपं कारणगुणक्रमान्निष्पद्यते पाकाच्च, नत्वेवं तमसः । प्रयत्नादिभिः खलु कारणैर्द्रव्यस्य कर्मणो निष्पत्तिर्न त्वेवं तमसः । द्रव्यस्य रूपं कर्म चालोकानुगृहीतेन चक्षुषा गृह्यते विपर्ययेण च विपर्ययो, विपरीतमेतत्तमस इति । अथापि खलु द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद्भाभावस्तम इति । कुत एतत्प्रतिपत्तव्यम् ? नह्ययं हेतुर्भाभाव एव व्यवतिष्ठते । व्यवतिष्ठते

इत्याह। कया युक्त्या? द्रव्यं हि तेजः, तद्वैधर्म्यात्खल्वेतस्य भाभावत्व-प्रतिपत्तिरिति ॥ २० ॥

तेजसो द्रव्यान्तरेणावरणाच्च ॥ २० ॥

( उप० ) तर्हि गतिप्रतीतिः किंनिबन्धनेत्यत आह—तेजस इति। गच्छता द्रव्यान्तरेणावृते तेजसि पूर्वदेशानुपलम्भादग्रिमदेशे चोपलम्भात्तेजोऽभावस्य गच्छद्द्रव्यसाधर्म्याद्गतिभ्रमो न तु वास्तवी तत्र गतिरित्यर्थः। अन्वयव्यतिरेकाभ्यां तथा प्रतीतेः, उद्भूतरूपवद्यावत्तेजःसंसर्गाभावस्तमः ॥ २० ॥

( विवृ० ) ननु तमसोऽभावरूपत्वे कथं चलतीति प्रतीतिरित्यत्राह—तेजस इति। द्रव्यान्तरेण तेजस आवरणादाच्छादनात्, यतः स्थानादालोकोऽपसरति तत्रैव तमश्चलतीति प्रतीतिर्भवति तादृशप्रतीतिश्चालोकापसरणौपाधिकी भ्रान्तिरेव। नहि भ्रमाद्वस्तुसिद्धिरिति अभावस्तम इति सुष्ठूक्तम् ॥ २० ॥

(भाष्यम्) इतश्चैतदेवं प्रतिपत्तव्यम्—*तेजसो द्रव्यान्तरेणावरणाच्च। प्रकाशस्वभावस्य तेजसो द्रव्यान्तरेणावरणाच्च प्रतिपद्यामहे भाऽभावस्तम इति। यदा वै द्रव्यान्तरेण तेज आव्रियते तदा खलु तमो गृह्यते। तच्चैतत्तेजसोऽभावो न द्रव्यम्। तेजो हि तदा न भवतीति। प्रत्यक्षं खल्वेतदुपलभ्यते। सूक्ष्मस्य तेजसः संभेदकृतश्चास्य तरतमभाव इति आवरकाव्यवस्थानाद्गत्युपलब्धिः। येयं तमसो गत्युपलब्धिः सा खल्वावरकाव्यवस्थानादुत्पद्यते। द्रव्यान्तरेण वै तेजस आवरणात्तम उपलभ्यते। विपर्ययेऽनुपलब्धेः। तच्चैतत्तेजस आवरकं द्रव्यान्तरं न व्यवतिष्ठते। तस्मादावरकस्याव्यवस्थानात्तमसो गत्युपलब्धिर्भ्रान्तिस्तदन्वयव्यतिरेकानुविधानादिति। नीलरूपोपलब्धिस्त्वाश्रयकारिता वायुकारिता चेति ॥ २१ ॥

दिक्कालावाकाशं च क्रियावद्वैधर्म्यान्निष्क्रियाणि ॥ २१ ॥

( उप० ) एवं द्विसूत्रकं प्रासङ्गिकं तमःप्रकरणं समाप्य कर्मशून्यताप्रकरणमाह—दिक्कालेति। चकारादात्मसंग्रहः। क्रियावता वैधर्म्यं दिगादीनाममूर्तत्वं, मूर्त्यनुविधानात् क्रियायाः ॥ २१ ॥

( विवृ० ) कर्मशून्यताप्रकरणमारभते—दिगिति। क्रियावद्वैधर्म्यं परममहत्परिमाणमपकृष्टपरिमाणराहित्यं वा। चकार आत्मसमुच्चायकः। एतानि द्रव्याणि निष्क्रियाणीत्यर्थः ॥ २१ ॥

(भाष्यम्) दिगादीनां तर्हि कर्माणि परीक्षितव्यानीत्यत आह—*दिक्कालावाकाशं च क्रियावद्वैधर्म्यान्निष्क्रियाणि। नैतेषां परिमाणावच्छेदोऽस्ति। महान्ति ह्येतानि। न खल्वपि क्रियानिमित्तमेषु शक्तिभेदोऽस्ति। आत्मा तु तथाभूतोऽपि मनसा संसृज्यमानः क्रियावानिव भवति व्यवहारभूमाविति॥ २२॥

**एतेन कर्माणि गुणाश्च व्याख्याताः॥ २२॥**

(उप०) गुणकर्मणोर्निष्क्रियत्वमाह—एतेनेति। एतेनेति क्रियावद्वैधर्म्येणेत्यर्थः। क्रियावद्वैधर्म्यममूर्तत्वं गुणकर्मणोरपीति ते अपि निष्क्रियत्वेन व्याख्याते इत्यर्थः॥ २२॥

(विवृ०) निष्क्रियान्तरमाह—एतेनेति। एतेन क्रियावद्वैधर्म्येण अपकृष्टपरिमाणशून्यत्वेन निर्वेगत्वेन वा, व्याख्याता निष्क्रियत्वेन कथिता., चकारात्सामान्यादिसंग्रहः॥ २२॥

(भाष्यम्) क्रियावद्वैधर्म्याद्गुणकर्मणोः क्रियाभावो व्याख्यातः। न ह्येषां मूर्तिरस्ति न संस्कारो न खल्वन्यदृष्टमिति॥ २३॥

**निष्क्रियाणां समवायः कर्मभ्यो निषिद्धः॥ २३॥**

(उप०) ननु गुणकर्मणी यदि निष्क्रिये तदा ताभ्या द्रव्यस्य कथं संबन्धः, संयोगसंबन्धः संभाव्येत स च कर्माधीन एवेत्यत आह—निष्क्रियाणामिति। निष्क्रियाणां गुणकर्मणां समवाय एव संबन्धः स च कर्मभ्यो निषिद्धः तस्य संबन्धस्य उत्पत्तिरेव नास्ति दूरे नु कर्माधीनतेत्यर्थः॥ २३॥

(विवृ०) ननु गुणकर्मणोर्निष्क्रियत्वे तयो. संबन्धः कथं द्रव्ये भवति संबन्धस्य कर्माधीनत्वाद्दृश्यते हि श्येनादेः कर्मणा शैलादौ संबन्धोत्पत्तिरित्यत आह—निष्क्रियाणामिति। निष्क्रियाणां गुणादीनां द्रव्ये समवायः संबन्धः स तु नित्य एवातः कर्मभ्यो निषिद्धः न जात इत्यर्थः॥ २३॥

(भाष्यम्) अथापि खल्ववाच्यामभूदुदीच्यां तिष्ठति तदानीमरौत्सीदिदानी भुङ्क्ते इत्याद्युपलब्धेर्दिगादयः क्रियावन्तः स्युः? नेत्याह,—*निष्क्रियाणां समवायः कर्मभ्यो निषिद्धः। कर्मणां समवाय इत्यर्थः॥ २४॥

**कारणं त्वसमवायिनो गुणाः॥ २४॥**

(उप०) ननु यद्यमूर्तत्वाद्गुणाः कर्मसमवायिकारणं न भवन्ति

तदा गुणैर्गुणाः कर्माणि च कथमुत्पद्यन्ते नहि समवायिकारणातिरिक्त-त्वेनापि रूपेण कारणता संभवतीत्यत आह—कारणमिति । गुणा असमवायिकारणं न तु समवायिकारणमपि येन कर्माधाराः स्युः । सा चासमवायिकारणता क्वचित् कार्यैकार्थसमवायात्, यथात्ममनःसंयोगस्यात्मविशेषगुणेषु, संयोगविभागशब्दानां शब्दे । क्वचित् कारणैकार्थसमवायात्; यथा कपालादिरूपादीनां घटादिरूपादिषु ॥ २४ ॥

( विवृ० ) ननु गुणस्य कर्मशून्यत्वे तस्य कर्मकारणता कथं संभवति । नहि पटशून्यस्य कपालस्य पटकारणता केनापि संभावितेत्यत आह—कारणमिति। गुणास्तु असमवायिनः कारणं, सौत्रत्वादेकत्वं कारणानीत्यर्थः। तथाच गुणानां कर्मणि समवायिकारणताविरहेऽपि असमायिकारणता निराबाधैव । यथाऽवयवसंयोगानामवयव्यनाधारत्वेऽपि तदसमवायिकारणता यथा वा अवयवरूपादीनामवयविरूपाद्यनाधारत्वेऽपि तदसमवायिकारणता तथा गुणानां कर्मानाधारत्वेऽपि तदसमवायिकारणता न विरुद्धा । समवायिकारणे समवाय—स्वसमवायिसमवायान्यतरसंबन्धेन वृत्तित्वे सति काणत्वस्यैवासमवायिकारणलक्षणत्वादिति भावः ॥ २४ ॥

( भाष्यम् ) यदि कर्मभ्यो निष्क्रियाणां समवायो नास्ति संयोगादयो गुणाः कथं कर्मणि कारणं स्युरित्यत आह—*कारणं त्वसमवायिनो गुणाः । गुणास्त्वसमवायिनः कारणं नत्वेते कर्मणः समवायिकारणमिति ॥ २५ ॥

## गुणैर्दिग् व्याख्याता ॥ २५ ॥

( उप० ) ननु इह कर्मोत्पद्यते इदानी कर्मोत्पद्यते इत्यादिप्रतीतिबला-द्दिक्कालौ कर्मसमवायिकारणे एव कथमन्यथा तत्र तयोराधारतेत्यत आह—गुणैरिति । यथा गुरुत्वादयो गुणा न कर्मसमवायिकारणममूर्तत्वात् तथा दिगपि न कर्मसमवायिकारणममूर्तत्वादेवेत्यर्थः, आधारता तु समवायितामन्तरेणापि, कुण्डे बदराणि, कुण्डे दधि, वने सिंहनाद इत्यादिवदुपपद्यत इति भावः ॥ २५ ॥

( विवृ० ) ननु प्राच्यां गच्छति इदानी गच्छतीति प्रतीतौ कर्माधारतया दिक्कालयोर्भानात्कथं तौ निष्क्रियावत आह—गुणैरिति । यथा गुणेषु क्रिया नास्ति अमूर्तत्वात्, तथा दिश्यपि नास्ति प्राच्यां गच्छतीति प्रतीतेः प्राच्यां रौतीतिवत् दिक्कृतविशेषणतासंबन्धावच्छिन्नाधारतावगाहित्वादित्यर्थः ॥ २५ ॥

( भाष्यम् ) दिगसमवायिकारणं कर्मस्विति गुणैर्व्याख्यातम्। अवाच्यामभूदुदीच्या तिष्ठति इत्येवमादिका ह्युपलब्धिर्दिशोऽसमवायिकारणभावाद्भवतीति ॥ २६ ॥

**कारणेन कालः ॥ २६ ॥**

( उप० ) उक्तेनैवाभिप्रायेणाह–कारणेनेति। निष्क्रियत्वेन व्याख्यात इति परिणम्यानुषङ्गः, कारणेनेति भावप्रधानो निर्देशः तेन निमित्तकारणत्वेनाधारमात्रं कर्मणः कालो न तु समवायीत्यर्थः ॥ २६ ॥

इति श्रीशाङ्करे वैशेषिकसूत्रोपस्कारे पञ्चमाध्यायस्य द्वितीयमाह्निकम्।

( विवृ० ) उक्तयुक्त्या कालस्यापि न कर्मसमवायित्वमित्याह–कारणेनेति। कारणेन निमित्तकारणेन, अभेदे तृतीया धान्येन धनवानित्यादिवत्। काल इति गुणैर्निष्क्रियत्वेन व्याख्यात इति लिङ्गविपरिणामेनानुषङ्गो बोध्यः। तथाच यथा गुणानां निष्क्रियत्वमपकृष्टपरिमाणशून्यत्वात् तथा कालस्यापि। इदानीं गच्छतीत्यादिप्रतीतिस्तु इदानीं रवीतीत्यादिप्रतीतिवत्कालिकसंबन्धावच्छिन्नाधाराधेयभावमवगाहते नतु समवायसंबन्धावच्छिन्नमिति सकलमकलङ्कम् ॥ २६ ॥

इति श्रीजयनारायणतर्कपञ्चाननभट्टाचार्यकृतायां कणादसूत्रविवृतौ पञ्चमाध्यायस्य द्वितीयमाह्निकम्।

( भाष्यम् ) कारणेनासमवायिकारणेन कालो व्याख्यातः। कालोऽप्यसमवायिकारणं कर्मस्विति तदानीमरौत्सीदिदानीं भुङ्क्ते इत्याद्युपलब्धिर्भवतीति ॥ २७ ॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये पञ्चमस्याध्यायस्य द्वितीयमाह्निकम्।

समाप्तश्चायं पञ्चमोऽध्यायः।

---

## षष्ठाध्याये प्रथमाह्निकम्।

---

**बुद्धिपूर्वा वाक्यकृतिर्वेदे ॥ १ ॥**

( उप० ) संसारमूलकारणयोर्धर्माधर्मयोः परीक्षा षष्ठाध्यायार्थः। धर्माधर्मौ च 'स्वर्गकामो यजेत', 'न कलञ्जं भक्षयेत्' इत्यादिविधिनिषेधबलकल्पनीयौ विधिनिषेधवाक्ययोः प्रामाण्ये सति स्यातां, तत्प्रामाण्यं च वक्तुर्यथार्थवाक्यार्थज्ञानलक्षणगुणपूर्वकत्वादुपपद्यते स्वतः प्रामाण्यस्य निषेधादतः प्रथमं वेदप्रामाण्यप्रयोजकगुणसाधनमुपक्रमते–बुद्धिपूर्वेति। वाक्यकृ-

तिर्वाक्यरचना सा बुद्धिपूर्वा वक्तृयथार्थवाक्यार्थज्ञानपूर्वा वाक्यरचनात्वात्, नदीतीरे पञ्चफलानि सन्तीत्यस्मदादिवाक्यरचनावत्। वेद इति वाक्यसमुदाय इत्यर्थः। तत्र समुदायिनां वाक्यानां कृतिः पक्षः, न चास्मदादिबुद्धिपूर्वकत्वेनान्यथासिद्धिः, 'स्वर्गकामो यजेत' इत्यादाविष्टसाधनतायाः कार्यताया वा अस्मदादिबुद्ध्यगोचरत्वात्, तेन स्वतन्त्रपुरुषपूर्वकत्वं वेदे सिध्यति। वेदत्वं च शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वम्॥ १॥

(विवृ०) सन्मनःकुमुदम्लानिग्लानिकृत् श्यामलः शशी।
उदेतु कोऽपि हृदयाकाशे मम तमो हरन्॥

'अथातो धर्मं व्याख्यास्यामः' इति सूत्रे प्रतिज्ञातं परीक्षारूपधर्मस्य निरूपणमिदानीमारभमाणो धर्मस्य वेदप्रमाणकतया वेदस्य प्रामाण्योपपादकं गुणजन्यत्वं साधयति—बुद्धिपूर्वेति। वेदे इति सप्तम्यर्थो घटकत्वं तस्य वाक्यकृतावन्वयः वाक्यरूपा या कृतिः कार्यमित्यर्थः। एतेन मीमांसकाभिमतं शब्दनित्यत्वं निराकृतम्, वेदघटकं यद्वाक्यरूपं कार्यं तद् बुद्धिपूर्वं स्वार्थविषयकवक्तृयथार्थज्ञानरूपगुणजन्यं प्रमाणशब्दत्वान्महाभारताद्यन्तर्गतवाक्यवदित्ययमनुमानाकारः। वेदत्वं च शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणागम्यार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वम्, ऋग्यजुःसामाथर्वान्यतमत्वं वा॥ १॥

(भाष्यम्) परीक्षितानि लौकिकानि कर्माणि, अलौकिकानि परीक्ष्यन्ते। वेदाच्चैषामवगतिः। धर्मवचनात्तस्य प्रमाणभाव उक्तः। अथेदानीमियमपि—*बुद्धिपूर्वा वाक्यकृतिर्वेदे। प्रमाणभावे लिङ्गम्। न वै शब्दः साक्षात्प्रमाणम्, प्रत्यक्षलैङ्गिकपूर्वकत्वात्। येयं वेदे वाक्यकृतिः सा खलु बुद्धिपूर्वा। वाक्यं हि बुद्धिपूर्वं क्रियत इति। पूर्वे खल्वृषयः साक्षात्कृतधर्माणो बभूवुः। ते चावरेभ्योऽसाक्षात्कृतधर्मभ्यः परं श्रेय उपदिदिशुः। स्वयं हि ज्ञातमर्थं परान् प्रतिपादयितुकामेन शब्दः प्रयुज्यते इति। अथापि खल्वियं बुद्धिपूर्वा वाक्यकृतिर्वेदे न त्वनादिरयं वेदराशिरिति। कुत एतत्प्रतिपत्तव्यम्? प्रयत्नकार्यत्वाद्वचनस्य वाक्यान्तरवत्। यथा खलु वाक्यान्तराणि प्रयत्नकार्याणि, तथा वैदिकमपि वाक्यं प्रयत्नकार्यम्। न त्वनादिर्वेदराशिः। न खलु पौर्वापर्यभावोऽप्यनादिर्भवितुमर्हति इति॥ १॥

## ब्राह्मणे संज्ञाकर्म सिद्धिलिङ्गम् ॥ २ ॥

( उप० ) प्रकारान्तरेण वेदवाक्यानां बुद्धिपूर्वकत्वमाह—ब्राह्मणे इति । ब्राह्मणमिह वेदभागस्तत्रय त्संज्ञाया नाम्नः कर्म करणं व्युत्पादनमिति यावत्, तत् सिद्धेर्ज्ञानस्य लिङ्गमनुमापकमित्यर्थः । तथा हि—योरोदीत् स रोदीत् रुद्रः किल रुरोदेत्यादिब्राह्मणे रोदनकर्तृत्वेन रुद्र इति नाम व्युत्पादितं तच्च व्युत्पादनं व्युत्पादकस्य बुद्धिमाक्षिपति यथा लोके लम्बकर्णदीर्घनासलम्बग्रीवादिनामकरणम् ॥ २ ॥

( विवृ० ) इतोऽपि बुद्धिपूर्वकाणि वेदवाक्यानीत्याह—ब्राह्मण इति । ब्राह्मणे वेदभागविशेषे यत्संज्ञाकर्म संज्ञारूपं कार्यं तत्सिद्धिलिङ्गं संज्ञाकर्तुर्वाक्यार्थबोधस्य लिङ्गम्, यथा लोके लम्बकर्णादिनामकरणं कर्तुस्तदर्थबोधस्य लिङ्गमिति ॥ २ ॥

( भाष्यम् ) सति चैवमियमपि—*ब्राह्मणे संज्ञा कर्मसिद्धिलिङ्गम् । या वै खलु ब्राह्मणे संज्ञा, ववरः प्रावाहणिरकामयतेत्येवमादिका, तया ज्ञायते, कर्माणि वेदाः पूर्वैर्ऋषिभिः कृता नत्वनादिरयं वेदराशिरिति । न खलु प्रवहणस्य ववरस्य चोत्पत्तेः प्रागस्य संभवः । अकामयतेति भूतकालोपदेशात् । एवमन्यत्र । तच्चैतत् कर्मैके तद्दर्शनादिति तन्त्रान्तरवचनात् प्रतिपत्तव्यमिति । अथापि खलु ब्राह्मणे यत्संज्ञाया. करणं छन्दांसिच्छन्दनादित्यादि, तद्वाक्यकर्तुर्बुद्धिसिद्धौ लिङ्गमिति ॥ २ ॥

## बुद्धिपूर्वो ददातिः ॥ ३ ॥

( उप० ) प्रकारान्तरमाह—बुद्धिपूर्व इति । 'स्वर्गकामो गां दद्यात्' इत्यादौ यद्दानप्रतिपादनं तद्दानेष्टसाधनताज्ञानजन्यम् । ददातिरिति धातुनिर्देशो धात्वर्थं दानमुपलक्षयति ॥ ३ ॥

( विवृ० ) प्रकारान्तरेण दर्शयति—बुद्धिपूर्व इति । 'अमावास्यायां पितृभ्यो दद्यात्' इत्यादौ यद्दानप्रतिपादनं तद्दानेष्टसाधनताज्ञानाधीनमिति । ददातिरिति धातुबोधकस्य तदर्थपरत्वम् ॥ ३ ॥

( भाष्यम् ) बुद्धिपूर्वाया वाक्यकृतेर्निदर्शनम्—*बुद्धिपूर्वो ददाति. । स्वर्गकामो दद्यादित्यादिर्यो ददातिः स खलु बुद्धिपूर्वः । दानाद्वै स्वर्गस्य निष्पत्तिं बुद्ध्वा खल्वेवं क्रियते वाक्यमिति ॥ ३ ॥

## तथा प्रतिग्रहः ॥ ४ ॥

( उप० ) प्रमाणान्तरमाह—तथेति । प्रतिग्रहप्रतिपादिका अपि श्रुतयो

बुद्धिपूर्विका:। प्रतिग्रहपदं स्वविषयां श्रुतिमुपलक्षयति। तेन भूम्यादिप्रतिग्रहप्रतिपादिका: श्रुतय: प्रतिग्रहीतु: श्रेय:साधनतापरा:, कृष्णसारचर्मादिप्रतिग्रहप्रतिपादिका: श्रुतय प्रतिग्रहीतुरनिष्टसाधनताबोधिका.। नचेष्टानिष्टसाधनते अर्वाचीनपुरुषबुद्धिगोचरौ भवितुमर्हत: ॥ ४ ॥

( विवृ० ) अन्यदपि दर्शयति—तथेति । प्रतिग्रहपदेन तद्घटितवाक्यमुपलक्षयति 'याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत्' इत्यादिवाक्यं वक्तुस्तदर्थज्ञानं साधयति। यद्यपि प्रथमसूत्रेणैतत्सर्वं गतार्थं तथापि कतिपयधर्मप्रदर्शनार्थमेतावानारम्भ: ॥ ४ ॥

( भाष्यम् ) यथैतत्—*तथा प्रतिग्रह: । बुद्धिपूर्व:। विषयेण विषयिणो ग्रहणम् ॥ ४ ॥

## आत्मान्तरगुणानामात्मान्तरेऽकारणत्वात् ॥ ५ ॥

( उप० ) इदानी 'शास्त्रदेशितं फलमनुष्ठातरि' इति जैमिनीयं सूत्रं संवादयन्नाह—आत्मेति। आत्मान्तरगुणानां यागहिंसादिजन्यपुण्यपापानाम् आत्मान्तरे यौ सुखदु:खात्मकौ गुणौ तयोरकारणत्वात्। एवं च प्रत्यात्मनिष्ठाभ्यामेव धर्माधर्माभ्यां सुखदु:खे न व्यधिकरणाभ्यामन्यथा येन यागहिंसादिकं न कृतं तस्य तत्फलं स्यादिति कृतहानिरकृताभ्यागमश्च प्रसज्येत। ननु नायं नियम, पुत्रेष्टिपितृयज्ञादौ व्यभिचारात्। तथाहि पुत्रेण कृतस्य श्राद्धादे: पितरि फलश्रवणात् पित्रा च कृताया. पुत्रेष्टे: पुत्रे फलश्रवणात्। न च स्वर्गभागिपितृकत्वस्य तेजस्विपुत्रकत्वस्य च फलस्य पुत्रपितृगामितया सामानाधिकरण्यमेवेति वाच्यं, श्रुतिविरोधात् पितृतृप्त्यादे: पुत्रतेजस्वितादेरेव फलस्य श्रवणात्फलान्तरस्य च गौरवपराहतत्वात्। अस्तु तर्हि पूर्वं फलं कर्तरि स्वर्गस्तु पितरीति चेन्न, व्यापारस्य फलसामानाधिकरण्यनियमात् अन्यथा श्राद्धानन्तरं मुक्ते पुत्रे पितु: स्वर्गो न स्यादिति चेन्न मुक्ते पितरि साङ्गादपि श्राद्धात्फलं न स्यादिति तुल्यत्वात्। मैवं 'शास्त्रदेशितं फलमनुष्ठातरि' इत्यस्योत्सर्गत्वात्क्वचिद्बलवता बाधकेनापोद्यत्वात्; प्रकृते च पितृपुत्रगतफलश्रवणस्यैव बाधकत्वात्। तथा सत्यतिप्रसङ्ग इति चेन्न तादृशश्रुतेरेवातिप्रसङ्गनिवारकत्वात्। यत्तु महादानादौ स्वर्गमात्रमेव फलं तच्च यदुद्देशेन क्रियते तद्गतमपि फलं जनयतीति तत्तुच्छं, तत्रोत्सर्गे बाधकाभावात् बाधकाभावसहितोत्सर्गस्य नियमत्वात्, राजादीनामुपवासाद्यनुष्ठानानापत्ते: परद्वारैव

तत्तत्कर्मणां स्वगतफलमुद्दिश्यानुष्ठानसंभवात् । सम्यग्गृहस्थाश्रमपरिपालनस्य ब्रह्मलोकावाप्तिरूपे च फले नियम एव प्रातिस्विकफलाभिप्रायेण तूत्सर्गाभिधानात् । वृत्तिकारास्तु 'शास्त्रदेशितम्' इत्यादिर्नियम एव । पित्रादीनां तु यत्फलं तच्छ्राद्धादौ भोजितानां ब्राह्मणानामाशीर्मन्त्रानुभावात्, 'कृतार्थास्ते पितरो भूयासुः'। इति पितृयज्ञे, पुत्रेष्टौ तु सन्तुष्टानामृत्विजामाशीर्दानात् 'तेजस्वी वर्चस्व्यन्नादस्ते पुत्रो भूयात्' इत्यादेः, जाङ्गलिकमन्त्रपाठादिव सर्पदष्टस्य विषापहरणमित्याहुः ॥ ५ ॥

( विवृ० ) धर्मादेः सामानाधिकरण्येन स्वर्गादिसाधनत्वं दर्शयति— आत्मेति । आत्मान्तरस्य गुणानां पुण्यपापानामात्मान्तरे अकारणत्वात्स्वर्गादिफलस्येति शेषः 'शास्त्रदेशितं फलमनुष्ठातरि' इति जैमिनीयतन्त्रोक्तं सूत्रशेषे पूरणीयमन्यथा पञ्चम्या अन्वयानुपपत्तेरिति । तथा च यागहिंसादिकार्याणां धर्माधर्मौ प्रति फलीभूतसुखदुःखे प्रति च स्वानुकूलकृतिमत्त्वसंबन्धेन हेतुता धर्माधर्मयोश्च सुखदुःखे प्रति समवायेनैवेति भावः । न च गयाश्राद्धादितः पितृगतं पुत्रेष्ट्यादितः पुत्रगतं फलं न स्यात्तयोः कर्मकर्तृत्वाभावादिति वाच्यं, कारणतावच्छेदकसंसर्गघटककृतिमत्त्वस्य फलभागितयोद्देश्यत्वसंबन्धेन विवक्षितत्वात्, निष्कामकृतकर्मणोऽपि मोक्षरूपफलभागितया उद्देशत्वं कर्तरि निष्प्रत्यूहमेव । श्राद्धपुत्रेष्ट्यादिस्थले फलभागितयोद्देशत्वं न कर्तुः किं तु पितापुत्रयोरिति न काऽप्यनुपपत्तिरेवमन्यत्राप्यूह्यम् । केचित्तु 'शास्त्रदेशितं फलमनुष्ठातरि' इत्युत्सर्गः श्राद्धादिफलबोधकवाक्यं तु तदपवादकमित्याहुः । वृत्तिकृतस्तु पितृतृप्त्यादिफलं न श्राद्धादेः किंतु तत्र भोजनादिना तृप्तानां ब्राह्मणानामाशीर्वचनस्यैव, विषहारकमन्त्रस्य विषहरणवत्, श्राद्धादेः फलं तु भोज्यभोजनशक्त्यादिरूपं कर्तुरेव तस्य निष्कामत्वे मोक्षस्यैव फलत्वमित्याहुः । कर्तुर्मुक्तत्व इव उद्देश्यस्य मुक्तत्वेऽपि कर्म फलं न जनयतीति विभावनीयम् ॥ ५ ॥

(भाष्यम्) अथापि खल्वयं बुद्ध्वा वाक्यं चकार, न त्वन्यस्य बुद्धिरन्यस्य वाक्यकृतिरिति । कुत एतत् प्रतिपत्तव्यम्?—*आत्मान्तरगुणानामात्मान्तरेऽकारणत्वात् । अन्यस्यात्मनो गुणो न खल्वन्यस्मिन्नात्मनि हेतुभावं प्रतिपद्यते । अतो नान्यस्य बुद्धिरन्यस्य वाक्यकृतौ हेतुरिति । हितभूयस्त्वोपलब्धेरविप्रलम्भः । अथ कुत एवं न विज्ञायते, विप्रलम्भोऽसाविति । भूयसां खल्वत्र हितानामुपदेश उपलभ्यते । तस्मादनुमीयते नायं विप्रलम्भ इति क्लेशोत्सर्गानुपपत्तेश्च । विप्रलम्भार्थं स्वर्गादिफलकतया यागादिकं

परिकल्प्य व्रतोपवासनियमादिभिरात्मानं क्लिश्नाति द्रव्यं च महता श्रमेणोपार्जितमुत्सृजतीत्येतन्नोपपद्यते । तदनुपपत्तेश्चानुमीयते—नायं विप्रलम्भ इति । प्रक्रियायाश्चापूर्वत्वात् । अपूर्वा चैषा स्वर्गापूर्वयागादिप्रक्रिया न खल्वपि बुद्धिमारोहति । ततोऽनुमीयते नैषा केनचित्कल्पितेति । दृष्टानुरूपा हि कल्पना भवतीति । अथापि खल्वेकस्य कर्मणामनुष्ठाने न त्वन्यफलमधिगच्छतीति कुत एतत् यदेतददृष्टं नाम गुणः फलहेतुः, सोऽयमात्मान्तरे कर्मतो भवन् न खल्वात्मान्तरे कारणं भवतीति ॥ ५ ॥

## तद्दुष्टभोजने न विद्यते ॥ ६ ॥

( उप० ) अदुष्टानां यथाशास्त्रमनुवर्तमानानां भोजनात्तृप्तानामाशीर्दानात् तत्फलं न तु दुष्टानां पात्रत्वेन निषिद्धानामपि कुण्डगोलकप्रभृतीनामित्याह—तदिति । तदित्याशीर्दानफलं परामृशति दुष्टा ब्राह्मणाः पात्रानधिकारिणो यत्र श्राद्धे भोज्यन्ते तत्र पितरि तत्फलं न विद्यते न भवतीत्यर्थः । श्राद्धफलमेव वा न भवति पितरीत्यर्थः ॥ ६ ॥

( विवृ० ) सम्यगनुष्ठितश्राद्धादिकर्मभ्य एव धर्मरूपं फलं भवति नान्यथेत्याह—तदिति । तत्साङ्गश्राद्धादिफलं निमन्त्रितदुष्टब्राह्मणभोजनस्थले न भवति तत्र कर्मणो यथाविध्यनिष्पत्तेरित्यर्थः ॥ ६ ॥

( भाष्यम् ) यच्चैतददृष्टं नाम गुणः फलहेतुः कर्मणोत्पाद्यते—*तद्दुष्टभोजने न विद्यते । यो दुष्टं भुङ्क्ते, तस्य कृतमपि कर्म नैतस्योत्पत्तौ हेतुरिति ॥ ६ ॥

## दुष्टं हिंसायाम् ॥ ७ ॥

( उप० ) के ते दुष्टा इति दुष्टलक्षणमाह—दुष्टमिति । हिंसायामिति निषिद्धकर्ममात्रोपलक्षणम्, तेन निषिद्धे कर्मणि प्रवृत्तं पुरुषं दुष्टं विजानीयादित्यर्थः ॥ ७ ॥

( विवृ० ) दुष्टाः के इत्याकाङ्क्षायामाह—दुष्टमिति । हिंसापदं निषिद्धकर्ममात्रपरम्, तथाच निषिद्धकर्मणि आसक्तं ब्राह्मणं दुष्टं विद्यादित्यर्थः ॥ ७ ॥

( भाष्यम् ) हिंसायां सत्यां यद्भोजनं तद्दुष्टं भोजनम् । अथापि खल्वेको हिनस्त्यन्यो भुङ्क्ते, तत्र योऽयमन्यो भुङ्क्ते, नैतस्य भोजनं दुष्टं स्यात्; नह्यसौ हिनस्ति ॥ ७ ॥

## तस्य समभिव्याहारतो दोषः ॥ ८ ॥

( उप० ) न केवलं दुष्टब्राह्मणस्य श्राद्धे निमन्त्रितस्य भोजनेन फला-

भावः किंतु पापमपि भवतीत्याह–तस्येति । तस्य निषिद्धे कर्मणि प्रवृत्तस्य ब्राह्मणस्य समभिव्याहारादेकपङ्क्तिभोजनसहशयनसहाध्ययनादिलक्षणात् दोषः पापमित्यर्थः ॥ ८ ॥

( विवृ० ) तादृशब्राह्मणसंसर्गात्पापमपि भवतीत्याह–तस्येति । तस्य निषिद्धकर्मासक्तब्राह्मणस्य समभिव्याहारतः संसर्गाद्दोषः पापं भवतीत्यर्थः । संसर्गश्च यौनमौखश्रौतादिर्नानाविधः, तस्य लघुत्वे पापस्य लघुत्वं गुरुत्वे तु पापस्य गुरुत्वमिति विशेषः ॥ ८ ॥

( भाष्यम् ) तत्र नैवं मन्तव्यमित्याह–*तस्य समभिव्याहारतो दोषः । योऽयमन्यो भुङ्क्ते, स खलु सत्यां हिंसायामभ्यवहरतीति तस्यापि दोषो भवति । यश्चापरो दुष्टं भुक्तवता संसृज्यते तस्यापि दोषो भवतीति ॥८॥

**तददुष्टे न विद्यते ॥ ९ ॥**

( उप० ) तत् किमदुष्टसमभिव्याहारादपि दोष एव, नेत्याह–तददुष्ट इति । तत्पापमदुष्टे यथाशास्त्रं व्यवहरमाणे ब्राह्मणे श्राद्धे भोजिते न विद्यते न भवतीत्यर्थः ॥ ९ ॥

( विवृ० ) निर्दोषब्राह्मणसंसर्गे तु न दोष इत्यर्थायातमपि स्पष्टार्थमाह–तददुष्ट इति । तदिति बुद्धिस्थं पापं परामृशति, निर्दोषब्राह्मणसंसर्गे तु पापं न भवतीत्यर्थः ॥ ९ ॥

( भाष्यम् ) यश्च प्राणिवधो न दुष्यति शास्त्रानुज्ञानात्, तस्मिन् शास्त्रानुज्ञाविषये प्राणिवधे भुञ्जानस्य भोजनं न दुष्टमिति ॥ ९ ॥

**पुनर्विशिष्टे प्रवृत्तिः ॥ १० ॥**

( उप० ) ननु सत्पात्राप्रतिलम्भे यत्र श्राद्धदानादौ प्रथमं दुष्टा एव निमन्त्रिताः क्रमेण तु सत्पात्रप्रतिलम्भे किं विधेयमित्यत्राह–पुनरिति । श्राद्धे प्रतिग्रहे वा विशिष्टा यथाशास्त्रमनुवर्तमाना यदि लभ्यन्ते तदा निमन्त्रितानपि निन्द्यान् परिहृत्य तानेव भोजयेत् । 'न निमन्त्रितान्प्रत्याचक्षीत' इति तु सत्पात्रपरम्, निन्द्यांस्तु निमन्त्रितान् द्रविणदानादिना संतोषयेत् ॥ १० ॥

( विवृ० ) ननु यत्र दुष्टब्राह्मणेन श्राद्धादिकं संपादितं तत्र किं कर्तव्यमित्यत्राह–पुनरिति । पुनर्विशिष्टे अदुष्टब्राह्मणादिद्वारा श्राद्धादिसंपादने प्रवृत्तिर्विधेया पूर्वकृतं श्राद्धं तु पण्डमेवेति भावः ॥ १० ॥

( भाष्यम् ) यो वै कदाचिद्दुष्टं भुक्तवान्, तस्य–*पुनर्विशिष्टे प्र-

वृत्तिः। विशिष्टे शास्त्रानुमतभोजने प्रवृत्तिः कर्तव्या। एवं खल्वस्य दोष उपशाम्यतीति ॥ १० ॥

**समे हीने वा प्रवृत्तिः ॥ ११ ॥**

(उप०) यत्र स्वापेक्षया विशिष्टा न लभ्यते श्राद्धदानादौ तत्राह–सम इति। समे स्वसदृशे, हीने स्वापेक्षया गुणादिना न्यूने, अदुष्टे पात्रे श्राद्धदानादौ प्रवृत्तिस्तेषामेवाशीर्दानात् पितरि सुखमित्यर्थः। निषिद्धानां परं त्यागो न त्वदुष्टानां समहीनानामपीति भाव. ॥ ११ ॥

(विवृ०) ननु यत्र स्वापेक्षया उत्कृष्टो ब्राह्मणो न लभ्यते तत्र कि कर्तव्यमित्यत्राह–समे इति। समे श्राद्धकर्तृतुल्ये, हीने स्वापेक्षया न्यूने वा अदुष्टे ब्राह्मणे प्रवृत्तिः तेन श्राद्धं संपादनीयम्, दुष्टास्तु सर्वथैव त्याज्या इति भावः ॥ ११ ॥

(भाष्यम्) विशिष्टे प्रवृत्तेः खल्वसंभवे–*समे हीने वा प्रवृत्तिः। समे वा प्रवर्तेत हीने वा प्रवर्तेत न हिंसायामिति। अथापि खलु विशिष्टे प्रवृत्तेरसंभवे समहीनयोरप्रवृत्तिः कर्तव्या। तदेतदनशनव्रतमस्य दोषापगमायेति ॥ ११ ॥

**एतेन हीनसमविशिष्टधार्मिकेभ्यः परस्वादानं व्याख्यातम् ॥१२॥**

(उप०) श्राद्धे दानादौ च संप्रदानसाद्गुण्येन धर्मोत्पत्तिमभिधाय तादृशादपादानादपि धर्मोत्पत्तिमतिदिशति—एतेनेति। यथोत्तरं धर्मोत्कर्षः, हीनादपि भूम्यादिप्रतिग्रहे, समादपि, स्वापेक्षया विशिष्टादपि धार्मिकाद्धर्म इत्यर्थः। परस्वादानं परस्मात्स्वस्य धनस्यादानं प्रतिग्रहः। वृत्तिकारास्तु–परस्वादानं चौर्यादिना परस्वग्रहणं व्याख्यातम्। तथाच श्रुतिः 'शूद्रात्सप्तमे, वैश्यादशमे, क्षत्रियात्पञ्चदशे, ब्राह्मणात्प्राणसंशये' इति। क्षुधापीडितमात्मानं कुटुम्बं वा रक्षितुं सप्त दिनान्याहारमप्राप्य शूद्रभक्ष्यापहारः कार्यः, एवं दश दिनान्याहारमप्राप्य वैश्यात्, पञ्चदशदिनान्याहारमप्राप्य क्षत्रियात्, प्राणसंशये ब्राह्मणाद्भक्ष्यापहरणं न दोषायेत्याहुः ॥१२॥

(विवृ०) श्राद्धदानादौ अपादानस्य साद्गुण्यादपि संप्रदानस्य धर्मविशेषो भवतीत्याह–एतेनेति। एतेन दानस्थलीयन्यायेन परस्वादानं प्रतिग्रहोऽपि व्याख्यातमुक्तप्रायमेव। तथाच न्यूनसमविशिष्टेभ्यः प्रतिग्रहः कर्तव्यस्तत्रापि फलतारतम्यं नतु कदाचिद्दुष्टादिति समुदितार्थः। परस्मात्स्वस्य धनस्यादानं नतु परस्वादानं चौर्यादिना परधनस्य ग्रहणं

तस्य निषिद्धत्वात् । वृत्तिकारैस्तु प्राणसंशयादिसमये चौर्यस्यापि कर्तव्यताबोधकमिदं सूत्रमित्युक्तमिति ॥ १२ ॥

( भाष्यम् ) यदेतत्परस्मात्स्वस्य धनस्यादानं, तदेतेन व्याख्यातम् । समहीनाभ्यां न प्रतिग्रहीतव्यं किंतु विशिष्टधार्मिकेभ्य इति । अथापि खलु विशिष्टधार्मिकेभ्यः प्रतिग्रहीतव्यं समेभ्यो हीनेभ्यश्चेति यथोत्तरमपकर्ष इति ॥ १२ ॥

## तथा विरुद्धानां त्यागः ॥ १३ ॥

( उप० ) न केवलं प्राणसंशये परस्वादानं न निषिद्धं किंतु तस्यां दशायामपहर्तुं ये न प्रयच्छन्ति तेषां वधोऽपि कार्यो न तावता धर्महानिरधर्मप्रादुर्भावो वेत्याह–तथेति । तस्यां दशायां विरुद्धानां विपरीतमाचरतां त्यागो वधः कार्य इत्यर्थः । तदुक्तम् ' कर्मणा येन केनापि मृदुना दारुणेन वा । उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ' इति ॥ १३॥

( विवृ० ) कानिचिन्निन्दितकर्माण्यपि पापं नोत्पादयन्तीत्याह–तथेति । विरुद्धानां हन्तुमुद्यतानां त्यागो वधस्तथा न निषिद्ध इत्यर्थः ' आततायिनमायान्तं हन्यादेवाविचारयन् ' इति वचनात् ॥ १३ ॥

( भाष्यम् ) यथैतत्–*तथा विरुद्धानां त्यागः । शास्त्रनिषिद्धानां कर्मणां त्यागः कर्तव्यः ॥ १३ ॥

## हीने परे त्यागः ॥ १४ ॥

(उप०) ननु चाविशेषेणैव परस्य वधः, नेत्याह–हीन इति । यदि स्वस्माद्धीनः परो भवति योऽपहर्तुं न ददाति तस्य शूद्रादेस्त्यागो वध इत्यर्थः ॥ १४॥

( विवृ० ) तत्रापि विशेषमाह–हीन इति । हीने स्वापेक्षया हीनवर्णे परे शत्रौ त्यागो वध इत्यर्थः ॥ १४ ॥

( भाष्यम् ) यश्च परोऽग्निं गरं वा ददाति, धनं क्षेत्रं दारांश्चापहरति, शस्त्रेण च हन्तुं यतते, स चेदात्मनो हीनस्तस्य त्यागो विसर्गो वधः करणीय इति ॥ १४ ॥

## समे आत्मत्यागः परत्यागो वा ॥ १५ ॥

( उप० ) सममधिकृत्याह–सम इति । यदि स्वसदृशो ब्राह्मण एव विरोधी भवति तदात्मन एवोपवासादिना त्यागोऽवसादः कर्तव्यः, यदि स्वस्य कुटुम्बस्य वा रक्षाप्रकारो न दृश्यते विरोधी च समो भवति तदा तस्यैव त्यागो वध इत्यर्थः ॥ १५ ॥

( विवृ० ) अहीने शत्रौ किं कर्तव्यमित्यत्राह—सम इति । समे स्वसमानवर्णे समगुणे च परे इत्यनुषञ्जनीयम् । आत्मत्यागः आत्मावसादः कर्तव्यः । तत्रापि तादृशपरो यदि पुत्रादिसहितं तं हन्तुमुद्यतस्तदा समस्यापि वधः कार्य इति । यद्वा 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षडेते आततायिनः ॥' इति वचनोक्तानामाततायिनां धनक्षेत्राद्यपहारकेषु आत्मत्यागः आत्मधनादित्यागः अग्निदादीनां हन्तुमुद्यतानां पुनर्वध इत्यर्थः ॥ १५ ॥

(भाष्यम्) सोऽयं परो यद्यात्मनस्तुल्यो भवति, तदा परस्यात्मनो वा त्यागः कर्तव्यः ॥ १५ ॥

**विशिष्टे आत्मत्याग इति ॥ १६ ॥**

( उप० ) तत्किं स्वापेक्षया यदि विशिष्टो भवति विरोधी तदा तस्यापि वध एव कार्यः, नेत्याह—विशिष्ट इति । स्वापेक्षया विशिष्टे वेदाध्ययनादिना उत्कृष्टे विरोधिनि आत्मन एव त्यागो विधेयः । प्राणसंशये सत्यप्यात्मभरणमेवाभिप्रेयात् न तु ब्राह्मणं हन्यादित्यर्थः । इतिराह्निकपरिसमाप्तौ ॥ १६ ॥

इति श्रीशाङ्करे वैशेषिकसूत्रोपस्कारे षष्ठाध्यायस्याद्यमाह्निकम् ।

( विवृ० ) स्वापेक्षया उत्तमवर्णे गुणाधिके आततायिनि किं कर्तव्यमित्यत्राह—विशिष्ट इति । विशिष्टे स्वापेक्षया उत्तमवर्णे गुणाधिके च वैरिणि आत्मत्यागः आत्मावसाद एव कार्यो नतु विद्यागुणसंपन्नब्राह्मणस्य वैरिणो वध इत्यर्थः । न च 'गुरुं वा बालवृद्धं वा ब्राह्मणं वा बहुश्रुतम् । आततायिनमायान्तं हन्यादेवाविचारयन् ॥' इति वचनेन विरोध इति वाच्यं तस्य कैमुतिकन्यायोपष्टम्भकतया मिताक्षराकारैर्व्याख्यातत्वात् । अत एव 'पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः' इति भगवद्गीतावचनमपि संगच्छते । पूर्वसूत्रे समे इति द्वयोर्ब्राह्मणत्वे इति बोध्यं तत्रापि परत्यागो वेति पारिभाषिकवधपरम् 'वपनं द्रविणादानं स्थानान्निर्यापणं तथा । एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः ॥' इति वचनात् । अधिकमन्यत्रानुसन्धेयम् । आह्निकसमाप्तिसूचनायेतिकारः ॥ १६ ॥

इति श्रीजयनारायणतर्कपञ्चाननकृतायां कणादसूत्रविवृतौ षष्ठाध्यायस्य प्रथमाह्निकम् ।

( भाष्यम् ) तत्राप्यात्मनस्त्यागो विशिष्यते इति । अथापि खलु स यदि परः स्वस्माद्विशिष्टो भवति, तदाऽऽत्मैव त्यक्तव्य इति ॥ १६ ॥

इति श्रीचन्द्रकान्तीये वैशेषिकभाष्ये षष्ठस्याध्यायस्याद्यमाह्निकम् ।

# षष्ठाध्याये द्वितीयाह्निकम् ।

**दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय ॥ १ ॥**

( उप० ) एवं पूर्वाह्निके वैदिकी प्रमा गुणजन्येति तदुत्पत्तौ गुणाभिधानम्, 'शास्त्रदेशितं फलमनुष्ठातरि' इति विवेचनम्, निषिद्धाचरणेऽपि प्रत्यवायानुत्पत्तिः कस्यांचिद्दशायामित्यस्य विवेचनं च वृत्तमधुना 'यतोऽभ्युदयनिःश्रेयससिद्धिः'। इति द्वितीयं सूत्रं व्याचिख्यासुर्विशेषतो धर्मोत्पत्तिपरीक्षायां वर्तिष्यमाणायामाह–दृष्टादृष्टेति । दृष्टप्रयोजनानि कृषिवाणिज्यराजसेवादीनि, अदृष्टप्रयोजनानि यागदानब्रह्मचर्यादीनि, एतेषां कर्मणां मध्ये यत्र दृष्टं प्रयोजनं नोपलभ्यते तत्रादृष्टं प्रयोजनं कल्पनीयम्, तच्चाभ्युदयाय तत्त्वज्ञानाय स्वर्गाय वा । यद्वा अभ्युदयायेति चतुर्थी प्रथमार्थे तेन फलमभ्युदय इत्यर्थः । अदृष्टं फलमपूर्वमेव तद्यदि योगजं तदाऽभ्युदय आत्मसाक्षात्कारः । यदि च यागदानादिजं तदाऽभ्युदय. स्वर्गः । तत्रापि यथा दोग्धि पचतीत्यादिक्रिया सद्यःफलिका, वपति कर्षतीत्यादिक्रिया च चिरभाविफला, तथा यजति ददाति ब्रह्मचर्यं चरतीत्यादिक्रिया तावत्सद्यःफलिका न भवति तादृशस्य फलस्यानुपलब्धेः । न च धार्मिकतया ज्ञानाल्लाभादिकमेव फलम्, प्रच्छन्नं ब्रह्मचर्यादिचरतां तत्फलानुद्देशात्तस्माच्चिरभावि स्वर्गादिकमेव फलं तच्चाशुतरविनाशिन्याः क्रियाया न साक्षादित्यान्तरालिकं क्रियाफलयोः समानाधिकरणमपूर्वमेव पर्यवस्यति ॥ १ ॥

( विवृ० ) इदानी विशेषतो धर्मपरीक्षार्थं कर्मफलं विवेचयति–दृष्टादृष्टेति । दृष्टादृष्टानि प्रयोजनानि येषां कर्मणां तन्मध्ये दृष्टाभावे दृष्टप्रयोजनाभावे अभ्युदयाय स्वर्गाय स्वर्गफलकं यत्प्रयोजनं धर्मरूपं तदेव कल्पनीयम् । दृष्टप्रयोजनानि कर्षणबीजवपनदोहनपचनादीनि, अदृष्टप्रयोजनानि यागदानहोमार्चनादीनि, यागादीनां दृष्टप्रयोजनासंभवात् । नच यागादौ दृष्टं दुःखमेव फलम्, तस्य प्रयोजनत्वाभावेन यागादेरननुष्ठानापत्तेः । नापि पूजाख्यातिरूपं दृष्टं फलं, तदप्रेप्सुभिरपि यागाद्याचरणात् । नापि यागादीनां निष्फलत्वं सर्वेषां परलोकार्थिनां तेषु प्रवृत्त्यनुपपत्तेः । न च केनचित्स्वर्गफलकतया यागादिकं प्रकल्प्य परप्रतारणार्थं स्वयमनुष्ठाय धन्धिता लोका यागादिषु प्रवर्तन्ते वस्तुतो यागादिकर्माणि निष्फलान्येवेति वाच्यं, परप्रतारणार्थं बहुवित्तव्ययायाससाध्ययागाद्यनुष्ठा-

---

१ परीक्षा वर्तिष्यमाणामिति बॉ रा. आ. सो. पु. पाठः ।

नस्यासंभवात् । क एवं लोकोत्तरः यः परप्रतारणामात्रार्थं बहुवित्तव्ययायासोपवासादिनात्मानमवसादयेत् । तस्मात्स्वर्गादिफलमवश्यं यागादेरङ्गीकार्यम्, तज्जनकत्वं चाशुविनाशिनां कर्मणां न संभवतीति तद्द्वारीभूतं सुकृतापूर्वमवश्यं कल्पनीयमिति संक्षेपः ॥ १ ॥

( भाष्यम्) दृष्टप्रयोजनानि कृषिवाणिज्यादीनि अदृष्टप्रयोजनान्यश्वमेधादीनीति द्विविधानि कर्माणि । तेषां खल्वेषाम्—*दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय । यत्र दृष्टं न भवति प्रयोजनं, तत्राभ्युदयाय स्वर्गाय प्रयोजनं धर्माख्यमनुमातव्यमिति । अथापि खल्वलौकिकानां कर्मणां लौकिकवत्केषांचित् दृष्टं प्रयोजनं ग्रामादि । शीघ्रं फलनिष्पत्तेः । इह खल्वेषां दृश्यते प्रयोजनमिति । केषांचिदमुत्रफलानां न त्विह प्रयोजनं दृश्यते । उभयेषां चैषां यत्र शास्त्रदृष्टस्य प्रयोजनस्य ग्रामादेरभावः वीतराग पुरुषो यदैतत्प्रयोजनं न कामयते, तदा खल्वेषां प्रयोजनमभ्युदयाय भवत्यदृष्टाख्यमिति ॥ १ ॥

**अभिषेचनोपवासब्रह्मचर्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणदिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय ॥ २ ॥**

( उप० ) अदृष्टफलानि कर्माणि परिसंचष्टे—अभिषेचनेति । अदृष्टायेत्यदृष्टलक्षणाय फलाय अदृष्टद्वारा स्वर्गापवर्गलक्षणाय फलाय वा । एतेनादृष्टफलकश्रौतस्मार्तसकलकर्मोपसंग्रहः । तत्राभिषेचनं स्नानं 'गङ्गायां स्नायात्' इत्यादिविधिविधेयम् , उपवासः 'एकादशीमुपवसेत् ' इत्यादिविधिविधेयः, ब्रह्मचर्यं सामान्यत एव धर्मसाधनम् , गुरुकुलवासो ब्रह्मचारिणां वेदाध्ययनमहानाम्न्यादिव्रतार्थः, वानप्रस्थं वयःपरिणामे वनं प्रस्थितानां यत्कर्म, यज्ञो राजसूयवाजपेयादिः, दानं 'गां दद्यात् ' इत्यादिविधिविधेयम्, प्रोक्षणं 'व्रीहीन् प्रोक्षति ' इत्यादिविधिविधेयम्, दिक् 'प्राचीनप्रवणे यजेत ', 'प्राङ्मुखोऽन्नानि भुञ्जीत ' इत्यादिविधिविधेया, नक्षत्रं श्राद्धादौ मघादि, मन्त्र आपोहिष्ठेत्यादिः, कालः 'मासि मासि वोऽशनम्, ' 'अमावास्यायामपराह्णे दद्यात् ', 'ग्रीष्मे पञ्चतपाः ' 'वसन्तेऽग्नीनादधीत ' इत्यादिविधिविधेयः, नियमो वर्णाश्रमिणां यथाशास्त्रमनुष्ठानम्, तदेवं धर्मस्य आत्मा समवायिकारणम्, आत्ममनःसंयोगोऽसमवायिकारणम्, श्रद्धा स्वर्गादिलक्षणप्रयोजनज्ञानं च निमित्तकारणमनुसंधेयम् ॥ २ ॥

( विवृ० ) तत्रादृष्टफलकानि कानिचित्कर्माणि प्रदर्शयति–अभिषेचनेति । एतानि कर्माणि अदृष्टाय अदृष्टजनकानि । तत्र अभिषेचनमभिषेको राज्ञाम्, उपवासः शिवरात्र्युपवासादिः, ब्रह्मचर्यमष्टविधमैथुनादिवर्जनम्, गुरुकुलवासो ब्रह्मचारिणां वेदाध्ययनाद्यर्थः, वानप्रस्थं वयःशेषे वनप्रस्थितानां पुटपाकादिकर्म, यज्ञो राजसूयादिः, दानमाषाढ्यादौ, प्रोक्षणं व्रीहिपश्वादीनाम्, दिक् प्राङ्मुखभोजनादि, नक्षत्रं मघाश्राद्धादिः, मन्त्रः प्रणवगायत्र्यादिजपः, कालः चातुर्मास्यव्रतादिः, नियमाः शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि, चकारादनुक्तानि श्रौतस्मार्तान्यपि ॥ २ ॥

(भाष्यम्) अथादृष्टप्रयोजनानामुदाहरणम्–*अभिषेचनोपवासब्रह्मचर्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणदिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय । अभिषेचनमभिषेकः स्नानं, पापादुपावृत्तस्य गुणैः सह वासः, उपस्थवशीकारः, गुरुकुले वेदस्याधिगमार्थं वासः, वनं प्रस्थितस्य यद्विहितं कर्तव्यं, अग्निहोत्रादिर्यज्ञः, हिरण्यादीनां दानं, व्रीह्यादीनां प्रोक्षणं, प्राच्यादयो दिशः, नक्षत्रमाधानादौ रोहिण्यादि, अघमर्षणादयो मन्त्राः, पूर्वाह्णादिरुदगयनादिश्च कालः, समादिर्देशनियमा. शौचादयो नियमाश्चैतत्सर्वमदृष्टाय भवति ॥ २ ॥

## चातुराश्रम्यमुपधा अनुपधाश्च ॥ ३ ॥

( उप० ) एवं धर्मसाधनमभिधाय अधर्मसाधनमपि समुच्चिन्वान आह–चातुराश्रम्यमिति । चतुर्णामाश्रमाणां समानं यद्धर्मसाधनं तत्तावत् पूर्वसूत्रेणैवोक्तमिति शेषः । उपधाः भावस्य श्रद्धाया दोषा., अनुपधाः श्रद्धाया भावस्यादोषाः तेऽपि धर्माधर्मयोः साधनानि यथास्वमूहनीयानि। उपधापदेनाधर्मसाधनानि सर्वाण्युपसंगृहीतानि ॥ ३ ॥

( विवृ० ) प्रसङ्गादधर्मात्मकादृष्टसाधनमप्याह–चातुराश्रम्यमिति । ब्रह्मचारिगृहिवानप्रस्थभिक्षुरूपेषु चतुर्षु आश्रमेषु विहितं यत्कर्म तच्चातुराश्रम्यं पूर्वमुक्तमिति शेष. । उपधा भावदोषाः अनुपधा भावादोषाश्च धर्माधर्मसाधनानीत्यर्थः ॥ ३ ॥

(भाष्यम्) न चैतावदेवादृष्टाय, किंतु–*चातुराश्रम्यमुपधा अनुपधाश्च । चतुर्णामाश्रमाणां स्वस्वाधिकारं यद्विहितमध्ययनभिक्षाचर्यादि, यद्वैषामविशेषेण विहितं क्षमादि, याश्चोपधाः, याश्चानुपधाः, सर्वं चैतददृष्टाय इति । तत्रोपधाऽधर्माय शिष्टं धर्मायेति विवेकः ॥ ३ ॥

## भावदोष उपधाऽदोषोऽनुपधा ॥ ४ ॥

( उप० ) उपधानुपधे लक्षणतो विवेचयन्नाह—भावदोष इति । भावः इच्छा रागः प्रमादोऽश्रद्धामदमानासूयाप्रभृतयो भावदोषा उपधापदेनोच्यन्ते । श्रद्धा मनःप्रसादो देशितकर्मानुष्ठानाध्यवसाय इतिकर्तव्यतापरिच्छेदश्चानुपधा । तदेतयोर्धर्माधर्मनिमित्तकारणत्वमुक्तम् ॥ ४ ॥

( विवृ० ) उपधादिलक्षणमाह—भावदोष इति । कामक्रोधलोभमोहमदमात्सर्यादयो भावदोषा उपधानशब्दवाच्याः श्रद्धाऽप्रमादानालस्यमनःप्रसादादयोऽदोषा अनुपधाशब्दवाच्या इत्यर्थः ॥ ४ ॥

( भाष्यम् ) तत्र—*भावदोष उपधाऽदोषोऽनुपधा । भावस्यात्मनो यो दोषः स भवत्युपधा । विपर्ययादनुपधेति । दोषः खल्वात्मनः पापं नास्तिक्यबुद्धिरश्रद्धा प्रमादश्चेत्येवमादिः । विपर्ययेणादोष इति ॥ ४ ॥

## यदिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितं च तच्छुचि ॥ ५ ॥

( उप० ) शुच्यशुचिनी चोपधानुपधे । तत्र शुच्यशुचिनी विवेचयति—यदिति । इष्टं श्रुत्या स्मृत्या च यद्रूपादिकं विहितं यस्य द्रव्यस्य तत्तथा तत्र रूपम्, 'अरुणया एकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाति', 'श्वेतं छागमालभेत' इत्यादौ, प्रोक्षितं मन्त्रेणोदकसिक्तम्,अभ्युक्षितं विना मन्त्रमुदकसिक्तं चकारान्न्यायतो लब्धम्। तच्च 'याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत्' इत्यादिनियमविधिबोधितम् ॥ ५ ॥

( विवृ० ) अनुपधाशब्देन शुच्यपि बोध्यते किं तच्छुचीत्याह—यदिति । इष्टा श्रुतिस्मृतिविहिता रूपरसगन्धस्पर्शा यत्र द्रव्ये तद्यथा सोमक्रयादावारुण्यादि, प्रोक्षितं मन्त्रेण जलसिक्तम्, अभ्युक्षितं तुष्णी जलसिक्तम्, चकाराद्वाक्प्रशस्तयाजनादिलब्धमूल्यक्रीतादीनां संग्रहः ॥ ५ ॥

( भाष्यम् ) अथादृष्टनिमित्तान्तरम्—*यदिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितं च तच्छुचि । अदृष्टाय भवतीति प्रकृतम् । न वै विधानमात्रेण द्रव्यस्य शुचिभावः कित्वेवमिति ॥ ५ ॥

## अशुचीति शुचिप्रतिषेधः ॥ ६ ॥

( उप० ) अशुचिलक्षणमाह—अशुचीति । यद्द्रव्यं शुचि तद्विपरीतमशुचीत्यर्थः । अप्रशस्तरूपरसगन्धस्पर्शममन्त्रप्रोक्षितमनभ्युक्षितं निषिद्धजलाभ्युक्षितं वा अन्यायागतं, कृषिवाणिज्यागतं ब्राह्मणस्य द्रव्यमशुचीत्यर्थः ॥ ६ ॥

( विवृ० ) एतद्विपरीतमशुचीत्याह—अशुचीति । शुचिप्रतिषेधः शुचिभिन्नमित्यर्थः । तच्च अविहितरूपादिमदप्रोक्षितानभ्युक्षितान्यायोपार्जितवित्तादि ॥ ६ ॥

( भाष्यम् )यत्पुनरित्थंभूतं न भवति, विहितमनुपहतमपि नैव तच्छुचीत्याह—*अशुचीति शुचिप्रतिषेधः । यन्न भवति शुचि, तदेतदुपहतमनुपहतं वा अशुचीति ॥ ६ ॥

अर्थान्तरं च ॥ ७ ॥

( उप० ) अशुच्यन्तरमाह—अर्थान्तरमिति । प्रशस्तरूपरसगन्धस्पर्शमपि प्रोक्षितमभ्युक्षितं न्यायार्जितं च यत्तत्रापि वाग्दुष्टं भावदुष्टं च यत्तदप्यशुचीत्यर्थः ॥ ७ ॥

( विवृ० ) अन्यदप्यशुचीत्याह—अर्थान्तरमिति । अर्थान्तरं वस्त्वन्तरं चकारः पुर्वोक्तसमुच्चायकः । तथाच शुचिद्रव्यमपि वाग्दुष्टं भावदुष्टं चेत्तदप्यशुचीत्यर्थः ॥ ७ ॥

( भाष्यम् ) न वै खलु विहितमनित्थंभूतमेवाशुचि, किंतु—*अर्थान्तरं च । अन्योऽर्थोऽर्थान्तरम् । विहितादन्यो योऽर्थः सोऽप्यशुचिर्भवति । तदेवं द्रव्यं गुणः कर्म चाशुचीत्याख्यायते । एते ह्यर्था इति । तत्र यद्द्रव्यं यस्य भोजनादौ विहितं हविष्यान्नादि, ततोऽन्यन्मांसादि द्रव्यं तस्याशुचि । यो गुणो यस्य विहितो मार्दवादिस्तद्विपर्ययस्तस्याशुचिः । यच्च कर्म यस्य विहितमध्ययनादि, ततोऽन्यत्स्तेयादिकं तस्याशुचीति । अथापि खल्वर्थस्य योऽयं दोषः, स भवत्युपधा अदोषोऽनुपधा इति ॥७ ॥

अयतस्य शुचिभोजनादभ्युदयो न विद्यते नियमाभावाद्विद्यते[1] वाऽर्थान्तरत्वाद्यमस्य ॥ ८ ॥

( उप० ) इदानी धर्माधर्मौ प्रति सहकार्यन्तरमाह—अयतस्येति । अयतस्य यमरहितस्यासंयतस्येति यावत् । 'हस्तौ पादौ प्रक्षाल्याचम्य वाग्यतो भुञ्जीत । भोक्ष्यमाणः प्रयतोऽपि द्विराचामेत्' इत्यादिबोधितयमरहितस्य भोजनं नाभ्युदयाय किंतु पापाय । कुत एवमित्यत आह—नियमाभावान्नियमस्य सहकारिणोऽभावात् । नियमे सति यत्तदाह—विद्यते वा यथोक्तयमसाहित्येन भोजने भवत्येवाभ्युदयः । कुत इत्यत आह—अर्थान्तरत्वाद्यमस्य

---

१ चन्द्रकान्तस्तु विद्यते वेत्यादियोग विभज्य व्याचष्टे ।

भोजनादर्थान्तरं यतो यमः । तथाच सहकारिकारणं विना न फलसिद्धि-स्तस्मिन् सति फलसिद्धिरित्यर्थः ॥ ८ ॥

(विवृ०) शुचिद्रव्यभक्षणं यमसहकृतं धर्मं तदसहकृतं चाधर्मं जनयतीत्याह—अयतस्येति । अयतस्य पाणिपादप्रक्षालनाचमनादिरहितस्य शुचि-द्रव्यभक्षणादभ्युदयस्तज्जनकसुकृतापूर्वम्—आयुर्घृतमितिवत्—न विद्यते न भवति नियमाभावाद्यमरूपसहकारिविरहात् । संयतस्य तु भवेदेव सुकृतमित्याह—विद्यते वेति भवत्येवेत्यर्थः 'वा स्याद्विकल्पोपमयोरेवार्थे वा समुच्चये' इत्यमरकोषाद्यमस्यार्थान्तरत्वात्सहकारित्वात् । तथाच यमसहितं शुचिभोजनं धर्मं जनयति तद्रहितं तु पापं जनयतीति भावः ॥ ८ ॥

(भाष्यम्)—तत्र विपर्ययेणादावनुपधाया उदाहरणं, परस्तादुपधाया इत्ययं विशेषः—*अयतस्य शुचिभोजनादभ्युदयो न विद्यते नियमाभावात् । योऽयमयत. पुरुषः स खलु स्नातः शुचिरपि यच्छुचि द्रव्यं भुङ्क्ते न तस्मादभ्युदयो भवति । कस्मात्? नियमाभावाद् । यद्वै नियमेन क्रियते, तत्खल्वभ्युदयायेति । यमः खल्वानृशंस्यादिर्दशविधः । यो वै यमो नियमः खलु सः । यमोऽपि यच्छतेर्नियमोऽपि । तस्मादयतस्य न नियमो विद्यते नियमस्याभावाच्छुचिभोजनेऽपि न तस्याभ्युदयो भवतीति।

अस्य प्रतिषेधः—*विद्यते वाऽर्थान्तरत्वाद्यमस्य । वा शब्दात्पक्षो विपरिवर्तते । योऽयमानृशंस्यादिरहितः स खल्वयतः । तस्यायतस्यापि शौचादिनियमवतः शुचिभोजनादभ्युदयो विद्यते । कस्मात्? यमस्यार्थान्तरत्वात्। अन्यः खल्वर्थो यमोऽन्यश्चार्थो नियमः । तत्र यमो दशविध आनृशंस्यादिः नियमोऽपि दशविधः शौचादिरिति । तत्रायतस्य नियमाभावादिति तदुक्तं तदयुक्तम् । अथापि खलु यमो नियमश्चेति द्वयं यच्छतेरेव, कस्मादर्थविशेषप्रतिपत्तिः? उपसर्गविशेषात्परिभाषातश्चेति ॥ ८ ॥

## असति चाभावात् ॥ ९ ॥

(उप०) ननु यममात्रमेव तन्त्रं तर्हि भोजनमतन्त्रमेवेत्यत आह—असतीति । यमे सत्यपि शुचिभोजनेऽसति अभावादभ्युदयस्येति शेषः । तथाच यमो भोजनं च द्वयमेव पुण्यकारणमित्यर्थः । भोजनमित्युपलक्षणं यागदानस्नानहोमादीनामपि श्रौतस्मार्तकर्मणां यमनियमौ सहकारिणौ॥९॥

(विवृ०) नन्वेवं यमसहितमशुचिभोजनं धर्मजनकं न वेत्यत्राह—असतीति । असति अप्रशस्ते 'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सन्'

इति कोषादशुचिद्रव्यभक्षणे इति यावत् । अभावादभ्युदयसाधनस्य धर्मस्याभावात्। तथाच निन्दितत्वेनाशुचिद्रव्यभोजनं यमसहकृतमपि धर्मं न जनयति किंत्वधर्ममेवेति भावः ॥ ९ ॥

( भाष्यम् ) यमस्यार्थान्तरत्वात्तदभावेऽपि नियमादभ्युदयो न खल्वपि नियमस्यार्थान्तरस्याभावे यमादिति। कुत एतत्प्रतिपत्तव्यम्–*असति चाभावात्। सति भावाचेति चार्थः। असति शौचादिनियमे न भवत्यभ्युदयः सति च भवतीति न नियमाभावे यमादभ्युदयनिष्पत्तिः। नियमेन हि कृतमभ्युदयाय भवतीति। परीक्षितौ संसारमूलभूतौ धर्माधर्मौ ॥९॥

## सुखाद्रागः ॥ १० ॥

( उप० ) एवं धर्माधर्मप्रादुर्भावं प्रति यमं सहकारिणमभिधाय दोषं सहकारिणमभिधातुं दोषनिदानमाह–सुखादिति। स्रक्चन्दनवनितादिविषयसेवनजन्मनः सुखादुत्तरोत्तरं तज्जातीये सुखे तत्साधने वा राग इच्छा संजायते अहिकण्टकादिजन्मनो दुःखात्तत्र तत्साधने वा द्वेष इत्यपि द्रष्टव्यम्। रागद्वेषमोहाश्च प्रवर्तकत्वेन दोषा इत्यभिधीयन्ते। तथाच गौतमीयं सूत्रम्–'प्रवर्तनालक्षणा दोषाः' इति ॥ १० ॥

( विवृ० ) दोषस्यापि धर्माधर्मकारणत्वात्तत्कारणं दर्शयति–सुखादिति। सुखात्सुखभोगादनन्तरं तत्साधने स्रक्चन्दनवनितादौ राग इच्छा भवतीति शेषः। एवं दुःखभोगानन्तरमपि तत्साधनेऽहिकण्टकादौ द्वेषो जायते इति बोध्यम्। मोहोऽपि रागद्वेषकारणमिति रागद्वेषद्वारा मोहोऽपि प्रवर्तक इति रागद्वेषमोहास्त्रय एव दोषाः धर्माधर्मयोः सहकारिकारणानि[1]। तदुक्तं गौतमीये 'प्रवर्तनालक्षणा दोषाः' इति। 'तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात्' 'तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः' इति च ॥ १० ॥

(भाष्यम्) तन्निमित्तं दोष इदानीं परीक्ष्यते–*सुखाद्रागः। स्रक्चन्दनाद्यासेवननिमित्तात्सुखाद्रागो रञ्जनं पुरुषस्य। सुखनिमित्तेषु खल्वसौ रज्यतीति ॥ १० ॥

## तन्मयत्वाच्च ॥ ११ ॥

( उप० ) अत्र सुखदुःखे एव यदि रागद्वेषौ जनयतः तदा तयोर्नाशे कथं तौ स्यातामत आह–तन्मयत्वाच्चेति। रागद्वेषौ भवत इति शेषः। विष-

[1] सहकारिकारणमिति बॉ रा सो पु पाठः।

याभ्यासजनितो दृढतरः संस्कारविशेषस्तन्मयत्वं यद्वशात्कामातुरस्य कामिनीमलभमानस्य सर्वत्र कामिनीदर्शनम्, एकदा भुजङ्गदष्टस्य तत्र दृढतरसंस्कारवतः सर्वत्र भुजङ्गदर्शनम् । तदुक्तं ' तन्मयत्वं तत्प्रकाशो बाह्याभ्यन्तरतस्तथा ' इति ॥ ११ ॥

( विवृ० ) प्रयोजकान्तरमाह—तदिति । तन्मयत्वाद्विषयभोगाभ्यासजनितदृढतरसंस्काराच्च रागादयो भवन्तीत्यर्थः ॥ ११ ॥

( भाष्यम् ) विषयाभ्यासनिमित्तः संस्कारविशेषः तन्मयत्वम् । तस्माच्चान्तरेणापि सुखाभिसंधिमभ्यासवशादसौ रज्यतीति ॥ ११ ॥

**अदृष्टाच्च ॥ १२ ॥**

( उप० ) हेत्वन्तरं समुच्चिनोति—अदृष्टाच्चेति । रागद्वेषाविति शेषः यद्यप्यदृष्टं साधारणकारणं तथापि कंचित्तौ प्रति असाधारणतामप्यनुभवति यथा तज्जन्माननुभूतकामिनीसुखस्यापि यौवनोद्भेदे कामिनीरागः अननुभूतभुजङ्गदंशदुःखानामपि भुजङ्गेषु द्वेष इत्याद्युन्नेयम् । नच प्राग्भवीयः संस्कार एवात्र निबन्धनम्, तत्कल्पने तदुद्बोधकल्पने च प्रमाणाभावाददृष्टस्यावश्यकल्पनीयत्वात् ॥ १२ ॥

( विवृ० ) कारणान्तरमपि दर्शयति—अदृष्टाच्चेति । अदृष्टविशेषाज्जन्मान्तरकृतादृष्टविशेषात्कस्यचित्कस्मिंश्चिदनुरागो द्वेषो वा भवति यथा दमयन्त्यादेर्नलादौ, यथा वा दुर्योधनादेर्भीमादौ । तदुक्तं 'जन्मान्तराधिगतकर्मविपाकजन्मैवोन्मीलति क्वचन कस्य च नानुरागः' इति ॥ १२ ॥

( भाष्यम् ) अदृष्टमपि शक्तिविशेषो न दृश्यते इति । तस्माच्च राग उत्पद्यते । यथोद्भिन्नतारुण्यस्य तरुण्यामनुराग इति । अथापि खल्वदृष्टादात्मगुणविशेषात्कश्चित्कचिद्रज्यतीति ॥ १२ ॥

**जातिविशेषाच्च ॥ १३ ॥**

( उप० ) सहकार्यन्तरमाह—जातिविशेषादिति । तथाहि मनुष्यजातीयानामन्नादौ रागः मृगजातीयानां तृणादौ, करभजातीयानां कण्टकादौ, तत्रापि तत्तज्जातिनिष्पादकमदृष्टमेव तन्त्रं द्वारमात्रं तु जातिर्जन्मविशेषः । एवं पारावतादीनामुत्कटो[1] रागः । तथा महिषजातीयानां तुरङ्गमे द्वेषः, सारमेयाणां शृगाले, नकुलाना भुजङ्गमे इत्याद्युन्नेयम् ॥ १३ ॥

( विवृ० ) अन्यदप्याह—जातीति । जातिविशेषान्मनुष्यजातीयानाम-

---

१ ' उत्करे ' इति मुद्रितपुस्तके ।

न्नादौ उष्ट्रादिजातीयानां कण्टकादौ रागः, नकुलजातीयानां भुजङ्गमे महिषजातीयानां तुरङ्गमे द्वेषश्च जातिकृत एव। यद्यप्यत्राहष्टमेव जातिद्वारा रागाद्युत्पादकं तथापि साक्षान्निष्पादकत्वं जातेरेवेति ॥ १३ ॥

(भाष्यम्) जन्मनो यो विशेषस्तस्मात्खल्वपि राग उत्पद्यते । विशुद्धान्तराभ्यां मातापितृभ्यामुत्पन्नो विशुद्धेषु विषयेषु रज्यति, विपर्ययाद्विपर्ययेष्विति । एवमन्येऽपि जन्मनो विशेषा उत्प्रेक्षितव्याः। द्वेषः खल्वपि तत्प्रत्यनीकभावाद्व्याख्यातः। सुखानुशयी रागो दुःखानुशयी द्वेष इति दुःखाद्द्वेषः । तन्मयत्वाच्च । अदृष्टाच्चोपहतपुंस्त्वस्य द्वेष कामिन्यामिति। जातिविशेषाच्च द्वेषो रागेण व्याख्यातः । तावेतौ रागद्वेषौ नान्तरेण मोहमुत्पद्येते इति मिथ्याप्रतिपत्तिलक्षणस्य मोहस्य प्रतिपात्तिरिति प्रवर्तनालक्षणा दोषाः प्रतिपादिता भवन्ति। मुग्धो हि रज्यति द्वेष्टि चेति । तेषां मोहः पापीयान् नामूढस्येतरोत्पत्तेरिति तन्त्रान्तरे चोक्तमिति। त इमे रागद्वेषमोहा बहुशाखाः तत्रैराश्यं रागद्वेषमोहार्थान्तरभावादिति तन्त्रान्तरसमाचारात्प्रतिपत्तव्याः ॥ १३ ॥

इच्छाद्वेषपूर्विका धर्माधर्मयोः प्रवृत्तिः ॥ १४ ॥

(उप०) एवं धर्माधर्मनिमित्ततया रागद्वेषनिमित्तानि परिसंख्याय संप्रति दोषाणां धर्माधर्मकारणत्वं प्रवृत्तिद्वारेत्याह—इच्छेति । विहिते कर्मणि रागनिबन्धना निषिद्धे कर्मणि हिंसादौ द्वेषनिबन्धना प्रवृत्तिः। रागनिबन्धना यागादौ प्रवृत्तिर्धर्मं प्रसूते द्वेषनिबन्धना हिंसादौ प्रवृत्तिरधर्मम् । तावेतौ रागद्वेषो संसारमनुवर्तयतः। तथाच गौतमीयं सूत्रम् 'प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ.' इति। वागारम्भो वाचिकी प्रवृत्तिः सत्यं प्रियं हितमिति पुण्या, असत्यमप्रियमहितमिति पापा, बुद्धिः बुध्यते ज्ञायतेऽनेनेति मन उच्यते। तेन मानसी प्रवृत्तिर्भूतदयादि', शारीरी प्रवृत्तिर्दानं परिचरणमित्यादिका दशविधा पापा दशविधा पुण्या वेति ॥ १४ ॥

(विवृ०) रागादेर्धर्माधर्मोत्पादने बीजमाह—इच्छेति। धर्माधर्मौ तज्जनकयागहिंसादिकर्मणी उपचारात्, तत्र या प्रवृत्तिः इच्छाद्वेषपूर्विका इच्छाद्वेषजन्या। तथाच रागाद्यागादौ प्रवृत्तिस्ततो यागादिना धर्मो जायते तथा द्वेषाद्धिंसायां प्रवृत्तिस्ततो हिंसादिनाऽधर्मो भवतीति रागादेः प्रवृत्तिद्वारकमेव धर्मादिजनकत्वमिति औत्सर्गिकाभिप्रायेणेदम्। तेन रागद्वेषादिकं विनापि आकस्मिकगङ्गाजलसंसर्गादिना धर्मादिजननेऽपि न क्षतिरिति ॥ १४ ॥

( भाष्यम् ) दोषेभ्यः खल्वियम्—*इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्तिः । सुखहेताविच्छाविशेषाद्रागात्तत्प्रतिषेधे द्वेषाच्च धर्मप्रवृत्तिः । सौन्दर्यादिनिमित्ताद्रागादामुष्मिकहिते द्वेषाच्चाधर्मप्रवृत्तिरिति । अथाप्येतदुक्तम्—'सत्यादप्यनृतं श्रेष्ठं धिक् स्वर्गं नरकोऽस्तु मे' इति । अथापि खल्विच्छापूर्विका धर्मप्रवृत्तिर्द्वेषपूर्विका चाधर्मप्रवृत्तिरिति । द्वेषात्खल्वयमधर्मेषु परप्रमापणादिषु प्रवर्तमानः प्रमापयतीति ॥ १४ ॥

**तत्संयोगो विभागः ॥ १५ ॥**

( उप० ) इदानीं धर्माधर्मयोः प्रयोजनं प्रेत्यभावमाह—तदिति । ताभ्यां धर्माधर्माभ्यां संयोगो जन्म अपूर्वाभिः शरीरेन्द्रियवेदनाभिः संबन्धः संयोग इहोच्यते । विभागस्तु शरीरमनोविभागो मरणलक्षणः । तथाचायं जन्ममरणप्रबन्धः संसारः प्रेत्यभावापरनामा धर्माधर्माभ्यामित्यर्थः । अस्यैव च प्रेत्यभावस्याजरञ्जरीभाव इति वैदिकी संज्ञा ॥ १५ ॥

( विवृ० ) धर्माधर्मयोः कार्यं प्रेत्यभावमाह—तदिति । तत्संयोगः ताभ्यां जनितः संयोगः संबन्धः अर्थादपूर्वशरीरप्राणयोराद्यः संयोगः जन्मेति यावत् । एवं विभागः शरीरचरमप्राणसंयोगध्वंसः मरणमिति यावत् । तदपि धर्माधर्माधीनमेव । तदेवं धर्माधर्माधीनो जन्ममरणप्रवाहः प्रेत्यभावः स एव पुंसां बन्धलक्षणः । तस्य चाजरञ्जरीभाव इति नामान्तरमागमे प्रसिद्धम् । तदुक्तं गौतमीये 'पुनरुत्पत्तिः प्रेत्यभावः' इति ॥ १५ ॥

( भाष्यम् ) रागद्वेषनिमित्ताभ्यां खलु धर्माधर्माभ्यां प्रेत्यभावनिष्पत्तिरिति तदुच्यते—*तत्संयोगो विभागः । योऽयं धर्माधर्मनिमित्तः शरीरेन्द्रियबुद्धिवेदनाभिः संयोगः, स खलु विभागः । कस्मात् ? तदवसानत्वात् । विभागावसानः खल्वयं संयोगो विभाग इति व्यपदिश्यते वैराग्यार्थम् । अथापि खलु धर्माधर्मनिमित्तः शरीरेन्द्रियबुद्धिवेदनाभिः संयोगो विभागश्चोपजायते पुरुषस्य । देहादिभिः खल्वयं संयुज्यते, तदेतज्जन्म । संयुक्तश्च विभज्यते, तदेतत्संस्था मरणमिति । तावुभौ संयोगविभागौ यावदपवर्गमनिशमावर्तमानौ प्रेत्यभाव इति । तच्चैतत्, पुनरुत्पत्तिः प्रेत्यभाव इति तन्त्रान्तरसमाचारात्प्रतिपत्तव्यम् । यदा खल्वयं म्रियते तदा प्रैति पूर्वशरीरं जहाति, प्रेत्य च भवत्युत्पद्यते, भूत्वा प्रैति, प्रेत्य पुनर्भवतीति । स चायं प्रेत्यभावो यावन्नोपरमति तावद्बन्धः पुरुषस्य ॥ १५ ॥

**आत्मकर्मसु मोक्षो व्याख्यातः ॥ १६ ॥**

( उप० ) तदेतस्य प्रेत्यभावस्य जन्ममरणप्रबन्धस्य यत्र निष्ठा यत्र च पर्य-

वसानं तं मोक्षं निरूपयितुमाह–आत्मेति। अयमेव शरीरमनोविभागः आत्मकर्मसु सत्सु मोक्षो भवतीत्यर्थः। तत्रात्मकर्माणि तावच्छ्रवणं मननं योगाभ्यासो निदिध्यासनमासनं प्राणायामः शमदमसंपत्तिः आत्मपरात्मसाक्षात्कारो देहदेशान्तरोपभोग्यपूर्वोत्पन्नधर्माधर्मपरिज्ञानं तद्भोगानुरूपनानादेहनिर्माणं तयोर्भोगेन प्रक्षयो रागद्वेषलक्षणदोषतुषारदमादग्निमधर्माधर्मयोरनुत्पादात्प्रवृत्त्यपाये जन्मापायाद्दुःखापायलक्षणोऽपवर्गस्तत्र षट्पदार्थीतत्त्वज्ञानमाद्यमात्मकर्म ॥ १६ ॥

इति श्रीशाङ्करे वैशेषिकसूत्रोपस्कारे षष्ठाध्यायस्य द्वितीयमाह्निकम्।

(विवृ०) नन्वेवमनादिरयं प्रेत्यभावः, पुरुषः (तं) किं न जहातीत्यत्राह–आत्मकर्मस्विति। आत्मकर्मसु श्रवणमनननिदिध्यासनात्मसाक्षात्कारेषु सत्सु मोक्षो व्याख्यातः आगमेऽभिहितः। तत्र आत्मतत्त्वसाक्षात्कारेणापहते मोहात्मके देहाद्यात्माभेदविषयके मिथ्याज्ञाने रागद्वेषलक्षणस्य दोषस्यापायो भवति। ततः प्रवृत्तेर्धर्माधर्मात्मिकाया उच्छेदस्तदभावाच्चापूर्वशरीराद्यप्राणसंयोगरूपजन्मोच्छेदस्तत आत्यन्तिकतापत्रयविनाशो भवतीति स एव मोक्षस्तत्र मननशास्त्रमिदं परंपरयोपयुज्यते इति। तथाच गौतमीयं सूत्रम्। 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इति। अधिकमन्यत्रानुसंधेयम्॥ १६ ॥

इति श्रीजयनारायणतर्कपञ्चाननभट्टाचार्यकृताया कणादसूत्रविवृतौ षष्ठाध्यायस्य द्वितीयमाह्निकम्।

(भाष्यम्) यत्र तु तस्योपरमः, सोऽयम्—* आत्मकर्मसु मोक्षो व्याख्यातः। आत्मकर्मसु यमनियमादिषु सत्सु मोक्षो व्याख्यातः। तदेतत्, तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैरिति तन्त्रान्तरे चोक्तमिति। तच्चैतदात्मकर्म बहुशाखमनेकपरिकरं तन्त्रान्तरतः प्रतिपत्तव्यमिति॥ १६ ॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये षष्ठस्याध्यायस्य द्वितीयमाह्निकम्।

समाप्तश्चायं षष्ठोऽध्यायः।

---

# सप्तमाध्याये प्रथमाह्निकम्।

## उक्ता गुणाः॥ १ ॥

(उप०) संसारमूलकारणतया सर्वोत्पत्तिमन्निमित्तकारणतया भोगसाधनतया चोत्पत्तितः प्रत्यात्मनियतत्वेन परादृष्टस्यापि परस्योपयोगित्वेन च

धर्माधर्मौ परीक्ष्येदानी गुणान् परीचिक्षिषुस्तेषामुद्देशं लक्षणं च स्मारयन्नाह—उक्ता इति । उद्दिष्टा लक्षिता गुणाश्चेत्यर्थः । तत्र रूपादयः सप्तदश कण्ठरवेणोक्ताः चशब्दसमुच्चिताः सप्त, तेन चतुर्विंशतिरपि गुणा उक्ताः, तत्र नित्यवृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं गुणत्वं समवायिकारणावृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं वा, असमवायिकारणवृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं वा कार्यासमानाधिकरणकर्मावृत्तिजातिमत्त्वं वा ॥ १ ॥

( विवृ० ) तदीयसूत्रसंहतिं विवृण्वतामधीमताम् ।
शुभाय सन्तु सन्ततं कणादपादरेणवः ॥

सप्तमे गुणान्परीचिक्षिषुस्तदुद्देशलक्षणे स्मारयति—उक्ता इति । गुणा उक्ता उद्दिष्टा लक्षिताश्चेत्यर्थः ॥ १ ॥

( भाष्यम् ) द्रव्यकर्मणी परीक्ष्य पारिशेष्याद्गुणान् परीचिक्षिषुर्विप्रकृष्टानमून्स्मारयति—*उक्ता गुणाः । ते खल्विमे उक्ता गुणाः परीक्ष्यन्ते न समुच्चिता अपि । कस्मात् ? विप्रतिपत्तिभूयस्त्वाद्विपर्ययाच्च । विप्रतिपत्तिभूयस्त्वं खल्वेतेषु उपलभ्यते, विपर्ययोऽन्येषु । रूपादयो गुण द्रव्यात्मान इत्येके, द्रव्याणीत्यन्ये, बुद्ध्यात्मान इत्यपरे । नैव सन्तीति केचित् । एवमपरा अपि विप्रतिपत्तय उत्प्रेक्षितव्याः । अथापि खल्वेतेषु परीक्षितेषु समुच्चितानामन्येषां परीक्षामनयैव दिशा प्रतिपत्तुमर्हतीति मन्यते सूत्रकारः ॥ १ ॥

**पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च ॥ २ ॥**

( उप० ) तत्र गुणत्वेन गुणपरीक्षा सप्तमाध्यायार्थः । तत्र प्रथमाह्निके नित्यतया गुणपरीक्षा, अनित्यतया गुणपरीक्षा, पाकजगुणपरीक्षा संख्याद्यनेकवृत्तिगुणपरीक्षा परिमाणपरीक्षा चेति पञ्च प्रकरणानि, तत्र रूपादीनां चतुर्णामनित्यत्वमाह—पृथिव्यादीति । पृथिव्यादीनां वाय्वन्तानामवयविनां रूपादयश्चत्वारो गुणा अनित्याः । यद्यप्यन्येऽपि गुणा अवयविषु वर्तमाना अनित्या एव, तथापि तेषामन्यतोऽपि विनाशः, रूपादयश्चत्वारो गुणा आश्रयनाशादेव नश्यन्ति न तु विरोधिगुणान्तरात् । द्रव्यानित्यत्वादिति द्रव्यस्याश्रयभूतस्यानित्यत्वादाश्रितानामनित्यत्वमित्यर्थः ॥ २ ॥

( विवृ० ) रूपादीनां चतुर्णां यथासंभवमनित्यत्वमभिधत्ते—पृथिव्येति । पृथिव्या रूपरसगन्धस्पर्शाः, जलस्य रूपरसस्पर्शाः, तेजसो रूप-

स्पर्शौ, वायोः स्पर्शः, एतेषामनित्याश्रितानामनित्यत्वमाश्रयनाशनाश्यत्वात्। चकारादेकत्वैकपृथक्त्वपरिमितिगुरुत्वसांसिद्धिकद्रवत्वस्नेहानां संग्रहः। तेऽपि अनित्यगता अनित्या एवेत्यर्थः॥ २॥

(भाष्यम्)तत्र—*पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च। पृथिव्यादीनां रूपादयः स्पर्शान्ताः परिमाणादयश्च गुणाः तदाश्रयस्य द्रव्यस्यानित्यत्वादनित्या भवन्ति। उत्पत्तेः प्रभृत्याविनाशमनुवर्तमानः खल्वपि भावोऽनित्य एव। कस्मात्? द्रव्यानित्यत्वात्॥ २॥

**एतेन नित्येषु नित्यत्वमुक्तम्॥ ३॥**

(उप०) रूपादीनामनित्यत्वे यद्याश्रयानित्यत्वं तन्त्रं तदा नित्याश्रयवृत्तीनां नित्यत्वमित्याक्षेपबललभ्यमित्याह—एतेनेति। रूपादीनामेव चतुर्णां नित्येष्वाश्रयेषु वर्तमानानां नित्यत्वमुक्तम्। एतेनेति आश्रयानित्यत्वेनानित्यत्वाभिधानेनेत्यर्थः। वृत्तिकृतस्तु नित्येष्वनित्यत्वमुक्तमित्यकारप्रश्लेषस्तथाच प्रार्थिवपरमाणुष्वग्निसंयोगान्नाश इति व्याचक्रुः॥ ३॥

(विवृ०) ननु नित्यगता रूपादयः किमनित्या नित्या वेत्यत्राह—एतेनेति। एतेन आश्रयानित्यत्वहेतुकानित्यत्वकथनेन नित्येषु आश्रयेषु रूपादीनां नित्यत्वमुक्तमुक्तप्रायमर्थायातत्वादित्यर्थः। नित्येष्वनित्यत्वमिति वृत्तिकारसंमतः पाठः। तन्मते नित्येषु पार्थिवपरमाणुषु रूपादीनामनित्यत्वमग्निसंयोगनाश्यत्वादित्यर्थः। किंतु तादृशपाठे एतेनेति उक्तमिति च संगतं न भवतीति ध्येयम्॥ ३॥

(भाष्यम्) यदि द्रव्यानित्यत्वादनित्याः नित्येषु तर्हि द्रव्येषु द्रव्यनित्यत्वान्नित्यत्वममीषामुक्तं भवति॥ ३॥

**अप्सु तेजसि वायौ च नित्या द्रव्यनित्यत्वात्॥ ४॥**

(उप०) तत्किं पार्थिवेऽपि नित्यवृत्तिरूपादीनां नित्यत्वमेवेत्यतो विशिनष्टि—अप्स्विति। आप्यपरमाणौ रूपरसस्पर्शा नित्याः, तैजसपरमाणौ रूपस्पर्शौ, वायुपरमाणौ स्पर्शो नित्यः। ननु नित्येऽपि वर्तमानानां रूपादीनामनित्यत्वे को विरोधः शब्दबुद्ध्यादीनामिवेत्यतश्चकारेण गुणान्तरप्रादुर्भावो हेत्वन्तरं सूचितम्। शब्दे हि तीव्रमन्दादिभावेन गुणान्तरप्रादुर्भावोऽनुभूयते, ज्ञानादौ च ज्ञानादिविरोधी संस्कारादिः, आप्यतैजसवायवीयपरमाणुषु रूपादिविरोधि गुणान्तरं न प्रादुर्भवति, यदि प्रादुर्भवेत्तदा तदारब्धेष्वपि द्व्यणुकादिप्रक्रमेणाप्याद्यवयविष्वपि पूर्वविजातीयं

रूपाद्यनुभूयेत । नहि शुक्लरूपविजातीयं रूपं तोयतेजसोर्न वा शीतोष्णस्पर्शविजातीयौ स्पर्शौ । उष्णं जलं शीतो वायुरित्यादिप्रतीतिस्तूपाधिनिबन्धनेति भावः ॥ ४ ॥

( विवृ० ) ननु पार्थिवपरमाणुगतानां रूपादीनामग्निसंयोगनाश्यत्वात् कथं नित्येष्विति सामान्यत उक्तमतो नित्यानि विशेषयति—अप्स्विति । न खलु नित्यपृथिवीगता रूपादयो नित्याः किंतु नित्यजलतेजोवायुगता एव ते नित्याः पूर्वसूत्रे उक्ता इत्यर्थः ॥ ४ ॥

( भाष्यम् ) तस्योदाहरणम्—* अप्सु तेजसि वायौ च नित्या द्रव्यनित्यत्वात् । नित्यास्वप्सु नित्ये तेजसि नित्ये वायौ च रूपादयो नित्याः । कस्मात् ? तदाश्रयस्य द्रव्यस्य नित्यत्वात् ॥ ४ ॥

## अनित्येष्वनित्या द्रव्यानित्यत्वात् ॥ ५ ॥

( उप० ) पूर्वं पृथिवीमन्तर्भाव्यानित्येष्वनित्या इत्युक्तमिदानीमाप्यादिष्वेवाह—अनित्येष्विति । अबाद्यवयविरूपादय आश्रयनाशादेव नश्यन्ति न तु विरोधिगुणान्तरादपीत्यर्थः ॥ ५ ॥

( विवृ० ) ननु रूपादिभिन्ना अनित्यगता गुणाः किं नित्यास्तथाच संयोगादिकमपि नित्यं स्यादित्यत आह—अनित्येष्विति । अनित्येषु ये गुणा वर्तन्ते ते सर्वे एवानित्या आश्रयानित्यत्वात्, तथाचानित्येषु नित्या गुणा न सन्त्येवेत्यर्थः ॥ ५ ॥

( भाष्यम् ) अनित्येष्वबादिष्वप्यनित्याः, तदाश्रयस्य द्रव्यस्यानित्यत्वात् । अथापि खल्वन्येषां गुणानां परिमाणादीनामनित्येष्वनित्यत्वं सूत्रार्थः ॥ ५ ॥

## कारणगुणपूर्वकाः पृथिव्यां पाकजाः ॥ ६ ॥

( उप० ) ननु पृथिव्यामवयविरूपायामपि रूपादयोऽग्निसंयोगादेवोत्पद्यन्ते नश्यन्ति च, तत् कथमाश्रयनाशमात्रनाश्या इत्यत आह—कारणेति । पाकजा इति रूपरसगन्धस्पर्शा इत्यर्थः । कारणगुणपूर्वका इति रूपाश्रयस्य घटादेर्यत्समवायिकारणं कपालादि तद्गुणपूर्वकाः । तथाच कपालरूपं कारणैकार्थसमवायप्रत्यासत्त्या घटरूपाद्यसमवायिकारणम्, एवं रसादावपि । रूपरसगन्धस्पर्शाः रूपत्वादिगुणत्वसाक्षाद्व्याप्यजातिमन्तः । ननु चक्षुर्ग्राह्यत्वमेव रूपत्वमुपाधिरिति चेत्—इन्द्रियपातमात्रेण रूपमिति प्रत्ययानुदयप्रसङ्गात् । अननुसंहितोपाधेरुपाहितप्रत्ययायोगादिति, उपाधिश्चात्र

चक्षुस्तच्चातीन्द्रियं ग्राह्यत्वं च ग्रहणविषयत्वं तदप्यचाक्षुषं रूपत्वविशिष्टप्रतीतेश्च चाक्षुषत्वात्। चक्षुर्मात्रबहिरिन्द्रियग्राह्यगुणत्वं रूपत्वम्, अतीन्द्रियरूपाव्याप्तिरिति चेन्न, चक्षुर्मात्रबहिरिन्द्रियग्राह्यजातिमत्त्वस्य विवक्षितत्वात्। तादृशी च जाती रूपत्वं नीलत्वादिका चेति। नन्वेकैका एव नीलपीतादिव्यक्तयो नित्या न तु तत्र नीलत्वादिजातय एकव्यक्तिकत्वादिति चेन्न। नीलतरनीलतमादिप्रत्ययानुदयप्रसङ्गात्। धावल्यादिसंभेदाभावकृतस्तत्र तारतम्यव्यवहारः इति चेन्न, प्रमाणाभावात्। श्यामं रूपं नष्टं रक्तमुत्पन्नमिति प्रतीतेश्च। न च सा समवायोत्पत्तिविनाशकृतेति वाच्यं समवायस्य तत्रानुल्लेखात्तस्य नित्यत्वाच्च घटादेरप्यनित्यतायामेवं सत्यनाश्वासापत्तेः समवायानित्यत्वेनैव तत्राप्यन्यथासिद्धेः सुवचत्वात्। ननु नीलपीतादयो गुणा द्रव्याभिन्ना एव धर्मधर्मिणोरभेदादिति चेन्न, रूपं घटः स्पर्शो घट इत्यादिव्यवहारप्रसङ्गात्। ननु नेदमनिष्टं यतो भवत्येव शुक्लः पटो नीलः पट इत्यादिप्रतीतिरिति चेन्न, मतुब्लोपादभेदोपचाराद्वा प्रतीत्युपपत्तेः। भेदे प्रमाणे सति कल्पनेयं यथाकथंचिदुपपद्यते इति चेन्न, चन्दनस्य रूपं चन्दनस्य गन्ध इत्यादिव्यपदेशबलाद्भेदसिद्धेश्च पटस्य रूपाभेदे पटवद्रूपमपि त्वगिन्द्रियेण गृह्येत। पटमानयेत्युक्ते यत्किंचिद्रूपमानयेत्, रूपमानयेत्युक्ते यत्किंचिद्द्रव्यमानयेत्। अस्तु तर्हि भेदाभेदः अत्यन्तभेदे अत्यन्ताभेदे च सामानाधिकरण्यानुपपत्तेरिति चेन्न, अवच्छेदभेदं विना विरुद्धयोर्भेदाभेदयोरेकत्रासंभवात्। अन्योन्याभावत्वमव्याप्यवृत्तिवृत्तिनित्याभाववृत्तिधर्मत्वादत्यन्ताभावत्ववदिति चेन्न, एकत्र संयोगतदत्यन्ताभावयोः प्रतीतिबलादत्यन्ताभावस्याव्याप्यवृत्तित्वाभ्युपगमात्। अन्योन्याभावे तु तथाप्रतीतेरभावात्। तदेतद्रूपं पृथिव्यां नानाप्रकारकम्, पाथसि तेजसि च शुक्लमेव। क्वचित् पटादौ च चित्रमपि रूपमधिकम्, अन्यथा तदचाक्षुषत्वापाताद्रूपवत एव चाक्षुषद्रव्यत्वात्। न च विजातीयरूपै रूपानारम्भः, नीलपीतादीनामारम्भे रूपत्वेनैव साजात्यस्यापेक्षितत्वात्, अन्यथा तदचाक्षुषत्वापत्तेरुक्तत्वात्[१]। न चावयवरूपोपग्रहेणैवावयविग्रहः अवयवानामपि चित्रतया नीरूपत्वप्रसङ्गात्, यत्र वा पाकात्परमाणुषु चित्रं रूपं तत्रैव तत्परम्परारब्धपटादौ चित्ररूपोपपत्तेः। न च हरीतक्यां रसोऽपि चित्र इति वाच्यं हरीतक्या नीरसत्वेऽपि दोषाभावात्, षड्रसत्वव्यवहारस्तु तत्तद्रसगुणकारितया। एवं गन्धोऽपि न चित्रः सौरभासौरभवदवयवद्वयस्याना-

१ चाक्षुषत्वानुपपत्तेरिति बा. रा. आ. सो. पु. पाठ.।

रम्भकत्वात् । कर्कट्यादौ क्वचिदवयवे तैक्त्यं क्वचिन्माधुर्यं तथाच कतमो रसः कर्कट्यामिति चेन्माधुर्यमेव, गुणविरोधेन कथं तथा स्यादिति चेत्तदवयवे तैक्त्याभावात्, तथाऽनुभवः कथमिति चेत् कर्कटीभक्षणक्षुभितरसनाग्रवर्तिपित्तद्रव्यस्य तिक्ततोपलम्भात् । तत एव कदाचिन्मुखमपि तिक्तायते, हरीतक्यामपि कथमियं न गतिरिति चेन्न । तदवयवेषु कषायमाधुर्यलवणादिनानारसानुभवादित्यलं पल्लवेन । तच्च रूपं नयनसहकारि । नन्वेवं वायौ रूपाभावस्य तमसश्च कथं चाक्षुषतेति चेन्न, भावग्रह एव रूपस्य नयनसहकारित्वात् विषयालोकचक्षुषा त्रयाणामपि रूपाणि चाक्षुषप्रतीतिप्रयोजकानि । रसोऽपि रसत्वजातिमान् रसत्वं रसनेन्द्रियमात्रजन्यसाक्षात्कारविषयजातिः तादृशजातिमत्त्वं च रसत्वं सोऽयं जीवनपुष्टिबलारोग्यहेतुः रसनसहकारी । रसनेन्द्रियग्राह्यगुणत्वव्याप्यजातिमत्त्वं रसत्वं तथा सति नातीन्द्रियरसाव्याप्तिः । घ्राणमात्रग्राह्यो गुणो गन्धः घ्राणमात्रग्राह्यगुणत्वव्याप्यजातिमत्त्वं गन्धत्वम् । स च सुरभिरसुरभिश्चेति द्विविधः । यद्वा पृथिवीवृत्तिमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं गन्धत्वम् । एवं स्पर्शोऽपि स्पर्शत्वजातिमान् गुणः त्वगिन्द्रियमात्रग्राह्यगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं स्पर्शत्वम् । द्रव्यचतुष्टयवृत्तिश्चायमनुष्णाशीतशीतोष्णभेदात् त्रिविधः । इदानी प्रसङ्गात् पाकजप्रक्रिया चिन्त्यते । तत्र कार्यकारणसमुदाय एव पच्यते इति पिठरपाकवादिनः, पीलवः परमाणव एव स्वतन्त्राः पच्यन्ते तत्रैव पूर्वरूपनाशाग्रिमरूपाद्युत्पत्तिः कारणगुणप्रक्रमेण चावयविनि रूपाद्युत्पद्यते इति पीलुपाकवादिनः । अत्रेदं तत्त्वम्—आपाके निक्षिप्तस्य घटादेरामद्रव्यस्य वह्निना नोदनादभिघाताद्वा तदारम्भकेषु परमाणुषु द्रव्यारम्भकसंयोगविरोधिविभागेनारम्भकसंयोगनाशे द्रव्यनाशावश्यंभावात् । दृश्यते हि स्थाल्यामाहितानां तण्डुलादीनामप्यधःसंतापनमात्रेण भर्जनात्तदानीमेव नाशः, क्षीरनीरादीनां चात्यन्तमुल्बणता, तथाचापाके वह्निज्वालाजालाभिहतानां द्रव्याणामवस्थानमिति महती प्रत्याशा, किंच यदि द्रव्यानाशस्तदा मध्यभागे पाकानुपपत्तिः । नहि दृढतरावयवान्तरावरुद्धे मध्यभागे तेजःसंयोगसंभावना येन तत्र श्यामादिनिवृत्तिः स्यात्, तथाच श्यामा अवयवाः अवयवी च रक्त इति महद्वैशसम् । ननु सच्छिद्राण्येवावयविद्रव्याणि कथमन्यथा कुम्भादावन्तर्निहितानां तैलघृतादीनां स्यन्दनं श्रपणं च । तथाच मध्यभागेऽपि तेजःसंयोगः स्यादेवेति चेन्न, मूर्तानां समानदेशताविरोधात् । अवयवान्तरसंयुक्ते मध्यभागे तेजः-

संयोगासंभवात् । ननु यदि द्रव्यनाशः कथं तर्हि स एवायं घट इति प्रत्यभिज्ञा, कथं वा सर्वास्ववस्थासु आपाकादौ घटादेस्तादृशस्यैव दर्शनं, घटादेरुपरि निहितानां शरावोदञ्चनादीनां तथैव दर्शनं घटादिस्फुटने हि तेषां पातः स्यात्, कथं वा यावन्त एवापाके निहितास्तावन्त एव पुनः प्राप्यन्ते परमाणुभिर्द्व्यणुकादिप्रक्रमेण न्यूनानामधिकानां वा तदानीमारम्भसंभवात्, कथं वा तावत्परिमाणान्येव घटादीन्यापाकोत्तीर्णान्युपलभ्यन्ते, रेखोपरेखादिचिह्नविलोपो वा कथं न भवेत् तथाचावयविष्वेव पाक इति चेत् मैवं, सूच्यग्रेण घटादौ त्रिचतुरत्रसरेणुविभागे सति द्रव्यारम्भकसंयोगनाशे द्रव्यनाशे सर्वासामनुपपत्तीनामुभयसमाधेयत्वात् । नहि तत्र द्रव्यं न नश्यतीति पिठरपाकवादिनोऽपि वक्तुमुत्सहन्ते । तत्रापि घटादयो न नश्यन्ति कतिपयावयवनाशेऽप्यवशिष्टावयवमाश्रित्य कार्यावस्थानसंभवादन्यथा प्रत्यभिज्ञानाद्यनुपपत्तिरेवेति मीमांसकाः । ते तु तावदवयवावस्थानयोग्यस्य घटादेः स्वल्पेष्ववयवेषु कथं वृत्तिः स्यादिति प्रष्टव्याः । अविनष्ट एव पटे परिमाणसंकोचवदेतदुपपत्स्यते इति तेषामुत्तरमिति चेन्न । कठिनतरावयवानां काष्ठपाषाणस्तम्भकुम्भादीनां संकोचविकाशयोरदर्शनात् । घटादिनाशकाभिमतेन तत्परिमाणमेव नश्यतीति चेन्न, परिमाणस्याश्रयनाशैकनाश्यत्वात् घटादिप्रत्यभिज्ञानवत्सूचीदलनस्थले परिमाणस्यापि प्रत्यभिज्ञायमानत्वात् । त्वन्मते तन्नाशस्याप्यनुपपत्तेरिति दिक् । येषां मते द्रव्यारम्भकसंयोगप्रतिद्वन्द्वी तदप्रतिद्वन्द्वी च विभाग एकयैवावयवक्रियया जन्यते तेषां द्व्यणुकनाशमारभ्य नवमक्षणे द्व्यणुकान्तरे रक्ताद्युत्पत्तिरेकस्मिन्नेव परमाणौ क्रियाचिन्तनात् । तथाहि–वह्निना नोदनात् द्व्यणुकारम्भके परमाणौ कर्म ततो विभागस्ततो द्रव्यारम्भकसंयोगनाशस्ततो द्व्यणुकनाशः नष्टे द्व्यणुके केवले परमाणावग्निसंयोगाच्छ्यामादिनिवृत्तिः, श्यामादौ निवृत्ते अन्यस्मादग्निसंयोगाद्रक्ताद्युत्पत्तिः, रक्तादावुत्पन्ने परमाणुक्रियानिवृत्तिस्तदनन्तरमदृष्टवदात्मसंयोगात्परमाणौ कर्म ततो विभागस्ततः पूर्वसंयोगनिवृत्तिस्ततः परमाण्वन्तरेण द्रव्यारम्भकः संयोगस्ततो द्व्यणुकोत्पत्तिरुत्पन्ने द्व्यणुके कारणगुणप्रक्रमेण रक्ताद्युत्पत्तिरिति नव क्षणाः । यदि पूर्वक्रियानिवृत्तिक्षण एव क्रियान्तरमुत्पद्यते तदा, यदि तु पूर्वक्रियानिवृत्त्यनन्तरकाले क्रियान्तरमुत्पद्यते तदा दश क्षणाः । विभागजविभागाद्युपगमेऽपि यदि द्रव्यारम्भकसंयोगनाशविशिष्टं कालमपेक्ष्य विभागजो विभागस्तदा दश क्षणाः, यदि तु द्रव्यनाशविशिष्टं कालमपेक्ष्य विभागेन विभागान्तरं जन्यते

तदैकादशक्षणा प्रक्रिया । तथाहि द्व्यणुकनाशविभागजविभागावित्येकः कालः ततः पूर्वसंयोगनाशश्यामादिनिवृत्ती, उत्तरसंयोगरक्ताद्युत्पत्ती, उत्तरसंयोगेन विभागजविभागक्रियानिवृत्ती, ततो द्रव्यारम्भानुगुणा परमाणुक्रिया, क्रियातो विभागो विभागात्पूर्वसंयोगनिवृत्तिस्ततो द्रव्यारम्भकः संयोगस्ततो द्रव्योत्पत्तिः, उत्पन्ने द्रव्ये रक्ताद्युत्पत्तिरिति दश क्षणाः, यदा तु द्रव्यविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागो जन्यते तदैकक्षणवृद्ध्या एकादश क्षणाः । तथाहि द्रव्यविनाशस्ततो विभागजविभागश्यामादिनिवृत्ती तत उत्तरसंयोगरक्ताद्युत्पत्ती, ततो विभागजविभागकर्मणोर्निवृत्तिस्ततः परमाणौ द्रव्यारम्भानुगुणा क्रिया, ततो विभागः, पूर्वसंयोगनिवृत्तिः, द्रव्यारम्भकसंयोगोत्पत्तिः, द्व्यणुकोत्पत्तिः, रक्ताद्युत्पत्तिश्चेत्येकादशक्षणा । एकस्मिन्नेव परमाणौ क्रियाक्रियोपरमचिन्तनादेवम्, परमाण्वन्तरे यदि द्रव्यारम्भानुगुणा क्रिया चिन्त्यते तदा द्व्यणुकविनाशमारभ्य पञ्चमे षष्ठे सप्तमेऽष्टमे वा रक्ताद्युत्पत्तिरूहनीया । विवृतं चैतत्कणादरहस्ये ॥ ६ ॥

( विवृ० ) ननु रूपरसगन्धस्पर्शाः किमसमवायिकारणका इत्याकाङ्क्षायामाह—कारणेति । रूपरसगन्धस्पर्शाः अवयवगता इति विवक्षणीयम् । कारणगुणपूर्वकाः स्वाश्रयस्य यानि कारणानि अवयवा इति यावत्, तेषां ये गुणाः स्वसजातीयगुणाः तेभ्यः प्रादुर्भवन्तीत्यर्थः । तथा चावयविवृत्तिरूपरसगन्धस्पर्शानामसमवायिकारणानि अवयवगता रूपरसगन्धस्पर्शास्तेषां समवायिकारणप्रत्यासन्नत्वं तु स्वसमवायिसमवायसंवन्धेनेति बोध्यम् । ननु आमघटादौ बलवदग्निसंयोगानन्तरं कथं रक्ताद्युत्पत्तिरित्यत उक्तं पृथिव्यां पाकजा इति । अपीति शेषः । तथाच पृथिव्यां रूपरसगन्धस्पर्शाः पाकजा अपि, पाकस्तु रूपादिपरावृत्तिफलकविजातीयतेजःसंयोगः, सोऽपि रूपादेरसमवायिकारणं भवति । तत्र च परमाणावेव पाकाद्रूपादिपरावृत्तिर्नावयविनीति पीलुपाकवादिनः, तन्मते विजातीयाग्निसंयोगादारम्भकसंयोगनाशेन द्व्यणुकपर्यन्तावयविनाशे सति परमाणौ रक्ताद्युत्पत्तिस्ततो विजातीयाग्निसंयोगादारम्भकसंयोगानुगुणक्रियाद्युत्पत्त्यारम्भकसंयोगादिप्रक्रमेण पुनर्द्व्यणुकादिमहावयविपर्यन्तानामुत्पत्तिर्भवतीति । पिठरपाकवादिनस्तु अवयविनां सच्छिद्रतया विजातीयाग्निसंयोगात्तेषामपि रूपादिपरावृत्तिर्भवति नतु तत्रावयविनां नाशः प्रत्यभिज्ञाविरोधादित्याहुः । अत्र च पाकप्रक्रिया ग्रन्थगौरवभिया परित्यक्ताऽन्यत्रानुसंधेया । ये तु नीलरू-

पादिव्यक्तय एकैका एव नित्या इत्याहुस्तन्मते नीलरूपं नष्टं श्यामरूपमुत्पन्नमित्यादिप्रतीतिव्यवहारयोरनुपपत्तिः, समवायसंबन्धस्य नित्यतया तद्विषयता तयोरुपपत्त्यसंभवात्। अन्यथा घटादीनामपि नित्यत्वमेकत्वं चापद्येत, घटस्य रूपमिति भेदप्रत्ययाद्गुणगुणिनोर्नाभेदः। नीलपीतादिनानातन्त्वाद्यारब्धे पटादौ चित्ररूपमेव जायते तादृशपटस्य नीरूपत्वे तच्चाक्षुषानुपपत्तेः। नव्यास्तु तत्र पटे तत्तदवयवावच्छेदेन नानैव रूपाणि भवन्ति। अत एव 'लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः। श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते।' इत्यादिकं सङ्गच्छते इत्याहुः। रसगन्धयोस्तु न चित्रत्वं नानारसादिमदवयवारब्धानामवयविनां नीरसत्वादिस्वीकारेऽपि क्षत्यभावात्। चित्रस्पर्शस्तु रूपस्थलीययुक्त्या स्वीकरणीय एवेति संक्षेपः॥ ६॥

(भाष्यम्) अथापि खल्वप्सु तेजसि वायौ च नित्ये द्रव्यनित्यत्वाद्रूपादयो नित्याः, न पुनः पृथिव्यां नित्यायामपीति। कुत एतत्? यतः—*कारणगुणपूर्वकाः पृथिव्यां पाकजाः। पृथिव्यां खलु पाकाद्रूपरसगन्धस्पर्शान्तरमुत्पद्यते। न इमे पाकजा रूपरसगन्धस्पर्शाः इति। कारणगुणपूर्वका भवन्ति। अतो नित्यायामपि पृथिव्यामनित्या रूपादयः अवयविमात्रे तदुत्पत्तिरिति चेन्न, प्रदेशेऽप्युपलब्धेः। अथ मन्येतावयविमात्रे पृथिव्यां रूपरसगन्धस्पर्शान्तराण्युत्पद्यन्ते न त्ववयवेऽपीति। तच्च नैवं मन्तव्यम्। कस्मात्? प्रदेशेऽप्युपलब्धेः। प्रत्यक्षं खल्वग्निसंभेदादेकदेशेऽपि पृथिव्या रूपान्तरोत्पत्तिरुपलभ्यते, न त्ववयविन्यां महापृथिव्यामिति। अतो विज्ञायते, भवत्यवयवेऽपि तस्या रूपान्तरोत्पत्तिरिति। विभागे चोपलब्धेः। यत्र प्रदेशे रूपान्तरमुत्पद्यते, तस्य यावच्छक्य लवशो विभागेऽपि रूपान्तरमुपलभ्यते। तस्मात्प्रतिपद्यामहे, भवति नित्यायामपि पृथिव्यां रूपान्तरस्योत्पत्तिरिति। कारणगुणपूर्वा खल्वमीषामुत्पत्तिरवगतेत्येतदपि कारणगुणपूर्वमित्यनुमीयते। यत्र त्वापाकनिहितानां शरावोदञ्चनादीनामन्तस्तद्रूपाणामपि बाह्यतो रूपान्तरोत्पत्तिस्तत्र येष्वणुषु वह्निसंयोगविशेषस्तत्रैव तदुत्पत्तिर्न सर्वत्र। तेऽपि खल्वणवः कारणमिति कारणगुणपूर्वैव तदुत्पत्तिरिति। संयोगादिति चेद्धेत्वन्तरप्रतिषेधानुपपत्तिः। अथापि खल्वग्निसंयोगादवयविनि रूपान्तरोत्पत्तिरिति चेत्, हेत्वन्तरप्रतिषेधानुपपत्तिः। यद्यवयविनि रूपोत्पत्तावग्निसंयोगो हेतुः, कथमन्यस्य हेतोरवयवरूपस्य प्रतिषेध उपपद्यते। तस्मादवयवस्य रूपान्तरोत्पत्तावग्निसंयोगो हेतुः,

अवयविनि त्ववयवरूपमिति यथादर्शनमभ्यनुज्ञानमिति । सूक्ष्माणा खल्वपि दहनांशानां सच्छिद्रेषु द्रव्येष्वन्तःप्रवेशो भवति । अन्तःश्यामबाह्यलौहित्ययोः कल्पान्तरानुपपत्तेः । सेयं दहनाशस्यान्तःप्रवेशो न मूर्तान्तरस्येत्यननुयोज्या वस्तुशक्तिरिति । दहनांशानामन्तःप्रवेशाभावे त्वश्मादीना प्रादेशिकान्तरौष्ण्योपलब्धिर्नोपपद्यते । यश्चापाके निहितानां द्रव्याणां विनाशमुत्पत्तिं च प्रतिजानीते, तस्यैतन्नोपपद्यते । लक्ष्मवतां चामीषां यथावदुपलब्धिरिति । सूच्यग्रविभेदेऽपि वस्तुनस्तथाऽवस्थानं न पूर्वस्य सर्वात्मना विनाशोऽपरस्य चोत्पत्तिरनुपलब्धेः । खण्डस्य पटस्य खल्वेवमुत्पत्तिर्दृश्यते इति । परिमाणमप्यपगतांशस्य नश्यति न त्वपरांशस्य । आकुञ्चनप्रसारणवच्च पटस्यैतत्प्रतिपत्तव्यम् । अथापि खल्वाधारस्य लवशोऽपगमात्परिमाणान्तरस्योत्पत्तिर्भवति । न जात्वपि पूर्वस्य द्रव्यस्य सर्वात्मना विनाशो द्रव्यान्तरस्य चापूर्वस्योत्पत्तिरिति । सोऽयं भूम्ना व्यपदेशः । द्रव्यान्तरोत्पत्तौ खल्वेतन्न प्रत्यभिज्ञायेत । न जातु खण्डः पटः प्रत्यभिज्ञायते । द्वित्राणां तन्तूनां त्वपगमे न खल्वपि खण्डः पट उत्पद्यते स एव त्ववतिष्ठते इति । अथापि खल्ववस्थितैः संयोगैः क्वचित्खण्डपटवदस्तु खण्डद्रव्यस्योत्पत्तिः, न त्ववश्यमापाकनिहितानां विनाशोऽपूर्वाणां चोत्पत्तिरिति । तदेवमापाके विपक्वानां शरावोदञ्चनादीनामवस्थानं, विनाशश्च स्थाल्यामाहितानां ताण्डुलादीनामधःसन्तापेनेत्यननुयोज्या वस्तुशक्तिर्यथादर्शनमभ्यनुज्ञातव्या भवति । एतेन रसादयो व्याख्याताः । प्रत्यक्षं च पक्वानां विदलादीनां रसान्तरमिति ॥ ६ ॥

## एकद्रव्यत्वात् ॥ ७ ॥

( उप० ) पार्थिवपरमाणुरूपादीनां तेजःसंयोगासमवायिकारणकत्वं साधयितुमाह—एकद्रव्यत्वादिति । पाकजानामिति शेषः । अत्र च गुणत्वे कार्यत्वे सतीति विवक्षितं तदयं प्रयोग.—पार्थिवपरमाणुरूपादयः संयोगासमवायिकारणकाः कार्यगुणत्वे सति नित्यनिष्ठाद्विष्ठगुणत्वात् शब्दवत् बुद्ध्यादिवच्च । संयोगजत्वमात्रं वा साध्यं तेन विभागजशब्दे न व्यभिचारः । वायुसंयोगस्य शब्दमात्रे निमित्तकारणत्वात्, पार्थिवरूपादीनां च तेजोऽन्वयव्यतिरेकदर्शनात्तेजःसंयोगासमवायिकारणकत्वं पक्षधर्मताबलात्सिध्यति ॥ ७ ॥

( विवृ० ) ननु कारणगुणानां कार्येऽसत्त्वात्कथं कार्यगुणजनकत्वं वैयधिकरण्यादित्याशङ्कायामाह—एकेति । एकं द्रव्यमधिकरणं यस्य तत्त्वा-

त्सामानाधिकरण्यादित्यर्थः। तथाच कारणगुणानां साक्षात्समवायसंबन्धेन कार्येऽसत्त्वेऽपि स्वसमवायिसमवायरूपसामानाधिकरण्यसंबन्धेन कार्ये सत्त्वात्तद्गुणजनकत्वं नानुपपन्नमिति भावः॥ ७॥

(भाष्यम्) पृथिव्यां रूपादयो गुणाः पाकादुत्पद्यन्ते न त्वियमनेकरूपादिस्वभावेति। कुत एतत् प्रतिपत्तव्यम्—*एकद्रव्यत्वात्। एकं खलु द्रव्यं पृथिवीत्येकमेव तस्याः स्वाभाविकं रूपं रूपान्तरं च निमित्तव्यपाश्रयमिति विज्ञायते। एकैकं द्रव्यमबादिकमेकैकरूपादिमदृष्टं तथा चेयमिति। कृष्णं हि रूपं पृथिव्याः स्वाभाविकमिति पीनलोहितकपिशकडारादिरूपान्तराणां निमित्तान्तरगत्तत्रोपलब्धिरिति। अपामग्निना संमृज्यमानाना न खल्वपि रूपान्तामुत्पद्यते। सेयमचिन्त्या वस्तुशक्तिरशक्यापह्नवेति। उपजनापाययोस्तु पृथिव्यां साक्षादुपलब्धिः क्वचित्पूर्वं रूपमपैति परं चोपजायते इति साक्षादुपलभ्यते पृथिव्यामिति। यत्कृष्णं तत्पृथिव्या इति चार्षाद्धि ज्ञानादियदित्थंभूतेति प्रतिपत्तिः। योऽप्यनेकरूपस्वभावेयमिति प्रतिजानीते, सोऽपि न कुतश्चिद्धेतोः प्रतिजानीते इति। यदि हीयमनेकरूपस्वभावा स्यात्स्थूलायां पृथिव्यां तस्यानुपलब्धिर्नोपपद्यते॥ ७॥

## अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते॥ ८॥

(उप०) रूपरसगन्धस्पर्शानेकग्रन्थेन व्युत्पाद्य परिमाणस्य सर्वसिद्धत्वेन संख्यायां च विप्रतिपत्तिबाहुल्यादुद्देशक्रममतिक्रम्य सूचीकटाहन्यायेन प्रथमं परिमाणपरीक्षामारभमाण आह—अणोरिति। नित्ये इति विषयेण विषयिणं नित्यत्वप्रतिपादकं चतुर्थाध्यायमुपलक्षयति—उपलब्ध्यनुपलब्धी इति यथायोगमन्वयः 'येन यस्याभिसंबन्धो दूरस्थस्यापि तस्य सः' इति न्यायेन। तथाचाणोरनुपलब्धिरिति लभ्यते तदेवं स्थूलो नीलः कलश इति प्रात्यक्षिकप्रत्यये यथा नीलं रूपं विषयस्तथा परिमाणमपि। तेन च परिमाणेन परमाणुपर्यन्तं परिमाणमुन्नीयते द्रव्यत्वाच्च। किं च द्रव्यप्रत्यक्षतायां रूपवत् परिमाणमपि कारणं, नहि महत्त्वमन्तरेण द्रव्यं प्रत्यक्षं भवति। तथाच द्रव्यप्रत्यक्षज्ञानकारणत्वेन स्वयं च प्रत्यक्षतया परिमाणं गुणोस्तीति निश्चीयते। यदि हि घटादिस्वरूपं परिमाणं स्यात्तदा न महदानयेत्युक्ते घटमात्रमानयेत्। तथाच प्रैषसंप्रतिपत्ती विरुध्येयाताम्। एवं घटपदात्परिमाणं प्रतीयेत परिमाणपदाद्वा घट इति। मानव्यवहारासाधारणकारणत्वं द्रव्यसाक्षात्कारकारणविषयनिष्ठसामान्यगुणत्वं वा महत्त्वत्वम्। मानव्यवहारो हस्तवितस्त्यादिव्य-

वहारो न तु पलसंख्यादिव्यवहारः । तच्च परिमाणं चतुर्विधं महत्त्वमणुत्वं दीर्घत्वं ह्रस्वत्वं च । तत्र परममहत्त्वपरमदीर्घत्वे विभुचतुष्टयवर्तिनी । परमाणुत्वपरमह्रस्वत्वे परमाणुवर्तिनी । अवान्तराणुत्वावान्तरह्रस्वत्वे द्व्यणुकवर्तिनी । त्रसरेणुमारभ्य महावयविपर्यन्तं महत्त्वदीर्घत्वे । एवं च सर्वाण्यपि द्रव्याणि परिमाणद्वयवन्ति । बिल्वामलकादावणुत्वव्यवहारः समिदिक्षुदण्डादिषु च ह्रस्वत्वव्यवहारो भाक्तः । भक्तिश्चात्र प्रकर्षभावाभावः । आमलके यः प्रकर्षभावस्तस्याभावः कुवले, बिल्वे यः प्रकर्षभावस्तस्याभाव आमलके स च गौणमुख्योभयभागित्वाद्भक्तिपदवाच्यः । दीर्घह्रस्वत्वे नित्ये न वर्तेते इत्येके । परिमाणे एव ते न भवत इत्यपरे । महत्सु दीर्घमानीयतामितिवन्महत्सु वर्तुलं त्रिकोणं चानीयतामिति निर्धारणबलाद्वर्तुलत्वादीनामप्यापत्तेरिति तेषामाशयात् ॥ ८ ॥

( विवृ० ) संख्यायां बहुवादिविप्रतिपत्तिकत्वेन क्रममुल्लङ्घ्य प्रथमं सूचीकटाहन्यायेन परिमाणपरीक्षामारभते—अणोरिति । उपलब्ध्यनुपलब्धी इति द्वन्द्वसमासेऽल्पस्वरत्वादुपलब्धिशब्दस्य पूर्वभावः, तेन महत उपलब्धिः अणोश्चानुपलब्धिरिति द्वन्द्वक्रमेणैवान्वयः । नित्ये नित्यप्रतिपादके चतुर्थाध्याये व्याख्याते कथिते इत्यर्थः । मानव्यवहारासाधारणकारणं परिमाणम्, तच्चाणु महद्दीर्घं ह्रस्वं चेति चतुर्विधम् । तत्राणुपरिमाणं परमाणौ द्व्यणुके च तिष्ठति, तत्रापि परमाणावणुपरिमाणं परमं विभुचतुष्टये महत्परिमाणं परमं त्रसरेण्वादिमहावयविपर्यन्तद्रव्येषु अवान्तरजन्यमहत्परिमाणम् ॥ ८ ॥

(भाष्यम्) यस्मात्—*अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते । अणोः कारणादनुपलब्धिर्नित्या, न खल्वपि व्यभिचरतीत्येतद्द्वयं व्याख्यातं, महती चेयमिति । महत्यनेकद्रव्यवत्त्वादिति महत उपलब्धिवचनादणोरनुपलब्धिमुक्तां मन्यते ॥ ८ ॥

## कारणबहुत्वाच्च ॥ ९ ॥

( उप० ) इदानीं परिमाणकारणानि परिसंचष्टे—कारणेति । चकारो महत्त्वप्रचयौ समुच्चिनोति, परिमाणमुत्पद्यते इति सूत्रशेषः, तत्र कारणबहुत्वं त्र्यणुके महत्त्वदीर्घत्वे जनयति महत्त्वप्रचययोस्तत्कारणेऽभावात् । तच्च बहुत्वमीश्वरापेक्षाबुद्धिजन्यं तद्बुद्धेरनेकविषयत्वेऽप्यदृष्टविशेषोपग्रहो नियामकः । एवं परमाणुद्वयगतं द्वित्वं द्व्यणुके परिमाणोत्पादकं वक्ष्यते

द्वाभ्यां तन्तुभ्यामप्रचिताभ्यामारब्धे पटे केवलं महत्त्वमेवासमवायिकारणं बहुत्वप्रचययोस्तत्राभावात् । यत्र च द्वाभ्यां तूलकपिण्डाभ्यां तूलकपिण्डारम्भस्तत्र परिमाणोत्कर्षदर्शनात् प्रचयः कारणं बहुत्वस्याभावान्महत्त्वस्य सत्त्वेऽपि परिमाणोत्कर्षे प्रत्यप्रयोजकत्वात् । एवं च सति यदि महत्त्वं तत्र कारणं तदा न दोषः । तदुक्तं ‘ द्वाभ्यामेकेन सर्वैर्वा ’ इति । प्रचयश्च आरम्भकः संयोगः, स च स्वाभिमुखकिंचिदवयवासंयुक्तत्वे सति स्वाभिमुखकिचिदवयवसंयोगलक्षणः, स चावयवसंयोगः स्वावयवप्रशिथिलसंयोगापेक्षः परिमाणजनक. गुणकर्मारम्भे सापेक्ष इति वचनात् ॥ ९॥

( विवृ० ) जन्यमहत्परिमाणस्यासमवायिकारणं दर्शयति–कारणेति । कारणस्य स्वाश्रयसमवायिकारणस्य यद्बहुत्वं तस्मादसमवायिकारणाज्जन्यमहत्परिमाणं जायते इति शेषः । चकारात्प्रचयमहत्परिमाणयोः संग्रहः त्रसरेणुमहत्परिमाणं प्रति द्व्यणुकगतं त्रित्वरूपं बहुत्वमसमवायिकारणं यत्र तूलकपिण्डाभ्यां प्रचययुक्ताभ्यां तूलकपिण्डान्तरमारब्धं तत्र शिथिलाख्यसंयोगरूपः प्रचयस्तादृशावयविपरिमाणस्यासमवायिकारणम् । घटादिगतमहत्परिमाणे तु कपालादिगतं महत्परिमाणमसमवायिकारणमित्यर्थः ॥ ९ ॥

( भाष्यम् ) कुतः पुनर्महत्परिमाणमुत्पद्यते कुतश्चाणुपरिमाणमित्यत आह–*कारणबहुत्वाच्च । महत्त्वप्रचयाभ्यां चेति चार्थः । सन्निकृष्टेन महता परिमाणेन संबध्यते । त्रसरेणुकारणानां व्यणुकानां बहुत्वात्तत्र महतः परिमाणस्योत्पत्तिः । द्वाभ्यां तन्तुभ्यामप्रचिताभ्यामारब्धस्य पटस्य महत्परिमाणं कारणमहत्त्वादुत्पद्यते । प्रचीयमानाभ्यां तूलपिण्डाभ्यामारब्धे वस्तुनि योऽयं महतः परिमाणस्योत्कर्षः स प्रचयनिमित्तः । कस्मात् अप्रचिताभ्यामारब्धे तदनुपलब्धेः । कः पुनः प्रचयः कैश्चित्प्रदेशैरसंयुक्तयोराभिमुख्येन किंचित्प्रदेशसंयोगो द्रव्योत्पत्तिहेतुरिति ॥ ९ ॥

## अतो विपरीतमणु ॥ १० ॥

( उप० ) महत्त्वदीर्घत्वे व्युत्पाद्याणुत्वं व्युत्पादयति–अत इति । अतः प्रत्यक्षसिद्धान्महतः परिमाणाद्यद्विपरीतं तदणुपरिमाणमित्यर्थः । वैपरीत्यं चाप्रत्यक्षत्वात्कारणवैपरीत्याच्च, महत्त्वे हि महत्त्वबहुत्वप्रचयानां कारणत्वम्, अणुत्वे च कारणगतस्य द्वित्वस्येश्वरापेक्षाबुद्धिजन्यस्य कारणत्वम्, एतेन दीर्घत्वविपरीतं ह्रस्वत्वमित्यपि द्रष्टव्यम्, वैपरीत्यं चात्रापि पूर्ववत् ॥ १० ॥

( विवृ० ) अणुपरिमाणमाह—अत इति । अतो महत्परिमाणाद्विपरीतं वैधर्म्यवदणुपरिमाणम्, वैधर्म्यं च लौकिकप्रत्यक्षाविषयत्वं कारणबहुत्वाद्यजन्यत्वं च । तथाच परमाणौ द्व्यणुके चाणुपरिमाणं वर्तते तस्य प्रत्यक्षं न भवति, परमाणुपरिमाणं तु नित्यं द्व्यणुकपरिमाणं तु परमाणुगतद्वित्वसंख्याजन्यम् एवमणुत्वरूपा परिमाणगता जातिरपि वैधर्म्यं बोध्यम् ॥१०॥

(भाष्यम्) कारणस्याबहुत्वादणुत्वादप्रचयाच्चाणोः परिमाणस्योत्पत्तिः । द्वाभ्यामणुभ्यामारब्धे द्व्यणुके यदणुपरिमाणमुत्पद्यते, कारणस्याबहुत्वादणुत्वाच्च तदुत्पद्यते । द्वाभ्यामणुभ्यामुत्पन्नस्य द्व्यणुकस्य प्रथिमोत्पत्तावपि तदण्वेव भवति न महदिति । स्वापेक्षया बृहति परिमाणे परिमाणस्य निमित्तभावो नत्वणोरणुतरे इति यावता प्रदेशेनाणुरवच्छिद्यते द्व्यणुकं ततोऽधिकेनेति परमाण्वपेक्षया द्व्यणुकं बृहदिति । विशेषहेत्वभावादुभयहेतुभावः । परमाणुद्वित्वं द्व्यणुकपरिमाणे हेतुर्न त्वणुपरिमाणमित्यत्र विशेषहेतुर्नास्ति । विशेषहेत्वभावादुभयं हेतुर्भवतीति । कुवलयादिष्वापेक्षिकं यदणुपरिमाणं तदप्येतेभ्य एवोत्पद्यते इति । तदेवं स्थूलायां पृथिव्यां महत्परिमाणमुत्पद्यते इति सतोऽनेकस्य रूपस्य तस्यामनुपलब्धिर्नोपपद्यते इति । अथापि खल्वियं पृथिवी यथाऽऽमलकाद्यपेक्षया महती यथाऽब्राद्यपेक्षयाऽणुरपीत्यणुत्वात्सतोऽप्यनेकस्य रूपस्य तस्यामनुपलब्धिरुपपद्यते । तच्च नैवं मन्तव्यम् । यत्खल्वण्वेव भवति न महत्तत्रानुपलब्धिः, नत्वेवं पृथिवी ॥ १० ॥

**अणु महदिति तस्मिन् विशेषभावात् विशेषाभावाच्च ॥ ११ ॥**

( उप० ) इदानीं कुवलामलकादावणुत्वव्यवहारो भाक्त इति दर्शयति—अण्विति । इतिशब्दो व्यवहारपरतां दर्शयति, तेन बिल्वापेक्षया कुवलमणु कुवलापेक्षयामलकं महत्, आमलकापेक्षया बिल्वं महदिति तावद्व्यवहारोऽस्ति, तत्र महदिति तेषु व्यवहारो मुख्यः । कुत एवमत आह—विशेषभावान्महत्त्वविशेषस्यैव तरतमादिभावेन भावात्, अणुव्यवहारस्तु तेषु भाक्तः । कुत एवमत आह विशेषाभावात् अणुत्वविशेषस्य तत्राभावात् । अणुत्वं हि कार्यं द्व्यणुकमात्रवृत्ति, नित्यं तु परमाणुवृत्ति, कुवलादौ तदभावात् । यद्वा विशेषस्य महत्त्वकारणस्यैवावयवबहुत्वमहत्त्वप्रचयानां कुवलाद्यवयवेषु भावात्सद्भावाद्विशेषाभावात् विशेषस्य अणुत्वकारणस्य महत्त्वासमानाधिकरणद्वित्वस्य कुवलाद्यवयवेष्वभावादसद्भावादित्यर्थः ॥ ११ ॥

( विवृ० ) ननु बिल्वादामलकमणु गुञ्जाफलादामलकं महदित्यादिप्रत्ययान्महत्परिमाणेऽपि प्रत्यक्षविषयत्वमापेक्षिकमणुत्वं चास्तीति वैपरीत्यं कथमित्यत आह–अण्विति । अणु महदिति प्रत्ययव्यवहारौ, तस्मिन् व्यवह्रियमाणे परिमाणे, विशेषस्य अपकर्षस्य, भावात्सत्त्वात्, विशेषस्या पकर्षस्याभावादसत्त्वाद्भवत इत्यर्थः । अत्रापकर्षाभावेन उत्कर्षो विवक्षितस्तथाच बिल्वादामलकमण्विति प्रत्ययो व्यवहारश्च बिल्वपरिमाणादपकृष्टपरिमाणं विषयीकृत्य भवति, नतु वास्तविकाणुपरिमाणम् । एवं गुञ्जाफलादामलकं महदित्यादिप्रत्ययो व्यवहारश्च गुञ्जाफलपरिमाणापेक्षयोत्कृष्टमहत्परिमाणं विषयीकरोति उत्कर्षापकर्षौ च स्वरूपसंबन्धविशेषावतिरिक्तौ वेत्यन्यदेतत् ॥ ११ ॥

( भाष्यम् ) पृथिवीद्रव्यं खलु–* अणु महदिति तस्मिन् विशेषभावाद्विशेषाभावाच्च । अबाद्यपेक्षयाऽण्वपि आमलकाद्यपेक्षया महदपि भवति । कस्मात् ? तस्मिन् विशेषभावाद्विशेषाभावाच्च । तस्मिन्पृथिवीद्रव्ये आमलकादिकमपेक्ष्य विशेषो भवति कारणबहुत्वादिकम् । अबाद्यपेक्षया चैष विशेषो न भवति । विपर्ययस्तु भवति । यावन्तः खल्ववयवा भवन्त्यामलकादौ, ततो बहुतराः पृथिव्यां बहुतमाश्चावादिष्विति । न वै खल्वेकं भवत्यणु च महच्च, विरोधात् । तत्रैवं सति महदभिमानो भ्रान्तिरिति नाणुमहतोर्विरोधः ॥ ११ ॥

## एककालत्वात् ॥ १२ ॥

( उप० ) अणुत्वव्यवहारो भाक्त इत्यत्र हेतुमाह–एककालत्वादिति । महत्त्वमणुत्वं च द्वयमप्येकस्मिन्कालेऽनुभूयते, ते च महत्त्वाणुत्वे परस्परविरोधिनी नैकत्राश्रये सह संभवतः, अतो महत्त्वकारणसद्भावान्महत्त्वप्रत्ययस्तत्र मुख्योऽणुत्वप्रत्ययप्रयोगौ च भाक्तावित्यर्थः ॥ १२ ॥

( विवृ० ) ननु उत्कर्षापकर्षौ परस्परविरोधिनौ तत्कथमेकत्र तयोः समावेशः निम्बफलमपकृष्टं नारिकेलफलमुत्कृष्टमिति हि व्यवह्रियते नहि निम्बफलमुत्कृष्टमित्यादिकः प्रत्ययो व्यवहारो वा प्रेक्षावतां येन तयोरविरोधः संभाव्येतेत्यत आह–एकेति । एककालत्वादेककालीनत्वाद्विशेषतदभावयोरुत्कर्षापकर्षव्यवहारयोरिति शेषः । अयं भावः उत्कर्षापकर्षौ न विरुद्धौ एकत्राश्रये एकदैव द्वयोर्व्यवहारात् । नहि क्षत्रियो ब्राह्मणादपकृष्टः वैश्याच्चोत्कृष्ट इत्यादिव्यवहारः शक्योऽपलपितुम् । निम्ब-

फलादावपि स्वापेक्षया तिक्ततमादुत्कृष्टप्रत्ययो भवत्येवेति नोत्कर्षापकर्षयोर्विरोधः ॥ १२ ॥

( भाष्यम् ) कस्मात्—*एककालत्वात् । एकस्मिन्काले खल्वनयोरुपलब्धिरिति नानयोर्विरोधः । सहानवस्थानं हि विरोधः । एककालमुपलभ्यमानयोरेकोपलब्धिस्तात्त्विकी भ्रान्तिरन्येति विशेषहेत्वभावादयुक्तम् । तदेवमेकमेव भवत्यणु च महच्चोपलब्धिप्रामाण्यात् । तच्चैतन्न भवत्येकस्मादेवाणु च महच्च, विरोधात् । भवति त्वेकस्मादण्वपरस्मान्महदिति ॥ १२ ॥

**दृष्टान्ताच्च ॥ १३ ॥**

( उप० ) महत्त्वप्रत्ययस्य मुख्यत्वे हेतुमाह—दृष्टान्ताच्चेति । दृश्यते तथा वस्तुगत्या महत्स्वेव कुवलामलकबिल्वेषु स्थूलस्थूलतरस्थूलतमव्यवहारेण भवितव्यमित्यर्थः । यथा वस्तुगत्या शुक्लेष्वेव पटशङ्खस्फटिकादिषु शुक्लशुक्लतरशुक्लतमव्यवहारः ॥ १३ ॥

( विवृ० ) ननूत्कर्षापकर्षयोर्द्रव्येविरोधाभावेऽपि गुणादौ विरोधोऽस्त्येवेति कथमेकस्मिन्परिमाणे तयोः संभव इत्यत आह—दृष्टान्ताच्चेति । शुक्लशुक्लतरशुक्लतमरक्तरक्ततररक्ततमादिरूपादृष्टान्तात्परिमाणेऽपि उत्कर्षापकर्षयोः संभवः । नहि परिमाणस्योत्कर्षापकर्षावन्तरेण महन्महत्तरमहत्तमादिव्यवहारः कथमपि संगच्छत इति ॥ १३ ॥

( भाष्यम् ) दृष्टोऽन्तो दृष्टान्तः । दृश्यते खल्वेषा यज्ञदत्तसेना बह्वी संग्रामलब्धवर्णा च देवदत्तसेनायाः, विपरीता विष्णुमित्रसेनातः । तमालवनमपेक्ष्य सुरभि पद्मवनं चन्दनवनापेक्षया विपरीतम् । बहुगुडा द्राक्षा मधुरा खर्जूरादिति । एवमादिकः प्रभूतो दृष्टान्तराशिरुत्प्रेक्षितव्यः । तदेवं दृष्टान्ताच्च प्रतिपद्यामहे भवत्येकमेकस्मादणु महदन्यस्मादिति ॥ १३ ॥

**अणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावः कर्मगुणैर्व्याख्यातः ॥ १४ ॥**

( उप० ) नन्वणु महत्परिमाणमिति व्यवहारबलान्महत्त्वे अपि परिमाणे महत्त्वमणुत्वेऽप्यणुत्वमस्तीति ज्ञायते तत्कथं द्रव्यमात्रवृत्तित्वमनयोः कथं वा गुणे गुणवृत्तित्वविरोधो नापद्यत इत्यत आह—अणुत्वेति । यथा गुणकर्मणी नाणुत्वमहत्त्ववती तथाऽणुत्वमहत्त्वे अपि नाणुत्वमहत्त्ववती इत्यर्थः । प्रयोगश्च भाक्तो द्रष्टव्यः ॥ १४ ॥

( विवृ० ) ननु अणुमहत्परिमाणयोरपि अणुमहत्परिमाणान्तरमापेक्षिकमस्ति तदेव द्व्यणुकात्परिमण्डलमणु कपालाद्घटो महान् बिल्वादामलकमणु आमलकाद्बिल्वं महदित्यादिप्रतीतेर्विषय इति भ्रमं निराकुरुते—अणुत्वेति। कर्मगुणैरिति गुणपदं रूपादिगुणपरं नतु परिमाणपरं तथाच यथा रूपादौ रूपादयो न सन्ति एवं कर्मणि कर्माणि न सन्ति तथा परिमाणेऽपि परिमाणान्तरं न संभवति कार्यमात्रं प्रति द्रव्यस्य समवायिकारणत्वादिति ॥ १४ ॥

( भाष्यम् ) अणोर्भावोऽणुत्वं महतो भावो महत्त्वम्। तयोरणुत्वं महत्त्वं च न भवति। नहि स एव भावस्तत्रैव भवति। भवति त्वत्वादिपरिमाणादणु बिल्वादिपरिमाणाच्च महत्पृथिव्याः परिमाणमिति ॥ १४ ॥

## कर्मभिः कर्माणि गुणैश्च गुणा व्याख्याताः ॥ १५ ॥

( उप० ) ननु यथा गुणा गुणवन्तः कथमन्यथा महाञ्छब्दः द्वौ शब्दौ एकः शब्दः चतुर्विंशतिर्गुणा इत्यादिव्यवहारः। कर्माण्यपि च कर्मवन्ति प्रतीयन्ते कथमन्यथा शीघ्रं गच्छति द्रुतं गच्छतीति व्यवहारः तथाऽणुत्वमहत्त्वे अपि तद्वती स्यातामित्यत आह—कर्मभिरिति। कर्मभिः कर्माणि न तद्वन्ति गुणैश्च गुणा न तद्वन्तस्तथाऽणुत्वमहत्त्वे अपि न तद्वती, व्यवहारस्तु सर्वत्र भाक्त इत्यर्थः ॥ १५ ॥

( विवृ० ) ननु कर्मसु कर्माणि रूपादिषु रूपादयश्च न सन्तीति यदुक्तं तत्कुत इत्याशङ्कायामाह—कर्मभिरिति। कर्मभिरित्यनन्तरं शून्यानीति गुणैरित्यनन्तरं शून्या इति च पूरणीयम्। कर्माणि न कर्मवन्ति गुणाश्च न गुणवन्त इति पूर्वमेव प्रतिपादितमित्यर्थः ॥ १५ ॥

( भाष्यम् ) कर्मगुणैरित्येतद्व्याकुरुते—*कर्मभिः कर्माणि गुणैश्च गुणा व्याख्याताः। न वै खलु कर्माणि कर्मभिर्विशिष्यन्ते, न गुणैर्गुणाः॥१५॥

## अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याताः ॥ १६ ॥

( उप० ) ननु महान्ति कर्माणि अणूनि कर्माणि महान्तो गुणाः अणवो गुणा इत्यादिव्यवहारादणुत्वमहत्त्ववन्ति कर्माणि तदुभयवन्तश्च गुणाः प्रसक्ता इत्यत आह—अणुत्वेति। यथाऽणुत्वमहत्त्वे नाणुत्वमहत्त्ववती तथा न कर्माणि तदुभयवन्ति न वा गुणास्तदुभयवन्त इत्यर्थः। प्रयोगस्तु पूर्ववद्भाक्त इति भावः ॥ १६ ॥

( विवृ० ) नन्वणूनि कर्माणि महान्ति कर्माणि अणवो गुणा महान्तो गुणा इत्यादिव्यवहारबलात्कर्मणि गुणे च अणुत्वं महत्त्वं च परिमाणं सेत्स्यतीत्यत आह–अणुत्वेति । यथाऽणुत्वमहत्त्वपरिमाणयोर्नाणुत्वमहत्त्वपरिमाणे तथा कर्मणि गुणेषु च न तदुभयम् उक्तव्यवहाराश्चापकर्षोत्कर्षविषयका एवेति ॥ १६ ॥

( भाष्यम् ) यथैतत्तथा नाणुत्वमहत्त्वे अणुत्वमहत्त्वाभ्यामिति—* अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याताः। इत्थंभावे तृतीया। कर्मगुणाश्चाणुत्वमहत्त्वाभ्यां व्याख्याताः । कर्मसु गुणेषु च खल्वणुत्वं महत्त्वं च भवतीति तदुपलभ्य व्यवहरति, अणूनि कर्माणि महान्ति कर्माणि अणवो गुणा महान्तो गुणा इति । अथापि खल्वणुत्वमहत्त्वाभ्यां च कर्मगुणा व्याख्याताः । संख्यापृथक्त्वपरत्वापरत्वैश्चेति चार्थः । एकं कर्म द्वे कर्मणी त्रीणि कर्माणि, एतत्कर्मैतस्मात्कर्मणः पृथक्, पूर्वमेतत्परं चैतत्कर्मेति पृथिव्यामनेकानि रूपाणि अप्सु त्वेकं, रूपात्पृथग्रसो रसात्पृथग्रूपं, पूर्वं मधुरमुत्तरमम्लमिति । एवं शेषेषु ॥ १६ ॥

## एतेन दीर्घत्वह्रस्वत्वे व्याख्याते ॥ १७ ॥

( उप० ) अणुत्वमहत्त्वप्रक्रियां दीर्घत्वह्रस्वत्वयोरतिदिशति–एतेनेति । ह्रस्वत्वदीर्घत्वे अपि न ह्रस्वत्वदीर्घत्ववती महत्त्वोत्पादकमेव दीर्घत्वोत्पादकमणुत्वोत्पादकमेव ह्रस्वत्वोत्पादकम् । कारणैक्यात्कथं कार्यभेद इति चेन्न, प्रागभावभेदेन पाकजवदुपपत्तेः । यत्रैव महत्त्वं तत्र दीर्घत्वं यत्राणुत्वं तत्र ह्रस्वत्वं यत्र नित्यमणुत्वं तत्र नित्यं ह्रस्वत्वमित्याद्यतिदेशार्थः ॥१७॥

( विवृ० ) ह्रस्वत्वदीर्घत्वयोरप्यणुत्वमहत्त्वतुल्यतेत्याह–एतेनेति । यथा अणुमहदिति व्यवहारसिद्धे अणुत्वमहत्त्वे तथा ह्रस्वं दीर्घमिति व्यवहारसिद्धे ह्रस्वत्वदीर्घत्वे एवमिदमस्माद्ध्रस्वमिदमस्माद्दीर्घमित्यादिप्रत्ययव्यवहारावप्यपकर्षोत्कर्षविषयकावेवेत्यर्थः ॥ १७ ॥

( भाष्यम् ) तालतमालसालानवलोक्य व्यवहरति, योऽयं तालः स खलु तमालाद्दीर्घो ह्रस्वश्च सालादिति। तावेतौ ह्रस्वदीर्घौ वर्तुलादिवदणुमहत्प्रभेदाविति ॥ १७ ॥

## अनित्येऽनित्यम् ॥ १८ ॥

( उप० ) इदानीं विनाशकमाह-अनित्य इति । एतच्चतुर्विधमपि परिमाणं विनाशिनि द्रव्ये वर्तमानमाश्रयनाशादेव नश्यति न तु विरोधिगु-

णान्तरात् । घटे सत्यपि तत्परिमाणं विनश्यति कथमन्यथा कम्बुभङ्गेऽपि स एवायं घट इति प्रत्यभिज्ञेति चेन्न, आश्रयनाशेन तत्र घटनाशावश्यकत्वात् । नहि परमाणुद्वयसंयोगनाशाद्द्व्यणुके नष्टे तदाश्रितस्य त्रसरेणोस्तदाश्रितस्य चूर्णशर्करादेरविनाश इति युक्तिरभ्युपगमो वा, कथं तर्हि प्रत्यभिज्ञेति चेत्, सैवेयं दीपकलिकेति प्रत्यभिज्ञानवद्भ्रान्तत्वात् । प्रदीपप्रत्यभिज्ञाऽपि प्रमैव ह्रस्वत्वदीर्घत्वे परमुत्पादविनाशशालिनी इति चेन्न, तद्विनाशस्याश्रयविनाशमन्तरेणानुपपत्तेरुक्तत्वात् ॥ १८ ॥

( विवृ० ) किं परिमाणमनित्यमित्यत्राह—अनित्य इति । परिमाणमनित्ये अनित्यमाश्रयविनाशादेव तन्नश्यतीत्यर्थः। नच घटादौ त्रिचतुरादिपरमाणुविश्लेषे तदुपचये वा परिमाणान्तरं प्रत्यक्षसिद्धं स एवायं घट इत्यादिप्रत्यभिज्ञायास्तत्र सत्त्वेन घटादेस्तत्राविनाशादिति वाच्यं परमाणुविश्लेषे तदुपचये वा द्व्यणुकनाशस्यावश्यकत्वेन त्रसरेण्वाद्यन्त्यावयविपर्यन्तनाशस्याप्यावश्यकत्वात् । नहि विनाशसामग्री प्रत्यभिज्ञाभिया कार्यं नार्जयिष्यति, शरीरादावव्यवोपचयेऽसमवायिकारणनाशस्यावश्यकत्वादवयविनाश आवश्यकः । नच पटाविनाशेऽपि तन्त्वन्तरसंयोगात्कथं परिमाणाधिक्यमिति वाच्यं तत्रापि वेमाद्यभिघातेनासमवायिकारणतन्तुसंयोगनाशादेव पटनाशस्यावश्यकत्वात् । किंच तन्त्वन्तरस्य तत्पटावयवत्वे पूर्वं तत्पट एव न स्यात्तत्तन्तुरूपकारणाभावात्तत्तन्तोरवयवत्वाभावे च न तेन परिमाणाधिक्यं संयुक्तद्रव्यान्तरवत्, तस्मात्तत्र तन्त्वन्तरसंयोगे सति पूर्वपटनाशात्पटान्तरोत्पत्तिरित्यवश्यं स्वीकार्यम्, अवयविनः प्रत्यभिज्ञानं तु साजात्येन सैवेयं दीपकलिकेत्यादिवत् । नच पूर्वतन्तव एव तन्त्वन्तरसहकारात्पूर्वपटे सत्येव पटान्तरमारभन्त इति वाच्यं मूर्तयोः समानदेशताविरोधादिति संक्षेपः ॥ १८ ॥

( भाष्यम् ) तच्चैतत्परिमाणम्—*अनित्येऽनित्यम् । कस्मात् आश्रयानित्यत्वात् ॥ १८ ॥

## नित्ये नित्यम् ॥ १९ ॥

( उप० ) तत्किं पार्थिवपरमाणुरूपादिवत्परमाणुगतमणुत्वं शब्दबुद्ध्यादिवदाकाशादिगतं महत्त्वमपि नश्यतीत्यत आह—नित्य इति । नित्येष्वाकाशादिषु परमाणुषु च यत्परिमाणं तन्नित्यं विनाशकाभावात् ॥ १९ ॥

( विवृ० ) नित्यगतपरिमाणस्य नित्यत्वमर्थायातमपि स्पष्टार्थमाह—नित्य इति । सुगमम् ॥ १९ ॥

( भाष्यम् ) आश्रयानित्यत्वात् ॥ १९ ॥

## नित्यं परिमण्डलम् ॥ २० ॥

( उप० ) परमाणुपरिमाणस्य वैशेषिकसिद्धां संज्ञामाह—नित्यमिति । परिमण्डलमेव पारिमाण्डल्यं तदुक्तं 'अन्यत्र पारिमाण्डल्यादिभ्यः' इति ॥ २० ॥

( विवृ० ) ननु किं द्रव्यं नित्यं परिमाणाधिकरणं चेत्यत्राह—नित्यमिति । परिमण्डलशब्दः परमाणुपरिमाणं तद्विशिष्टं परमाणुं च परिभाषया प्रतिपादयति परिमण्डलं परिमाण्डल्यपरिमाणविशिष्टं परमाणुरूपं द्रव्यं नित्यमिति न नित्यद्रव्यस्य दुर्भिक्षतेत्यर्थः । तस्य नित्यत्वं च प्रागेव प्रतिपादितम् ॥ २० ॥

( भाष्यम् ) तत्र—*नित्यं परिमण्डलम् । परितो मण्डलं परिमण्डलम् । तदेतन्नित्यम् । कल्पान्तरानुपपत्तेः । निमित्तकारितो हि दीर्घह्रस्वादिभाव इति । अन्यदनित्यमित्यर्थात् सिद्धम् ॥ २० ॥

## अविद्या च विद्यालिङ्गम् ॥ २१ ॥

( उप० ) ननु कुवलामलकादिषु समिदिक्षुप्रभृतिषु च व्यवह्रियमाणमणुत्वं ह्रस्वत्वं वा यदि न पारमार्थिकं तदा पारमार्थिकयोस्तयोः किं प्रमाणमत आह—अविद्येति । विद्यालिङ्गमविद्या तदयमर्थः कुवलामलकादावणुत्वज्ञानं समिदिक्षुप्रभृतिषु ह्रस्वत्वज्ञानं तावदविद्या तत्र पारमार्थिकाणुत्वह्रस्वत्वयोरभावात्, सर्वत्राप्रमा प्रमापूर्विकैव भवतीत्यन्यथाख्यातिवादिभिरभ्युपगमात्तथाच सत्यमणुत्वज्ञानं सत्य च ह्रस्वत्वज्ञानमनुमेयमित्यर्थः । एवंच भाक्तः शब्दप्रयोगो मुख्यमन्तरेण न भवतीति मुख्ये अणुत्वह्रस्वत्वे क्वचिदवश्यं मन्तव्ये ॥ २१ ॥

( विवृ० ) ननु परमाणुरूपं द्रव्यं कथमङ्गीकर्तव्यं तस्याप्रत्यक्षत्वात्त्रसरेण्वादिकं तु प्रत्यक्षसिद्धं यद्द्रव्यं तदेवाङ्गीकरणीयमित्यत आह—अविद्येति । अविद्या अप्रमा पृथिवी नित्या जलं नित्यमित्यादिप्रतीतिरवयविविषयिणी विद्यायाः परमाणुविषयिण्याः पृथिवी नित्येति प्रमाया लिङ्गं सर्वत्र अप्रमायाः प्रमापूर्वकत्वात् । नहि कुत्रापि नित्यत्वमजानतः पृथिवी नित्येति भ्रमो भवितुमर्हति, एतच्चापाततः वस्तुतः परमाणुसिद्धिप्रकारः प्राक् प्रदर्शित एवादरणीयः ॥ २१ ॥

( भाष्यम् ) अथापि खल्वस्ति परिमण्डलमिति । कुत एतत्प्रतिपत्तव्यम्? लिङ्गादित्याह–*अविद्या च विद्यालिङ्गम्। अविद्या हि भवति लिङ्गं विद्यायाः परितो मण्डलं चन्द्रार्कबिम्बनक्षत्रसर्षपादिकमिति येयमुपलब्धिः सा खल्वविद्या । न ह्येतत्परितो मण्डलम् । मात्रया व्यतिरेकात् । सूक्ष्मया मात्रया खल्वत्र पारिमाण्डल्यस्य व्यतिरेको निपुणसंवेद्यः । भूयस्त्वाद्दोषाच्चाभिमान इति । तदेवमविद्यया अनुमीयते, अस्ति किञ्चित्पारिमण्डलमिति । विद्यापूर्विका ह्यविद्या भवतीति । या चेयमाकाशादिपरिमाणेषु नित्यबुद्धिः, सा भवत्यविद्या । चिरतरावस्थानात्खल्वेषां नित्यबुद्धिः न खलु तत्त्वतोऽस्ति । तया चानुमीयते अस्ति किञ्चित्परिमाणं नित्यमिति । तच्चैतत्परिमण्डलमणु महच्चेति यथाविषयं वेदितव्यम् ॥ २१ ॥

## विभवान्महानाकाशस्तथाचात्मा ॥ २२ ॥

( उप० ) द्रव्यत्वेन हेतुनाकाशादीनामनुमितस्य परिमाणस्य स्वरूपमाह–विभवादिति । विभवः सर्वमूर्तसंयोगित्वं तच्च परममहत्त्वमन्तरेणानुपपद्यमानं परममहत्त्वमनुमापयति, दृश्यते चेह वाराणस्यां पाटलिपुत्रे च युगपदेव शब्दोत्पत्तिस्तत्र चैकमेवाकाशं समवायिकारणमित्याकाशस्य व्यापकत्वं सिद्धं व्यापकत्वं च परममहत्परिमाणयोग एव नानाकाशकल्पने गौरवमित्येक एवाकाशोऽभ्युपगन्तव्यः । आकाशस्य प्रदेश इति तु व्यपदेशः प्रदेशवद्भिर्घटादिभिः संयोगनिबन्धनो भाक्तः। भक्तिश्च प्रदेशवद्द्रव्यसंयोगित्वम् । तथात्मेति यथाकाशं विभवात्सर्वमूर्तसंयोगित्वात्परममहत्तथात्मापि परममहान्। यद्यात्मनः सकलमूर्तसंयोगित्वं न भवेत्तदा तेषु तेषु मूर्तेषु अदृष्टवदात्मसंयोगात्क्रिया नोत्पद्येत व्यधिकरणस्यादृष्टस्य प्रत्यासत्त्यपेक्षया क्रियाजनकत्वात्। सा च प्रत्यासत्तिरदृष्टवदात्मसंयोग एव एवं संचारिणि शरीरे तत्र तत्र ज्ञानसुखादीनामुत्पत्तिरात्मनो वैभवमन्तरेणानुपपन्नेत्यात्माऽपि व्यापकः, स च नाकाशवदेक एव व्यवस्थादर्शनादित्युक्तमिति भावः । तच्च महत्त्वं सातिशयं नित्यं च परमाण्वणुत्ववत् । एवमाकाशादौ परमदीर्घत्वं परमाणुषु च परमह्रस्वत्वमूहनीयम् ॥ २२ ॥

( विवृ० ) आकाशादावपि नित्यं परिमाणमस्तीत्याह–विभवादिति । विभवात्सर्वमूर्तसंयोगादाकाशो महान्परममहत्परिमाणवान्, तच्च परिमाणं नित्यमाकाशस्य नित्यत्वात्, आकाशस्य सर्वमूर्तसंयोगाभावे नाना-

देशावच्छेदेन शब्दोत्पत्त्यसंभवात्तत्तद्देशाकाशसंयोगस्य तत्तच्छब्दासमवायिकारणत्वत् । एवमात्माऽपि नित्यपरममहत्परिमाणवान् वैभवात्, अदृष्टवदात्मसंयोगस्य सर्गाद्यकालीनपरमाणुकर्महेतुत्वादात्मवैभवमप्यावश्यकम् ॥ २२ ॥

( भाष्यम् ) परिमण्डलस्योदाहरणम्—*विभवान्महानाकाशस्तथाचात्मा । यथा च विभवादाकाशो महान् भवति व्यवहारभूमौ, तथा चात्मेति । कः पुनर्विभवः ? सर्वमूर्तसंयोगः । सर्वत्र युगपच्छब्दोत्पत्तेरनुमीयते, अस्त्याकाशस्य विभव इति । एतेनात्मनो विभवो व्याख्यातः । गुणप्रत्यक्षान्नित्यत्वाच्च न कल्पान्तरम् । आत्मगुणानां प्रत्यक्षान्नायमणुः अप्रत्यक्षा हि तदा भवेयुः । नित्यत्वाच्च न मध्यमपरिमाणः । अनित्यो हि तदा स्यात् । कृतहानमकृताभ्यागमश्च प्रसज्येत । पारिशेष्याद्विभुरिति ॥ २२ ॥

### तदभावादणु मनः ॥ २३ ॥

( उप० ) ननु मनो विभु सर्वदानिस्पर्शद्रव्यत्वादाकाशवज्ज्ञानाद्यसमवायिकारणसंयोगाधारत्वादात्मवदित्याकाशात्मनोः साहचर्येण मनोऽपि किं नोक्तमत आह—तदिति । तस्य विभवस्य सर्वमूर्तसंयोगित्वस्याभावादणु मनः सकलमूर्तसंयोगित्वे तु युगपदनेकेन्द्रियसंयोगे ज्ञानयौगपद्यं स्यात्तथा च व्यासङ्गो न स्यात् । अनुमाने तु मनो यावन्न सिद्धं तावदाश्रयासिद्धे मनःसिद्धिदशायां तु धर्मिग्राहकमानबाधिते । ननु विभवाभावादेव नाणुत्वं सिध्यति घटादौ व्यभिचारादिति चेन्न, विभवाभावेनाव्यापकत्वसाधनात् । तथाचैकस्मिन्देहे मनस्तावदेकं नानाकल्पने गौरवापत्तेः एकस्याप्यवयवकल्पने कल्पनागौरवान्निःस्पर्शत्वेनानारम्भकत्वाच्चेत्यादियुक्तेरणुत्वसिद्धेरिति भावः ॥ २३ ॥

( विवृ० ) नन्वात्मवन्मनोऽपि विभु ज्ञानाद्यसमवायिकारणसंयोगाश्रयत्वादिति तस्य महत्परिमाणं कुतो नोक्तमत आह—तदभाव इति । तस्य विभवस्याभावान्मनोऽणु न परममहत्परिमाणवदित्यर्थः । ज्ञानायौगपद्यनियामकतयाऽणुत्ववत एव मनसः सिद्धिर्वैभवसाधकप्रागुक्तानुमानस्य धर्मिग्राहकप्रमाणबाधितत्वादिति भावः ॥ २३ ॥

( भाष्यम् ) मनसस्तु विभवो न भवति । ज्ञानयौगपद्यं हि तथा स्यात् । मध्यमपरिमाणेऽपि समानो दोषः । तस्मादणु मन इति ॥ २३ ॥

## गुणैर्दिग् व्याख्याता ॥ २४ ॥

( उप० ) दिशः परममहत्त्वे युक्तिमाह—गुणैरिति । गुणैः सकलद्वीपवर्तिपुरुषसाधारणपूर्वापरादिप्रत्ययरूपैः सकलमूर्तनिष्ठपरत्वापरत्वलक्षणैश्च दिगपि व्यापकत्वेन व्याख्यातेत्यर्थः। परत्वापरत्वयोरुत्पत्तौ संयुक्तसंयोगभूयस्त्वाल्पीयस्त्वविषयापेक्षाबुद्धेः कारणत्वस्य वक्ष्यमाणत्वात्। नानादिक्कल्पनस्य कल्पनागौरवप्रतिहतत्वात्। कथं तर्हि दश दिश इति प्रतीतिव्यपदेशाविति चेन्न तत्तदुपाधिनिबन्धनत्वादित्युक्तत्वात् ॥ २४ ॥

( विवृ० ) दिश्यपि नित्यपरिमाणमाह—गुणैरिति। गुणैः परत्वापरत्वासमवायिकारणैः तदाश्रयसंयोगैः दिक् व्याख्याता परममहत्त्वेनेति शेषः। तथाच दिशः परममहत्परिमाणं विना दूरान्तिकादिनानादेशैः सह युगपत्संयोगानामनुपपत्त्या युगपन्नानापरत्वापरत्वानामुत्पत्तिर्न संभवतीति दिशः परममहत्परिमाणमावश्यकमाश्रयस्य नित्यत्वात्तु तस्य नित्यत्वमिति भावः ॥ २४ ॥

( भाष्यम् ) प्राच्यादिबुद्धयः सर्वत्र भवन्तीति महती दिगिति। अथापि खल्वाकाश एव गुणभेदाद्दिगित्युक्तम्। तस्मात्साऽपि महतीति ॥ २४ ॥

## कारणे कालः ॥ २५ ॥

( उप० ) कालस्य व्यापकत्वमाह—कारण इति । परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययकारणे द्रव्ये काल इति समाख्या। नचैतादृशः प्रत्ययः सर्वदेशपुरुषसाधारणः कालस्य व्यापकतामन्तरेण संभवतीति तस्य व्यापकत्वं परममहत्त्वयोग इत्यर्थः। यद्वा इदानीं जात इत्यादिप्रतीतिबलात्सर्वोत्पत्तिमन्निमित्तकारणत्वं कालस्य प्रतीयते तदपि व्यापकत्वाधीनं निमित्तकारणस्य समवाय्यसमवायिकारणप्रत्यासन्नत्वानियमात्। यद्वा अतीतानागतवर्तमानव्यवहारः सार्वत्रिक इति सर्वगत एव कालः । यद्वा क्षणलवमुहूर्तयामदिनाहोरात्रपक्षमासर्त्वयनसंवत्सरादिव्यवहारकारणे द्रव्ये कालाख्येति व्यवहारस्य सार्वत्रिकत्वात्कालः सार्वत्रिक इति परममहान् तस्य नानात्वकल्पना च कल्पनागौरवप्रतिहतेत्युक्तम् ॥ २५ ॥

इति श्रीशाङ्करे वैशेषिकसूत्रोपस्कारे सप्तमाध्यायस्य प्रथममाह्निकम्।

( विवृ० ) कालस्यापि तथात्वमाह—कारण इति। कारणे कालिकपरत्वापरत्वसमवायिकारणे प्रत्यासन्न इति शेषः कालिकपरत्वापरत्वसमवा-

यिकारणसंयुक्त इति तु फलितार्थः । काल इति महत्त्वेन व्याख्यात इति शेषः । तथाच कालस्य परममहत्परिमाणं विना युगपन्नानादेशावस्थित-नानापिण्डैः सह युगपत्संयोगानुत्पत्तौ युगपन्नानापिण्डेषु कालिकापरत्वा-परत्वयोरुत्पत्तिर्न संभवतीत्यवश्यं कालस्य परममहत्परिमाणमङ्गीकार्यं तच्च नित्यं कालस्य नित्यत्वादिति भावः ॥ २५ ॥

इति श्रीजयनारायणतर्कपञ्चाननभट्टाचार्यप्रणीतायां कणादसूत्रविवृतौ सप्तमाध्यायस्य प्रथममाह्निकम् ।

( भाष्यम् ) प्रावृषेण्यादीनां भावानां सर्वत्र युगपदुत्पत्तिरिति तत्त-त्कारणे संबध्यमानः कालो महानिति । अथापि खलु प्रावृषेण्यादिभावानां कारणे आकाश एव काल इति समाख्या । तस्मात्सोऽपि महानिति ॥२५॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये सप्तमाध्यायस्य प्रथमाह्निकम् ।

## सप्तमाध्याये द्वितीयाह्निकम् ।

### रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम् ॥ १ ॥

( उप० ) द्वितीयाह्निके एकानेकवृत्तिगुणपरीक्षाप्रकरणम् अनेकमा-त्रवृत्तिगुणपरीक्षाप्रकरणं प्रसङ्गाच्छब्दार्थसंबन्धपरीक्षाप्रकरणं विशेषगुण-रहितविभुसंयोगासमवायिकारणैकवृत्तिगुणपरीक्षाप्रकरणं समवायपरी-क्षाप्रकरणं चेति । तत्र महत्त्वैकार्थसमवायाधीनं संख्यादीनामपि प्रत्य-क्षत्वमिति चोद्देशक्रममतिक्रम्य परिमाणनिरूपणानन्तरं संख्यां पृथक्त्वं च परीक्षितुमाह—रूपेति । रूपरसगन्धस्पर्शेति संख्यादिपञ्चकभिन्नगुणो-पलक्षणम् । व्यतिरेकादिति व्यभिचारात्तदयमर्थः । एको घट इति विशिष्ट-प्रतीतिर्विशेषणजन्या, तच्च विशेषणं न रूपादि, तद्व्यतिरेकेण जायमान-त्वात्, न च घटत्वादिकमेव निमित्तम्, पटेऽपि जायमानत्वात्, न चैकत्वं सत्तावत्सामान्यम्, सत्तया सहान्यूनानतिरिक्तवृत्तित्वात्, न च द्रव्यमात्रसामान्यं तत्, द्रव्यत्वेनान्यूनानतिरिक्तदेशत्वात्, न चान्यूनान-तिरिक्तदेशत्वेऽपि प्रतीतिभेदाद्भेदः प्रतीतिभेदस्य स्वरूपकृतत्वे सत्ता-ऽपि भिद्येत, विषयभेदकृतत्वे तु विषयभेदानुपपत्तेरुक्तत्वादन्यथा घटत्व-कलशत्वयोरपि भेदापत्तेः । न च स्वरूपाभेद एकत्वमिति भूषणमतं यु-क्तम् । घटस्वरूपाभेदश्चेदेकत्वं तदा पटादावेकत्वप्रत्ययो न स्यात्, स्वरू-पभेदो द्वित्वादिकमित्यपि भूषणमतमनुपपन्नं स्वरूपभेदस्य त्रिचतुरादि-साधारण्येन व्यवहारवैचित्र्यानुपपत्तेरिति भावः ॥ १ ॥

( विवृ० ) महत्त्वस्य संख्यादिप्रत्यक्षहेतुत्वात्परिमाणनिरूपणानन्तरमेव संख्यापृथक्त्वयोर्निरूपणमारभते—रूपेति । एकत्वमर्थान्तरं रूपादिभ्यो भिन्नं नतु रूपादिस्वरूपम्, एकत्वपदं संख्यादिपञ्चकोपलक्षकं गगनमेकं काल एक इत्यादिप्रतीतिविषयो रूपादिभिन्नो गुणोऽवश्यमङ्गीकार्यः गगनादिषु रूपरसगन्धस्पर्शव्यतिरेकाद्रूपादीनामभावादित्यर्थः । नचैकं सामान्यमेको विशेषः एकः समवायः एकोऽभाव इत्यादिप्रतीतेः का गतिरिति वाच्यं तत्रानायत्या धीविशेषविषयत्वरूपस्यैकत्वस्य भानाङ्गीकारादधिकमन्यत्रानुसंधेयम् ॥ १ ॥

( भाष्यम् ) स्थानवतां परीक्षेति संख्या पृथक्त्वं चेदानीं परीक्ष्यते—* रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम् । यदेतदेकत्वं नाम संख्या, तत्खल्वर्थान्तरं रूपादिभ्यः । कस्मात् ? रूपरसगंधस्पर्शव्यतिरेकात् । व्यतिरिच्यते ह्येकत्वं रूपादिभ्यः । रूपे न खल्वपि रूपमस्ति । तत्रापि त्वेकं रूपमिति बुद्धिर्भवति । तस्मात्ततोऽर्थान्तरमिति । एवं शेषेषु । एतेन द्वित्वादयो व्याख्याताः ॥ १ ॥

## तथा पृथक्त्वम् ॥ २ ॥

( उप० ) एकत्वतुल्यन्यायतयैकपृथक्त्वमपि साधयितुमाह—तथेति । अपोद्धारव्यवहारस्तावदस्ति इदमस्मात्पृथगन्यदर्थान्तरमित्याकारः, अपवृज्यावधिमपेक्ष्य य उद्धारो निर्द्धारणं स ह्यपोद्धारः, तत्र च न रूपादि तन्त्रं व्यभिचारादवध्यनिरूप्यत्वाच्च । नन्वन्योन्याभाव एव पृथक्त्वम्, इदमस्मात्पृथगन्यदर्थान्तरमितिवद्भिन्नमिति प्रतीतेरन्योन्याभावावलम्बनत्वात् । न । पृथगादिशब्दानां पर्यायत्वेऽपि नान्योन्याभावार्थत्वं तत्र पञ्चमीप्रयोगानुपपत्तेः । इदमस्मात्पृथक्, इदमिदं न भवतीतिप्रतीत्योर्भिन्नविषयत्वात् । न चान्योन्याभाववानर्थः पृथक्त्वम्, अघटः पट इत्यत्रापि पञ्चमीप्रयोगापत्तेः । ननु पृथगिति विशिष्ट इतिप्रतीत्योरेकाकारत्वाद्वैशिष्ट्यमेव पृथक्त्वमिति चेन्न, मैत्रस्य दण्डवैशिष्ट्यदशायां मैत्रात्पृथगयं मैत्र इत्यपि प्रतीत्यापत्तेः एवं शब्दविशिष्टे व्योम्नि बुद्धिविशिष्टे चात्मनि पृथक्त्वव्यवहारापत्तेः । अतएव वैधर्म्यमपि न पृथक्त्वं पाकरक्ते घट श्यामाद्घटात्पृथगयं घट इति व्यवहारापत्तेः तद्विरोधिधर्मवत्त्वमेव हि तद्वैधर्म्यं तच्च श्यामानन्तरं रक्ततादशायामपि । न च सामान्यमेव पृथक्त्वं सामान्यस्यावध्यनिरूप्यत्वाज्जातिसंकरप्रसङ्गाच्च । सन्मात्रवृत्तित्वे सत्तया, द्रव्यमात्रवृत्तित्वे द्रव्यत्वेनान्यूनानतिरिक्तवृत्तित्वापत्तेः ॥ २ ॥

( विवृ० ) पृथक्त्वगुणस्य संख्यातुल्यत्वमाह—तथेति । पृथक्त्वमपि संख्यावद्गुणान्तरमेव तत्रैकपृथक्त्वमेकत्वसंख्यातुल्यं द्विपृथक्त्वादिकं च द्वित्वादिसंख्यातुल्यमिति । नच घटः पटात्पृथगन्यो भिन्न इत्यादिप्रतीतीनां समानविषयकत्वानुभवादन्योन्याभाव एव पृथक्त्वं नतु गुणान्तरमिति वाच्यं, नञ्शब्दस्येव पृथक्शब्दस्याप्यव्ययतया भेदार्थकतया च अस्मात्पृथगिदमिदं नेति प्रतीत्योर्वैलक्षण्यानुपपत्तेः । नचान्यादिशब्दवत्पृथक्शब्दस्यापि भेदविशिष्ट एव शक्तिरिति वाच्यं गौरवापत्तेः । अन्यादिशब्दस्य नामान्तरार्थे भेदान्वयानुपपत्त्या विशिष्टे शक्तिस्वीकारेऽपि पृथक्शब्दस्याव्ययतया भेदान्वयसंभवेन विशिष्टशक्तिस्वीकारस्यानावश्यकत्वात् । अन्यथा नञाद्यव्ययानामपि विशिष्टशक्तिः स्वीक्रियेत । नच पृथक्शब्दस्यान्यार्थत्वाभावे तद्योगे कथं पञ्चमीति वाच्यम् 'तृतीया पञ्चमी चैव पृथङ्नाना प्रयोगतः' इत्यादि शाब्दिकस्मृतेः पञ्चमीविधायकत्वात् । वस्तुतो वैशेषिकानुभवसिद्धमेव पृथक्त्वं गुणान्तरं खण्डनग्रन्थे दीधितिकृता खण्डितमिति तत्रास्माकं विचारबाहुल्यमकिञ्चित्करमेवेति विरम्यते ॥ २ ॥

( भाष्यम् ) यथैत्—*तथा पृथक्त्वम् । रूपादिभ्योऽर्थान्तरमिति । पृथक्त्वमयोगो वैलक्षण्यमनेकता इत्यनर्थान्तरम् । अथाप्येतदुक्तम् 'पृथक्त्वं स्यादसंयोगो वैलक्षण्यमनेकता' इति । शब्दविशेषादुपलब्धिविशेषः । इदमस्मात्पृथगिदमिदं नेति योऽयमुपलब्धिविशेषः, स खलु शब्दविशेषनिमित्तो न त्वर्थभेदात् । चन्दनं सुरभि चन्दनस्य सौरभमित्यभिन्नेऽप्यर्थे शब्दविशेषादुपलब्धिविशेषो दृष्ट इति ॥ २ ॥

## एकत्वैकपृथक्त्वयोरेकत्वैकपृथक्त्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ ३ ॥

( उप० ) नन्वेकमेकत्वं, रूपादिभ्यः पृथक्पृथत्वमिति व्यवहारादेकत्वेऽप्येकत्वं, पृथक्त्वेऽपि पृथक्त्वमेवं तत्र तथापीत्यत आह—एकत्वेति । यथाऽणुत्वमहत्त्वे नाणुत्वमहत्त्ववती तद्व्यवहारस्तत्र भाक्तस्तथैकत्वैकपृथक्त्वे नैकत्वैकपृथक्त्ववती तद्व्यवहारस्तत्र भाक्त इत्यर्थः । 'कर्मभिः कर्माणि' 'गुणैर्गुणाः' इत्यपि दृष्टान्तसूत्रद्वयं पूर्वदृष्टान्तसूत्रेणैकवाक्यतापन्नमेवात्र प्रतिभासते यथा कर्माणि न कर्मवन्ति गुणाश्च न गुणवन्तस्तथैकत्वैकपृथक्त्वे न तद्वती इत्यर्थः ॥ ३ ॥

( विवृ० ) नन्वेकमेकत्वमित्यादिव्यवहारबलादेकत्वेऽप्येकत्वमेवमेकपृथक्त्वं द्विपृथक्त्वात्पृथगिति व्यवहारबलादेकत्वेऽप्येकपृथक्त्वमङ्गीकार्यमिति तयोर्गुणत्वं दुर्घटं गुणेऽपि सत्त्वादत आह—एकत्वेति । यथाऽणुत्वमहत्त्वे नाणुत्वमहत्त्वयोस्तथा एकत्वैकपृथक्त्वयोरपि नैकत्वैकपृथक्त्वे, व्यवहारस्तु प्रकारान्तरेणोपपादनीय इत्यर्थः ॥ ३ ॥

( भाष्यम् ) एकस्य भाव एकत्वम् । पृथग्भावः पृथक्त्वम् । नहि स एव भावस्तत्रैव भवति । भवति त्वेकमेकत्वं द्वे एकात्वे त्रीण्येकत्वानि, एकं पृथक्त्वं द्वे पृथक्त्वे त्रीणि पृथक्त्वानीति । द्वित्वादयो द्विपृथक्त्वादयश्चैतेन व्याख्याताः । अथापि खल्वाचार्यप्रवृत्तिर्ज्ञापयति, एकत्वमेव तेन तेन प्रकारेणोपलभ्यमानं द्वित्वादिकमुच्यते, न तत्त्वतोऽर्थान्तरमस्तीति । महता खल्वसौ प्रयत्नेनैकत्वं परीक्ष्योपरराम । न द्वित्वादीना परीक्षां चक्रे ॥ ३ ॥

## निःसंख्यत्वात्कर्मगुणानां सर्वैकत्वं न विद्यते ॥ ४ ॥

( उप० ) ननु गुणेषु कर्मसु च साधारण एवैकत्वव्यवहारः किमत्र विनिगमकं यद्द्रव्येष्वेवैकत्वं न गुणादिष्वित्यत्राह—निःसंख्यत्वादिति । सर्वेषामेकत्वं सर्वैकत्वं तन्न विद्यते, कुत इत्यत आह निःसंख्यत्वात्कर्मगुणानामिति संख्याया निष्क्रान्ताः निःसंख्यास्तेषां भावो निःसंख्यत्वम्, तथाच कर्माणि गुणाश्च निःसंख्यानि, संख्याया गुणत्वेन गुणेपु तावत्संख्या न विद्यते न वा कर्मसु, गुणानां कर्मसु निषेधात् । अन्यथा द्रव्यत्वप्रसङ्गात् । साधितं च संख्याया गुणत्वमेकत्वस्य च संख्यात्वमिति भावः ॥ ४ ॥

( विवृ० ) नन्वेको घट इति वदेकमेकत्वमिति व्यवहारस्य सत्त्वात्तस्य भाक्तत्वे किं बाजमत आह—निःसंख्यत्वादिति । सर्वैकत्वं सर्वेषु पदार्थेषु एकत्वं वर्तते इति यन्मतं तन्न विद्यते न प्रामाणिकतया लभ्यते, कर्मणां गुणानां च नि.संख्यत्वात्संख्याशून्यत्वादन्यथा तयोरपि द्रव्यत्वं प्रसज्येत द्वित्वादेरिवैकत्वस्यापि गणनव्यवहारहेतुतया संख्यात्वस्यापह्नोतुमशक्यत्वादिति भावः ॥ ४ ॥

( भाष्यम् ) कर्माणि गुणाश्चापरिसंख्येया इति कर्मणां गुणानां च निःसंख्यत्वादनुमीयते सर्वत्रैकत्वं नास्ति, नानैव तु सर्वमिति ॥ ४ ॥

## भ्रान्तं तत् ॥ ५ ॥

( उप० ) तर्हि कथमेकं रूपमेको रस इत्यादिज्ञानमित्यत आह—भ्रान्तमिति । गुणकर्मसु यदेकत्वज्ञानं तद् भ्रान्तमित्यर्थः, सूत्रे च ज्ञान-

मिति शेषः आक्षिप्तपूर्वपक्षित्वात्, प्रयोगस्तु भाक्तः स्वरूपाभेद एव च भक्तिः न च तदेवैकत्वमुक्तोत्तरत्वात् ॥ ५ ॥

( विवृ० ) ननु गुणादावेकत्वाभावे कथमेकं रूपमित्यादिज्ञानमत आह—भ्रान्तमिति । तदिति बुद्धिस्थं गुणादावेकत्वज्ञानमुपस्थापयति तथाच गुणादावेकत्वज्ञानं भ्रमरूपमेवेति न ततो वस्तुसिद्धिरित्यर्थः । तादृशव्यवहारस्तु उभयावृत्तिधर्मविषयक एव । तादृशधर्मश्च तत्तद्व्यक्तित्वधीविशेषविषयत्वादिक एवेति भावः ॥ ५ ॥

( भाष्यम् ) अस्य प्रतिषेधः—*भ्रान्तं तत् । यच्चैतत्कर्मगुणानां निःसंख्यत्वात् नास्त्येकत्वमिति नानात्वं भावानामिति, भ्रान्तं खलु तत् ॥५॥

## एकत्वाभावाद्भक्तिस्तु न विद्यते ॥ ६ ॥

( उप० ) ननु द्रव्येष्वप्ययमेकत्वप्रयोगो भाक्तोऽस्तु प्रत्ययस्तु तत्र भ्रान्तः किमेकत्वेनेत्यत आह—एकत्वाभावादिति । यदि पारमार्थिकमेकत्वं क्वचिन्नाभ्युपगन्तव्यं तदा न प्रयोगो भाक्तः मुख्यपूर्वकत्वाद्भक्तेः, न वा प्रत्ययो भ्रान्तः प्रमापूर्वकत्वाद्भ्रमस्य प्रमितं ह्यारोप्यते नाप्रमितम् असत्ख्यातेर्निरासात्, अन्यथाख्यातेः साधनादिति भावः ॥ ६ ॥

( विवृ० ) नन्वेको घट इत्यादिव्यवहारोऽपि कथं न भाक्त इत्यत आह—एकत्वाभावादिति । एकत्वगुणस्य कुत्राप्यनङ्गीकारे एकत्वाभावान्मुख्यैकत्वप्रयोगाभावाद्भाक्तैकत्वप्रयोगो न संभवति तस्माद्घटादौ प्रत्यक्षसिद्धमेकत्वं गुणमादाय व्यवहारो मुख्यः एकादिशब्दानामेकत्वत्वादिविशिष्टावच्छिन्नवाचकत्वात् । एकं रूपमित्यादौ तु उभयावृत्तिधर्मविशिष्टे एकपदस्य लक्षणैवेति तादृशप्रयोग एव भाक्त इति भावः ॥ ६ ॥

( भाष्यम् ) यस्मात्—*एकत्वाभावाद्भक्तिस्तु न विद्यते । भक्तिर्निष्पत्तिस्तु भावानामेवं सति न भवति । अनेकलक्षणैः खल्वेकस्य भावस्य निष्पत्तिर्भवति । एकत्वस्य त्वभावे नैतदेवं भवितुमर्हति । यदि नामानेकलक्षणैरेकभावनिष्पत्तिः, अस्ति तर्ह्येको भाव इति सर्वत्र नैकत्वमित्येतन्नोपपद्यते । अथ नास्त्येको भावस्तत एकस्याभावादनेकोऽपि नास्तीत्यनेकलक्षणैरेकभावनिष्पत्तिरिति नोपपद्यते इति । तच्चैतत्तन्त्रातरसमाचारात्प्रतिपत्तव्यम् । तन्त्रान्तरे चैतदित्थंभूतमुक्तम् । सर्वं पृथग्भावलक्षणपृथक्त्वात्, नानेकलक्षणैरेकभावनिष्पत्तेः, लक्षणव्यवस्थानादेवाप्रतिषेध इति। संख्यैकान्तवादाश्च तन्त्रान्तरोक्ता द्रष्टव्या ॥ ॥ अथापि खलु कर्मणां

गुणानां च निःसंख्यत्वात्सर्वत्रैकत्वं नास्ति द्रव्ये त्वस्त्येकत्वमिति प्रत्यवस्थानम्। भ्रान्तं तदिति प्रतिषेधः। यदि गुणकर्मणोर्नैकत्वं, तदा एकं रूपं एको रस एकमुत्क्षेपणमित्येवं भक्तिर्विभागस्तु न भवितुमर्हति। भवति त्वयं विभागः। तस्मादस्ति तत्रैकत्वमिति स्थापनाहेतुरिति। द्रव्यगुणाद्योस्तत्त्वातत्त्वविभागश्चोपलब्ध्यविशेषादनुपपन्नः। यच्च मन्यते द्रव्येष्वेकत्वबुद्धिस्तत्त्वरूपा विद्या, गुणादौ त्वतत्त्वरूपाऽविद्येति सोऽयं विभागो नोपपद्यते। कस्मात्? उपलब्ध्यविशेषात्, द्रव्येऽप्येकत्वमुपलभ्यते गुणादौ चेति तयोरेका उपलब्धिर्विद्या परा त्वविद्येति विशेषहेत्वभावान्नोपपद्यते इति ॥ ६ ॥

**कार्यकारणयोरेकत्वैकपृथक्त्वाभावादेकत्वैकपृथक्त्वं न विद्यते ॥७॥**

( उप० ) कार्यकारणयोस्तन्तुपटयोरेकत्वमेकपृथक्त्वं च, यत एवैकत्वमत एवैकपृथक्त्वमपि, नहि स्वस्मादेव स्वं पृथगिति संभवति नहि पटे पाट्यमाने प्रत्येकं तन्तूनामाकर्षे तद्भिन्नः पट उपलभ्यते। यदि तन्तुभिन्नः पटः स्यात्तदा तद्भिन्नतयोपलभ्येत घटवत्, एवं घटेऽपि भग्ने कपालद्वयातिरिक्तस्यानुपलम्भाद्घटोऽपि कपालद्वयात्मक एव तदुक्तं 'नान्योऽवयव्यवयवेभ्यः' इति। तदिदं सांख्यीयं मतं प्रसङ्गान्निराचिकीर्षुराह—कार्यकारणयोरिति। कार्यं कारणं च द्वयमेकं न भवति, कुत एतदित्याह एकत्वाभावादभेदाभावात्। तर्हि यदेव कार्यं तदेव कारणं तन्तवः पट इति बहुत्वैकत्वयोः सामानाधिकरण्यानुपपत्तेः। भवत्येव सामानाधिकरण्यमेकस्यामपि पाथःकणिकायामाप इति प्रयोगात्, एकस्यामपि योषिति दारा इति प्रयोगादिति चेन्न तत्रावयवबहुत्वमादायोपपत्तेः। पाथःपरमाणौ तु प्रकृतिगतं रूपादिबहुत्वमादायेत्येके, शब्दस्वाभाव्यमिदमपर्यनुयोज्यमित्यपरं। न च रण्डाकरण्डावस्थितास्तन्तवः पटव्यपदेशं लभन्ते, न वा धारणाकर्षणे तन्तवः प्रत्येकं कर्तुमीशते, न वा कार्यं कारणं च द्वयमप्येकपृथक्त्वाश्रयः परस्परावधिकत्वप्रतीतेः। कुत इत्यत आह एकपृथक्त्वाभावात, एकपृथक्त्वमवैधर्म्यं तदभावात्कार्यकारणयोरन्योन्यं वैधर्म्यानुभवात्तन्तुत्वपटत्वयोः घटत्वकपालत्वयोश्च भिन्नबुद्धिव्यपदेशयोः सार्वलौकिकत्वात्। कथं तर्हि रूपरसगन्धस्पर्शानां न भेदेनोपलम्भः, अत्यन्तसारूप्यात्क्वाचिच्चित्रपटादौ भेदोपलम्भोऽपि संख्यापरिमाणादिभेदस्य चातिस्फुटत्वात् ॥ ७ ॥

( विवृ० ) अवयवावयविनोरेकत्वमेकपृथक्त्वं च ननु तयोर्भेद इति

सांख्यमतं प्रसङ्गान्निराकर्तुमाह—कार्येति । कार्यकारणयोर्नैकत्वं नवैक-पृथक्त्वं किमप्येकत्वमेकपृथक्त्वं वा कार्यकारणोभयनिष्ठं न भवतीत्यर्थः । अत्र हेतुमाह कार्यकारणयोरेकत्वैकपृथक्त्वाभावादेकत्वमभेदः एकपृथ-क्त्वमवैधर्म्यं तयोरभावात् । तन्तुः पटभिन्नः पटविधर्मेत्यादिप्रतीतेः सर्व-सिद्धत्वादिति भावः ॥ ७ ॥

( भाष्यम् ) सर्वत्र चेदेकत्वं, कार्यं कारणं चैकं स्यात् । कार्यकारण-भावस्तथा सति न स्यात् यदि नास्ति तयोरेकत्वं, सर्वत्रैकत्वमिति नोपपद्यते इत्यत आह—*कार्यकारणयोरेकत्वैकपृथक्त्वाभावादेकत्वैकपृथक्त्वं न वि-द्यते । कार्यं कारणं चैकं न भवति । द्वयोरेकत्वाभावात् । अस्ति एकत्वं कार्ये अस्ति चैकत्वं कारणे, द्वयोस्त्वेकत्वं नास्तीति । अथापि कार्यं कारणं च नात्यन्तं भिद्यते, क्षीरं खल्वेतद्दधिभावेन विपरिणमते, न पय इति । तदेवं कार्यात्मना भेदेऽपि कारणात्मना नास्ति भेद इति । यद्वै खलु नित्यं कारणं तदेकं कार्यजातस्यापि तस्मादव्यतिरेकादस्त्येकत्वं कार्यकारणयोरि-ति । सत्यमेतत् ॥ ७ ॥

## एतदनित्ययोर्व्याख्यातम् ॥ ८ ॥

( उप० ) अनित्ययोरेकत्वैकपृथक्त्वयोः कारणगुणपूर्वकत्वमाह—एत-दिति । अनित्ययोः संख्यापृथक्त्वयोः कारणगुणपूर्वकत्वं यद्व्याख्यातं तद-नित्ययोरेकत्वैकपृथक्त्वयोरेव बोद्धव्यम्, अन्येषां संख्यापृथक्त्वानाम-पेक्षाबुद्धिजन्यत्वात्, यथाऽनित्ययोस्तेजोरूपस्पर्शयोः कारणगुणपूर्वकत्वं तथैकत्वैकपृथक्त्वयोरप्यनित्ययोरिति भावः । अर्थात् 'अनेकद्रव्या द्वित्वा-दिका परार्द्धान्ता' इत्युपसंख्यानम्, उपसंख्यानान्तरं च 'तत्समानाधिकरणं च द्विपृथक्त्वादि परार्द्धपृथक्त्वपर्यन्तम्' । तदयं द्वित्वाद्युत्पादविनाशक्रमः । समानजातीययोरसमानजातीययोर्द्रव्ययोश्चक्षुःसन्निकर्षे सति तन्निष्ठैकत्व-संख्ययोर्यत्सामान्यमेकत्वत्वं तयोर्निर्विकल्पकानन्तरं तद्विशिष्टैकत्वगुणबु-द्धिरुत्पद्यते सैव चापेक्षाबुद्धिस्तया तयोर्द्रव्ययोर्द्वित्वमुत्पद्यते, उत्पन्नस्य च द्वित्वस्य यत्सामान्यं द्वित्वत्वं तदालोचनं तेनालोचनेनापेक्षाबुद्धेर्नाशो द्वित्वत्वविशिष्टद्वित्वगुणविषया विशिष्टबुद्धिश्चैकदा भवति, तदग्रिमक्षणे च द्वित्वगुणस्यापेक्षाबुद्धिविनाशाद्विनाशः द्वे द्रव्ये इति द्वित्वविशिष्टद्रव्य-ज्ञानं च युगपदुत्पद्यते, ततस्तस्माद्द्वित्वविशिष्टद्रव्यज्ञानात्संस्कारः । तदयं

१ युगपद्भवत. इति पाठ।

संक्षेपः उत्पत्स्यमानद्वित्वाधारेणेन्द्रियसन्निकर्षस्तत एकत्वगुणगतसामान्यस्य ज्ञानं तत एकत्वत्वसामान्यविशिष्टैकत्वगुणसमूहालम्बनरूपाऽपेक्षाबुद्धिस्ततो द्वित्वगुणोत्पत्तिस्तद्गतसामान्यस्य ज्ञानं ततस्तत्सामान्यविशिष्टद्वित्वगुणज्ञानं ततो द्वित्वगुणविशिष्टद्रव्यज्ञानं ततः संस्कार इतीन्द्रियसन्निकर्षमारभ्य संस्कारपर्यन्तमष्टौ क्षणाः। विनाशक्रमस्तु एकत्वत्वसामान्यज्ञानस्यापेक्षाबुद्धितो विनाशः द्वित्वत्वसामान्यज्ञानादपेक्षाबुद्धेर्विनाशः द्वित्वत्वसामान्यज्ञानस्य च द्वित्वगुणबुद्धितो विनाशः द्वित्वगुणबुद्धेश्च द्वित्वविशिष्टद्रव्यज्ञानात्तस्य च संस्काराद्विषयान्तरज्ञानाद्वेति। नन्वेकत्वज्ञानात्तद्विशिष्टद्रव्यज्ञानमेव कथं नोत्पद्यते तत्सामग्रीसत्त्वात्। नहि गुणज्ञाने सति द्रव्यज्ञाने विलम्बोऽस्ति, तथाच तत एवापेक्षाबुद्धेर्विनाशे तन्नाशाच्च तदग्रिमक्षण एव द्वित्वनाश इति द्वे द्रव्ये इति विशिष्टज्ञानपूर्वक्षण एव द्वित्वविनाशापत्त्या द्वित्वविशिष्टद्रव्यज्ञानस्यानुत्पत्तिरेवेति चेन्न। द्वित्वाद्युत्पत्तिसामग्र्यनभिभूताया एवापेक्षाबुद्धेर्द्रव्यविशिष्टज्ञानजनकत्वनियमात् फलबलेन तथाकल्पनात्। ननु तथापि स्वजनितसंस्कारेणैवापेक्षाबुद्धिविनाशे पुनः स दोषस्तदवस्थ एव, द्वित्वविशिष्टज्ञानपूर्वक्षण एव द्वित्वनाशस्य संभवादिति चेन्न। केवलगुणज्ञानस्य संस्काराजनकत्वात्, नहि केवलो गुणः क्वापि स्मर्यते, सर्वत्र द्रव्योपरागेणैव गुणस्मरणात्, ननु भवत्वेवं तथापि विशिष्टबुद्धिकालेऽपि द्वित्वनाशे विशिष्टप्रतीत्यनुदयस्तदवस्थ एव। नहि वर्तमानावभासिनी विशिष्टप्रतीतिर्विशेषणनाशकाले संभवति तथाऽदर्शनादिति चेन्न विशेषणज्ञानविशेष्येन्द्रियसन्निकर्षतदुभयासंसर्गाग्रहस्य विशिष्टज्ञानसामग्र्याः प्रकृतेऽपि संभवात्। यदि तु विशेषणेन्द्रियसन्निकर्षोऽपि मृग्यते तदा पूर्वक्षणे तस्यापि सत्त्वात् पूर्वक्षणवर्त्तिन एव सन्निकर्षस्य कारणत्वेनाभ्युपगमात्, विशेषणं विशिष्टज्ञानागोचरोऽपि संभवति विशिष्टज्ञानजनकज्ञानविषयत्वमात्रमेव हि विशेषणत्वे तन्त्रं, न तु विशिष्टज्ञानविषयत्वमपि। उपलक्षणस्याप्येवं विशेषणत्वापत्तिरिति चेन्न प्रत्याय्यव्यावृत्तिसामानाधिकरण्यस्य विशेषणत्वे तन्त्रत्वात्। उपलक्षणं तु तद्व्यधिकरणम्। एवं यदा देवदत्तगृहे काकवत्ता तदा काको विशेषणं, यदा तु उपरिभ्रमन् असन् तदोपलक्षणम्। एवं सति रूपवति रस इत्यादौ रूपादेरपि विशेषणत्वापत्तिरिति चेन्न इष्टत्वात्, तर्हि तत्रापि रसो वर्तेतेति चेन्न विशिष्टवृत्तेर्विशेषणवृत्तित्वानावश्यकत्वात्, नहि विशेषणं विशिष्टमित्येकं तत्त्वम्। द्वित्वनाशकाले

विशेषणसंबन्धो नास्ति कुतो विशिष्टप्रत्यय इति चेन्न अतद्व्यावृत्तेरेव वैशिष्ट्यपदार्थत्वात्, तद्भानं तु तत्रापीति न किंचिदनुपपन्नमित्याचार्याः। एवं द्वित्वोत्पत्तिविनाशवत्रित्वोत्पत्तिविनाशावप्यूहनीयौ। द्वित्वमपेक्षाबुद्धिनाशनाश्यम्, आश्रयनाश–विरोधिगुणान्तराभावे गुणस्य सतोऽविनाशित्वाच्चरमज्ञानवत्, चरमज्ञानस्यादृष्टनाशनाश्यत्वात्। क्वचिदाश्रयनाशादपि नश्यति यत्र द्वित्वाधारावयवकर्मसमकालमेकत्वसामान्यज्ञानम्, तद्यथा अवयवकर्मसामान्यज्ञाने विभागापेक्षाबुद्धी संयोगनाशगुणोत्पत्ती द्रव्यनाशद्वित्वसामान्यज्ञाने तत्र द्रव्यनाशाद्वित्वनाशः सामान्यज्ञानादपेक्षाबुद्धिनाशः, अपेक्षाबुद्धिनाशस्य द्वित्वनाशसमानकालत्वात्कार्यकारणभावाभावात्। यदा तु द्वित्वाधारावयवकर्मापेक्षाबुद्ध्योर्यौगपद्यं तदा द्वाभ्यामाश्रयनाशापेक्षाबुद्धिनाशाभ्यां द्वित्वनाशः। तद्यथा अवयवकर्मापेक्षाबुद्धी विभागोत्पत्तिद्वित्वोत्पत्ती संयोगनाशद्वित्वसामान्यज्ञाने द्रव्यनाशापेक्षाबुद्धिनाशौ ताभ्यां द्वित्वनाशः प्रत्येकं सामर्थ्यग्रहात्, इयं च प्रक्रिया ज्ञानयोर्वध्यघातकपक्षे परमुपपद्यते स एव च पक्षः प्रामाणिकः। ननु द्वित्वत्रित्वादीनां सामग्रीसाम्ये कथं कार्यवैलक्षण्यं, द्वाभ्यामेकत्वाभ्यां द्वित्वं त्रिभिरेकत्वैस्त्रित्वमिति चेन्न एकत्वे द्वित्वाद्यभावात्, समवायिकारणगतमेव द्वित्वत्रित्वादिकं तन्त्रमिति चेन्न द्वित्वाद्युत्पत्तेः पूर्वं तत्र द्वित्वाद्यभावात्, तत्रापि कारणचिन्ताया अनिवारणात्, अपेक्षाबुद्धावेकत्वेषु च तादृशविशेषस्यानुपलम्भबाधितत्वात् फलबलेन तत्कल्पने वा द्वित्वादिव्यवहारोऽपि तत एवास्तु किं द्वित्वादिना, अदृष्टविशेषाद्विशेष इति चेदेवं सति द्वित्वारम्भिकयाऽपि सामग्र्या कदाचित्रित्वं चतुष्ट्वं चोत्पद्येतेत्यनियमप्रसङ्गः। अत्रोच्यते प्रागभावविशेषाद्विशेषोपपत्तेः यथा तुल्यया सामग्र्या पाकजानां रूपरसगन्धस्पर्शानां, प्रागभावोऽपि साधारण एवेति चेन्न। स्वस्वप्रागभावस्यैव कार्यं प्रति कारणत्वावधारणात्। यद्वा शुद्धयाऽपेक्षाबुद्ध्या द्वित्वं द्वित्वसहितया त्रित्वमिति नेयम्। शतं पिपीलिकानां मया हतमित्यादौ समवायिकारणाभावे द्वित्वं तावन्नोत्पद्यते। तथाच गौणस्तत्र संख्याव्यवहारो द्रष्टव्यः। सेनावनादौ नियतापेक्षाबुद्ध्यभावाद्बहुत्वमात्रमुत्पद्यते न तु शतसहस्रादिसंख्येति श्रीधराचार्याः। एवं सति शतसहस्रादिकोटिकस्तत्र संशयो न स्यात्, न स्याच्च महती महत्तरा सेनेति नैवमित्युदयनाचार्याः। अत्रैवमालोचनीयं—त्रित्वादिपरार्द्धपर्यन्ता संख्यैव बहुत्वम्, तद्भिन्नं वा संख्या-

न्तरम्, नाद्यः सेनावनादावपि शतसहस्रादिसंख्योत्पत्तिनियमात्, न द्वितीयः त्रित्वादिविलक्षणस्य बहुत्वस्याननुभवात् । तथाच प्रतिनियतैकत्वानालम्बनापेक्षाबुद्धिजनितशतादिसंख्यैव बहुत्वं शताद्यभिव्यक्तिस्तु तत्र न भवति तादृशव्यञ्जकाभावात् । वयं तु ब्रूमः—त्रित्वादिसमानाधिकरणं संख्यान्तरमेव बहुत्वं त्रित्वादिजनकापेक्षाबुद्धिजन्यं प्रागभावभेदाद्वै भेदः । कथमन्यथा बहवस्तावत्सन्ति शतं वा सहस्रं वेति विशिष्य न जानीम इति, यथैकत्र द्रव्ये महत्त्वं दीर्घत्वं च तथैकत्रैवाधिकरणे त्रित्वादिकं बहुत्वं च । भवति हि शतं वा सहस्रं वा चूतफलान्यानयामीति प्रश्ने बहवस्तावदानीयन्तां किं विशेषजिज्ञासयेति । एवं च द्वित्वसहितापेक्षाबुद्धया त्रित्वं त्रित्वसहितापेक्षाबुद्धया चतुष्ट्वमेवमुत्तरोत्तरम्, बहुत्वोत्पत्तौ तु नापेक्षाबुद्धौ पूर्वपूर्वसंख्याविशिष्टत्वनियमः । अत एव सेनावनादिषु बहुत्वमात्रमुत्पद्यते न तु संख्यान्तरं संशयस्त्वसत्कोटिकोऽपि भवत्येवेति । तत्समानाधिकरणं च पृथक्त्वमिति यथा द्वित्वं तथा द्विपृथक्त्वमित्यादि । ननु द्वित्वत्रित्वादिसमानाधिकरणैरेकपृथक्त्वैरेव तद्व्यवहारोपपत्तौ किं द्विपृथक्त्वादिनेति चेन्न । घटात् पटलोष्टौ पृथगिति द्विपृथक्त्वस्यान्योन्यावधिकत्वाप्रतीतेः प्रत्येकपृथक्त्वे च तत्प्रतीतेरिति वैषम्यात् । न चैवं द्विपरत्वापत्तिः द्वित्वसमानाधिकरणाभ्यां परत्वाभ्यामेव तदुपपत्तेः । यथा पृथक्त्वे परस्परावधिकत्वविरोधस्तथा न परत्वे, द्वाविमौ पराविति द्वाविमौ नीलावितिवदुपपत्तेः समानदेशस्थयोः संयुक्तसंयोगभूयस्त्वसाम्येऽपि दिक्पिण्डसंयोगस्यासमवायिकारणस्य भेदेन भिन्नकार्योत्पत्तिसंभवात् । मिलितयोरेकत्वयोर्द्वित्वं प्रति यथाऽसमवायिकारणत्वं तथा मिलितयोरेकपृथक्त्वयोर्द्विपृथक्त्वं प्रत्यसमवायिकारणत्वसंभवात् द्रव्यातिरिक्तमेकं कार्यं प्रत्यनेकेषां संयोगानां कार्यैकार्थसमवायप्रत्यासत्त्या संभूयारम्भकत्वादर्शनात् । कारणैकार्थप्रत्यासत्त्या तु बहवस्तन्तुतुरीसंयोगा एकं पटतुरीसंयोगमारभन्त एवेति दिक् । द्वित्वादिविनाशवद्द्विपृथक्त्वादिविनाशोऽप्यूहनीयः ॥ ८ ॥

( विवृ० ) ननु तन्तुः पटभिन्नः पटविधर्मावेत्यादिप्रतीतिर्भ्रान्तिरेव परस्परसंयुक्तानां तन्तूनामेव पटभावात्पटस्य तन्तुभिन्नत्वे प्रमाणाभावाच्च । नच तन्तुवैधर्म्येण पटे तन्तुभेदः साधनीय इति वाच्यं वैधर्म्यस्यैवासिद्ध-

१ एवभाव- इति पाठः ।

त्वात् । नहि पटत्वं तन्तुवैधर्म्यं, पटाभिव्यक्तिदशायां तन्तुष्वेव पटत्वस्वीकारात् । तदुक्तमीश्वरकृष्णाचार्यै. 'असदकरणादुपादानग्रहणात्सर्वसंभवाभावात् । शक्तस्य शक्यकारणात्कारणभावाच्च सत्कार्यम्' इति । एवं च कार्यकारणयोरभेदावैधर्म्याभावः स्वयमसिद्धः कथमेकत्वैकपृथक्त्वाभावं साधयिष्यतीत्यत आह—एतदिति । एतदभेदावैधर्म्याभाववत्त्वेनेकत्वैकपृथक्त्वाभाववत्त्वम्, अनित्ययोः कार्यकारणयोः कथितमित्यर्थः । तथाच तन्तुपटयोरभेदाङ्गीकारे तन्तूपाददशायां पट उत्पद्यते पटोत्पत्तिदशायां तन्तुरुत्पद्यते तन्तुनाशदशायां पटो नश्यति पटनाशदशायां तन्तुर्नश्यतीत्यादिप्रत्ययप्रयोगयोः प्रसङ्गः । नचोत्पत्तिविनाशावेवाप्रामाणिकौ आविर्भावतिरोभावाभ्यामेव तत्प्रतीत्युपपत्तेरिति वाच्यमाविर्भावाङ्गीकारेऽनवस्थाप्रसङ्गात्, तदुत्पत्तिस्वीकारे तु किमपराद्धं पटाद्युत्पत्तिभिः, आविर्भावे आविर्भावस्योत्पादस्य चानङ्गीकारे आविर्भावस्य सार्वदिकत्वप्रसङ्गः नह्याविर्भावस्य सार्वदिकत्वं सांख्यैरपि स्वीक्रियते । वस्तुतः पट उत्पद्यते पटो विनश्यतीत्यादिकः सार्वलौकिकोऽनुभव एवोत्पादविनाशसाधकः एक विषयकानुभवस्य विषयान्तरविषयकत्वस्वीकारे घटपटादेरप्यपलापापत्तेरित्यलमसदावेशेन ॥ ८ ॥

( भाष्यम् ) कार्यकारणयोरेकत्वं न विद्यते इति यत्—*एतदनित्ययोर्व्याख्यातम् । अनित्ययोः कार्यकारणयोरेतद्व्याख्यातं न नित्ये । यत्खलु कार्यं कारणं चेति द्वयमनित्यं, न तयोरेकत्वमस्ति । क्षीरस्य दध्नश्चैकत्वाभावात् प्रागुत्पत्तेरव्यक्ततया क्षीरे सदपि दधि न परतोऽप्यात्मप्रहाणात्क्षीरभावमापद्यते इत्यनित्ययोः कार्यकारणयोरेकत्वं न विद्यते इत्युक्तम् । शरावोदञ्चनादिव्यतिरेकेणापि मृदोऽवस्थानाच्चैतदेवं प्रतिपत्तव्यम् । यच्च नित्यं कारणं, तेन त्वेकत्वं भवति कार्याणां परमार्थभूमौ । सर्वं खलु कार्यजातं परतोऽप्यात्मप्रहाणात्तस्मिन्नेकीभवति । अर्णवतरङ्गवत् । तरङ्गाः खलु वै परस्परं भिद्यन्ते समुद्रश्चैक इति कार्यकारणोरेकत्वं न विद्यते । तथापि त्वेषामात्मप्रहाणात्परतः प्राक् चोत्पत्तेरर्णवात्मना भवत्यवस्थानमित्येकत्वमुच्यते अर्णवे हि सर्वे तरङ्गा एकीभवन्तीति । सर्वं चैतत्कार्यजातं कारणस्य विपरिणामः,स त्वनेकविध इति कार्यं कारणं च नैकम् । नित्यं तु कारणमेकमेवेत्येतदनित्ययोर्व्याख्यातमिति । अथापि खलु यदेत्कार्यं कारणं चेति मन्यते, नैतन्नाना । एकमेव तु वस्तु तेन तेन कार्यात्मना कारणात्मना चोपलभ्यते इति कार्यं कारणं चैकमन्यस्याभावादित्यस्य प्रतिषेधोऽयं,

कार्यं कारणं चैकं न भवतीति। नानैव तु कार्याणि नानैव च कारणानी-ति । तच्चैतदनित्ययोर्व्याख्यातम् । यच्च नित्यं कारणं, तत्खल्वेकमेवेति॥८॥

**अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः ॥ ९ ॥**

( उप० ) प्रकरणान्तरमारभते—अन्यतरकर्मज इति । संयोगे संयु-क्तप्रतीतिरबाधिता प्रमाणं, कार्याणि च । अवयवसंयोगेषु द्रव्यमग्निसं-योगे पाकजा रूपादयः प्रचये परिमाणविशेषः भेर्याकाशसंयोगे शब्द इत्या-द्यूह्यम् । न चाविरलोत्पत्तिरेव संयोगः, क्षणभङ्गपरिणामयोर्निरासात् । अप्राप्तिपूर्विका प्राप्तिः संयोगः, स चान्यतरकर्मजः । क्रियावता श्येनेन निष्क्रियस्य स्थाणोस्तदभिमुखक्रियारहितस्य सक्रियस्यापि धावतः यथा धावता पुरुषान्तरेण पृष्ठदेशसंयोगः, उभयकर्मजः मेषयोर्मल्लयोर्वा प्रत्येकं गृहीतसामर्थ्याभ्यामुभाभ्यामेव तज्जननात्, तृतीयस्त्वङ्गुलितरुसंयोगा-द्धस्ततरुसंयोगः, स चैकस्मादपि भवति यथा तन्तुवीरणसंयोगात् पटवीर-णसंयोगः, क्वचिद्द्वाभ्यां संयोगाभ्यामेकः संयोगः यथा द्वाभ्यां तन्तु-भ्यामाकाशस्य द्वौ संयोगौ ताभ्यामेक एव द्वितन्तुकपटस्याकाशेन सं-योगः, क्वचिच्च बहुभिरपि संयोगैरेकः संयोग आरभ्यते यथा दश-भिस्तन्तुभिराकाशस्य दश संयोगा एकमेव दशतन्तुकपटाकाशसंयोग-मारभन्ते । क्वचित् पुनरेकस्मादपि संयोगादसमवायिकारणात्संयोगद्वय-मुत्पद्यते यथा पार्थिवाप्ययोः परमाण्वोः प्रथममनारम्भके संयोगे जाते पार्थिवे परमाणौ पार्थिवपरमाण्वन्तरेण, आप्ये च परमाणावाप्यपरमाण्व-न्तरेण, द्व्यणुकद्वयारम्भकं संयोगद्वयमुत्पद्यते ताभ्यां संयोगाभ्यां स-जातीयनिष्ठाभ्यां द्व्यणुकद्वयं युगपदारभ्यते तत्र यः पार्थिवाप्यपरमाण्वो-रनारम्भकः संयोग उत्पन्नस्तेनैकेनैव पार्थिवपरमाणुनाप्यद्व्यणुकेनैकः सं-योगः आप्यपरमाणुना पार्थिवद्व्यणुकेनापरः संयोगो द्व्यणुकयोरूपाद्युत्प-त्तिसमकालमेव जायते, कारणाकारणसंयोगेन कार्याकार्यसंयोगयोरवश्यं जननात्, मूर्तैर्विभूनामन्यतरकर्मज एव, विभुनोस्तु न संयोगः कार-णाभावात्कर्म तावत्तत्र नास्ति न च कारणं तेन कारणाकारणसंयोगा-त्कार्याकार्यसंयोगोऽपि नास्ति नित्यस्तु संयोगो न संभवति अप्राप्तिपूर्वि-कायाः प्राप्तेः संयोगत्वान्नित्यत्वे तद्विधानात् एवं च सति विभागोप्य-जस्तत्र स्यात् । न चेष्टापत्तिः, संयोगविभागयोर्विरोधिनोरविनश्यदव-

१ विरोधात् इति पाठः ।

स्थयोरेकत्रानुपपत्तेः । किंच संयोगं प्रति प्रयोजिका युतसिद्धिः । न च विभुनोस्तत्संभवः, सा हि द्वयोरन्यतरस्य वा पृथग्गतिमात्रं युताश्रयाश्रयित्वं वा, विनाशस्तु संयोगस्य समानाधिकरणाद्विभागादाश्रयनाशादपि क्वचित्, यथा तन्तुद्वयसंयोगानन्तरमेकस्य तन्तोरवयवेऽशौ कर्म जायते तेनांश्वन्तरादिविभागः क्रियते विभागादारम्भकसंयोगनाशस्ततस्तन्तुविनाशस्तन्तुविनाशात्संयोगनाशो यत्र तन्तुद्वयं चिरं संयुक्तं सदनुत्पन्नक्रियं भवति। केचित्तु तन्त्ववयवकर्मणा यदा तन्त्वारम्भकसंयोगनाशः क्रियते तदा तन्त्वन्तरे कर्मचिन्तनात् आश्रयनाशविभागाभ्यां युगपदुत्पन्नाभ्यां संयोगो नश्यतीत्याहुः । तच्चानुपपन्नं समवायिकारणनाशक्षणे विभागानुत्पत्तेः समवायिकारणस्य कार्यसमकालस्थायित्वनियमात् । स चायं संयोगो द्रव्यारम्भे निरपेक्षो गुणकर्मारम्भे सापेक्षः स्वसमानाधिकरणात्यन्ताभावप्रतियोगी तथैवानुभवात् शाखामात्रावच्छेदेनापि महति न्यग्रोधतरौ वर्तमान कपिसंयोग., न्यग्रोधतरौ कपिसंयोग इत्यनुभवात् । अवच्छेदमात्रेणान्यथासिद्धौ परमाणुमात्रवृत्तिरापद्येत,तथाच नोपलभ्येत। विभूनामप्युपाधिभेद एव प्रदेशस्तदवच्छेदेन वर्तमानस्य संयोगस्याव्याप्यवृत्तित्वं, परमाणुनिष्ठस्यापि संयोगस्य दिगादयोऽवच्छेदकाश्चिन्तनीयाः ॥ ९ ॥

( विवृ० ) संयोगपरीक्षामारभते—अन्यतरेति । अन्यतरकर्मजः श्येनशैलादिसंयोगः, उभयकर्मजो मेषद्वयादिसंयोगः संयोगजः कपालतरुसंयोगजन्यस्तरुकुम्भयोः संयोगः इति त्रिविध. संयोगः । प्रकारान्तरेणाप्ययं द्विविधः अभिघातो नोदनं चेति तत्राद्यः शब्दहेतुः, द्वितीयः शब्दाहेतुरित्यादिकमूह्यम् ॥ ९ ॥

( भाष्यम् ) स्थानवतां परीक्षेति संयोगः परीक्ष्यते—*अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः । पतत्रिणा महीधरस्य यः, संयोगः स खल्वन्यतरस्य पतत्रिणः कर्मणा जन्यते । यस्त्वभिमुखं प्रसर्पतोर्मेषयोर्मल्लयोश्च संयोग., सोऽयमुभयकर्मजन्यः । यश्चाङ्गुलीतरुसंयोगात्परतः तरुशरीरसंयोगः, सोऽयमङ्गुलीतरुसंयोगाज्जायते । यश्च हस्तस्थितेन दण्डेनामेध्यस्य संयोगात् शरीरामेध्यसंयोगोऽशुद्धिहेतुः, सोप्ययमिति । अविरलोत्पत्तिरिति चेन्न स्थिरासद्धे स्थूलसिद्धेश्च । यच्च मन्यते, भावयोरविरलोत्पत्त्या संयोगाभिमानो न संयोगो नामार्थोऽस्तीति तच्च नैवं मन्तव्यम् । कस्मात् ? स्थिरसिद्धेः । यमहमस्प्राक्षं भावं तमेवैतर्हि

पश्यामीति पूर्वापरकालवर्तिनमेकं भावं स्थिरं प्रत्यभिजानाति । तस्मात्स्थिरो भावः सिध्यति । स्थूलः खल्वपि भावः प्रत्यक्षेण सिध्यति । ततो नास्ति क्षणभङ्गो भावानां कुतस्त्वविरलोत्पत्तिरिति । अथापि खल्वेतदस्ति नास्तीति कुत एतत्प्रतिपत्तव्यम्? प्रमाणत उपलब्ध्यनुपलब्धिभ्याम् । नास्ति तर्हि क्षणभङ्गः । प्रमाणतोऽनुपलब्धेः । सहकारिमध्यमध्यासीनः खल्वयं भावोऽर्थक्रियामभिनिर्वर्तयति । यावच्चासौ न सहकारिमध्यमध्यास्ते, न तावदभिनिर्वर्तयतीति । कुर्वद्रूपत्वे च प्रमाणतोऽनुपलब्धिस्तुल्या । अनुमानं चैवं सति न स्यात्, व्यभिचारशङ्काया निराकरणासंभवात् । स्थानवानेव तर्हि विभागः परीक्षितव्यः ॥ ९ ॥

**एतेन विभागो व्याख्यातः ॥ १० ॥**

( उप० ) विभागे संयोगोत्पत्तिप्रकारमतिदिशन्नाह–एतेनेति । संयोगवद्विभागोऽप्यन्यतरकर्मज उभयकर्मजो विभागजश्च । श्येनकर्मणा स्थाणुश्येनविभागः, संयुक्तयोर्मल्लयोर्मेषयोर्वा कर्मभ्यां तदुभयविभागः । स चायं कर्मोत्पत्त्यव्यवहितक्षणोत्पत्तिकः अपेक्षणीयान्तराभावात् । तदुक्तम् ‘ संयोगविभागयोरनपेक्षकारणं कर्म ’ इति । विभागे जननीये आश्रयः, संयोगे च जननीये पूर्वसंयोगनाशश्चापेक्षणीय इति चेन्न, स्वोत्पत्त्यनन्तरोत्पत्तिकभावभूतानपेक्षत्वस्य कर्मणो निरपेक्षत्वात् । विभागजस्तु विभागो द्विविधः कारणमात्रविभागजकारणाकारणविभागभेदात्कारणाकारणविभागजकार्याकार्यविभागभेदाच्च । तत्र कारणमात्रविभागात्कारणाकारणविभागो यथा कपालद्वयविभागात्कपालाकाशविभागः, कारणाकारणविभागाच्च कार्याकार्यविभागो यथाऽङ्गुलीतरुविभागाद्धस्ततरुविभागस्ततः शरीरतरुविभाग इति । ननु विभाग एव न प्रमाणं संयोगाभाव एव विभागव्यवहारादिति चेन्न । संयोगाभावोऽत्यन्ताभावश्चेद्गुणकर्मणोरपि विभागव्यवहारप्रसङ्गात् । द्रव्ययोर्वर्तमानः संयोगात्यन्ताभावो विभक्तप्रत्ययहेतुरिति चेन्न, अवयवावयविनोरपि प्रसङ्गात् । अकार्यकारणभूतयोर्द्रव्ययोरिति चेद्विन्ध्यहिमवतोरपि स्यात्, भवत्येव तत्रेति चेन्न । भ्रान्तस्य गुणकर्मणोरपि भावात् अभ्रान्तमधिकृत्य व्यवहारस्य चिन्त्यमानत्वात् । संयोगविनाशो विभाग इति चेदेकतरसंयोगिनाशेन नष्टे संयोगे तद्व्यवहारप्रसङ्गात्, संयोगिनोर्विद्यमानयोरिति चेदेकसंयोगनाशानन्तरं पुन. संयुक्तयोः कुवलामलकयोः संयोगदशायामपि विभक्तप्रत्ययप्रसङ्गात्, यावत्संयोगनाशस्तथेति चेदेकसंयोगनाशे तदभावप्रसङ्गात्तत्र यावदर्थाभा-

वात्, तस्मादस्ति विभागोऽर्थान्तरम् । स च गुणः विरोधिगुणान्तरनाश्यः, विरोधिनं समानाधिकरणं गुणमन्तरेण सत्याश्रये गुणनाशानुपपत्तेः । कर्मैव संयोगनाशकं स्यादिति चेन्न, विरोधिनो गुणस्यैव गुणनाशकत्वात् । किंच यत्राङ्गुलीहस्तभुजशरीराणां स्वस्वकर्मणा तरुसंयोगस्तत्राङ्गुलीमात्रे समुत्पन्नेन कर्मणाऽङ्गुलीतरुसंयोगनाशसंभवेऽपि हस्ततरुभुजतरुशरीरतरु-संयोगानामनाशप्रसङ्गाद्धस्तादीनामक्रियत्वात् अङ्गुलीकर्मणश्च व्यधि-करणत्वात् व्यधिकरणस्यापि कर्मणः संयोगनाशकत्वे क्वचिदप्युत्पन्नेन कर्मणा युगपदेव सर्वसंयोगनाशापत्तेः । त्वन्मते तत्र का गतिरिति चेदङ्गुलीतरुविभागेन हस्ततरुविभागो जनितो हस्ततरुसंयोगनाशक इत्यभ्युपगमात् । व्यधिकरणेनाङ्गुलीकर्मणैव हस्ततरुसंयोगनाशोऽस्तु न चातिप्रसङ्गः आश्रयाश्रितपरम्परासंयोगस्यैव व्यधिकरणकर्म-नाश्यत्वाभ्युपगमादिति भासर्वज्ञेन यदुक्तं तदपि न युक्तं विरोधिनः समाना-धिकरणस्यैव सर्वत्र नाशकत्वानुभवाद्बाधकमन्तरेण तत्परित्यागानुपपत्तेः । शब्दविभागौ च विभागकार्यौ तत्र विभागस्य शब्दासमवायिकारणत्वं मृष्यामहे नहि वंशे पाट्यमाने दले च चरणयन्त्रणावष्टब्धे दलान्तरे चोप-रि कृष्यमाणे यः शब्दो जायते तत्र दलाकाशविभागादन्यदसमवायिकारणं पश्यामः।न च दवदहनदह्यमानस्फुटद्वेणुचीत्कारे विभागातिरिक्तमसमवायि-कारणं पश्यामः । कारणाकारणविभागाच्च कार्याकार्यविभागमनुमन्यामहे कथमन्यथा स्वस्वकर्मजनिताङ्गुलीतरुसंयोगहस्ततरुसंयोगभुजतरुसंयोगश-रीरतरुसंयोगानामङ्गुलीमात्रोत्पन्नकर्मणाऽङ्गुलीतरुविभागे सति अङ्गुली-तरुसंयोगनाशे सत्यपि हस्ततरुसंयोगादीनां नाशः, तत्र हि विभागज-विभागपरंपरैव तत्तत्संयोगनाशिकेत्युक्तत्वात् । कारणद्वयविभागपूर्वके तु कारणाकारणविभागे न संप्रत्ययः यतो वंशदले यदुत्पन्नं कर्म तेन दला-न्तरविभागवदाकाशादिविभागस्यापि जननसंभवात् यावद्भिः समं तद्दलं संयुक्तमासीत् तावद्भिस्तत्कर्मणा विभागस्य दर्शनात् । न ह्यङ्गुल्यामुत्पन्नेन कर्मणाऽङ्गुल्यन्तरविभागवदाकाशादिदेशेभ्योऽपि विभागा न जन्यन्ते कमलदले चोत्पन्नेन कर्मणा दलान्तरविभागवदाकाशादिदेशेभ्यो वा न विभागा आरभ्यन्ते, द्रव्यारम्भकसंयोगाविरोधिनः शतमपि विभागानेकं कर्मारभतां यत्तु कर्म द्रव्यारम्भकसंयोगविरोधिनं विभागमारभते न तद्द्-व्यारम्भकसंयोगाविरोधिनमपि, यच्च द्रव्यारम्भकसंयोगाविरोधिनं न तद्द्-व्यारम्भकसंयोगविरोधिनमिति ब्रूमः । कुत एतदिति चेत्कार्यवैचित्र्येण

कारणवैचित्र्यस्यावश्यकत्वात्। ननु कर्मणि वैचित्र्यमावश्यकं तथाचैकं कर्म द्रव्यारम्भकसंयोगविरोधिनं विभागं जनयतु यथा विकसत्कमलकुड्मलादावपरं च द्रव्यारम्भकसंयोगविरोधिनमविरोधिनं चोभयमिति। मैवं कार्यविरोधो हि कारणवैचित्र्यकल्पनामूलं स च विरोधः एकस्य द्रव्यारम्भकसंयोगप्रतिद्वन्द्वित्वेन, अपरस्य तु तदप्रतिद्वन्द्वित्वेनेति तथैव वैचित्र्यस्यापि कल्पनौचित्यात्। तच्चेदं वंशदले वर्तमानं कर्म दलद्वयविभागमात्रं जनयति, स च विभागोऽग्रे आकाशादिदेशाद्विभागं द्रव्यारम्भकसंयोगाप्रतिद्वन्द्विनं विभागमारभते, तस्य च निरपेक्षस्य विभागजनने कर्मत्वापत्तिरिति द्रव्यनाशविशिष्टं कालमपेक्षते। ननु तदानीमपि कर्मैव तज्जनयतु, अतीतकालत्वाद्विभागजनने कर्मणः स्वोत्पत्त्यनन्तर एव कालः। नन्वेवं विभागेन जनिते विभागान्तरे कर्म प्रदेशान्तरसंयोगमपि न जनयेत्, न संयोगजननं प्रति कर्मणोऽनतीतकालत्वात्। अन्यथा कर्म न नश्येदेव तस्योत्तरसंयोगमात्रनाश्यत्वात्। सोऽयं विभाग उत्तरसंयोगनाश्यः क्षणत्रयस्थायी, क्वचिदाश्रयनाशनाश्यः तद्यथा तन्तोरवयवेऽशौ कर्म तदनन्तरमंशुद्वयविभागस्तदैव तन्त्वन्तरे कर्म ततोऽशुद्वयविभागेन तन्त्वारम्भकसंयोगनाशस्तन्तुकर्मणा च विभागस्ततो द्रव्यारम्भकसंयोगनाशात्तन्तुनाशस्तन्नाशाच्च तन्त्वन्तरकर्मजन्यविभागनाशः। नन्वेवं तन्त्वन्तरोत्पन्नस्य कर्मणो न नाशः स्याद्विनाशकाभावात् उत्तरसंयोगेन हि तन्नाश्येत, विभागे च नष्टे नोत्तरसंयोग इति चेन्न, तन्तौ यत्कर्मोत्पन्नं तेन यथा विनश्यदवस्थतन्तोर्विभागो जनितस्तथा तदंशोरपि विभागो जननीयः सोऽप्यारम्भकसंयोगविरोध्येव तेनांशुतन्तुविभागेन तन्त्वाकाशविभागस्तेन चोत्तरसंयोगस्तेन तद्गतकर्मनाशः। यद्वा यत्र तन्तौ यदा कर्म तदंशावपि तदैव कर्म तच्च कर्म विनश्यदवस्थतन्तुतदवयवाकाशादिदेशाद्युगपदेव विभागानारभते सर्वेषां विभागानामारम्भकसंयोगाविरोधित्वात्। तथाच कारणमंशुरकारणं चाकाशादि तद्विभागात्कार्यस्य तन्तोरकार्येणाकाशादिना यो विभाग उत्पन्नस्तदनन्तरोत्पत्तिकेन संयोगेन तन्तुसमवेतस्य कर्मणो विनाश इति। क्वचिद्द्वाभ्यां तद्यथा तन्तुवीरणयोः संयोगे सति तन्त्ववयवेऽशौ कर्म वीरणे च कर्मेत्येकः कालः अंशुकर्मणांऽश्वन्तरविभागस्तेन च संयोगस्य तन्त्वारम्भकस्य विनाशः वीरणकर्मणा च तन्तुवीरणविभागस्तन्तुवीरणसंयोगनाशश्च तन्त्वारम्भकसंयोगनाशश्च तन्त्वारम्भकसंयोगनाशानन्तरं

१ 'विभागः। नन्वेवं तन्तावुत्पन्नस्य कर्मणस्तावदवश्य विनाशकाभावात्' इति पाठः। २ ततः इति मु. पु. पाठ.। ३ नाशेनेति पाठः।

तन्तुनाशस्तन्तुवीरणसंयोगनाशानन्तरं वीरणस्य प्रदेशान्तरसंयोगस्ताभ्यामाश्रयनाशसंयोगाभ्यां विभागनाशः ॥ १० ॥

( विवृ० ) विभागे संयोगतुल्यतामाह—एतेनेति । विभागोऽपि त्रिविधः एककर्मजोभयकर्मजविभागजभेदात् । तत्राद्यः श्येनशैलयोः द्वितीयो मेषयोः । तृतीयस्तु द्विविधः कारणमात्रविभागजन्यः कारणाकारणविभागजन्यश्चेति । तत्राद्यो यथा प्रथमं कपाले कर्म ततः कपालद्वयविभागः ततो घटारम्भकसंयोगनाशस्ततो घटनाशस्ततस्तेन कपालद्वयविभागेन कपालस्याकाशादिना विभागो जन्यते ततः कपालाकाशादिसंयोगनाशः तत उत्तरदेशसंयोगस्ततः कर्मनाश इति । नच प्राथमिकेन कपालकर्मणा कथं कपालकाशविभागो न जन्यते इति वाच्यम् एकस्य कर्मण आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकस्यानारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वविरोधात् । अन्यथा विकसत्कमलकुङ्मलादिभङ्गप्रसङ्गात् । तस्मादनारम्भकाकाशकपालसंयोगप्रतिद्वन्द्विविभागं न कपालकर्म जनयेत्तस्य घटारम्भाकसंयोगप्रतिद्वन्द्विविभागजनकत्वात् । नच कपालविभागेनैव घटनाशात्पूर्वं कुतः कपालाकाशविभागो न जन्यते इति वाच्यम् आरम्भकसंयोगप्रतिद्वन्द्विविभागवतोऽवयवस्य सति द्रव्ये देशान्तरविभागासंभवात् । कारणाकारणविभागजन्यविभागो यथा—यत्र हस्तक्रियया हस्ततरुविभागस्तेन शरीरतरुविभागो जायते तत्र च हस्तक्रिया न कारणं व्यधिकरणत्वात्, शरीरे तु तदा क्रिया नास्ति अवयविक्रियाया यावदवयवक्रियानियतत्वादतस्तत्र कारणाकारणविभागेन कार्याकार्यविभागो जन्यते इति । अयमस्माद्विभजते इति प्रत्यक्षसिद्धोऽयं विभागगुणः संयोगनाशेन नान्यथासिद्ध इति संक्षेपः ॥ १० ॥

( भाष्यम् ) स परीक्ष्यते—*एतेन विभागो व्याख्यातः । अन्यतरकर्मज उभयकर्मजो विभागजश्चेति । पूर्ववन्निदर्शनमुत्प्रेक्षितव्यम् । असंयोग इति चेत्तत्प्रसङ्गः संयोगे, प्रत्ययानुवृत्तिप्रसङ्गश्च । यस्तु मन्यते, असंयोगो विभागो नत्वर्थान्तरमिति । तस्य तत्प्रसङ्गः संयोगे, अविभागः संयोगो नत्वर्थान्तरमिति । तत्र यथा प्रमाणाभावादेकः कल्पो न सिध्यति तथा कल्पान्तरमपीति । यश्चायमसंयोगः, सोऽयमुत्तरकालमप्यनुवर्तते इत्युत्तरकालमपि विभजते इति प्रत्ययप्रसङ्गः । तस्मादसंयोगः पृथक्त्वं विभागस्त्वर्थान्तरमिति ॥ १० ॥

**संयोगविभागयोः संयोगविभागाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ ११ ॥**

( उप० ) ननु संयोगेऽपि संयोगोऽस्तु विभागेऽपि विभाग इति प्रसङ्गनिवारणार्थमाह—संयोग इति । यथाऽणुत्वमहत्त्वे नाणुत्वमहत्त्ववती तथा संयोगविभागौ न संयोगविभागवन्तौ ॥ ११ ॥

( विवृ० ) संयोगविभागयोः संयोगविभागशून्यतामाह—संयोगेति । संयोगविभागौ न संयोगविभागवन्तौ यथाऽणुत्वमहत्त्वे नाणुत्वमहत्त्ववती गुणानां निर्गुणत्वादित्यर्थः ॥ ११ ॥

( भाष्यम् )*संयोगविभागयोः संयोगविभागाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ ११ ॥

**कर्मभिः कर्माणि गुणैर्गुणा अणुत्वमहत्त्वाभ्यामिति ॥१२॥**

( उप० ) द्वितीयं च सूत्रं व्याख्यातमेव ॥ १२ ॥

( विवृ० ) कर्मभिरिति सूत्रं स्पष्टार्थं स्मरणार्थं वा पुनरुक्तम्, अस्यार्थः प्रागेवाभिहितः ॥ १२ ॥

( भाष्यम् ) तत्र निदर्शनम्—*कर्मभिः कर्माणि गुणैर्गुणाः। तदेतत्कृतभाष्यं पुरस्तादिति ॥ १२ ॥ तावेतौ संयोगविभागौ—*अणुत्वमहत्त्वाभ्यामिति । व्याख्यातौ इत्थंभावे तृतीया । संयोगविभागौ खल्वप्यणुत्वमहत्त्वाभ्यां विशिष्येते, अणुः संयोगो महान्संयोग इत्युपलब्धेरिति ॥१३॥

**युतसिद्ध्यभावात्कार्यकारणयोः संयोगविभागौ न विद्येते ॥ १३ ॥**

( उप० ) ननु द्रव्ययोरवयवावयविनोः संयोगः कथं नेत्यत आह—युतेति । असंबन्धयोर्विद्यमानत्वं युतसिद्धिः पृथगाश्रयाश्रितत्वं वा तदभावस्त्ववयवावयविनोरित्यर्थः ॥ १३ ॥

( विवृ० ) ननु अवयवावयविनोः कथं न संयोगविभागावित्याशङ्कायामाह—युतसिद्धीति । युतसिद्धिः परस्परसंबन्धशून्ययोरवस्थानं कार्यकारणयोरवयवावयविनोर्न संयोगविभागौ वर्तेते युतसिद्ध्यभावात् । नहि घटाद्यवयवी कपालाद्यवयवासंबन्धः सन् तिष्ठति येन तयोः संयोगविभागौ संभाव्येयातामिति ॥ १३ ॥

( भाष्यम् ) यदेतत्समवायिकारणं यच्च कार्यं, तयोः पृथग्भावेन सिद्धिर्न भवति । तस्मात्कार्यकारणयोः संयोगविभागौ न भवत इति । सोऽयं पदार्थयोरुपश्लेषो युतसिद्धयोः संयोगोऽयुतसिद्धयोः समवायः । स त्ववयवानां परस्परमुपश्लेषनिबन्धनः ॥ १४ ॥

## गुणत्वात् ॥ १४ ॥

( उप० ) इदानीं प्रसङ्गाच्छब्दार्थयोः सांकेतिकं संबन्धं साधयितुं प्रकरणान्तरम्, तत्र पूर्वपक्षमाह—गुणत्वादिति । संयोगस्येति शेषः, तथाच गुणस्य शब्दस्य गुणः संयोगः कथं स्यात् अर्थेन घटादिनेत्यर्थः ॥ १४ ॥

( विवृ० ) ननु शब्दार्थयोः कथं संयोगः संभवति शब्दस्य गुणत्वेन गुणवत्त्वासंभवात् नच नास्त्येव तयोः संयोग इति वाच्यं तथा सत्यसंबद्धत्वाविशेषेण घटादिशब्दात्पटादिशाब्दबोधापत्तेरित्यतः पदपदार्थयोः शक्तिसंबन्धं व्यवस्थापयिष्यन् पूर्वपक्षयति—गुणत्वादिति । प्रतिपादकस्य शब्दस्य गुणत्वात्तत्र प्रतिपाद्यस्य घटादेः संयोगो न संभवतीत्यर्थः ॥ १४ ॥

( भाष्यम् ) अथेदानीं शब्दार्थयोः संबन्धं परीक्षते । तत्र शब्दार्थयोर्न संयोगः संबन्धः । कस्मात्—*गुणत्वात् । गुणो हि शब्दो नार्थेन संयुज्यते इति ॥ १५ ॥

## गुणोऽपि विभाव्यते ॥ १५ ॥

( उप० ) किंच विषयोऽपि क्वचिद्रूपरसादिलक्षणस्तेन संयोगो न संभवति गुणे गुणानङ्गीकारादित्याह—गुणोऽपीति । गुणोऽपि विषय इति शेषः गुणोऽपि रूपादिः शब्दस्य विषयो न तु तेन समं संयोगः संबन्ध इत्यर्थः । यद्वा गुणोऽपि शब्देन विभाव्यते प्रतिपाद्यते तेन च शब्दस्य न संयोगः संबन्ध इत्यर्थः ॥ १५ ॥

( विवृ० ) यत्र प्रतिपाद्योऽपि गुणस्तत्र नितरां तथेत्याह—गुणोपीति । गुणोऽपि विभाव्यते गुणो रूपादिः शब्दैः प्रतिपाद्यते तत्रोभयोर्गुणत्वात्संयोगसंबन्धो न संभवतीत्यर्थः ॥ १५ ॥

( भाष्यम् ) अर्थोऽपि कश्चिद्गुणो विभाव्यते । न च गुणयोः सतोः शब्दार्थयोः संयोगो भवति ॥ १६ ॥

## निष्क्रियत्वात् ॥ १६ ॥

( उप० ) किंच कस्यचिदाकाशादेर्द्रव्यस्य नान्यतरकर्मजः संयोगो नोभयकर्मजः शब्दस्यापि निष्क्रियत्वादित्याह—निष्क्रियत्वादिति । शब्दस्य कस्यचिदर्थस्य चेति शेषः ॥ १६ ॥

( विवृ० ) एवं गगनादिशब्दप्रतिपाद्ये आकाशादिद्रव्येऽपि संयोगस्य संबन्धता न संभवति प्रतिपाद्यप्रतिपादकयोः कर्मशून्यत्वेन क्रियाजन्यस्य

संयोगस्यासंभवादित्याह–निष्क्रियत्वादिति । गगनादिशब्दस्य गगनादेश्च निष्क्रियत्वात्संयोगो न संभवतीत्यर्थः ॥ १६ ॥

( भाष्यम् ) अयमन्यः संयोगाभावे हेतुः—*निष्क्रियत्वात् । शब्दोऽर्थश्च कश्चिन्निष्क्रियो भवति । न वै तयोरन्यतरकर्मजः संयोगो नोभयकर्मजो न खल्वपि संयोगजः मूले हि तस्य क्रियेति । न वै खलु शब्दोऽर्थदेशं गत्वाऽर्थं संबध्नाति नार्थः शब्ददेशमागत्य शब्दमिति ॥ १७ ॥

## असति नास्तीति च प्रयोगात् ॥ १७ ॥

( उप० ) संबन्धे बाधकान्तरमाह–असतीति । असत्यपि घटपटादौ, नास्ति गेहे घटः, नास्ति पटः, श्रुतपूर्वो गकारो नास्ति, अभूत्पटः, पटो भविष्यतीत्यादिप्रयोगदर्शनादित्यर्थः । तथाचासता घटादिना शब्दस्य न संयोगो न वा समवाय इति भावः ॥ १७ ॥

( विवृ० ) प्रतिपाद्यस्यावर्तमानत्वादपि संयोगो न संभवतीत्याह—असतीति । असति अविद्यमाने नास्तीति चकाराद्भविष्यतीति च प्रयोगदर्शनात् । तथा चातीतघट इदानीं नास्ति परदिने घटो भविष्यतीत्यादिप्रयोगेण अतीतानागतघटयोर्बोधो भवति नच ताभ्यां शब्दस्य संयोगादि. संभवतीत्यर्थ. ॥ १७ ॥

( भाष्यम् ) अयमपरः संबन्धाभावे हेतुः—*असति नास्तीति च प्रयोगात् । उत्पत्स्यमाने भविष्यतीति चार्थः । वस्तुन्यसति नास्त्येतदिति प्रयुज्यते उत्पत्स्यमाने च भविष्यतीति । यन्नास्ति तदसत्, यच्चोत्पत्स्यते तदप्यसदेव प्रयोगकाले । न चासता किंचित्संबध्यते । यद्वै सत्, तत्खलु सता वस्त्वन्तरेण संबध्यते इति ॥ १८ ॥

## शब्दार्थावसंबन्धौ ॥ १८ ॥

( उप० ) किंचात इत्यत आह–शब्दार्थाविति । शब्दार्थयोः संयोगश्चेन्नास्ति तदेतदायातं शब्दार्थावसंबन्धावेवेत्यर्थः ॥ १८ ॥

( विवृ० ) मा भूत्संयोगादिः पदपदार्थयोः संबन्धः का नो हानिरित्यत आह—शब्दार्थाविति । शब्दार्थयोः संयोगादिसंबन्धासंभवे तावसंबन्धावेव स्यातां तथा चातिप्रसङ्ग इति भावः ॥ १८ ॥

( भाष्यम् ) तस्मात्—* शब्दार्थावसंबन्धौ । न त्वनयोः परस्परमस्ति संबन्धः । तत्रैवं सति शब्दादर्थोपलब्धिरित्येतन्नोपपद्यते । संबद्धयोः खल्वेकस्योपलब्धावन्यस्योपलब्धिर्भवतीति ॥ १९ ॥

## संयोगिनो दण्डात्समवायिनो विशेषाच्च ॥ १९ ॥

( उप० ) ननु संयोगसमवाययोरन्यतरः शब्दार्थयोः संबन्धः कथं न स्यादित्यत आह—संयोगिन इति। दण्डी पुरुषः हस्ती कुञ्जर इति प्रत्ययौ स्तः, तत्र प्रथमः संयोगात्, द्वितीयः समवायाद्धस्तेऽवयवविशेषे कुञ्जरस्य समवायाधीनः प्रत्ययः। हस्तः समवायितया यस्यास्ति स हस्तीति। विशेषादिति विशेष एव हस्तादौ समवायसंबन्धाद्विशेषणत्वं न[1] तु तन्त्वादीनामपि तन्तुमान् पट इत्यादिरवयव[2]विशेषणभावेन प्रत्ययो भवति (?)। एवं घटशब्दवान् घटोऽर्थ इति प्रत्ययो न भवति, तथाच शब्दार्थयोर्न संयोगो नापि समवाय इति भावः ॥ १९ ॥

( विवृ० ) शब्दार्थयोः संयोगादिसंसर्गावगाही प्रत्ययोऽपि नास्तीत्याह—संयोगिन इति। दण्डाद्दण्डमवगाह्य संयोगिनः दण्डसंयोगिनः पुरुषस्य विशेषादवयवविशेषमवगाह्य समवायिनोऽवयविनः प्रतीतिर्भवतीति शेषः। तथाच यथा संयोगसंबन्धावगाही दण्डी पुरुष इति प्रत्ययः समवायसंबन्धावगाही करी कुञ्जर इति प्रत्ययश्च स्वारसिको लोकानां तथा घटवान् घटशब्दः घटशब्दवान् घट इत्यादिप्रत्ययो नास्तीति पदपदार्थयोर्न संयोगो न वा समवायः संबन्ध इत्यर्थः। करी कुञ्जर इत्यादौ तु स्वानुयोगिकसमवायः संसर्गतया भासते, कपालं घटवदित्यादौ तु समवाय एवेत्यादिकमूहनीयम् ॥ १९ ॥

( भाष्यम् ) शब्दार्थावसंबन्धाविति प्रकृतम्। योऽयं यज्ञदत्तादिसंयोगी दण्डादिः, यश्च कुञ्जरादिसमवायी करादिः, ताभ्यां शब्दार्थौ विशिष्येते। विशेषाच्च भवति प्रतिपत्तिः, न शब्दार्थयोः संयोगः संबन्धो न समवाय इति। कः पुनर्विशेषः? अप्राप्तिः। दण्डयज्ञदत्तयोः करकुञ्जरयोश्च प्राप्तिरस्ति न त्वेवं शब्दार्थयोरिति। न वै शब्दोऽर्थेन प्राप्यते न खल्वप्यर्थः शब्देनेति कुत एतत्प्रतिपत्तव्यम्। पूरणप्रदाहपाटनानुपलब्धेः। यदि शब्देनार्थः प्राप्यते शब्दान्तिके अर्थः स्यात्। तदा खलु मोदकाग्निक्षुरशब्दानामुच्चारणे मुखस्य पूरणप्रदाहपाटनानि भवेयुः। ततश्चैतान्युपलभ्येरन्। तदनुपलब्धेर्भवति प्रतिपत्तिः न शब्देनार्थः प्राप्यते, इति। अथापि खल्वर्थेन शब्दः प्राप्येत, अर्थान्तिके शब्दो भवेत्। तत्रोच्चारणं शब्दस्य न निष्पद्यते। स्थानकरणाभ्यां हि तन्निष्पत्तिः। स्थानं कण्ठादि

---

१ ननु इति पाठ.। २ इत्यादि त्ववयवेति पाठः।

करणं प्रयत्नविशेषः । न त्वेते अर्थान्तिके भवत इत्युच्चारणं शब्दस्य न निष्पद्यते । तस्माच्छब्दार्थावसंबन्धौ इति । न वै प्राप्तिनिमित्तः शब्दादर्थ-प्रत्ययः ॥ २० ॥

## सामयिकः शब्दादर्थप्रत्ययः ॥ २० ॥

( उप० ) ननु यदि न संयोगो न वा समवाय. शब्दार्थयोस्तर्हि केन संबन्धेन शब्दो नियतमर्थं प्रतिपादयतीत्यत आह—सामयिक इति । सामयिक इति समय ईश्वरसंकेतः अस्माच्छब्दादयमर्थो वोद्धव्य इत्याकारः, यः शब्दो यस्मिन्नर्थे भगवता संकेतितः स तमर्थं प्रतिपादयति । तथाच शब्दा-र्थयोरीश्वरेच्छैव संबन्धः स एव समयस्तदधीन इत्यर्थः । यथा नकुलदंष्ट्रा-ग्रस्पृष्टा या काचिदोषधिः सा सर्वाऽपि सर्पविषं हन्ति, स च समयः क-चिद्व्यवहाराद्गृह्यते यथा प्रयोजकेन घटमानयेत्युक्ते प्रयोज्यस्य कम्बुग्रीवा-वन्तमर्थमानयतो ज्ञानं तावदनुमिनोति तटस्थो बालः, इयमस्य प्रवृत्तिर्ज्ञा-नजन्या प्रवृत्तित्वान्मत्प्रवृत्तिवत् । तच्च ज्ञानमेतद्वाक्यजन्यमेतदनन्तरभा-वित्वात्, एतज्ज्ञानविपयोऽयं कम्बुग्रीवावानर्थो घटपदवाच्य इत्यावा-पोद्वापप्रक्रियया बालस्य घटपटादावर्थे व्युत्पत्तिः । क्वचिच्च साक्षादाप्तवा-क्यादेव यथाऽयं कम्बुग्रीवावानर्थो घटपदवाच्य इति । क्वचिदुपमानाद्यथा, गोसदृशो गवयः, यथा मुद्गस्तथा मुद्गपर्णी, यथा माषस्तथा माषपर्णीत्यादि साधर्म्योपमानात् । क्वचिन्निन्दापरादपि वाक्याद्यथा धिक्करभमतिलम्बौष्ठं दीर्घग्रीवं कठोरकण्टकाशिनमपसदं पशूनामिति निन्दावाक्यश्रवणान-न्तरं तादृशपिण्डमुपलभ्यायमसौ करभ इति व्युत्पत्तिः । क्वचित्प्रसिद्धपद-सामानाधिकरण्याद्यथा प्रभिन्नकमलोदरे मधूनि मधुकरः पिवतीति वाक्य-श्रवणानन्तरं भवत्ययमसौ मधुकरपदवाच्यः प्रभिन्नकमलोदरे मधुपानकर्तृ-त्वात्, यथा वा सहकारतरौ मधुरं पिको रौतीति । तदेतदनुमानं वा शब्द एव वा प्रसिद्धपदसामानाधिकरण्यसामर्थ्याद्व्युत्पादकः, उपमानविशेष एव वा, मधुपानकर्तृत्वस्य भ्रमरादिव्यक्त्यन्तरसाधर्म्यस्योपनयात् । समयश्च जातिमात्रे, व्यक्तेराक्षेपत एवोपस्थितेरिति तौतातिकाः । जातौ व्यक्तौ चोभय(त्र)शक्तिः किंतु जात्यंशे ज्ञाता व्यक्त्यंशे स्वरूपसती प्रयोजिकेति प्राभाकराः । समयश्च शक्तिरेव व्यक्त्याकृतिजातयः पदार्था इति वृद्धाः । गवादिपदानामियं गतिः, गुणकर्मादिवाचकपदानां तु जातिव्यक्ती एवार्थ इति मयूखे विपश्चितम् ॥ २० ॥

( विवृ० ) इदानीं शाब्दबोधौपयिकं पदपदार्थयोः संबन्धं प्रदर्शयति—सामयिक इति । शब्दादर्थप्रत्यय. सामयिकः समयरूपसंबन्धप्रयोज्यस्तथाच पदपदार्थयोः समयरूपः संबन्ध एव शाब्दबोधनियामकः । समयश्च संकेतः स च द्विविधो नित्य आधुनिकश्च तत्र नित्यसंकेतः शक्ति-आधुनिकसंकेतः परिभाषा, संकेतश्चास्माच्छब्दादयमर्थो बोद्धव्य इत्याकारकः । अयं शब्द इममर्थं बोधयत्वित्याकारको वा । तदुक्तम् 'आजानिकश्चाधुनिकः संकेतो द्विविधः स्मृतः । नित्य आजानिकस्तत्र या शक्तिरिति गीयते । कदाचित्कस्त्वाधुनिकः शास्त्रकारादिभिः कृतः' ॥ इति ॥ शक्तिग्रहश्च व्यवहारादितो भवति । तदुक्तम् 'शक्तिग्रहं व्याकरणोपमानात्कोषाप्तवाक्याद्व्यवहारतश्च । सान्निध्यत. सिद्धपदस्य वृद्धा वाक्यस्य शेषाद्विवृतेर्वदन्ति ॥' इति । धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति यथा 'कर्मणि द्वितीया' 'कर्तरि परस्मैपदम्' इत्याद्यनुशासनात् कर्मत्वादौ द्वितीयादेः । उपमानाद्गवादिसादृश्यज्ञानाद्गवयत्वादिजात्यवच्छिन्ने गवयादिपदानां शक्तिग्रहः । कोषात् 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति । शीतं गुणे तद्वदर्थाः सुषीमः शिशिरो जडः ॥' चूर्णे क्षोदः समुत्पिञ्जपिञ्जलौ भृशमाकुले इत्यादिकात् श्वैत्यादौ शुक्लादिशब्दानां शक्तिग्रहः, कोकिलः पिकपदवाच्य इत्याद्याप्तवाक्यात्कोकिलादौ पिकादिपदानां शक्तिग्रहः । प्रयोज्यप्रयोजकव्यवहारात् गोत्वादिविशिष्टे गवादिपदानां शक्तिग्रहः । तथाहि यत्र प्रयोजकवृद्धेन गामानयेत्युक्तं तच्छ्रुत्वा प्रयोज्यवृद्धेन गौरानीतः, तदवधार्य पार्श्वस्थबालो गवानयनं गामानयेतिशब्दप्रयोज्यमवधारयति, ततश्च गां बधान अश्वमानयेत्यावापोद्वापाभ्यां गवादिपदानां सास्नाविशिष्टगवादौ शक्तिं गृह्णाति । प्रसिद्धार्थकपदसामानाधिकरण्यात् 'नीरूपः स्पर्शवान् वायुः' 'सत्कृत्यालंकृतां कन्यां ददानः कूकुदः स्मृतः' इत्यादौ रूपशून्यस्पर्शवदादौ वाय्वादिशब्दस्य कन्यादात्रादौ कूकुदादिशब्दस्य च शक्तिग्रहः । एवं वाक्यशेषादपि यथा यवपदस्य कङ्गुप्रभृतौ म्लेच्छानां दीर्घशूके च शिष्टानां व्यवहारादेकमात्रशक्तेः परिच्छेत्तुमशक्यत्वात् नानार्थत्वस्य चान्याय्यत्वात् 'यवमयश्चरुर्भवति' इति श्रुतौ यवपदस्यार्थसंदेहे वसन्ते सर्वसस्यानां जायते पत्रशातनम् । मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः ॥ इति विध्यर्थाकाङ्क्षया प्रवर्तमानाद्वाक्यशेषाद्दीर्घशूक एव यवपदस्य शक्तिग्रहः । यथा वा 'स्वाराज्यकामोऽग्निष्टोमेन यजेत' इत्यादि

विधिशेष भूतेभ्यः ' यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥ ' इत्यादिवाक्येभ्यः स्वरादिपदस्य विजातीयसुखादौ शक्तिग्रहः । क्वचिद्विवरणादपि यथा पचति पाकं करोतीति तुल्यार्थकवाक्यात्कृत्यादौ तिङादेः शक्तिग्रह इति । तत्र जातावेव शक्तिर्नतु व्यक्तौ व्यभिचारादानन्त्याच्चेति मीमांसकाः । तत्रापि प्रभाकरमते व्यक्तिं विना जातिभानस्यासंभवात्तुल्यवित्तिवेद्यत्वादेव गामानयेत्यादौ व्यक्तेर्भानम्, भट्टमते च सामानाधिकरण्यसंबन्धेन कर्मत्वादौ गोत्वादेः प्रथममन्वयबोधः पश्चात्तु कर्मतायां गोवृत्तित्वस्यानुमानं भवतीति। मण्डनाचार्यमते व्यक्तेर्लक्षणया भानं भवतीति । तदेतज्जातिशक्तिमतं न समीचीनं गामानयेत्यादौ व्यक्तेः शाब्दबोधविषयत्वस्यानुभवसिद्धस्य विना शक्तिमनुपपत्तेः । नच लक्षणया व्यक्तेर्भानम्, मुख्यप्रयोगस्यासत्त्वे लाक्षणिकप्रयोगस्यासंभवात् । नच तुल्यवित्तिवेद्यतयाऽपि व्यक्तेर्भानं संभवति, कार्यीभूतशाब्दबोधविषयतायाः कारणप्रयोज्यत्वस्यावश्यकत्वेन नियमरूपस्य तुल्यवित्तिवेद्यत्वस्य तत्राप्रयोजकत्वादिति । तस्माज्जात्याकृतिविशिष्टव्यक्तावेव गवादिपदानां शक्तिरिति मतमेवादरणीयम् । तदुक्तं गौतमीये ' जात्याकृतिव्यक्तयस्तु पदार्थः ' इति ॥ २० ॥

( भाष्यम् ) किं तर्हि–*सामयिकः शब्दादर्थप्रत्ययः । समयनिमित्ता शब्दादर्थप्रतीतिः । कः पुनः समयः, संकेतोऽभिधानाभिधेयनियमनियोगः अस्य शब्दस्येदमर्थजातमभिधेयमिति नियमनियोगेन शब्दव्यवहारादर्थोपलब्धिर्नत्वन्यथा । विपर्यये हि शब्दश्रवणेऽपि नार्थस्योपलब्धिर्भवति । संबन्धवादिनापि चायमवर्जनीयः समयलक्षणः संबन्धः प्राप्तिलक्षणश्च वर्जनीय इति ॥ २१ ॥

## एकदिक्काभ्यामेककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरं च ॥ २१ ॥

( उप० ) इदानीमुद्देशक्रमप्राप्ते परत्वापरत्वे परस्परानुबद्धव्यवहारकारणतया शिष्यबुद्धिवैशद्यार्थं संक्षेपार्थं चैकग्रन्थेनाह–एकेति । परमपरं चेति भावप्रधानो निर्देशः, उत्पद्यत इति शेषः, यद्वा परमपरं चेति व्यवहार इति शेषः । इतिरध्याहार्यम्, एका दिग् ययोस्तावेकादिक्कौ ताभ्यामेकदिक्काभ्यां पिण्डाभ्यामित्यर्थः । तुल्यदेशावप्येकदिक्कौ भवतः न तु ताभ्यां परत्वापरत्वे उत्पद्येते व्यवह्रियेते वेत्यत उक्तं सन्निकृष्टविप्रकृष्टाभ्यामिति ।

सन्निकर्षः संयुक्तसंयोगाल्पत्वम्, विप्रकर्षस्तद्भूयस्त्वम्, तद्भ्द्रयामित्यर्थः। एतेन समवायिकारणमुक्तम्, दिक्पिण्डसंयोगस्त्वसमवायिकारणम्, तथा हि प्राङ्मुखस्य पुरुषस्य प्राच्यवस्थितयोः पिण्डयोरेकस्मिन्संयुक्तसंयोगभूयस्त्वमपरस्मिन् संयुक्तसंयोगाल्पतरत्वं चापेक्ष्य परत्वमपरत्वं चोत्पद्यते, [[1]अस-मवायिकारणमुक्तम्,] सन्निकृष्टविप्रकृष्टाभ्यामिति विषयेण विषयिणं प्रत्यय-मुपलक्षयति तथाचापेक्षाबुद्धेर्निमित्तकारणत्वमुक्तम्, एकदिगवस्थितयोरेव परत्वापरत्वे उत्पद्येते इति न सर्वत्रोत्पत्तिः। एकस्यैव द्रष्टुरपेक्षाबुद्धिः समुत्पद्यते इति न सर्वथोत्पत्तिः, अपेक्षाबुद्धिनियमान्न सर्वदोत्पत्तिः, कारणशक्तेरुत्पन्नयोः प्रत्यक्षसिद्धत्वान्न परस्पराश्रयत्वम्। अन्यथा हि नोत्पद्येयातां न वा प्रतीयेयातां परस्परापेक्षायां हि द्वयोरनुत्पत्तिरप्रतीतिश्च स्यात्प्रतीयेते च परत्वापरत्वे, प्रतीतिश्च तयोर्नोत्पत्तिमन्तरेणेति एककालाभ्यामिति कालिके परत्वापरत्वे अभिप्रेत्य, तत्रैककालाभ्यामिति एको वर्तमानः कालो ययोर्युवस्थविरपिण्डयोः तावेककालौ ताभ्यामेककालाभ्यामित्यर्थः। सन्निकर्षोऽल्पतरतपनपरिस्पन्दान्तरितजन्मत्वं, विप्रकर्षश्च बहुतरतपनपरिस्पन्दान्तरितजन्मत्वम्। अत्रापि विषयेण विषयिणीं बुद्धिमुपलक्षयति तेन युवस्थविरपिण्डौ समवायिकारणे, कालपिण्डसंयोगश्चासमवायिकारणम्, अल्पतरतपनपरिस्पन्दान्तरितजन्मत्वबुद्धिरपरत्वे बहुतरतपनपरिस्पन्दान्तरितजन्मत्वबुद्धिः परत्वे निमित्तकारणम्। एते च परत्वापरत्वे अनियतदिग्देशयोरपि पिण्डयोरुत्पद्येते, तत्र दैशिकपरत्वापरत्वयोः सप्तधा विनाशः, उत्पादस्तु युगपदेव द्वयोरन्यथाऽन्योन्याश्रयः स्यात्। अपेक्षाबुद्धिनाशात्, संयोगस्यासमवायिकारणस्य नाशात्, द्रव्यस्य च समवायिकारणस्य नाशात्, निमित्तासमवायिकारणयोर्नाशात्, निमित्तसमवायिकारणयोर्नाशात्, निमित्तनाशासमवायिकारणनाशसमवायिकारणनाशेभ्यः। तत्रापेक्षाबुद्धिनाशात्तावत्, परत्वोत्पत्तिः परत्वसामान्यज्ञानं ततोऽपेक्षाबुद्धिविनाशस्तद्विनाशात्परत्वविशिष्टद्रव्यज्ञानकाले परत्वनाशः, द्वित्वनाशवदेव सर्वमूहनीयम्। असमवायिकारणनाशादपि तद्यथा यदैवापेक्षाबुद्धिस्तदैव परत्वाधारे पिण्डे कर्म ततो यदैव परत्वोत्पत्तिस्तदैव दिक्पिण्डविभागस्ततो यदा परत्वसामान्यज्ञानं तदा दिक्पिण्डसंयोगनाशः ततः सामान्यज्ञानादपेक्षाबुद्धिनाशस्तदैव दिक्पिण्डसंयोगनाशात् परत्वापरत्वयोर्नाशः। तत्र चापेक्षाबुद्धिनाशस्य परत्वनाशसमका-

१ कुण्डलितं वाक्य लिखितपु. नास्ति।

लत्वान्न तन्नाशकत्वम् । नन्वसमवायिकारणनाशादपि गुणनाशे आत्ममनः-संयोगनाशादपि संस्कारादृष्टादीनां विनाशे बहु व्याकुलं स्यादिति चेन्न, विप्रकृष्टत्वेन परत्वस्य व्यापनात् । परत्वाधारस्यान्यत्र गमने विप्रकर्षाभावात्परत्वनिवृत्तिरावश्यकी न च तदा नाशकान्तरमस्तीत्यन्यथाऽनुपपत्त्या संयोगनाश एव नाशकः कल्प्यते, संस्कारादृष्टादेः कार्यस्य स्मृतिसुखादेश्चिरेणापि दर्शनान्न तन्नाशकल्पना, उपलक्षणं चैतत् अवधेर्द्रष्टुश्च तद्देशसंयोगनाशादपि परत्वापरत्वे विनश्यतः युक्तेस्तुल्यत्वात् । समवायिकारणनाशादपि क्वचित् परत्वनाशः । तथाहि यदा पिण्डावयवे समुत्पन्नेन कर्मणाऽवयवान्तराद्विभागस्तदैवापेक्षाबुद्धिः, विभागात् पिण्डारम्भकसंयोगनाशः परत्वोत्पत्तिः, अग्रिमक्षणे संयोगनाशाद्द्रव्यनाशः परत्वसामान्यज्ञानं, द्रव्यनाशात्परत्वनाशोऽपेक्षाबुद्धिनाशश्च सामान्यज्ञानात्, तथाच यौगपद्यान्नापेक्षाबुद्धिनाशात्परत्वनाश इति । क्वचिद्द्रव्यनाशापेक्षाबुद्धिनाशाभ्यां परत्वनाशः तद्यथा पिण्डावयवे कर्मापेक्षाबुद्धेरुत्पादस्ततोऽवयवान्तरविभागः परत्वोत्पत्तिश्च तत आरम्भकसंयोगनाशसामान्यज्ञाने ततो द्रव्यनाशापेक्षाबुद्धिनाशौ ततश्च परत्वनाशः । क्वचिद्द्रव्यस्य संयोगस्य च नाशाभ्यां परत्वनाशः । तद्यथा यदा द्रव्यावयवविभागस्तदैव पिण्डकर्मापेक्षाबुद्ध्योरुत्पादस्तदनन्तरमवयवसंयोगनाशदिक्पिण्डविभागपरत्वोत्पत्तयः ततो द्रव्यनाशदिक्पिण्डसंयोगनाशपरत्वसामान्यबुद्धयः ततो द्रव्यनाशदिक्पिण्डसंयोगनाशाभ्यां परत्वनाशः सामान्यबुद्धेरपेक्षाबुद्धिनाश इति । क्वचित्संयोगनाशापेक्षाबुद्धिनाशाभ्यां परत्वनाशः । तद्यथा परत्वोत्पत्तिपिण्डकर्मणी सामान्यज्ञानविभागौ अपेक्षाबुद्धिनाशदिक्पिण्डसंयोगनाशौ ततः परत्वनाशः । क्वचित् समवाय्यसमवायिनिमित्तनाशेभ्यः । तद्यथा परत्वोत्पत्तिपिण्डावयवविभागपिण्डकर्माणि युगपत्, तदनन्तरं परत्वसामान्यज्ञानावयवसंयोगनाशदिक्पिण्डविभागाः तदनन्तरमपेक्षाबुद्धिनाशद्रव्यनाशदिक्पिण्डसंयोगनाशेभ्यो युगपदुत्पन्नेभ्यः परत्वस्यापरत्वस्य वा दैशिकस्य नाशः । कालकृतयोस्तु परत्वापरत्वयोरसमवायिकारणनाशाधीनो नाशो नास्ति दैशिकयोर्दिक्पिण्डसंयोगनाशे सन्निकर्षविप्रकर्षनाशो यथा न तथा कालिकयोरिति तयोः समवायिकारणनाशादपेक्षाबुद्धिनाशात् द्वाभ्यां चेति त्रयः पक्षाः पूर्ववदूहनीयाः ॥ २१ ॥

( विवृ० ) क्रमप्राप्ते परत्वापरत्वे परीक्षितुमारभते–एकेति । एका दिक् आधारतया ययोस्तावेकदिक्कौ मूर्तौ ताभ्यां मूर्ताभ्यां सन्निकृष्टवि-

प्रकृष्टाभ्यां बहुतरसूर्यसंयोगाश्रयत्वाल्पतरसूर्यसंयोगाश्रयत्वज्ञानविषयाभ्यां परमपरं चेति व्यवहारो जायत इत्यर्थः । तथाच दैशिकपरत्वं प्रति बहुतरसूर्यसंयोगाश्रयत्वज्ञानं निमित्तकारणं तदाश्रये मूर्ते दिक्संयोगोऽसमवायिकारणम्, तादृशज्ञानविषयो मूर्तः समवायिकारणम्, दैशिकापरत्वस्याल्पतरसूर्यसंयोगाश्रयत्वज्ञानं निमित्तकारणं तद्विषयो मूर्तः समवायिकारणं तादृशमूर्ते दिक्संयोगोऽसमवायिकारणमिति । भवति हि पाटलिपुत्रस्थस्य काशीमपेक्ष्य प्रयागः परः, प्रयागमपेक्ष्य काश्यपरेति व्यवहारः । तद्विषयः परत्वं प्रयागे उत्पद्यते, तत्र बहुतरसूर्यसंयोगाश्रयत्वेन तस्य ज्ञातत्वात्काश्यां चापरत्वं जायते अल्पतरसूर्यसंयोगाश्रयत्वेन तस्या ज्ञातत्वात् एककालाभ्यामिति एकः काल. संयोगितया ययोः पिण्डयोस्ताभ्यामेककालाभ्यां पिण्डाभ्या सन्निकृष्टविप्रकृष्टाभ्यामलपतरतपनपरिस्पन्दबहुतरतपनपरिस्पन्दाश्रयतया ज्ञाताभ्यां परमपरं चेति व्यवहारो भवति । भवति हि युवानमपेक्ष्य स्थविर' परः स्थविरमपेक्ष्य युवाऽपर इत्यादिको व्यवहारस्तद्विषयस्य परत्वस्य समवायिकारणं स्थविरः । तत्र महाकालस्य संयोगोऽसमवायिकारणम् , बहुतरसूर्यक्रियाश्रयत्वज्ञानं निमित्तकारणम्, अपरत्वस्य च युवा समवायिकारणम् युवशरीरमहाकालयोः संयोगोऽसमवायिकारणम् , स्थविराश्रिततपनस्पन्दापेक्षयाऽल्पतरतपनस्पन्दाश्रयत्वेन यूनो ज्ञानं निमित्तकारणम्, यद्यपि शरीराणां बाल्ययौवनवार्धकभेदेन भिन्नत्वात् युवस्थविरगततपनपरिस्पन्दानां वैपरीत्यमपि संभवति तथापि बहुतरतपनपरिस्पन्दसमानाधिकरणवैजात्यवत्त्वज्ञानमेव स्थविरे कालिकपरत्वस्य कारणम्, अल्पतरतपनस्पन्दसमानाधिकरणवैजात्यज्ञानं च यूनः परत्वस्य कारणमिति । नच घटाद्यपेक्षया परमाणोरपि बहुतरसूर्यक्रियासमानाधिकरणपृथिवीत्वादिजातिमत्त्वज्ञानात्परत्वं कथं नोत्पद्यते इति वाच्यं बहुतरसूर्यक्रियासमानाधिकरणैककालीनद्व्याव‍ृत्तिजातिमत्त्वस्य विवक्षितत्वात् तादृशजातिश्च चैत्रत्वादिः सूर्यक्रियाऽपि तत्कालोत्तरकालीनान्यत्वेन विशेषणीया नातोऽशीतिवर्षजीविस्थविरचैत्रापेक्षया शतवर्षजीवियुवमैत्रे परत्वोत्पत्तिः अथवा सूर्यपरिस्पन्दपूर्वोत्पन्नत्वं विप्रकर्षः तदनन्तरोत्पन्नत्वं सन्निकर्षः युवचैत्राद्युत्पत्त्यधिकरणं यः सूर्यस्पन्दस्तत्पूर्वोत्पन्नत्वं स्थविरमैत्रादौ वर्तते इति स्थविरपरत्वम् । स्थविरमैत्राद्युत्पत्त्यधिकरणसूर्यस्पन्दानन्तरोत्पन्नत्वं युवचैत्रादावस्तीति तत्रापरत्वं जायते, अचेतने कालिकपरत्वापरत्वव्यवहाराभावे तु प्राणित्वे सतीति विशेषणं देयम्, तत्तच्छरीरमादाया-

तिप्रसङ्गस्तु जातिविशेषनिवेशेन वारणीय इति संक्षेपः । द्विविधयोः परत्वा-परत्वयोर्नाशकोऽपेक्षाबुद्धिनाश इति मुक्तावलीकारः उपस्कारे तु त्रिविध-कारणनाशस्यैव परत्वापरत्वनाशकत्वमुक्तमिति मन्तव्यम् ।। २१ ।।

(भाष्यम् ) अथ परत्वापरत्वयोः परीक्षा—*एकदिक्काभ्यामेककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरं च । एका दिगेकश्च कालो ययोस्ताभ्यामेकदि-क्काभ्यामेककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरं च प्रतिपत्तव्यम् । तत्र सन्निकर्षः संयोगाल्पत्वं परिस्पन्दाल्पत्वं च यथाविषयं वेदितव्यं, विपर्ययो विप्रकर्षः । दैशिकं कालिकं चेति द्विविधं परत्वमपरत्वं च । तत्र दैशिकं परत्वमपरत्वं च संयोगभूयस्त्वाल्पत्वाश्रयाभ्यामेकदिक्काभ्यामुत्पद्यते । मथुरास्थस्य खल्वपरः प्रयागोऽविमुक्तमपेक्ष्य, प्रयागं चापेक्ष्यापरमविमुक्त-मिति । परिस्पन्दभूयस्त्वाल्पत्वाश्रयाभ्यामेककालाभ्यां कालिकपरत्वापर-त्वयोरुत्पत्तिः । युवानं खल्वपेक्ष्य स्थविरःपरो भवत्यपरश्च युवा स्थवि-रमपेक्ष्येति । सा चेयं परत्वापरत्वयोरुत्पत्तिर्न खल्वपि सन्निकर्षविप्रकर्ष-बुद्धिमपेक्ष्य भवति, उपलब्धौ त्वनयोरियमुपयुज्यते इति । यदा वै सन्निकर्षविप्रकर्षौ न बुध्येते न तदानीमपि परः परो न भवत्यपरश्चापरः । वस्तुतन्त्रा हि वस्तुस्थितिः पुरुषतन्त्रा चोपलब्धिरिति ।। २२ ।।

## कारणपरत्वात्कारणापरत्वाच्च ।। २२ ।।

( उप० ) कालिकपरत्वापरत्वे प्रति विशेषमाह—कारणेति । परत्वाप-रत्वयोः कारणं कालस्तस्य परत्वापरत्वे परत्वासमवायिकारणकालसंयोगो-ऽपरत्वासमवायिकारणकालसंयोगश्च लक्षणयोक्तः, अन्यथाऽनन्वयापत्तेः । नहि परत्वापरत्वाभ्यामेव परत्वापरत्वे उत्पद्येते तस्मात् परत्वापरत्वपद-योस्तदुत्पादककालसंयोगावर्थौ लक्षणया ।। २२ ।।

( विवृ० ) ननु सन्निकर्षविप्रकर्षज्ञानाभ्यां यदि परापरव्यवहारस्तदा प्रयागमपेक्ष्य काशी सन्निकृष्टेति ज्ञानस्य विषयतासंबन्धेन प्रयागेऽपि स-त्त्वात्तत्रापरत्वव्यवहारः कथं न भवति एवं विप्रकर्षज्ञानविषये काश्यादौ वा कथं न परत्वव्यवहार इति तटस्थाशङ्कां निरस्यति—कारणेति । कारणपरत्वात्कारणस्य समवायिकारणस्य परत्वात् अपरत्वाच्च समवायि-कारण एव परापरव्यवहारौ नत्वपेक्षाबुद्धिविषयतामात्रेण तदन्यस्मिन्, व्यवहारं प्रति व्यवहर्तव्यस्य तन्त्रत्वादिति भावः ।। २२ ।।

(भाष्यम् ) एककालाभ्यां चेत्परत्वापरत्वे विभिन्नकालयोस्तर्हि कार्ययोः

परापरव्यवहारो नोपपद्यते इत्यत आह—*कारणपरत्वात्कारणापरत्वाच्च ॥ कारणपौर्वापर्यात्कार्ययोः परापरव्यवहारः। परं दधि तक्रमपेक्ष्य कस्मात् कारणपरत्वात् । यदेतद्दध्नः कारणं क्षीरं तत्खलु तक्रस्य कारणं दध्यपेक्ष्य पूर्वं भवति । एतेन दध्यपेक्षया तक्रस्यापरत्वं व्याख्यातम् । कारणानां खल्वपि द्वयोर्द्वयोः परापरव्यवहारस्तयोः परत्वापरत्वाभ्याम् । पृथिव्यपरा पराआपः, आपोऽपराः परं तेजः, तेजोऽपरं परो वायुः, वायुरपरः परमाकाशं, आकाशमपरं परं मूलकारणमिति । अथापि खल्वेतद्भावजातं परमपरं च । कस्मात् ? एकदिक्काभ्यामेककालाभ्यां संनिकृष्टविप्रकृष्टाभ्याम् । मथुरावस्थितस्याविमुक्तं परं भवति प्रयागमपेक्ष्य पाटलिपुत्रं चापेक्ष्यापरमिति । एवमन्यत्र । सर्वदिक्कयोः सर्वकालयोः खल्वपि वाय्वाकाशयोः परापरव्यवहारः कारणपरत्वापरत्वाभ्यामिति ॥ २३ ॥

**परत्वापरत्वयोः परत्वापरत्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः २३**

**कर्मभिः कर्माणि ॥ २४ ॥**

**गुणैर्गुणाः ॥ २५ ॥**

( उप० ) ननु परत्वेऽपि परत्वमपरत्वेऽप्यपरत्वं किं न स्यादित्यत आह—परत्वादित्यादि । एतानि सूत्राणि पूर्वमेव व्याकृतकल्पानि नेह व्याक्रियन्ते ॥ २३–२५ ॥

( विवृ० ) परत्वापरत्वयोर्न परत्वापरत्वे स्त इत्याह—परत्वेत्यादिभिः । एतानि व्याख्यातप्रायाणि ॥ २३–२५ ॥

( भाष्यम् ) प्राप्तस्तर्हि परत्वापरत्वयोरपि परापरव्यवहार इति, तत्प्रत्याचष्टे—*परत्वापरत्वयोः परत्वापरत्वाभावोऽणुत्वमहत्वाभ्यां व्याख्यातः ॥ २४ ॥

( भाष्यम् ) तत्र निदर्शनान्तरम्—*कर्मभिः कर्माणि गुणैर्गुणाः । इतश्च परत्वापरत्वयोः परत्वापरत्वाभावं प्रतिपद्यामहे ॥ २५ ॥

**इहेदमिति यतः कार्यकारणयोः स समवायः ॥ २६ ॥**

( उप० ) परत्वापरत्वादीनां मूर्तमात्रसमवेतत्वमुक्तं ज्ञानसुखादीनां चात्मसमवेतत्वं तत्र समवाय एव क इति शिष्यजिज्ञासामनुरुध्य बुद्धेरुद्देशक्रमप्राप्ताया अपि लङ्घनात्समवायपरीक्षामाह—इहेदमिति । कार्यकारणयोरित्युपलक्षणम्, अकार्यकारणयोरित्यपि द्रष्टव्यम्। तदुक्तं पदार्थप्रदेशाख्ये प्रकरणे ‘ अयुतसिद्धानामाधार्याधारभूतानां यः संबन्ध इहेतिप्रत्ययहेतुः स

समवायः' इति असंबद्धयोरविद्यमानत्वमयुतसिद्धिः, इह कुण्डे दधि इह कुण्डे बदराणीतिवत् इह तन्तुषु पट इह वीरणेषु कट इह द्रव्ये द्रव्यगुणकर्माणि, इह गवि गोत्वम्, इहात्मनि ज्ञानम्, इहाकाशे शब्द इतीहबुद्धिरुत्पद्यमाना न विना संबन्धमुत्पत्तुमर्हति तेनानुमीयतेऽस्ति कश्चित्संबन्धः, न चासौ संयोग एव, अन्यतरकर्मादीनां तदुत्पादकानामभावात् विभागपर्यवसानाभावाच्च संबन्धिनामयुतसिद्धत्वाच्च नियताधिकरणतयैवोन्नेयत्वात् अप्रत्यक्षत्वादेकत्वान्नित्यत्वाच्च। नन्वेकश्चेत्समवायस्तदा द्रव्यत्वादीनां संकरप्रसङ्गः कर्मत्वादिसमवायस्य द्रव्ये संभवात्, मैवम्—आधाराधेयनियमादेवासंकरात्। यद्यपि य एव द्रव्यत्वसमवायः स एव गुणत्वकर्मत्वादीनामपि तथापि तेषां न द्रव्यमाधारस्तत्र तेषामप्रतीतेः द्रव्येष्वेव द्रव्यत्वं प्रतीयते गुणेष्वेव गुणत्वं कर्मस्वेव कर्मत्वं नत्वन्यत्रेत्यन्वयव्यतिरेकदर्शनादेव नियमः, यथा कुण्डदध्नोः संयोगाविशेषेऽपि कुण्डमेवाधारो न दधीत्याश्रयाश्रयिभावनियमस्तथा व्यङ्ग्यव्यञ्जकशक्तिभेदादेवात्रापि नियम उपपत्स्यते। नहि द्रव्येण द्रव्यत्ववत्कर्मत्वाद्यप्यभिव्यज्यते तदुक्तम्, 'संविदेव हि भगवती वस्तूपगमे नः शरणम्'। इति, नह्याधारत्वं प्रति विपरीता संविदस्ति नहि भवति द्रव्यं कर्मेति, न वा भवति पटे तन्तव इति, एतेन वायौ रूपसमवायेऽपि वायौ रूपमित्याधारता न वायोः प्रतीयते तस्मात्स्वभावशक्तिरेव सर्वत्र नियामिका। स चायं नित्यः, अकारणकत्वात्। भवानां हि समवायिकारणादुत्पत्तिनियमः, तदनुरुद्धे च निमित्तासमवायिनी, तथाच समवायस्य समवायिकारणं यत्स्यात्तत्समवायान्तरेण तेनैव समवायेन वा। न तावदाद्यः, अनवस्थापातात्; न द्वितीयः, नहि स एवसमवायः स्वेनैव समवेतः संभवतीत्यात्माश्रयात्। तन्तुषु पटसमवायः पटे रूपसमवाय इति प्रतीतिः कथमिति चेत्स्वरूपसंबन्धेन समवायान्तराङ्गीकारेऽनवस्थापातात्। तर्हीह पटे रूपमित्यपीहप्रत्ययः स्वरूपसंबन्धेनैव स्यात् किं समवायेनेति चेन्न तत्रातिरिक्तसंबन्धे बाधकाभावात्। तर्हीह भूतले घटाभाव इत्यत्रापि समवायः संबन्धान्तरं वा स्यादिति चेन्न स्वरूपसंबन्धेनैव तदुपपत्तेः, अन्यथा घटात्यन्ताभावान्योन्याभावयोर्नित्ययोरनेकसमवेतयोः सामान्यत्वापत्तेः, प्रध्वंसस्य च समवेतकार्यत्वेन विनाशित्वापत्तेः प्रागभावस्य च समवेतानुत्पन्नत्वेनाविनाशित्वापत्तेश्च। न च भावत्वं तत्र तन्त्रम्, भावत्वस्यापाद्यत्वात्। अभावेऽस्त्येव वैशिष्ट्याख्यं संबन्धान्त-

रमिति भाट्टाः, तत्र यदि सर्वाभावव्यक्तीनामेकमेव वैशिष्ट्यं तदा घटवत्यपि घटाभावप्रत्ययप्रसङ्गः पटाभाववैशिष्ट्येनैव घटाभाववैशिष्ट्यसत्त्वात्, घट एव तत्र घटाभावधीप्रतिबन्धक इति चेद्वैशिष्ट्यसंबन्धेन प्रतिबन्धकाभावस्यैव तत्र सत्त्वात्, न चाश्रयस्वभाव एव तादृशो येन न तत्र घटाभावाभिव्यक्तिः, घटापसारणानन्तरं तत्रैव घटाभावप्रतीतेः । तवापि रूपनाशानन्तरं कथं न रूपवत्ताप्रत्ययः समवायस्य नित्यत्वादेकत्वाच्चेति चेत्, रूपनाशादेव तदप्रतीतेरुपपत्तेः, समवायप्रतिबन्दी प्रत्यक्षमयूखे मोचित एवेत्यास्ताम् ॥ २६ ॥

( विवृ० ) गुणानां द्रव्यसमवेतत्वस्योक्तत्वात्तत्र कः समवाय इति जिज्ञासानुरोधात्क्रममुल्लङ्घ्यापि समवायपरीक्षामारभते—इहेदमिति । कार्यकारणयोरवयवावयविनोर्यतः संबन्धादिहेदमिति प्रत्ययः स समवायः । तन्तुषु पटः कपालेषु घटः वीरणेषु कट इत्यादिप्रत्ययो हि पटादौ तन्त्वादिवृत्तित्वं विषयीकरोति तच्च वृत्तित्वं संबन्धविशेषनियन्त्रितमेवान्यतन्तुषु घट इत्यादिप्रतीतिप्रसङ्गात् । कालिकेन तन्त्वादिवृत्तित्वस्य घटादौ सत्त्वात् । इत्थं च तादृशवृत्तितानियामकः संबन्धः समवाय एव, अवयवावयविनोः संयोगासंभवात् । कार्यकारणयोरित्युपलक्षणं गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योर्नित्यद्रव्यविशेषपदार्थयोश्चाधाराधेयभावनियामकोऽपि समवाय एवेति मन्तव्यम् । समवाये प्रमाणं तु गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसंबन्धाविषया विशिष्टबुद्धित्वाद्दण्डी पुरुष इति विशिष्टबुद्धिवदित्यनुमानं तत्र च संयोगादिबाधात्समवायसिद्धिः । नच स्वरूपसंबन्धेनार्थान्तरमनन्तस्वरूपाणां संबन्धत्वाभ्युपगमे गौरवात् । नचैवमभावस्याप्यनया रीत्या संबन्धान्तरं सिध्येदिति वाच्यं यतोऽभावसंबन्धस्य न नित्यत्वसंभवस्तथा सति भूतले घटानयनानन्तरमपि घटाभावबुद्धिप्रसङ्गात् घटाभावस्य तत्संबन्धनस्य च नित्यत्वात् नाप्यभावस्य संबन्धान्तरमनित्यमङ्गीकर्तुं शक्यते एकस्मिन्नेव भूतले सहस्रधा घटानयनापसारणादौ संबन्धसहस्रकल्पनापत्तेस्तस्माद्धटापसरणकालीनभूतलादिस्वरूप एव घटाभावसंबन्धः स्वीकरणीयः घटकालस्य संबन्धाघटकतया घटकाले न घटात्यन्ताभावप्रतीतिः । इत्थं च भूतलादौ घटाद्यभावस्य स्वरूपसंबन्धस्वीकारस्यावश्यकत्वेनाभावान्तरस्थलेऽपि स्वरूपस्यैव संबन्धत्वमभावप्रत्यानामेकविधसंबन्धावगाहित्वस्यानुभवसिद्धत्वादिति ॥ २६ ॥

( भाष्यम् ) यतः—*इहेदमिति यतः कार्यकारणयोः स समवायः । कार्य-

कारणयोरिहेदमित्युपलब्धिर्यतः संबन्धाद्भवति स खलु समवायः। न तु परत्वमपरत्वं च परत्वापरत्वयोः कार्यं न खल्वपि कारणम्। संयोगस्त्वनयोर्न संबन्धः। कस्मात्? निष्क्रियत्वात्। निदर्शनं चेदं कार्यकारणयोरिति। अयुतसिद्धयोरिति प्रतिपत्तव्यम्। तदेवं परत्वापरत्वयोर्न परत्वापरत्वे। महद्दूरमल्पं दूरमित्याद्युपलब्धेस्त्वणुत्वमहत्त्वे तत्र भवत इति॥२६॥

## द्रव्यत्वगुणत्वप्रतिषेधो भावेन व्याख्यातः॥ २७॥

(उप०) द्रव्यादिभ्यः पञ्चभ्यो भेदं साधयन्नाह—द्रव्यत्वेति। भावः सत्ता, यथा सत्ता न द्रव्याद्यात्मिका विलक्षणबुद्धिवेद्यत्वात्—तथा समवायोऽपि तत एव द्रव्यादिभ्यो भिन्नः। द्रव्यत्वगुणत्वेत्युपलक्षणं कर्मत्वाद्यपि द्रष्टव्यम्॥ २७॥

(विवृ०) ननु समवायो द्रव्ये गुणादिषु वाऽन्तर्भवतु किं तस्यातिरिक्तपदार्थत्वकल्पनेनेत्यत आह—द्रव्यत्वेति। भावेन सत्तया द्रव्यत्वगुणत्वप्रतिषेधो द्रव्यत्वगुणत्वाभावो व्याख्यातः उक्तः। तथाच सत्ता यथा द्रव्यत्वगुणत्वशून्या विलक्षणबुद्धिविषयत्वात् समवायोऽपि विलक्षणबुद्धिविषयत्वान्न द्रव्यत्वादिमानित्यर्थः। इदमुपलक्षणं कर्मत्वादिप्रतिषेधोऽपि ज्ञेयः॥ २७॥

(भाष्यम्) तस्य खल्वेतस्य समवायस्य—*द्रव्यत्वगुणत्वप्रतिषेधो भावेन व्याख्यातः। नायं समवायो द्रव्यत्वं न गुणत्वम्। कया युक्त्या भावेन। यथा भावोऽनुवृत्तेरेव हेतुत्वान्न द्रव्यत्वं न गुणत्वं तथाऽयमपीति। द्रव्यत्वं नाम द्रव्यस्य भावः। स त्वनुवृत्तेर्हेतुर्द्रव्याणां व्यावृत्तेश्च गुणकर्मणोः। द्रव्यं हि द्रव्यभावेन गुणकर्मभ्यां व्यावृत्यते इति। तदेवं द्रव्यत्वमनुवृत्तेरेव न हेतुरिति। एतेन गुणत्वं व्याख्यातम्। समवायो यदि द्रव्यत्वं गुणेषु तेन व्यवहारो न स्याद्द्रव्येष्वेव स्यात्। अथ गुणत्वं गुणेष्वेव स्यान्न द्रव्येषु तस्मान्नायं द्रव्यत्वं न गुणत्वम्॥ २७॥

## तत्त्वं भावेन॥ २८॥

(उप०) एकत्वं साधयति—तत्वं भावेनेति। व्याख्यातमिति शेषः। तत्त्वमेकत्वं भावेन सत्तया व्याख्यातम्। यथैका सत्ता सर्वत्र सद्बुद्धिप्रवर्तिका तथैक एव समवायः सर्वत्र समवेतबुद्धिप्रवर्तकः स्वलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च। नहि समवायस्य विशेषलिङ्गं भेदकं लिङ्गमाकलयामो येन नानात्वमभ्युपगच्छामः, अत एव नित्यः देशकालादिभेदेऽप्यभिन्नस्य सत्तावदेवानित्यत्वायो-

गात्। ननु समवायो यद्यसंबन्ध एव तदा तन्तुपटयोः पटरूपयोर्वा विश्लेषः स्यादिति चेन्न युतसिद्ध्यभावाद्विश्लेषानुपपत्तेः। नहि रूपरूपवतोरवयवावयविनोर्वाऽसंबद्धयोर्विद्यमानत्वमस्ति येन विश्लेषः स्यात्, युतसिद्धिरेवापाद्यत इति चेन्न कदाचिदपि तथाऽननुभवेनापाद्यबाधात्। समवायो नानाऽनित्यश्चेति प्राभाकरास्तच्चानुपपन्नं रूपं नष्टमिति हि प्रत्ययो न तु रूपसमवायो नष्ट इति कस्यापि प्रत्ययः। प्रत्यक्षः समवाय इति नैयायिकास्तदप्यनुपपन्नं समवायोऽतीन्द्रियः आत्मान्यत्वे सत्यसमवेतभावत्वात् मनोवत् कालादिवद्वा ॥ २८ ॥

इति श्रीशाङ्करे वैशेषिकसूत्रोपस्कारे सप्तमाध्यायस्य द्वितीयमाह्निकम्।

( विवृ० ) समवायस्य नानात्वं निराकरोति—तत्त्वमिति। तत्त्वं तद्व्यक्तित्वमेकमात्रव्यक्तित्वमिति यावत् समवायस्येति शेषः, भावेनेति व्याख्यातमिति शेषः। यथा द्रव्यं सत् गुणः सन्कर्म सदित्येकाकारप्रतीतिविषयत्वान्नानात्वसाधकप्रमाणाभावाल्लाघवाच्च सत्ता एका, तथा घटः समवेतः पटः समवेत इत्याद्यनुगतप्रतीतिविषयत्वाद्भेदकप्रमाणाभावाल्लाघवाच्च समवायोऽप्येक एवेत्यर्थः। स च नित्यस्तस्योत्पादविनाशयोः प्रमाणाभावात्, तत्कल्पने कल्पनागौरवात्, समवायस्यैकत्वेन तन्नाशाभ्युपगमे तन्नाशदशायां नित्ये द्रव्ये द्रव्यत्वादेर्विशिष्टानुभवानुपपत्तेश्च। यत्तु नीलो नष्टः रक्त उत्पन्न इति प्रतीतिर्नीलादिसमवायविषयिणी समवायस्यानित्यत्वनानात्वसाधिकेति प्राभाकरमतं तन्मन्दम्। उक्तप्रतीतौ समवायस्यानुल्लेखात्। अन्यथा घटो नष्ट इत्यादिप्रतीतेरपि समवायविषयकत्वसंभवेन घटादेरपि नित्यत्वप्रसङ्गादिति। वैशेषिकमतानुयायिनस्तु समवायस्य प्रत्यक्षं न भवति समवायोऽतीन्द्रियश्चेतनान्यासमवेतभावत्वादाकाशादिवदित्यनुमानेन तस्यातीन्द्रियत्वसिद्धेरित्याहुः। न्यायमतानुयायिनस्तु इन्द्रियसंबद्धविशेषणताप्रत्यसत्त्या समवायस्य प्रत्यक्षं भवत्येव, अतीन्द्रियत्वसाधकोक्तानुमानस्याप्रयोजकत्वात्। समवायो लौकिकप्रत्यक्षविषयः योग्यप्रतियोगिकत्वे सति विशेषणतया योग्यवृत्तित्वाद्भूतलादिवृत्तिघटात्यन्ताभावादिवदित्यादेः प्रत्यक्षसाधकानुमानस्य सत्त्वाच्चेत्याहुरिति संक्षेपः ॥ २८ ॥

इति श्रीजयनारायणतर्कपञ्चाननभट्टाचार्यप्रणीतायां कणादसूत्रविवृतौ सप्तमाध्यायस्य द्वितीयमाह्निकम्।

(भाष्यम्) किन्त्वस्य—*तत्त्वं भावेन। तच्छब्देन सन्निकृष्टतरं गुणत्वं परामृश्यते। गुणत्वं तु समवायस्य भाववद्व्याख्यातं भवति।

---

१ यद्यय सबन्ध एवेति मु. पु. पाठ.।

अथापि खलु भवनं भावः गुणस्त्वयं भवति। द्रव्यं खल्वयमाश्रयति न त्वसौ रूपादिमान्न खल्वपि कर्म सोऽयमपृथग्भावात्मा पृथक्त्वप्रतिद्वन्द्वी गुणो विभागादिवदिति। अथाप्युपश्लेषविशेषोऽयं, गुण एव भवतीति। अथापि खलु तस्य भावस्तत्त्वं भावेन व्याख्यातम्। भावो यथा स्वयमेव भवति न भावान्तरमपेक्षते, तथा समवायोऽपि स्वयमेव भवत्याश्रयेषु न समवायान्तरमपेक्षते इति। अथापि खल्वस्य द्रव्यत्वगुणत्वप्रतिषेध इति प्रत्यवस्थानम्, गुणत्वमिति स्थापनेति। अथापि खल्विमौ पक्षप्रतिपक्षौ परत्वापरत्वगोचराविति॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये सप्तमस्याध्यायस्य द्वितीयमाह्निकम्।

समाप्तश्चायं सप्तमोऽध्यायः।

---

# अष्टमाध्याये प्रथमाह्निकम्।

## द्रव्येषु ज्ञानं व्याख्यातम् ॥ १ ॥

(उप०) शिष्यजिज्ञासानुरोधात्क्रमलङ्घनम्। इदानीमुद्देशक्रममालम्बते तत्र बुद्धिपरीक्षा अष्टमाध्यायार्थः। आत्मसाधनाय पूर्वं बुद्धिरुक्ता ता स्मारयन्नाह—द्रव्येष्विति। द्रव्येष्विति विषयेण विषयिणं तृतीयाध्यायमुपलक्षयति। 'इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः'। 'आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत्' इत्येताभ्यां सूत्राभ्यां ज्ञानं व्याख्यातमित्यर्थः। तत्र 'बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्यायाः' इति समानतन्त्रे बुद्धिलक्षणे सांख्यमतनिरासार्थं पर्यायाभिधानम्। सांख्या हि बुद्ध्यादिशब्दानामर्थभेदमाचक्षते तथाहि सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः। सा चैकैव, पुरुषास्तु परं भिद्यन्ते, ते च कूटस्था नित्या अपरिणामिनो नित्यचैतन्यस्वभावाः। ते च पङ्गवोऽपरिणामित्वात्, प्रकृतिस्त्वन्धा जडत्वात्। यदा विषयभोगेच्छा प्रकृतिपुरुषभेददिदृक्षा च प्रकृतेर्भवति तदा सा पुरुषोपरागवशात्परिणमते। तस्याश्चाद्यः परिणामो बुद्धिरन्तःकरणविशेषः। बुद्धिरेव महत्तत्त्वम्। तदुक्तम् 'प्रकृतेर्महान्'। इति। सा च बुद्धिर्दर्पणवन्निर्मला, तस्याश्च बहिरिन्द्रियप्रणाडिकया विषयाकारो यः परिणतिभेदो घट इति पट इत्याद्याकारस्तज्ज्ञानं वृत्तिरिति चाख्यायते, स्वच्छायां बुद्धौ वर्तमानेन ज्ञानेन चैतन्यस्य पुरुषस्य भेदा-

ग्रहादहं जानामीति योऽभिमानविशेषः सैवोपलब्धिः । स्रक्चन्दनादिविषयसन्निकर्षादिन्द्रियप्रणाडिकयैव सुखदुःखाद्याकारो बुद्धेरेव यः परिणामविशेषः स प्रत्ययः । अत एव ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नसंस्कारधर्माधर्माः सर्वे एव बुद्धेः परिणामविशेषाः सूक्ष्ममात्रया प्रकृतावेव वर्तमाना अवस्थभेदादाविर्भवन्ति तिरोभवन्ति च पुरुषस्तु पुष्करपलाशवन्निर्लेपः प्रतिबिम्बते परं बुद्धाविति यन्मन्यन्ते तदनेन पर्यायाभिधानसूचितप्रमाणेन निराक्रियते । तथाहि बुद्धिशब्दो यदि बुध्यतेऽनयेति करणव्युत्पन्नस्तदा मन एव तत्पर्यवस्यति न च मनः प्रत्यक्षम्, बुद्धिस्त्वहं बुध्ये इति प्रत्यक्षवेद्यैव, न चान्तःकरणस्य ज्ञानादयो धर्माः, कर्तृधर्मत्वेनैव तेषां सिद्धेः । भवति हि अहं जाने अहं प्रत्येमि अहमुपलभे इत्यहंत्वसामानाधिकरण्येन प्रतिभासः । अभिमानोऽसाविति चेत्तात्त्विकत्वे बाधकाभावात् । पुरुषस्यागन्तुकधर्मानाधारत्वं कूटस्थत्वं तदेव बाधकमिति चेन्नागन्तुकधर्माधारत्वेऽपि नित्यत्वसंभवात् । नहि धर्मी धर्मश्चेत्येकं तत्त्वं येन धर्मोत्पादविनाशावेव धर्म्युत्पादविनाशौ स्याताम् । तथाच य एव चेतयते स एव बुध्यते जानात्युपलभते प्रत्येति चेति नार्थान्तरकल्पना युक्तेति दिक् ॥ १ ॥

(विवृ०) दानार्द्रगण्डमभितो भ्रमतो द्विरेफा-
न्मूर्तानिवातिमलिनानखिलान्तरायान् ।
विद्रावयन् प्रचलपुष्करफूत्कृतेन
देवः स वारणमुखः शरणं ममास्तु ॥

परत्वापरत्वे परीक्ष्य शिष्यजिज्ञासानुरोधान्मध्ये समवायं परीक्ष्य उद्देशक्रममालम्ब्याष्टमे बुद्धिं परीचिक्षिषुः पूर्वोक्तां तां स्मारयति—द्रव्येष्विति । द्रव्येषु द्रव्यनिरूपणवाच्येषु तृतीयाध्याये इति यावत् ज्ञानं व्याख्यातं कथितम्, आत्मानुमापकत्वेनेति शेषः तच्चेदानी परीक्षणीयमितिभावः ॥१॥

(भाष्यम्) परीक्षिते परत्वापरत्वे स्थानवती बुद्धिरिदानी परीक्ष्यते । तत्र प्रत्यक्षं तावत्—*द्रव्येषु ज्ञानं व्याख्यातम् । महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिरित्यनेन द्रव्येषु प्रत्यक्षं ज्ञानं व्याख्यातमिति ॥ १ ॥

**तत्रात्मा मनश्चाप्रत्यक्षे ॥ २ ॥**

(उप०) तच्च ज्ञानं द्विविधं विद्या चाविद्या च, विद्या चतुर्विधा प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा, अविद्याऽपि चतुर्विधा संशयविपर्ययस्वप्नानध्यवसायलक्षणा, तत्र यल्लैङ्गिकं तदनिन्द्रियजम्, कुत एतदित्याह—

१ कुत्रतादिति लि. पु पाठः ।

तत्रेति। आत्माऽत्र परात्मा स्वात्मा वा स्वात्मनि मानसस्य क्वाचित्काहंप्रत्यस्याहं गौरः कृशो महाबाहुरित्यादिप्रत्ययतिरस्कृतत्वात्स्वात्मनोऽप्यप्रत्यक्षतोक्ता। चकारादाकाशकालदिशां वायोः परमाणूनां च द्रव्याणामुपग्रहः। इन्द्रियजमपि द्विविधं सर्वज्ञीयमसर्वज्ञी च। सर्वज्ञीयं योगजधर्मलक्षणया प्रत्यासत्त्या तत्तत्पदार्थसार्थज्ञानम्। तथाहि परमाणवः प्रत्यक्षाः प्रमेयत्वादभिधेयत्वात् सत्त्वात्। सामग्रीविरहात्कथमेवं महत्त्वस्यापि प्रत्यक्षं प्रति कारणत्वात्; न च परमाणवो महान्तः, रूपवत्त्वस्यापि चाक्षुषप्रत्यक्षकारणत्वात; न च दिगादयो रूपवन्त इति चेन्न। योगजधर्मसहकारिणा मनसैव तत्संभवात्तदुपग्रहाच्चक्षुरादिना वा, अचिन्त्यप्रभावो हि योगजो धर्मो न सहकार्यन्तरमपेक्षते। विवादाध्यासितः पुरुषो न सर्वज्ञः पुरुषत्वादहमिवेत्यादि तु, प्राभाकरो न मीमांसाभिज्ञः, पुरुषत्वादहमिवेत्यादिवद्विपक्षबाधकतर्कशून्यत्वादप्रयोजकम्। असर्वज्ञीयं च प्रत्यक्षं द्विविधं सविकल्पकं निर्विकल्पकं च, सविकल्पकं ज्ञानं न प्रमाणमिति कीर्तिदिङ्नागादयः। तथाहि अभिलापसंसर्गयोग्यप्रतिभासं हि तत्। नह्यभिलापेन नाम्ना संभवत्यर्थस्य संबन्धो येन घट इति पट इति वा नामानुरञ्जितः प्रत्ययः स्यात्। न च जात्यादि परमार्थसत्, येन तद्वैशिष्ट्यं विषयेषु इन्द्रियेण गृह्येत। न च सतः स्वलक्षणस्यासता संबन्धः संभवति, न चासत् इन्द्रियगोचरः, तस्मादिन्द्रियेणालोचनं जन्यते आलोचनमहिम्ना च सविकल्पकमुत्पद्यमानं तत्रार्थे प्रवर्तयत्प्रत्यक्षमिति प्रमाणमिति चोच्यते इति, तच्चैतदनुपपन्नमभिलापसंसर्गयोग्यप्रतिभासं च भवेत् प्रमाणं चेन्द्रियार्थसन्निकर्षजन्यं स्यादिति संदिग्धव्यतिरेकित्वं नाम, वैशिष्ट्यं च चाक्षुषज्ञाने संभवत्येव, सुरभिचन्दनमितिवदुपनीतभानसंभवात्। यद्वा संज्ञावैशिष्ट्यं प्रत्यक्षज्ञाने न भासते संज्ञायाः स्मरणमात्रम्, स्मृतैव सा अर्थव्यावर्तिका, अभावज्ञाने प्रतियोगिस्मरणवत्। जात्यादिकं च वस्तुभूतं साधितमेवातः सविकल्पकमपीन्द्रियार्थसन्निकर्षजत्वात् प्रत्यक्षम्। ननु निर्विकल्पकं न व्यवहारप्रवर्तकं न वा व्यवहारविषय इति। कित्वत्र प्रमाणमिति चेत् सविकल्पकमेव, तद्धि विशिष्टज्ञानम् न च विशेषणज्ञानमन्तरेण तदुत्पद्यते। विशिष्टज्ञाने हि विशेषणज्ञानविशेष्येन्द्रियसन्निकर्षतदुभयासंसर्गाग्रहस्य कारणत्वावधारणात् ॥ २ ॥

( विवृ० ) नन्वात्मनः प्रत्यक्षसिद्धत्वाज्ज्ञानस्य तल्लिङ्गतया पूर्वमभिधानमसङ्गतमत आह—तत्रेति। तत्र परशरीरे, अधिष्ठातृत्वं सप्तम्यर्थः

परशरीराधिष्ठातात्मा एवं मनश्च इमे द्वे अप्रत्यक्षे परात्ममनसोः प्रत्यक्षा-भावात्तयोरनुमानार्थं तृतीयाध्याये 'आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम्' इति सूत्रे 'इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थे-भ्योऽर्थान्तरस्य हेतुः' इति सूत्रे च ज्ञानं कथितमिति पर्यवसितार्थः । इदमुपलक्षणम्, शरीरादिभिन्नत्वेन स्वात्मनोऽप्यनुमानार्थम् 'कारणाज्ञा-नात्' इत्यादि सूत्रेऽपि ज्ञानं कथितमिति वेदितव्यम् ॥ २ ॥

( भाष्यम् ) आकाशं चेति चार्थः । द्रव्येष्वात्मा मन आकाशं च न प्रत्यक्षं भवतीति ॥ २ ॥

## ज्ञाननिर्देशे ज्ञाननिष्पत्तिविधिरुक्तः ॥ ३ ॥

( उप० ) यत्र यथा ज्ञानं यत्कारणकं च तद्विशदयितुमाह—ज्ञान-निर्देश इति । ज्ञानान्तरान्निर्देष्टव्यं यत्प्रकारकं यद्विषयकं यद्धर्मकं तत्र ज्ञाननिर्देशे कर्तव्ये ज्ञानस्य निष्पत्तिविधिरुत्पत्तिप्रकार उक्तः उच्यते इत्यर्थः आदिकर्मणि क्तविधानात् ॥ ३ ॥

( विवृ० ) ननु ज्ञानस्य किं कारणमित्याकाङ्क्षायामाह—ज्ञानेति । ज्ञाननिर्देशे तृतीयाध्याये यत्र ज्ञानस्य निर्देशः कृतस्तत्रैव तन्निष्पत्तिवि-धिस्तदुत्पत्तिविधानं उक्तः 'आत्मेन्द्रियार्थसन्निकर्षान्निष्पद्यते तदन्यत्' इति सूत्रे ज्ञानस्य कारणान्युक्तानीत्यर्थः । तथाचात्मा ज्ञानस्य समवायिकार-णम्, आत्ममनःसंयोगोऽसमवायिकारणम्, विषयसन्निकर्षो निमित्त-कारणमिति तस्मिन् सूत्र एवोक्तमिति, प्रत्यक्षमधिकृत्य सन्निकर्षस्य हेतुता कथितेति वेदितव्यम् ॥ ३ ॥

( भाष्यम् ) यथा चेदं ज्ञानं निष्पद्यते, सोऽयम्—*ज्ञाननिर्देशे ज्ञान-निष्पत्तिविधिरुक्तः । ज्ञानस्य निर्देशो यत्र कृतस्तत्रैव आत्मेन्द्रियमनोर्थ-सन्निकर्षाद्यन्निष्पद्यते इत्यनेन ज्ञानस्य निष्पत्तिविधिरुक्तः ॥ ३ ॥

## गुणकर्मसु सन्निकृष्टेषु ज्ञाननिष्पत्तेर्द्रव्यं कारणम् ॥ ४ ॥

( उप० ) कीदृशो निष्पत्तिविधिस्तमाह—गुणकर्मस्विति । गुणेषु रूपा-दिषु कर्मसु चोत्क्षेपणादिषु यज्ज्ञानं निष्पद्यते तत्र द्रव्यं कारणं योग्य-द्रव्यनिष्ठमेव तदुभयं गृह्यत इति द्रव्ययोग्यतैव तत्र तन्त्रम्, सन्निकर्षश्च तेषां द्रव्यघटित एव, संयुक्तसमवायेन तेषां ग्रहणात् । यद्यपि विषक्तच-म्पकावयवकर्पूरभागानामयोग्यानां गन्धो गृह्यते तथापि सन्निकर्षघटकं तत्रायोग्यमपि द्रव्यमेव । यद्यपि शब्दग्रहे द्रव्ययोग्यता न तन्त्रं तथापि

तत्रैव समवेतः शब्दो गृह्यत इति तदेव तन्त्रम् । नन्वदृष्टसन्निकर्षकल्पना कुतः क्रियते इति चेन्न, ज्ञाननिष्पत्तेः, कार्येण हि कारणमवश्यं कल्पनीयमिति भावः ॥ ४ ॥

( विवृ० ) सन्निकर्षेऽपि विशेषमाह—गुणकर्मस्विति । सन्निकृष्टेषु गुणकर्मसु यज्ज्ञानमुत्पद्यते तत्र द्रव्यं द्रव्यघटितसंनिकर्षः इन्द्रियसंयुक्तद्रव्यसमवायः कारणं तथाच द्रव्यप्रत्यक्षे इन्द्रियसंयोगस्य हेतुता । द्रव्यसमवेतस्य गुणादेः प्रत्यक्षे तु इन्द्रियसंयुक्त द्रव्यसमवायः । शब्दरूपद्रव्यसमवेतप्रत्यक्षे श्रवणसमवायः, कारणं सर्वत्रैव द्रव्यघटितः सन्निकर्षो हेतुरित्यर्थः । तत्रापि चाक्षुषे त्वाचे च द्रव्यस्य योग्यताऽपेक्षितेति विशेषः॥४॥

(भाष्यम्) विशेषस्तु तत्रोच्यते—*गुणकर्मसु सन्निकृष्टेषु ज्ञाननिष्पत्तेर्द्रव्यं कारणम् । सन्निकृष्टेषु गुणकर्मसु ज्ञानं निष्पद्यते नासन्निकृष्टेषु । ततो विज्ञायते द्रव्यं तत्र हेतुरिति । द्रव्याधीनो हि तेषु सन्निकर्षः । द्रव्येषु खल्वेतानि गृह्यन्ते इति ॥ ४ ॥

**सामान्यविशेषेषु सामान्यविशेषाभावात्तत एव ज्ञानम् ॥ ५ ॥**

( उप० ) अपरं ज्ञाननिष्पत्तिविधिमाह—सामान्येति । सामान्यं सत्ता तस्य विशेषा द्रव्यत्वगुणत्वकर्मत्वानि एवमेतेषामपि सामान्यानां विशेषाः पृथिवीत्वादिरूपत्वाद्युत्क्षेपणत्वादीनि । तत्र द्रव्यगतानां सामान्यान तत एव योग्याश्रयविशेषादेव तन्निबन्धनाच्च संयुक्तसमवायात् गुणकर्मगतानामपि सामान्यानां तत एव योग्याश्रयादेव तन्निबन्धनाश्च संयुक्तसमवेतसमवायात्समवेतसमवायाच्च सार्वेन्द्रियं ज्ञानं गुणत्वे च संयुक्तसमवेतसमवायाच्छब्दत्वकत्वादौ समवेतसमवायात् सत्तायाश्च संयुक्तसमवायात् संयुक्तसमवेतसमवायात् समवेतसमवायाच्च सार्वेन्द्रियं ज्ञानम् । गुणत्वे च संयुक्तसमवायः समवायश्च न प्रत्यासत्तिरिति । ननु तत एव स्वाश्रयसन्निकर्षादेवेत्यवधारणानुपपत्तिः, यतः सामान्ये विशेषेषु च पृथिवीत्वादिषु सामान्यविशेषान्तरमस्त्येव तत्सनिकर्षोऽपि कारणमेवात आह—सामान्यविशेषाभावादिति । नहि सामान्यविशेषेषु सामान्यविशेषा वर्तन्तेऽनवस्थाप्रसङ्गात्; तेषां परस्परं भेदप्रतीतिः स्वरूपत एव, गवेतरावृत्तित्वे सति सकलगोवृत्तित्वलक्षणोपाधिसंभेदाद्वा । एवं घटत्वादावपीति ॥ ५ ॥

( विवृ० ) सामान्यप्रत्यक्षेऽपि द्रव्यघटितसन्निकर्षः कारणमित्याह—सामान्येति । सामान्यं सत्ता विशेषो द्रव्यत्वादि तेषु यज्ज्ञानं जायते तत्तत एव द्रव्यघटितसन्निकर्षादेव । ननु द्रव्यवत्केवलेन्द्रियसन्निकर्षेण कथं

सामान्यानि न गृह्यन्ते इत्यत आह—सामान्यविशेषाभावादिति। सामान्यविशेषो द्रव्यत्वं तदभावात्। तथाच सामान्यानां द्रव्यत्वशून्यतया इन्द्रियसंयोगस्यासंभवेन द्रव्याघटितसन्निकर्षग्राह्यत्वात्। द्रव्यघटितसन्निकर्षग्राह्याण्येव सामान्यानीति भावः ॥ ५ ॥

( भाष्यम् ) सामान्यविशेषेषु न खल्वन्ये सामान्यविशेषा भवन्तीति तेषु ज्ञानं तत एव निष्पद्यते, न तत्र सामान्यविशेषान्तरापेक्षेति ॥ ५ ॥

## सामान्यविशेषापेक्षं द्रव्यगुणकर्मसु ॥ ६ ॥

( उप० ) ननु सामान्यविशेषेषु सामान्यविशेषाभावाद्यथा तन्निरपेक्षमेव ज्ञानं तथा द्रव्यगुणकर्मस्वपि किं तन्निरपेक्षमेव, नेत्याह—सामान्येति। ज्ञानमुत्पद्यते इति प्रकृतम्, तथाहि—द्रव्यगुणकर्मसु द्रव्यत्वगुणत्वकर्मत्वविशिष्टबुद्धिस्तावदस्ति विशिष्टज्ञानं च विशेष्यविशेषणेन्द्रियसन्निकर्षादुत्पद्यते इति सामान्यविशेषापेक्षा तत्रावश्यकी। भवति हि द्रव्यमिदं गुणोऽयं कर्मेदमिति विशिष्टज्ञानमिति भावः ॥ ६ ॥

( विवृ० ) द्रव्यगुणकर्मप्रत्यक्षे कंचिद्विशेषमाह—सामान्येति। द्रव्यगुणकर्मसु यत्प्रत्यक्षात्मकं ज्ञानं जायते तत्सामान्यविशेषापेक्षं जातिविशेषप्रकारकं तेषां सामान्यानामिव स्वरूपतो भानासंभवादित्यर्थः ॥ ६ ॥

(भाष्यम्) ज्ञानं निष्पद्यते। तेषु खलु सामान्यविशेषा भवन्तीति॥६॥

## द्रव्ये द्रव्यगुणकर्मापेक्षम् ॥ ७ ॥

( उप० ) तत् किं द्रव्येऽपि सामान्यविशेषमात्रापेक्षमेव ज्ञानमत आह—द्रव्य इति। ज्ञानमुत्पद्यते इति प्रकृतम्। घण्टावान् शुक्लो गौर्गच्छतीति ज्ञानम्। तत्र द्रव्यं घण्टा विशेषणम्, शुक्लः इति गुणः, गच्छतीति कर्म, तथाच नागृहीतविशेषणा विशिष्टप्रतीतिर्न वा विशेषणसंबन्धमन्तरेणेति भवति द्रव्यज्ञाने द्रव्यगुणकर्मापेक्षेति भावः ॥ ७ ॥

( विवृ० ) ननु शुक्लोऽयमित्यादिप्रत्यक्षस्याऽप्यनुभवसिद्धत्वात्, तत्र च जातेरप्रकारकत्वात्कथं द्रव्यगुणकर्मस्वित्यविशेषेणोक्तमत आह—द्रव्य इति। द्रव्ये यत्प्रत्यक्षं जायते तद्द्रव्यगुणकर्मापेक्षं द्रव्यगुणकर्माणि विशेषणविधयाऽपेक्षते, द्रव्यगुणकर्मप्रकारकमपीति पर्यवसितार्थः। तथाचायं दण्डवान्, अयं शुक्लः अयं चलतीत्यादिप्रत्यक्षमिदमंशे द्रव्यादिप्रकारकमपि संभवतीति भावः ॥ ७ ॥

( भाष्यम् ) ज्ञानं निष्पद्यते इति प्रकृतम् । दण्डी शुक्लश्चल इत्युदाहरणम् ॥ ७ ॥

**गुणकर्मसु गुणकर्माभावाद्गुणकर्मापेक्षं न विद्यते ॥ ८ ॥**

( उप० ) तत् किं गुणकर्मणोरपि गुणकर्मापेक्षा नेत्याह–गुणकर्मस्विति । ज्ञानमिति शेषः । गुणे गुणविशिष्टबुद्धेः कर्मसु कर्मविशिष्टबुद्धेरभावाद्गुणकर्मापेक्षा न तदुभयबुद्धिः । नहि गुणे गुणो, न वा कर्मसु कर्म, येन तत्र विशेषणत्वेन भासेतेति भावः ॥ ८ ॥

( विवृ० ) गुणकर्मप्रत्यक्षं तु गुणकर्मप्रकारकं न भवतीत्याह–गुणकर्मस्विति । गुणकर्मसु विशेष्येषु गुणकर्मापेक्षं गुणकर्मप्रकारकं प्रत्यक्षज्ञानं न विद्यते । कुत इत्यत आह–गुणकर्माभावाद्गुणकर्मसु गुणकर्माभावादित्यर्थः । तथाचाभ्रान्तस्य तादृशज्ञानं न संभवत्येवेति भावः ॥ ८ ॥

( भाष्यम् ) गुणेषु कर्मसु च गुणः कर्म च न भवत्यन्यत्र संख्यादिभ्यः । अतो गुणेषु कर्मसु च भवद्गुणकर्मापेक्षं ज्ञानं नास्तीति ॥ ८ ॥

**समवायिनः श्वैत्याच्छ्वैत्यबुद्धेश्च श्वेते बुद्धिस्ते[1] एते कार्यकारणभूते ।**

( उप० ) ननु गुणकर्मणोः स्फुरणाद्गुणबुद्धौ कर्मबुद्धौ च कथं न गुणकर्मापेक्षेत्याशङ्क्य प्रकरणान्तरमारभते—समवायिन इति । समवायिन इत्यभिधानात् संबन्धस्य कारणतामाह तथाच गुणे गुणसमवायाभावात्, कर्मसु कर्मसमवायाभावाच्च न तत्तज्ज्ञाने गुणकर्मापेक्षा विशेषणत्वेन, विशेष्यत्वेन त्वस्त्येव । एवं च श्वेतः शङ्ख इत्यादिप्रतीतौ श्वैत्यसमवायस्य श्वैत्यगुणस्य श्वैत्यविशेषणज्ञानस्य च कारणत्वमित्युक्तं, तथाच विशेषणसंबन्धविशेषणतज्ज्ञानाना विशिष्टप्रत्यक्षप्रमां प्रति कारणत्वमिति । तेन पूर्वोक्तं सर्वं सिध्यति ॥ ९ ॥

( विवृ० ) ननु गुणकर्मसु गुणकर्माभावेऽपि विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वात् । गुणकर्मज्ञानदशायां गुणकर्मसु तद्विशिष्टबुद्धिर्दुर्वारैवेत्यत आह–समवायिन इति । समवायिनः श्वैत्यसमवायिनः श्वैत्याच्छुक्लरूपात् श्वैत्यबुद्धेः शुक्लरूपात्मकविशेषणबुद्धेश्च श्वेते शुक्लरूपवति शङ्खादौ बुद्धिः शुक्लोऽयमिति शुक्लरूपविशेषणिका प्रत्यक्षप्रमितिर्भवति अतस्ते शुक्लरूपवत्त्वशुक्लरूपबुद्धी कार्यस्य शुक्लरूपप्रकारकप्रत्यक्षप्रमात्मकस्य कारणभूते इत्यर्थः । तथाच समवायसंबन्धेन शुक्लरूपप्रकारकप्रत्यक्षप्रमां प्रति शुक्लरूपवत्त्वं शुक्लरूपज्ञानं च द्वयमेव तन्त्रमिति गुणकर्मसु गुणकर्मरूपविशेषण-

---

१ त एते इत्यादि पृथक्सूत्रं चन्द्रकान्तमते ।

विरहान्न तत्प्रकारकप्रत्यक्षप्रमितिरिति भावः। समवायसंबन्धेन श्वैत्यवत्त्वस्य तन्त्रतासूचनाय सूत्रे समवायिन इत्युक्तमिति ॥ ९ ॥

( भाष्यम् ) श्वेते वस्तुनि येयं बुद्धिरुत्पद्यते, सा खलु श्वैत्यसमवायिनो द्रव्यस्य यत् श्वैत्यं श्वेतो नाम गुणः या च तद्बुद्धिः ताभ्यामुत्पद्यते। कस्मात्? जवाकुसुमादिषु तदनुपलब्धेः श्वैत्यमनुपलभमानस्य तदनुपलब्धेश्चेति ॥ ९ ॥ यच्चैतत्समवायिनो द्रव्यस्य श्वैत्यं या च तद्बुद्धिः—*ते एते कार्यकारणभूते। कार्यस्य श्वेतबुद्धेः कारणभूतमेतद्द्वयमिति। अथापि खलु श्वैत्यबुद्धिः श्वेतबुद्धिश्चेति ये द्वे बुद्धी ते खलु कार्यकारणभूते। तयोः पूर्वा बुद्धिः कारणमुत्तरा बुद्धिः कार्यमिति। तदेवं श्वेतबुद्धिः श्वैत्यबुद्धिं कारणतयाऽपेक्षते न गोचरतयेति ॥ १० ॥

**द्रव्येष्वनितरेतरकारणाः ॥ १० ॥**

( उप० ) ननु यथा घण्टावानित्यत्र द्रव्यापेक्षं द्रव्यज्ञानम्, तथाऽयं स्तम्भो, अयं कुम्भ इत्यादावपि द्रव्याविशेणकबुद्धौ द्रव्यबुद्धिः कारणं, तथाच क्वापि प्रथमतो द्रव्यबुद्धिर्न स्यादित्यत आह—द्रव्येष्विति। बुद्धय इति शेषः। स्तम्भज्ञानानन्तरकालीनमपि कुम्भज्ञानं न स्तम्भज्ञानकार्यं स्तम्भस्य कुम्भं प्रति विशेषणत्वायोगात् ॥ १० ॥

( विवृ० ) ननु अयं घट इति प्रत्यक्षानन्तरमयं पट इति प्रत्यक्षं यत्र जायते तत्र घटज्ञानं पटज्ञाने कारणं तत्पूर्ववर्तित्वात्। तथाच घटज्ञानं विना पटज्ञानं कदाऽपि न स्यादिति तटस्थाशङ्कां निरस्यति—द्रव्येष्विति। द्रव्येषु पूर्वोत्तरभावापन्नद्रव्याविशेषणकद्रव्यबुद्धिषु अनितरेतरकारणाः, न परस्परकारणाः बुद्धय इति पूरणीयं तथाच घटज्ञानस्य पटज्ञानपूर्ववर्तित्वेऽपि नियतपूर्ववर्तित्वाभावान्न कारणत्वमिति भावः ॥ १० ॥

( भाष्यम् ) अथापि यथा श्वैत्यबुद्धेः श्वेतबुद्धेश्च क्रमभावात्कार्यकारणभावस्तथा क्रमेण भवन्तीनां घटपटादिबुद्धीनामपि कार्यकारणभावः प्रसज्यते इत्यत आह—*द्रव्येष्वनितरेतरकारणाः। या इमा घटपटादिबुद्धयो द्रव्येषु भवन्ति तास्वितरा बुद्धिर्नेतरस्याबुद्धेः कारणम्। यत्र त्वेकं द्रव्यमपरेण द्रव्येण विशिष्यते, तत्र श्वेतबुद्धिवद्विशेष्यद्रव्यबुद्धौ विशेषणद्रव्यबुद्धिः कारणमिति द्रव्येषु द्रव्यापेक्षमित्युक्तम् ॥ ११ ॥

**कारणायौगपद्यात्कारणक्रमाच्च घटपटादिबुद्धीनां क्रमो न हेतुफलभावात् ॥ ११ ॥**

( उप० ) ननु घटपटादिबुद्धीना क्रमो दृश्यते क्रमश्च कार्यकारणभावघटित एवेत्यत आह—कारणेति । कारणक्रमाधीनो घटपटादिबुद्धीनां क्रमो न हेतुफलभावाधीनः । कारणक्रम एव कथमत आह कारणायौगपद्यादिति । बुद्धीनां यौगपद्यं प्रतिषिद्धमतो नानाबुद्धिकारणानामपि न यौगपद्यम् । यदि तु कारणयौगपद्यं भवेत्तदा कार्ययौगपद्यमप्यापद्येत । तथाच युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति बहु भज्येतेति भावः ॥ ११ ॥

इति श्रीशांकरे वैशेषिकसूत्रोपस्कारेऽष्टमाध्यायस्य प्रथममाह्निकम् ।

( विवृ० ) नन्वेवं तत्र घटज्ञानमेव कथं न पटमालम्बते कार्यकारणभावमन्तरेण तयोः क्रमस्यासंभवादित्यत आह—कारणेति । घटपटादिबुद्धीनां क्रमः पौर्वापर्यरूपः न हेतुफलभावान्न कार्यकारणभावात्, किं तु तादृशबुद्धिकारणानां घटपटादिसन्निकर्षादीनां क्रमात् पौर्वापर्याच्चकारोनुक्तमयौगपद्यं समुच्चिनोति । अयं चकारः 'क्रम' इत्यनन्तरं योजनीयः । एवं च घटपटादिबुद्धीनामयौगपद्यं तत्कारणानां सन्निकर्षादीनामयौगपद्यादित्यर्थः । यत्र तु घटपटसन्निकर्षादीनामस्ति यौगपद्यं तत्र युगपदेव सन्निकृष्टयावत्पदार्थविषयिणी समूहालम्वनात्मिका बुद्धिरुत्पद्यते इति कारणयौगपद्यात्कार्ययौगपद्यं कारणाक्रमात्कार्याक्रमश्चेत्यपि बोद्धव्यम् । बुद्धिः प्रथमतो द्विविधा अनुभूतिः, स्मृतिश्च । अनुभूतिरपि कणादमते द्विविधा प्रत्यक्षानुमितिभेदात् । प्रत्यक्षमपि घ्राणजादिभेदेन षड्विधं, सविकल्पकनिर्विकल्पकभेदेन च द्विविधं लौकिकालौकिकभेदेन द्विविधं च अनुमित्तिरपि केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिरूपत्रिविधानुमानजन्यत्वात्रिविधा । तत्रेदं वाच्यं ज्ञेयत्वादित्यादिकं केवलान्वय्यनुमानम्, पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादित्यादिकं केवलव्यतिरेक्यनुमानम्, अन्वयव्यतिरेक्यनुमानं तु पर्वतो वह्निमान् धूमादित्यादिकमिति। स्मृतिश्चोपेक्षानात्मकनिश्चयाधीनसमानाकारकभावनाख्यसंस्काराधीना एकविधैव प्रकारान्तरेणापि बुद्धिर्द्विविधा प्रमाऽप्रमाचेति । तद्वति तत्प्रकारिका बुद्धिस्तत्प्रमा तदभाववति तत्प्रकारिका बुद्धिस्तदप्रमा, संशयनिश्चयभेदेनापि बुद्धिर्द्विविधा । तत्रैकधर्मिणि विरुद्धभावाभावप्रकारकज्ञानं संशयः तदभावाप्रकारकं तत्प्रकारकं ज्ञानं तन्निश्चयः । एतन्मते सादृश्यज्ञानस्थले पदज्ञानस्थले च तदुत्तरं लिङ्गपरामर्शोत्पत्त्यैवानुमितिर्भवति । प्रमाणं

द्विविधं प्रत्यक्षमनुमानं चेति यथार्थानुभवश्च प्रमा एतच्चाग्रे सूत्रकृदेव वक्ष्यतीति संक्षेपः ॥ ११ ॥

इति श्रीजयनारायणतर्कपञ्चानन-भट्टाचार्य-प्रणीताया कणादसूत्रविवृतौ अष्टमाध्यायस्याद्यमाह्निकम् ।

( भाष्यम् ) यदि घटपटादिबुद्धिष्वितरा बुद्धिरितरस्यां बुद्धौ न कारणं क्रमस्तर्हि तासां नोपपद्यते इत्यत आह—*कारणायौगपद्यात्कारणक्रमाच्च घटपटादिबुद्धीनां क्रमो न हेतुफलभावात् । अक्रमादक्रम इति चार्थः । योऽयं घटपटादिबुद्धीनां क्रमः, नासौ तासां कार्यकारणभावाद्भवति, किंतु बुद्धिकारणानां सन्निकर्षाणां क्रमात् । कथं कारणक्रमः ? सन्निकर्षकारणानां प्रणिधानादीनामयौगपद्यात्क्रमभावात् । अक्रमादक्रमः खल्वपि । युगपत्प्रणिधानादिना सन्निकर्षयौगपद्ये युगपद्बुद्धयो भवन्तीति ॥ १२ ॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये अष्टमस्याध्यायस्याद्यमाह्निकम् ।

---

# अष्टमाध्याये द्वितीयाह्निकम् ।

## अयमेष त्वया कृतं भोजयैनमिति बुद्ध्यपेक्षम् ॥ १ ॥

( उप० ) प्रात्यक्षिकस्य सविकल्पकस्य निर्विकल्पकस्य च ज्ञानस्य निष्पत्तिविधिमभिधायेदानीं विशिष्टवैशिष्ट्यप्रत्यक्षमभिधातुमेकदेशमाह—अयमिति । सन्निकृष्टे वस्तुनि तावदयमिति बुद्धिरुत्पद्यते, विप्रकृष्टे च वस्तुन्येष इति, क्रियायां स्वतन्त्रोऽयमिति बुद्धिमपेक्ष्य त्वयेति कर्तृत्वोपरक्ता बुद्धिः, करणव्यापारविषयत्वबुद्धिमपेक्ष्य कृतमिति कर्मबुद्धिः, अयं भुजिक्रियायां कर्ता प्रयोजकश्चायमिति बुद्धिमपेक्ष्य भोजयेति, नियोज्यनियोक्तृव्यापारस्य विषयोऽयमिति बुद्ध्यपेक्षमेनमिति एवमन्यदपि बुद्ध्यपेक्षमूहनीयम् ॥ १ ॥

( विवृ० ) बुद्धिविशेषणिका अपि काश्चिद्बुद्धयो भवन्तीत्याह—अयमेष इति । अयं घट एष पट इति ज्ञानं बुद्ध्यपेक्षं बुद्धिविशेषणकमिदमेतदोः प्रत्यक्षविषये शक्तत्वात् प्रत्यक्षरूपा बुद्धिस्तादृशज्ञाने विशेषणम् । युष्मच्छब्दस्य स्वजन्यबोधाश्रयतया वक्तुरभिप्रायविषये शक्तत्वात्, त्वया कृतमिति वाक्यजन्यं ज्ञानं बुद्धिविशेषणकं भोजयैनमिति । इदमर्थकैनशब्दजन्यज्ञानमपि प्रत्यक्षात्मकबुद्धिविशेषणकमत एव 'विद्यामथैनं विजयां

जयां च' इति भट्टिकाव्यम् । यद्वा उक्तस्य पश्चादुक्तौ इदंशब्दस्य एनादेशः तादृशस्य च पूर्वोत्पन्नशाब्दबोधविषयबोधकत्वात् तज्जन्यज्ञानं बुद्धिविशेषणकमेवेति । शिष्यव्युत्पादनार्थं कतिपयप्रयोगप्रदर्शनमिति ॥ १ ॥

( भाष्यम् ) बुद्ध्यपेक्षज्ञानस्योदाहरणम्—*अयमेष त्वया कृतं भोजयैनामिति बुद्ध्यपेक्षम् । अयमेष त्वयैनमिति बुद्ध्यपेक्षं ज्ञानम् ॥१॥

## दृष्टेषु भावाददृष्टेष्वभावात् ॥ २ ॥

( उप० ) अन्वयव्यतिरेकपरिच्छेद्यमेवैतदित्याह—दृष्टेष्विति । यदाऽयमिति बुद्धेः सन्निकृष्टो विषयः, एष इति बुद्धेर्विप्रकृष्टोऽपि बुद्ध्यारूढो विषयः, त्वयेति बुद्धेः सन्निकृष्टः कर्ता विषयः, कृतमिति बुद्धेः कर्म विषयः, भोजयेति बुद्धेर्नियोज्यनियोक्तारौ विषयौ, एनमिति बुद्धेस्तदुभयव्यापारो विषयः, सन्निकृष्टो भवति तदैतादृशी बुद्धिरुत्पद्यते । अदृष्टेषु तु विषयेषु नैता बुद्धयः प्रादुर्भवन्तीत्यन्वयव्यतिरेकगम्यमेवैतादित्यर्थः ॥ २ ॥

( विवृ० ) एतेषां पदानां ज्ञानघटितधर्मावच्छिन्ने शक्तिरन्वयव्यतिरेकगम्येत्याह—दृष्टेष्विति । दृष्टेषु ज्ञातेषु ज्ञानघटितधर्मावच्छिन्नेष्विति यावत् । भावादिदमादिशब्दप्रयोगस्य सत्त्वात्, अदृष्टेषु अज्ञातेषु ज्ञानघटितधर्मानवच्छिन्नेष्विति यावत् । तादृशप्रयोगस्यासत्त्वाद्बुद्धिघटितधर्मावच्छिन्न एव तेषां शक्तिरित्यर्थः ॥ २ ॥

( भाष्यम् ) कस्मात्—* दृष्टेषु भावाददृष्टेष्वभावात् । ज्ञातेष्वेतानि ज्ञानानि भवन्ति अज्ञातेषु तु न भवन्तीति । अयमित्येष इति चैते प्रत्यक्षविषये ज्ञाने । त्वयेत्येनमिति चैतयोर्बुद्धिगोचरो विषय इति ॥२॥

## अर्थ इति द्रव्यगुणकर्मसु ॥ ३ ॥

( उप० ) इदानी प्रकरणान्तरमारभते—अर्थ इति । एतेषां द्रव्यगुणकर्मणामर्थ्यमानत्वं तेन तेन विधिनोक्तं तेन तेषु त्रिषु वैशेषिकाणामर्थ इति परिभाषा, अर्थपदेन त्रयाणामुपस्थितेः । तदुक्तं प्रशस्तदेवाचार्यैः 'त्रयाणामर्थशब्दाभिधेयत्वं च' इति ॥ ३ ॥

( विवृ० ) अर्थपदपरिभाषां दर्शयति—अर्थ इति । अर्थ इति शब्दो द्रव्यगुणकर्मसु वर्तते सच तत्र पारिभाषिकः गौतमीये तु 'रूपरसगन्धस्पर्शाः पृथिव्यादिगुणास्तदर्थाः' इति प्रमेयान्तःपातिनोऽर्थस्य लक्षणसूत्रम्, अतः पञ्चेन्द्रियग्राह्येषु पञ्चसु गुणेष्वपि अर्थशब्दस्य परिभाषान्तरं समानतन्त्रासिद्धम् ॥ ३ ॥

( भाष्यम् ) अथापि खल्वन्ये द्रव्यगुणकर्मभ्यो येऽर्थास्तेषु यतो ज्ञानं निष्पद्यते तद्वक्तव्यमित्यत आह—*अर्थ इति द्रव्यगुणकर्मसु। द्रव्यगुणकर्माण्येवार्था वस्तूनि न त्वेतेभ्योऽन्यदस्ति वस्तु यत्र ज्ञाननिष्पत्तिविधिर्वक्तव्य इति । रूपरसगन्धस्पर्शाः पृथिव्यादिगुणास्तदर्था इति तन्त्रान्तरोक्तं परिभाषामात्रम् । विपर्यये त्वेतदनर्थकं स्यादिति । अथापि खल्विन्द्रियार्थसन्निकर्षात्प्रत्यक्षनिष्पत्तिः, तत्राविशेषात्सर्वैरिन्द्रियैः सर्वेषां विषयाणां ग्रहणं स्यात् ॥ ३ ॥

## द्रव्येषु पञ्चात्मकत्वं प्रतिषिद्धम् ॥ ४ ॥

( उप० ) प्रकरणान्तरमवतारयति—द्रव्येष्विति । द्रव्येष्विति द्रव्यपदार्थनिरूपणप्रकरणमुपलक्षयति प्रत्यक्षाप्रत्यक्षाणामित्यादिसूत्रेण शरीरादीनां पञ्चात्मकत्वं पञ्चभूतात्मकत्वं प्रतिषिद्धं निराकृतम् । यथा शरीरस्य न नानाप्रकृतिकत्वं तथा वक्ष्यमाणानां घ्राणादीनामिन्द्रियाणामपि, तेन तेषां प्रतिनियतगुणग्राहकत्वं सिध्यतीति भावः ॥ ४ ॥

( विवृ० ) किमिन्द्रियं किंप्रकृतिकं किमर्थग्राहकमित्यभिधातुं पीठं रचयति—द्रव्येष्विति । द्रव्येषु द्रव्यनिरूपणसूत्रेषु पञ्चात्मकत्वं पञ्चभूतप्रकृतिकत्वं प्रतिषिद्धं निराकृतम्। तथाच शरीरादिकं किंचिदपि द्रव्यं न पञ्चभूतप्रकृतिकं किन्त्वेकैकभूतप्रकृतिकान्येव सर्वाणि शरीराणीन्द्रियाणि चेति भावः ॥ ४ ॥

( भाष्यम् ) यस्मात्—*द्रव्येषु पञ्चात्मकत्वम्। एकैकभूतोपादानानि महाभूतानि प्रत्येकं पञ्चात्मकानि भवन्ति । अणुसंयोगस्याप्रतिषेधात् । तत्रैवं सति इन्द्रियाणां विषयग्रहणव्यवस्था न प्राप्नोति । सर्वत्र सर्वेषां सद्भावात् सर्वेण सर्वस्य ग्रहणप्रसङ्ग इति ॥ ४ ॥

## भूयस्त्वाद्गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः ॥ ५ ॥

(उप०) यदर्थमिदमारब्धं तदाह—भूयस्त्वादिति।गन्धो ज्ञायतेऽनेनेति गन्धज्ञानं घ्राणं तत्र पृथिवी पृथिवीमात्रं प्रकृतिः उपादानकारणम् । कुत एतदित्यत आह—गन्धवत्त्वात् । नहि गन्धवद् निर्गन्धेनारभ्यते इत्युक्तम् । गन्धवत्त्वं च बहिरिन्द्रियाणां ग्राह्यजातीयगुणवत्त्वनियमात्सिद्धम्। तर्हि पार्थिवत्वाविशेषेऽपि शरीरावयवान्तराणां न गन्धव्यञ्जकत्वं किंतु

१ द्रव्येषु पंचात्मकत्वमित्येतावदेव सूत्रं चन्द्रकान्तमते ।

घ्राणस्यैवेति कुतो नियम इत्यत आह भूयस्त्वादिति। इतरद्रव्यानभिभूतैः पार्थिवावयवैरारब्धत्वमेव भूयस्त्वं पारिभाषिकं चैतद्भूयस्त्वं समानतन्त्रेऽपि५

( विवृ० ) एवं घ्राणेन्द्रियं गुणेषु गन्धमात्रग्राहकं पृथिवीमात्रप्रकृतिकं चेत्याह–भूयस्त्वादिति। गन्धस्य ज्ञानं प्रत्यक्षं यस्मात् तद्गन्धज्ञानं घ्राणेन्द्रियं, तत्र पृथिवी तन्मात्रम्, प्रकृतिः समवायिकारणम्, भूयस्त्वात् जलाद्यनभिभूतभागारब्धात्वाद्गन्धवत्त्वाच्च रसाद्यग्राहकत्वात् घ्राणेन्द्रियं न जलाद्यारब्धम्, गन्धवत्त्वं चात्र ग्राहकतासंबन्धेनैव गन्धग्राहकत्वादिति फलितार्थः। तथाच घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात् कुङ्कुमगन्धाभिव्यञ्जकघृतादिवदित्यनुमानेन घ्राणस्य पृथिव्युपादानकत्वं सिध्यतीति भावः। एतच्च स्पष्टार्थमत्रोक्तम् ॥ ५ ॥

( भाष्यम् ) अस्योत्तरम्—*भूयस्त्वाद्गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः। गन्धोपलब्धौ पृथिवी कारणम्। कस्मात्? गन्धवत्त्वात्। गन्धो नाम गुणः पृथिव्याः, स्वप्रकृतिगुणग्राहीणि चेन्द्रियाणीति। अथापि खल्वियं पृथिवी पञ्चात्मिका, तत्रैवं सति सा यथा गन्धवत्त्वाद्गन्धज्ञाने प्रकृतिः एवं रसादिमत्त्वाद्रसादिज्ञानेऽपि प्रकृतिः स्यादित्यत आह—भूयस्त्वादिति। यैषा पृथिवी, भूयांसः खल्वस्यां पृथिव्या अंशा अल्पीयांसश्चाबादीनामिति भूयस्त्वाद्गन्धवती पृथिवीत्युच्यते। तत्कारिता विषयग्रहणव्यवस्थेति। घ्राणनिमित्ता गन्धोपलब्धिरिति घ्राणमिन्द्रियं पार्थिवं विज्ञायते। पृथिवी खलु गन्धस्योपलब्धौ हेतुरिति ॥ ५ ॥

## तथापस्तेजोवायुश्च रसरूपस्पर्शाविशेषात् ॥ ६ ॥

( उप० ) इन्द्रियान्तरेऽप्येतदतिदिशति—तथेति। रसनचक्षुस्त्वगिन्द्रियाणा प्रकृतिरिति शेषः। तेन यथासंख्यं रसनादीनामबादयः प्रकृतयः तत्तत्प्रतिनियतार्थग्राहकत्वात्। अत्रापि नियमे भूयस्त्वमेव तन्त्रम्, रसादिमत्त्वे च रसनादीनां ग्राह्यजातीयविशेषगुणवत्त्वनियम एव प्रमाणमित्युक्तम्। एवं च विशिष्टादृष्टोपगृहीतकर्णशष्कुल्यवच्छिन्नो नभोदेश एव श्रोत्रम् ॥ ६ ॥

इति श्रीशाकरे वैशेषिकसूत्रोपस्कारे अष्टमोध्यायस्य द्वितीयाह्निकम्।

( विवृ० ) इन्द्रियान्तरमप्येकैकभूतप्रकृतिकमित्याह–तथेति। रसग्रहणे रसने आपः प्रकृतयः, रूपग्रहणे चक्षुषि तेजः प्रकृतिः, स्पर्शग्रहणे त्वगिन्द्रिये वायुः प्रकृतिः, रसनेन्द्रियादीनां रसाद्येकैकमात्रग्राहक-

त्वात्, रसगन्धस्पर्शाविशेषादिति काचित्को लिपिकरप्रमादप्रयुक्तः पाठ-स्तत्र कथंचिदर्थसंगमनेऽपि तेज इत्यस्य हेत्वकथनेन संदर्भविरोधो दुर्वार एवेति, रसनादीनां जलीयत्वादिसिद्धिप्रकारः प्राग्दर्शित एवादरणीयः ६

इति श्रीजयनारायणतर्कपञ्चाननभट्टाचार्यप्रणीतायां कणादसूत्रविवृतौ अष्टमाध्यायस्य द्वितीयाह्निकम् ।

( भाष्यम् ) यथैतत्—*तथाऽऽपस्तेजोवायुश्च रसरूपस्पर्शाविशेषात् । रसस्योपलब्धावापः प्रकृतिः, रूपस्य तेजः, स्पर्शस्य वायुः । कस्मात् रस-रूपस्पर्शाविशेषात् । यथैवं पृथिव्या गन्धवत्त्वं भूयस्त्वं च, तथैवाबादीनां रसादिमत्त्वं भूयस्त्वं चास्तीत्यविशेषः पृथिव्या अबादीनामिति । तदेवमाप्यं रसनं, तैजसं चक्षुर्वायवीयं त्वगिन्द्रियं प्रतिपत्तव्यम् । एवं शब्दस्योपल-ब्धौ आकाशं हेतुः । तदेव कर्णशष्कुलीप्रदेशस्थं श्रोत्रम् । प्रतिबन्धिका-रिता च शब्दानुपलब्धिरिति ॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये अष्टमस्याध्यायस्य द्वितीयमाह्निकम् ।

समाप्तश्चायमष्टमोऽध्यायः ।

---

# नवमाध्याये प्रथमाह्निकम् ।

## क्रियागुणव्यपदेशाभावात् प्रागसत् ॥ १ ॥

( उप० ) संयोगसमवायान्यतरसन्निकर्षजलौकिकप्रत्यक्षनिरूपणान-न्तरं तदितरप्रत्यासत्तिजन्यलौकिकालौकिकप्रत्यक्षव्युत्पादनफलकं नवमा-ध्यायमाह—क्रियेत्यादि । कार्यमिति शेषः । प्रागिति कार्योत्पत्तेः प्राक्, कार्यं घटपटादि, असत्तत्कालीनस्वजनकाभावप्रतियोगीत्यर्थः । अत्र हेतुः क्रियागुणव्यपदेशाभावात्, यदि तदानीमपि कार्यं घटादि सदेव स्यात्तदा क्रियावत्त्वेन गुणवत्त्वेन च व्यपदिश्येत यथोत्पन्ने घटे घटस्तिष्ठति घट-श्चलति रूपवानयं दृश्यते घट इत्यादिप्रकारेण व्यपदिश्यते न तथोत्पत्तेः प्रागपि व्यपदेशोऽस्ति तेन गम्यते तदानीमसन्निति । स च व्यूह्यमानेषु वीरणेषु, योज्यमानेषु तन्तुषु, चक्रारूढायां मृदि कुलालादिव्यापारेषु अनु-वर्तमानेषु, भविष्यत्यत्र कटः पटो घटो वेति सार्वलौकिकी प्रत्यक्षप्रतीतिः चक्षुर्विस्फारणानन्तरं जायमानत्वात् । न च संयोगसमवायान्यतरघटिता प्रत्यासत्तिरत्र प्रभवति, तस्मादिन्द्रियसंबद्धविशेषणता प्रत्यासत्तिरत्र तन्त्रम् । ननु चान्योन्याश्रयः सत्यां विशेषणतायां तत्प्रतीतिः प्रतीतौ च

विशेषणतेति चेन्न, विशेषणता हि तदुभयस्वरूपमेव उपश्लिष्टप्रत्ययजनन-योग्यं, तच्च प्रतीतेः पूर्वमपि सदेव। तदुक्तं न्यायवार्तिके 'समवायेऽभावे च विशेषणविशेष्यभावः' इति । स चायं प्रागभावः प्रतियोगिजनकः, नहि घटे जाते स एव घटस्तदानीमेवोत्पद्यते तत्र कारणान्तरसत्त्वेऽपि कारण-वैकल्यमनुस्रियमाणं स्वप्रागभाववैकल्यमेवानुसर्तुमर्हति, तद्घटोत्पत्तौ स एव घटः प्रतिबन्धक इति चेत्तर्हि प्रतिबन्धकाभावत्वेन तस्य कारणत्वम-वर्जनीयम् । ननु यदि घट एव तस्याभावस्तदा घटे नष्टे तदुन्मज्जनाप-त्तिरिति चेन्न, घटनाशस्यापि तद्विरोधित्वात् । नहि विरोधिसत्त्वका-लेऽपि विरोध्यन्तरप्रादुर्भाव इति । नह्यनयोर्देशकृतो विरोधो येन गोत्वा-श्वत्ववत् समानकालीनत्वं स्यात्, किं तर्हि कालकृतस्तथा च कथमे-ककालावस्थायित्वं भवेत् ॥ १ ॥

( विवृ० ) हेरम्बाम्बापदद्वन्द्वं निधाय हृदयाम्बुजे ।
काणादनवमाध्यायं विवृणोमि कुतूहलात् ॥ १ ॥

अभावप्रत्यक्षमभिधित्सुर्भूमिकामाह—क्रियेत्यादि । घटादिकार्यं स्वो-त्पत्तेः प्रागसत्, क्रियाया गुणस्य च व्यपदेशस्य व्यवहारस्याभावात् । घटे जाते यथा घटस्तिष्ठति घटश्चलति घटः श्याम इत्यादि क्रिया-गुणव्यवहारो भवति पूर्वं तु न तथा व्यवहार इत्यर्थः । अतः सत्का-र्यवादो निरस्त इति घटोत्पत्तेः पूर्वं घटप्रागभावस्तिष्ठतीति स च प्रतियो-गिजनकः कथमन्यथा कारणान्तरसत्त्वे उत्पन्नस्य न पुनरुत्पादः । इहे-दानी घटो भविष्यतीत्यादिप्रत्यक्षमपि प्रागभावे मानमिति ॥ १ ॥

( भाष्यम् ) परीक्षितं भावानां प्रत्यक्षम् । अभावानां परीक्ष्यते । द्विविधो ह्यभावः यत्किचिन्न कदाचिद्भवति गगनारविन्दादि, किंचिच्च कदाचिद्भवदपि केनचिद्रूपेण कुत्रचिद्भवति, न सर्वदा न रूपान्तरेण न खल्वपि सर्वत्र । तत्राद्योऽवस्तुभूतो वस्तुभूतस्त्वन्त्यः । यस्त्ववस्तुभूतोऽभावः सोऽयमपदार्थः । असद्भावमात्रं त्वस्य प्रमाणादुपलब्धव्यम् । कथमिति चेत्सदुपलब्धौ तदनुपलब्धेः । प्रमाणेन खल्वयं प्रमाता सदुपलभते । यदसत् तत् खल्वसत्त्वादेव नोपलभते । अनुपलब्धेर्नास्तीति विज्ञायते । यद्यस्थास्यदुपलभ्येत इति । यश्च वस्तुभूतो भवत्यभावः स त्वर्थेषु भवन्ना-तिरिच्यते । आचार्यप्रवृत्तिर्ज्ञापयति नास्ति द्रव्यगुणकर्मसामान्यविशेष-समवायेभ्योऽन्योऽभावो नाम । भावप्रपञ्चा एवैते सप्तमस्त्वभाव इत्यसमा-

चीनम् । कस्मात् ? अभिप्रायभेदापत्तेः । तस्मादर्थेषु भवन्नभावो नातिरिच्यते । तस्योदाहरणम्—*क्रियागुणव्यपदेशाभावात् प्रागसत् । यदेतत्कार्यजातमुत्पत्तेः पश्चादुपलभ्यते तत्सर्वं पूर्वमुत्पत्तेरसत् । कस्मात् ? क्रियागुणव्यपदेशाभावात् । सतो हि क्रियया गुणेन च व्यपदेशो भवति अस्ति चलत्येकः शुक्ल इत्येवमादिः । प्राक् चोत्पत्तेर्न किंचिदेवं क्रियया गुणेन च व्यपदिश्यते । तस्मात्तदानीमसन्नास्तीति । विपर्यये हि क्रियया गुणेन च व्यपदेशः स्यात् । न वै खलु प्रागुत्पत्तेः कार्यात्मना क्रियागुणाभ्यां व्यपदेशो भवतीति ॥ १ ॥

## सदसत् ॥ २ ॥

( उप० ) अभावान्तरं प्रतीतिबलसिद्धमाह—तदसदिति । यथा कारणव्यापारात्पूर्वं प्रत्यक्षानुमानाभ्यां कार्यस्यासत्त्वं प्रमीयते, तथा विनाशकस्य मुद्गरादेर्व्यापारानन्तरं सदेव कार्यं घटादि इदानीमसदिति प्रत्यक्षानुमानाभ्यामेव प्रमीयते, स चायमभावो ध्वंस इति गीयते । भवति हि घटो नष्टो ध्वस्तः, इदानीं श्रुतपूर्वो गकारो नास्तीत्यादिधीरिति भावः ॥ २ ॥

( विवृ० ) ध्वंसरूपोऽभावोऽप्यस्तीत्याह—सदसदिति । सदपि घटादिकार्यं मुद्गरप्रहारानन्तरमसत् अवर्तमानं ध्वंसप्रतियोगीत्यर्थः । तथाच घटो नश्यति घटो ध्वस्त इत्यादिप्रत्यक्षसिद्धो ध्वंसात्मको भावोऽप्यस्तीति भावः ॥ २ ॥

( भाष्यम् ) यद्वै खल्वेतत्प्रागुत्पत्तेरसत, तदेतत्—*सदसत् । पूर्वमुत्पत्तेः कारणात्मना सदेव कार्यात्मना भवत्यसदिति । यच्चैतत् प्रागुत्पत्तेः कार्यात्मना भवत्यसत् ॥ २ ॥

## असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ॥ ३ ॥

( उप० ) ननु घट एवावस्थाविशेषे ध्वंसव्यवहारं करोति न तु घटादन्यस्तस्य ध्वंस इत्यत आह—असत इति । सदिति सूत्रशेषः, असतः सत् अर्थान्तरम्, कुत इत्यत आह क्रियागुणव्यपदेशाभावादिति । नहि प्रध्वंसकालेऽपि वर्तते घटः, अस्ति घटः, इदानीं रूपवान् घटः, घटमानयेत्यादिव्यपदेशस्तदितो वैधर्म्यादसतः सदर्थान्तरमिति ॥ ३ ॥

( विवृ० ] ननु मुद्गरप्रहारानन्तरं तिरोभूतः सन् मृद्येव घटस्तिष्ठति तादृशावस्थान्वितो घट एव ध्वंसव्यवहारविषय इत्यत आह—असत इति ।

असतो अवर्तमानस्य क्रियागुणव्यपदेशाभावात् क्रियागुणव्यवहाराभावादसत इति सावधारणं तथाचावर्तमानस्यैव क्रियागुणव्यपदेशाभावः। नहि मुद्गरप्रहारानन्तरं घटश्चलति श्यामो घटो दृश्यते इति व्यवहारा लोकानां तस्माद्ध्वंसव्यवहारविषयो न घटस्तस्यावर्तमानत्वात् किंतु अर्थान्तरम्, घटादन्य एव ध्वंसनामा जन्याभाव इति॥ ३ ॥

(भाष्यम्) तत् खलु—*असतः क्रियागुणव्यपदेशाभावादर्थान्तरम्। यद्वै न कदाचिद्भवति तस्मादसतो गगनारविन्दादेरर्थान्तरमन्यद्विलक्षणमिति। कस्मात्? असतः क्रियागुणव्यपदेशाभावात्। गगनारविन्दादेः खल्ववस्तुनः क्रियागुणव्यपदेशो न कथंचिद्भवति। यच्च सदसत, तस्य त्वस्ति कारणात्मना तद्व्यपदेशः। अस्त्यभावः पृथगेक इति चैवमादिकः क्रियागुणव्यपदेशोऽस्योत्प्रेक्षितव्य इति। अथापि खल्वसदिदानीमेतत्परतो भविष्यतीति भविष्यन्नर्थोऽसन्नुच्यते। सोऽयमुत्पत्तेः प्राक्कार्यात्मनाऽसन्नप्यर्थो रूपान्तरेण सन्निति विज्ञायते। अथापि खल्वन्योऽर्थोऽर्थान्तरम्। सोऽयमभावोऽन्योऽर्थो नत्रर्थेभ्योऽन्यः। कस्मात् असतः क्रियागुणव्यपदेशाभावात्। सद्धि क्रियागुणाभ्यां व्यपदिश्यते। सदिति द्रव्यगुणकर्मणामविशेषः। अभावोऽपि सन्निति तेष्वेवान्तर्भवति। सोऽयं यस्याभावः तस्मादन्यो भाव एव कश्चिदेवमुच्यते, न त्वपूर्वं किंचिदिति। प्रागसतोऽर्थान्तरत्ववचनात् सर्वेषामसतामर्थान्तरत्वं प्रतिपत्तुमर्हतीति मन्यते सूत्रकारः॥ ३ ॥

## सच्चासत्॥ ४ ॥

(उप०) प्रागभावप्रध्वंसौ साधयित्वाऽन्योन्याभावं साधयितुमाह—सच्चासदिति। यत्र सदेव घटादि असदिति व्यवह्रियते तत्र तादात्म्याभावः प्रतीयते। भवति हि असन्नश्वो गवात्मना, असन् गौरश्वात्मना, असन्पटो घटात्मना, अघटः पटः, अनश्वो गौः, अगौरश्व इत्यादिप्रतीतिः। तदस्यामश्वान्योन्याभाववान् गोः पटान्योन्याभाववान् घट इत्यन्योन्याभाव एव तादात्म्याभावापरनामा भासते। तदत्र तादात्म्यं प्रतियोगितावच्छेदकम्, प्रतियोगिसमानाधिकरणश्चायमभावः भवति हि घटो न भूतलमिति प्रतीतिः। नित्यश्च, कदाचिदपि घटपटयोस्तादात्म्यासंभवात्॥ ४ ॥

(विवृ०) भेदरूपोऽभावोऽप्यस्तीत्याह—सच्चासदिति। सदपि घटादि भूतलादौ असदन्योन्याभावप्रतियोगी भूतलं न घट इत्यादिप्रतीतेः।

ननु घटवति भूतले कथं घटस्यान्योन्याभावः स्थास्यति प्रतियोगिरूपस्य घटस्य विरोधिनः सत्त्वादिति चेन्नह्ययं कंचिदभावं प्रति येन केनापि संबन्धेन प्रतियोगिनो विरोधिता । तथा सति समवायसंबन्धावच्छिन्न-प्रतियोगिताकघटात्यन्ताभावस्यापि भूतलेऽसत्त्वप्रसङ्गात् । किंतु प्रति-योगितावच्छेदकसंबन्धेनैव प्रतियोगी अभावस्य विरोधी तथाच अन्योन्या-भावस्य प्रतियोगितावच्छेदकः संबन्धस्तादात्म्याख्य एव तेन संबन्धेन च घटस्य स्वस्मिन्नेव सत्त्वेन भूतलादावसत्त्वात्तत्र घटान्योन्याभावसत्त्वे न को-ऽपि विरोधः । अयं चान्योन्याभावोऽत्यन्ताभाववन्नित्य एवेति बोध्यम् ॥४॥

( भाष्यम् ) यथोत्पत्तेः पूर्वं कार्यजातं कार्यात्मना भवत्यसत्, तथा परतोप्युत्पत्तेरात्मग्रहणात् पश्चादित्याह—*सच्चासत् । पूर्वं सदपि पश्चादसत् । भूत्वा खल्वात्मप्रहाणादूर्ध्वं न भवतीति । तदेतत् कारणा-त्मना भवदपि कार्यात्मना न भवतीत्यसदुच्यते ॥ ४ ॥

यच्चान्यदसदतस्तदसत् ॥ ५ ॥

( उप० ) इदानीं चतुर्थमभावमत्यन्ताभावाख्यमाह—यच्चान्यदिति । अतः पूर्वोक्तादभावत्रयात्, यदन्यदसत् तदसत्, तदत्यन्तासत्त्वम् । असदित्युभयत्र भावप्रधानो निर्देशः तत्रैकमसदुद्देश्यमपरमसद्विधेयम् । तथाचोक्ताभावत्रयभिन्नो योऽभावः सोऽत्यन्ताभाव इति पर्यवसन्नोऽर्थः । तत्र प्रागभावस्य उत्तरावधिकत्वम्, प्रध्वंसस्य पूर्वावधिकत्वम्, अन्योन्या-भावस्य प्रतियोगिसमानाधिकरणत्वमत्यन्ताभावस्य तु त्रितयवैधर्म्यमतश्च-तुर्थोऽयमभावः ॥ ५ ॥

( विवृ० ) अत्यन्ताभावं साधयति—यच्चेति । अत उक्तादभावत्रयाद-न्यद्यदसत् भावभिन्नम्, तदसत् अत्यन्तासत्त्वं भावप्रधाननिर्देशोऽयम् । अत्यन्ताभावाख्यमिति तु फलितार्थः । अयं चात्यन्ताभावस्तुरीयोऽभावः सदातनश्च । प्रतियोगितत्प्रागभावतद्ध्वंसास्त्रय एवात्यन्ताभावस्य विरो-धिनः, रक्तघटे श्यामं रूपं नास्ति श्यामघटे रक्तं रूपं नास्तीति प्रतीती च ध्वंसप्रागभावाववगाहेते नत्वत्यन्ताभावमिति प्राञ्चः । नव्यास्तु ध्वंसप्रा-गभावयोर्नात्यन्ताभावविरोधित्वमतो ध्वंसादिकालावच्छेदेनाप्यत्यन्ताभावो वर्तत एव । यत्र भूतले पूर्वमपसारितं घटादिकं पुनरानीतं तत्र घट-कालस्याभावसंबन्धाघटकत्वाद्घटसत्त्वकाले न घटात्यन्ताभावबुद्धिरि-त्याहुः । केचित्तु यत्र भूतले पूर्वं घटादिकं स्थितमथापसारितं पुनरानीतं च

तत्रोत्पादविनाशशाली सामयिकनामा चतुर्थः संसर्गाभाव एव प्रतीयते नात्यन्ताभाव इत्याहुः ॥ ५ ॥

( भाष्यम् ) तदेवं रूपान्तरेण सदप्यन्येन रूपेणासद्भवतीत्युक्तम्। यच्चावस्तुभूतमभावो न कदाचिद्भवति, तदभिधीयते,–*यच्चान्यदसदतस्तदसत्। अतोऽस्मादसतो यद्विलक्षणमसत् नास्तीत्यसत् न भवतीत्यभावो गगनारविन्दादि, तत् खल्वसदेव न कथंचित्सदिति। अथापि खल्वतोऽसतो विलक्षणं यदसदसन्नश्वो गवात्मनेत्यगौरश्वः असन् गौरश्वात्मनेत्यनश्वो गौरित्येवमादि, तदसत्। अश्वात्मना सन्नप्यश्वो न गवात्मनाऽस्तीति ॥ ५ ॥

## असदिति भूतप्रत्यक्षाभावाद्भूतस्मृतेर्विरोधिप्रत्यक्षवत् ॥ ६ ॥

( उप० ) इदानी प्रकरणान्तरमारभते तत्र प्रध्वंसे तावत्प्रत्यक्षसामग्रीमाह–असदिति। असदितीतिकारेण प्रत्यक्षाकारं ज्ञानमाह तेनासन् घटः नष्टो घटः, ध्वस्त इदानी घट इति प्रत्यक्षा प्रतीतिरस्ति। तत्र दृष्टान्तो विरोधिप्रत्यक्षवदिति विरोधिनो घटादेर्यथा स्पष्टं प्रत्यक्षं तथा तत्प्रध्वंसस्यापि। तत्र कारणमाह भूतप्रत्यक्षाभावादिति भूतस्य उत्पद्य विनष्टस्य घटादेः प्रत्यक्षाभावात्। एतेन योग्यानुपलब्धिमाह, तत्र चायं तर्कः सहकारी, यद्यत्र घटोऽभविष्यत् भूतलमिवाद्रक्ष्यत् न च दृश्यते तस्मान्नास्तीति। सहकार्यन्तरमाह भूतस्मृतेरिति भूतस्य प्रतियोगिनो घटादे. स्मृतेरिति प्रतियोगिस्मरणमुक्तम् ॥ ६ ॥

( विवृ० ) अभावचतुष्टयं व्युत्पाद्य ध्वंसप्रत्यक्षं व्युत्पादयति–असदिति। असदिति असन् घटः नष्टो घटः ध्वस्तो घट इत्यादिप्रत्यक्षं विरोधिप्रत्यक्षवत् प्रतियोगिघटप्रत्यक्षतदनुभवसिद्धं लौकिकसन्निकर्षजन्यं चेत्यर्थः। तत्र च प्रतियोगिप्रत्यक्षं चक्षुरादिसंयोगजन्यं ध्वंसप्रत्यक्षं तु चक्षुरादिसंयुक्तविशेषणताजन्यमिति विशेषः। अपरमपि विशेषमाह भूतप्रत्यक्षाभावादिति। भूतस्य अतीतस्य प्रतियोगिनो घटादेः प्रत्यक्षस्याभावाद्योग्यानुपलम्भरूपात् कारणात् भूतस्य अतीतघटादेः स्मृतेः स्मरणात्मकात्प्रतियोगिज्ञानाच्च जायमानमिति पूरणीयम्। तथाच ध्वंसप्रत्यक्षं प्रतियोग्यनुपलब्धिजन्यं। प्रतियोगिज्ञानजन्यं च, प्रतियोगिप्रत्यक्षं तु न तथा इतोऽपि विशेष इति भावः। अत्र स्मृतित्वमविवक्षितं ज्ञानमात्रं तु विवक्षितमिति मन्तव्यम्। एवं च घटादयो यथा प्रत्यक्षसिद्धास्तथा तद्ध्वंसा अपीति भावः ॥ ६ ॥

( भाष्यम् ) असतां प्रत्यक्षं तु,—*असदिति भूतप्रत्यक्षाभावाद्भूतस्मृतेर्विरोधिप्रत्यक्षवत् । पूर्वमुत्पत्तेः परतश्चात्मप्रहाणादसदिदानीमेतदिति यत्प्रत्यक्षं तत् खलु भूतस्य विरोधिनो भावस्य प्रत्यक्षाभावाद्भूतस्मृतेश्च निष्पद्यते । उपलब्धियोग्यं विरोधिनमनुपलभमानः विरोधिनं च स्मरन् तदिदानीमसदित्युपलभते । भूतं ह्यभूतस्यासतो विरोधि । नहि सदसतोः सहभाव इति । विरोधिप्रत्यक्षवदिति निदर्शनम् । तस्मात् प्रतिपद्यामहे विरोधिप्रत्यक्षहेतुरसत्प्रत्यक्षनिमित्तमिति ॥ ६ ॥

## तथाऽभावे भावप्रत्यक्षत्वाच्च ॥ ७ ॥

( उप० ) प्रागभावे प्रध्वंसप्रत्यक्षताप्रकारमतिदिशन्नाह—तथेति । सामान्यवाच्यप्ययमभावशब्दः प्रकरणात् प्रागभावपरः । यथा प्रध्वंसे प्रत्यक्षज्ञानं तथा प्रागभावेऽपि, कुतः भावप्रत्यक्षत्वात् भावस्य व्यूह्यमानवीरणादेः प्रत्यक्षत्वात् प्रत्यक्षेण विषयीक्रियमाणत्वात् । यद्वा भावस्याधिकरणस्य प्रतियोगिनश्च प्रत्यक्षत्वाद्योग्यत्वादित्यर्थः संसर्गाभावग्रहेऽधिकरणयोग्यतायाः प्रतियोगियोग्यतायाश्च तन्त्रत्वात् । चकारात्प्रतियोगिस्मरणमुक्तं च तर्कं समुच्चिनोति, अनादेरपि प्रागभावस्यानन्तस्यापि ध्वंसस्यावस्थाविशेषमात्रे प्रत्यक्षत्वम् ॥ ७ ॥

( विवृ० ) प्रागभावप्रत्यक्षमप्यनयैव रीत्या भवतीत्याह—तथेति । अभावे प्रागभावे सामान्यवाचकशब्दस्य विशेषपरत्वात्, तथा प्रत्यक्षम्, यथा ध्वंसे इन्द्रियसन्निकर्षयोग्यानुपलब्धिप्रतियोगिज्ञानैः प्रत्यक्षं जायते तथा प्रागभावेऽपीत्यर्थः । ननु प्रागभावस्यानादित्वात्कपालादिसंयोगजननादतिपूर्वमपि कथं न प्रागभावस्य प्रत्यक्षमुक्तानां कारणानां तदानीमपि संभवादित्यत आह—भावप्रत्यक्षत्वादिति । भवत्यस्मादित्यपादाने घञ् । भावश्चरमकारणसामग्री तेन प्रत्यक्षं यस्य तत्त्वात् चरमकारणसामग्रीव्यङ्ग्यत्वादिति फलितार्थः । तथाचोक्तस्थले चरमकारणसामग्र्यभावान्न प्रागभावप्रत्यक्षमिति भावः । अतीन्द्रियस्य वाय्वादेः प्रागभावस्य प्रत्यक्षवारणाय चकारस्तेन च प्रतियोगियोग्यत्वं समुच्चितमिति मन्तव्यम् ॥ ७ ॥

( भाष्यम् ) यथा भूतप्रत्यक्षाभावाद्भूतस्मृतेश्चाभावप्रत्यक्षम् । तथा अभावप्रत्यक्षत्वादपि भावे प्रत्यक्षम् । उपादेयेषु वासःसु लक्षितेषु, येषु तानि लक्षणानि न पश्यति तानि अनुपादेयानि वासांस्यभावप्रत्यक्षत्वात् प्रतिपद्यते । सोऽयमभावो भावप्रतिपत्तिहेतुरिति । तच्चैतदभावप्रमेयप्रतिपादनार्थं

सूत्रं, लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धेरिति तन्त्रान्तरसमाचारात् प्रतिपत्तव्यम्। एवमन्योऽपि विषयो बुभुत्सितव्य इति ॥ ७॥

**एतेनाघटोऽगौरधर्मश्च व्याख्यातः ॥ ८ ॥**

( उप० ) अन्योन्याभावस्य प्रत्यक्षतामाह—एतेनेति। एतेनेति प्रतियोगिस्मरणाधिकरणग्रहणप्रागुक्ततर्कानतिदिशति। योग्यानुपलम्भः सर्वत्र समानः। चकार उक्तसमुच्चयार्थः। अधर्म इत्यतीन्द्रियस्यापि धर्मस्य सुखज्ञानादावधिकरणेऽन्योन्याभावस्य प्रत्यक्षतां वदन्नन्योन्याभावग्रहे प्रतियोगियोग्यता न तन्त्रं किन्त्वधिकरणयोग्यतामात्रं तन्त्रमित्युपदर्शयति, कथमन्यथा स्तम्भः पिशाचो न भवतीति पिशाचान्योन्याभावः स्तम्भे गृह्यते स्तम्भात्मतया पिशाचानुपलम्भस्य तदन्योन्याभावग्राहकत्वात्, तस्याप्यनुपलम्भस्य प्रतियोगिसत्त्वविरोधित्वात् स्तम्भे पिशाचतादात्म्ये सत्यनुपलम्भानुपपत्तेः। ननु पिशाचतादात्म्यमिह न प्रतियोगि, किं तर्हि पिशाचः, स च स्तम्भे वर्तमानोऽपि गुरुत्ववन्नोपलभ्यते इति तदनुपलम्भः प्रतियोगिसत्त्वविरोधी न भवतीति चेन्न प्रतियोग्यनुपलम्भवत्प्रतियोगितावच्छेदकानुपलम्भस्याप्यभावग्रहकारणत्वात्। ननु प्रतियोगित्वग्रहाधीनोऽन्योन्याभावग्रहः प्रतियोगित्वं चान्योन्याभावविरहात्मत्वं ततश्चान्योन्याभावग्रहाधीन एवान्योन्याभावग्रह इति चेन्न। अधिकरणावृत्तित्वेन ज्ञायमानो धर्म एव प्रतियोगितावच्छेदको न तु प्रतियोगितावच्छेदकत्वेनापि तद्ग्रहस्तन्त्रमित्युक्तत्वात् ॥ ८ ॥

( विवृ० ) अन्योन्याभावस्याप्येवं प्रत्यक्षं भवतीत्याह—एतेनेति। अघटः पटः अगौरश्वः अधर्मः सुखमित्याद्याकारकोऽन्योन्याभावप्रत्ययोऽपि एतेन प्रध्वंसप्रागभावप्रत्ययकथनेन व्याख्यातः कथित इति समुदितार्थः। तथाचान्योन्याभावप्रत्यक्षेऽपि इन्द्रियसंबद्धविशेषणता प्रतियोग्यनुपलम्भः प्रतियोगिज्ञानं चैतानि कारणानि, इयान् परं विशेषो यत्संसर्गाभावग्रहे प्रतियोगियोग्यत्वं तन्त्रम्, अन्योन्याभावग्रहे त्वधिकरणयोग्यत्वमिति धर्मस्यातीन्द्रियत्वेऽपि सुखादौ योग्याधिकरणे तदन्योन्याभावस्य प्रत्यक्षं निराबाधमेवेति। यत्तु संसर्गाभावग्रहे प्रतियोग्यधिकरणोभययोग्यत्वं तन्त्रमिति कैश्चिदुक्तं तन्न समीचीनम्। तथा सति पाषाणे सौरभाभावस्य, गुडे तिक्ताभावस्य, वायौ रूपाभावस्य, आकाशे स्पर्शाभावस्य, शब्दाभावस्य च प्रत्यक्षानुपपत्तेस्तत्तदधिकरणानां तत्तदिन्द्रियायोग्यत्वात्।

अतएव त्वक्संयुक्तकालविशेषणतया वायुस्पर्शनाशप्रत्यक्षं पक्षधरमिश्रैः स्वीकृतमिति संक्षेपः ॥ ८ ॥

( भाष्यम् ) अथापि खलु यस्य भावस्य यत्र न भावस्तस्य तत्राभावे सोऽयमभावो यस्मिन् भवति तस्य भावस्य प्रत्यक्षत्वात्प्रत्यक्षं भवति असदत्रैतदिति—* एतेनाघटोऽगौरधर्मश्च व्याख्यातः। भवन् पटो न घटात्मना भवतीत्यघटः पटः। भवन्नश्वो न गवात्मना भवतीत्यगौरश्वः भवत्पापं न धर्मात्मना भवतीत्यधर्मः पापमिति । पूर्वयोः प्रत्यक्षमन्त्ये तूपलब्धिमात्रमिति । अथापि खलु धर्मादुत्पद्यमानं सुखं सुखात्मना भवदपि न धर्मात्मना भवतीत्यधर्मः सुखमिति ॥ ८ ॥

## अभूतं नास्तीत्यनर्थान्तरम् ॥ ९ ॥

( उप० ) अथेदानीमत्यन्ताभावप्रत्यक्षतामाह—अभूतमिति। भूतमिदानीं नास्तीति प्रतीतिर्ध्वंसमालम्बते भूतत्वं नोल्लिखति किन्विदं नास्तीतिमात्रोल्लेखिनी प्रत्यक्षप्रतीतिरत्यन्ताभावमालम्बते, अभूतमित्युत्पादविनाशानालम्बनत्वं द्योतयति अनर्थान्तरत्वमपि तदभिप्रायकमेव, यथा जले पृथिवीत्वं नास्ति पृथिव्यां न जलत्वमिति। यदि हि जलावयविनि पृथिवीत्वं स्यात् उपलभ्येत न चोपलभ्यते तस्मान्नास्तीति तर्कपुरस्कारोऽत्रापि द्रष्टव्यः। एवंच यद्वस्तु यत्र न कदापि भविष्यति न च कदाचिद्भूतं तस्य वस्तुनस्तत्रात्यन्ताभावो मन्तव्यः। भूतभविष्यतोश्च तत्र प्रध्वंसप्रागभावालम्बन एव तत्राधिकरणे नास्तीति प्रत्ययः। अत एवायमात्यन्तिकस्त्रैकालिक इत्यभिधीयते ॥ ९ ॥

( विवृ० ) अत्यन्ताभावस्यापि प्रत्यक्षमाह—अभूतमिति। अभूतमिति नास्ति भूतमतीतं यत्र प्रत्यक्षे तादृशम्, नास्तीति यत्प्रत्यक्षम्, तदनर्थान्तरम्, नास्ति विषयतयाऽर्थान्तरमत्यन्ताभावभिन्नं ध्वंसादिरूपं यत्र तत्। रक्तघटे श्यामो नास्तीतिप्रत्यक्षे भूतस्य श्यामरूपस्य विषयतया वर्तमानत्वेन तत्प्रत्यक्षं श्यामध्वंसविषयकम्, वायौ रूपं नास्तीति प्रत्यक्षं च न वायौ पूर्वोत्पन्नं रूपं विषयीकरोति। तस्मात्तत्प्रत्यक्षं न ध्वंसविषयकं किन्त्वत्यन्ताभावविषयकमेवेति, भूतपदं भविष्यतोऽप्युपलक्षकम्, तेन श्यामे रक्तं रूपं नास्तीति प्रागभावप्रत्ययस्यात्यन्ताभावाविषयकत्वेऽपि न क्षतिः॥ ९॥

( भाष्यम् ) अथापि खल्वेतर्ह्यभूतं द्रव्यं परतो भविष्यतीति कुतः

१ पृथिव्या जलत्वमित पाठ ।

प्रतिपत्तिः अभूतं नाम भूतप्रतिषेधः, न त्वेतत् द्रव्यमित्यत आह—
*अभूतं नास्तीत्यनर्थान्तरम्। यन्न भवति तदभूतं यन्न विद्यते तन्नास्ती-
त्यनयोस्तुल्योऽर्थः। प्रागुत्पत्तेः परतश्चात्मप्रहाणान्न भवति कार्यजातं
तदात्मनेत्यभूतमिति नास्तीति चोच्यते। भवन्नश्वो गवात्मना न भवतीति
गवात्मना नास्तीत्युच्यते। एवं शेषेषु वाच्यम्॥ ९॥

**नास्ति घटो गेहे इति सतो घटस्य गेहसंसर्गप्रतिषेधः॥ १०॥**

(उप०) ननु गेहे घटाभावो नात्यन्ताभावः कदाचित्तत्र घटसत्त्वात्,
नापि प्रागभावप्रध्वंसौ, तयोः समवायिकारणमात्रवृत्तित्वात्। नाप्युत्पा-
दविनाशशीलोऽत्यन्ताभाव एव, आत्यन्तिकश्चोत्पादविनाशशीलश्चेति वि-
रोधात्। नापि चतुर्थ एवायं संसर्गाभावः, तस्य त्रैविध्यविभागव्याघाता-
दित्यत आह—नास्तीति। गेहे घटस्य यः संसर्गः संयोगस्तस्य प्रतिषेधः,
स च यदि कदाचिदपि न घटस्तदात्यन्ताभाव एव, भविष्यतः प्रागभावो
भूतस्य प्रध्वंसाभावः। तर्हि घटसंसर्गो गेहे नास्तीति प्रतीत्या भवित-
व्यमिति चेत्प्रतीत्या भवितव्यमिति कोऽर्थः। यदि तद्विषयया प्रतीत्या
भवितव्यमित्यापादनार्थस्तदेष्टापत्तिः। अथ तदुल्लेखिन्येति, तदा गेहे
इत्यधिकरणोल्लेखस्यैव संसर्गोल्लेखपर्यवसानमाधारत्वस्यैव धर्मसंबन्धाका-
रत्वात्। तत् किं घटस्तत्रास्त्येव, अस्त्येवेति कोऽर्थस्तत्र समवेतः संयुक्तो
वा। नाद्यः समवेतघटस्य तत्राभावात्। न द्वितीय संयोगस्य निषेधात्।
नन्वेवं घटादीनां केवलान्वयित्वप्रसङ्गः, तत्संयोगसमवायान्यतरस्यैव स-
र्वत्र निषेधादिति चेन्न, तदुभयनिषेधस्यैव घटनिषेधात्मकत्वात्। तत्किं
घटस्तत्संयोगश्चेत्येकं तत्त्वं, येन घटसंयोगानिषेधो घटनिषेधः स्यात्।
तत्कि घटस्तत्संयोगसमवायावेकं तत्त्वं, येन तद्विधिरेव घटविधिः स्यात्।
नहि तौ यत्र निषिध्येते तत्र घटान्वयो येन केवलान्वयित्वं तस्य स्यात्।
तथाच यस्य यो विधिस्तन्निषेध एव तन्निषेध इति। यद्वा घटस्य समवायि-
तया गेहेऽत्यन्ताभाव एव, स एव गेहे घटो नास्तीति प्रतीतिविषयः।
कपाले संयोगितयेव। एवं सति केवलान्वय्यत्यन्ताभावप्रतियोगितया
घटोऽसन् स्यादिति चेत् भवेदेवं यदि संयोगित्वसमवायित्वाभ्यां मिलि-
ताभ्यां सर्वत्रासन् स्यादिति॥ १०॥

(विवृ०) ननु भूतलादौ यत्र पूर्वं घटः स्थितस्ततोऽपसारितस्तदानी
घटो नास्तीति प्रत्यक्षं न प्रागभावध्वंसाववगाहते तयोः समवायिकारण-
वृत्तित्वनियमेन भूतलादिदेशेऽसत्त्वात्। नाप्यत्यन्ताभावम्, तस्य नित्य-

त्वेन घटसत्त्वकालेऽपि तादृशप्रत्यक्षप्रसङ्गात्। तथाच तादृशप्रत्यक्षस्य कोविषय इत्याकाङ्क्षायामाह—नास्तीति । सतः पूर्वं तत्र वर्तमानस्य घटस्यैव गेहसंसर्गप्रतिषेधः गेहे संसर्गाभावः तद्विशेषोऽत्यन्ताभाव इति तु परमार्थः नास्ति गेहे घट इति प्रत्यक्षविषय इति समुदितसूत्रार्थः। तथाच तादृशप्रत्यक्षे घटात्यन्ताभाव एव तत्तत्कालीनगेहाद्यात्मकेन स्वरूपसंबंधेन भासते, घटकाले तु तादृशसंबन्धासत्त्वान्न तदत्यन्ताभावबुद्धिरिति भावः। केचित्तु नास्ति गेहे घट इति प्रत्यक्षस्य विषयो घटस्य गेहसंसर्गप्रतिषेधः गेहवृत्तित्वाभावः स च घटापसारणकालीनघटात्मकेन स्वरूपसंबन्धेन घटे बाधित एवेति। नच घट इति प्रथमाऽनुपपत्तिरनुयोगिनि सप्तम्याः संसर्गाभावबोधे तन्त्रत्वादिति वाच्यं, प्रातिपदिकार्थस्यात्यन्ताभावबोधस्थल एव अनुयोगिनि सप्तम्यपेक्षणादुक्तस्थले सप्तम्यर्थाभावस्य घटे भानात्। नचात्रास्तीति क्रियायाः कुत्रान्वयः नञर्थे चेत्तदा घटौ न स्त इत्यादौ द्विवचनाद्यनुपपत्तिः। घटे चेन्नञर्थस्य घटांशे विशेष्यतावच्छेदकतया भानं न संभवति। अन्यथा न घट. पटस्तिष्ठतीत्यादिप्रयोगस्यापि साधुत्वापत्तेरिति वाच्यं नञर्थप्रातिपदिकार्थाभावस्य विशेष्यतावच्छेदकतया भानासंभवेऽपि व्युत्पत्तिवैचित्र्येण नञर्थस्य सुबर्थाभावस्यास्तिक्रियाविशेष्यतावच्छेदकविधया भाने बाधकाभावात्। वस्तुतस्तु नास्ति गेहे घट इत्यभिलापप्रयोजकत्वं तादृशप्रत्यक्षस्याबाधितमेव तादृशशब्दजन्यबोधसमानाकारकत्वस्य तत्राप्रयोजकत्वादित्याहुः ॥ १० ॥

(भाष्यम्) यद्यभूतं नास्तीत्येकोऽर्थः। नास्ति घटो गेहे इति प्रतीतिर्नोपपद्यते, न हि घटो नाम नास्तीत्यत आह—*नास्ति घटो गेहे इति सतो घटस्य गेहसंसर्गप्रतिषेधः। नास्ति घटो गेहे इति सत एव घटस्य गेहसंसर्गः प्रतिषिध्यते। न त्वसावस्तीति। तदेवं प्रागुत्पत्तेः परतश्चात्मप्रहाणात् कार्यात्मना न भवन्ति भावाः। भवन्तश्च भावान्तरात्मना न भवन्ति। एकत्र भवतश्च भावस्यान्यत्र संसर्गो न भवतीति चतुर्विधमभावजातं वस्तुभूतम्। तत्रोत्पत्तेः पूर्वं परतश्चात्मप्रहाणात्स्वेन रूपेणासदपि रूपान्तरेण सदेवेति नार्थेभ्यो व्यतिरिच्यते। अश्वो गवात्मना न भवतीत्यगौरश्व एव। यश्च घटस्य गेहसंसर्गप्रतिषेधः, सोऽपि विभागात्मा। संयोगो हि तयोः संसर्गस्तत्प्रतिषेधो विभाग एवेति। अथापि खल्वसंयोगो नाम पृथक्त्वमेतदिति। अथापि खल्वभावो भावप्रतिषेधमात्रमिति नातिरिच्यते। प्रतिषेधो वस्त्वन्तरमिति चेत्तत्प्रसङ्गोऽभ्यनुज्ञायाम्। योऽयं

भावप्रतिषेधः स खलु वस्त्वन्तरमित्यतिरिच्यतेऽर्थेभ्य इति। एवं सति, येयं भावस्याभ्यनुज्ञा सापि वस्त्वन्तरमिति तस्या अप्यतिरेकप्रसङ्गः। बुद्धिरिति चेदन्यत्रानुपलब्धिप्रसङ्गः। येयं भावस्याभ्यनुज्ञा सा खलु बुद्धिर्नाम गुण इति चेदन्यत्रानुपलब्धिप्रसङ्गः। कस्यचिद्भावस्य क्वचिद्-भ्यनुज्ञा भवति सा चेद्बुद्धिर्नाम गुणः, आत्मन्यसावुपलभ्येत न भावेष्विति। अथाप्यभ्यनुज्ञा नाम बुद्धिरात्मनि भवन्ती भावेषूपलभ्यते बुद्ध्यन्तरवदिति चेत्समानम्। प्रतिषेधो नाम बुद्धिरात्मनि भवन्ती भावेषूपलभ्यते इत्यभावो नातिरिच्यते भावादिति। अथापि खलु प्रागुत्पत्तेः परतश्चात्मप्रहाणात् योऽयमभावो भावानां स खल्वयोगो नाम पृथक्त्वं गुणः। एतेन सतो घटस्य गेहसंसर्गप्रतिषेधो व्याख्यातः। योऽप्ययमगौरश्व इत्येकभावात्मनाऽपरभावस्याभावः, सोऽपि वैलक्षण्यं नाम पृथक्त्वमेव। तदेवं प्रागुत्पत्तेः क्रियागुणव्यपदेशाभावादसत्कार्यमिति। तच्चैतत्कारणात्मना सदेव कार्यात्मनाऽसदिति। असतः क्रियागुणव्यपदेशाभावादसतोऽर्थान्तरमयोगो नाम पृथक्त्वमिति। सच्च कार्यमात्मप्रहाणात्परतः कार्यात्मना भवत्यसदित्ययोग एवेति। यदप्यतोऽयोगाद्विलक्षणमसत् तत्खलु वैलक्षण्यं नाम पृथक्त्वमिति। यच्चैतदयोगाख्यमसत्, तस्य विरोधिनः प्रत्यक्षाभावात्स्मरणाच्च विरोधिप्रत्यक्षवदसदिति प्रत्यक्षमिति। यथा भावप्रत्यक्षाभावादभावप्रत्यक्षं तथैवाभावप्रत्यक्षत्वाद्भावे प्रत्यक्षमित्यभावप्रमेयं भाव इति। अथापि खल्वभावे तथैव भूतस्य विरोधिनः प्रत्यक्षाभावात्स्मरणाच्च यत्रायमभावो भवति तस्य भावस्य प्रत्यक्षत्वाच्च प्रत्यक्षमिति। भवत्यस्मिन्नभाव इति भावोऽधिकरणमभावस्य। कस्य पुनरभावस्यैवं प्रत्यक्षं, तदुच्यते। यदेतद्भावप्रत्यक्षादभावप्रत्यक्षम्। एतेनाघटोऽगौरित्येवमादिरभावः प्रत्यक्षतया व्याख्यात इति। तदेवं विरोधिनः प्रत्यक्षाभावात्स्मणाच्च प्रत्यक्षमयोगाख्यस्याभावस्य। वैलक्षण्याख्यस्य त्वधिकरणप्रत्यक्षादिति ॥ १० ॥

आत्मन्यात्ममनसोः संयोगविशेषादात्मप्रत्यक्षम् ॥ ११ ॥

( उप० ) तदेवं भावाभावविषयकं लौकिकप्रत्यक्षं निरूप्य योगिप्रत्यक्षं निरूपयितुं प्रकरणान्तरमारभते—आत्मनीति। ज्ञानमुत्पद्यते इति शेषः। द्विविधास्तावद्योगिनः समाहितान्तःकरणा ये युक्ता इत्यभिधीयन्ते, असमाहितान्तःकरणाश्च ये वियुक्ता इत्यभिधीयन्ते। तत्र युक्ताः साक्षा-

त्कर्तव्ये वस्तुन्यादरेण मनो निधाय निदिध्यासनवन्तः, तेषामात्मनि स्वात्मनि परात्मनि च ज्ञानमुत्पद्यते आत्मप्रत्यक्षमिति आत्मा प्रत्यक्षः साक्षात्कारविषयो यत्र ज्ञाने तत्तथा। यद्यप्यस्मदादीनामपि कदाचिदात्मज्ञानमस्ति तथाप्यविद्यातिरस्कृतत्वात्तदसत्कल्पमित्युक्तमात्ममनसोः सन्निकर्षविशेषादिति। योगजधर्मानुग्रह आत्ममनसोः सन्निकर्षे विशेषस्तस्मादित्यर्थः॥ ११॥

(विवृ०) लौकिकसन्निकर्षजन्यं प्रत्यक्षं परीक्ष्यालौकिकयोगजसन्निकर्षजन्यं प्रत्यक्षं व्युत्पादयति—आत्मनीति। आत्ममनसोः संयोगविशेषाद्योगजधर्मसहकृतादात्ममनःसंयोगात्। आत्मनि बुद्ध्यारम्भे यत्ने सति 'आत्मा यत्नो धृतिर्बुद्धिः' इति कोषात्, बुद्ध्यारम्भयत्नजन्यायां चिन्तायां सत्यामिति तु फलितार्थः। आत्मप्रत्यक्षे स्वात्मनः परात्मनां च प्रत्यक्षं, भवतीति शेष'। अलौकिकसन्निकर्षस्तावत्त्रिविधः सामान्यलक्षणाज्ञानलक्षणायोगजधर्मभेदात्। तत्र योगजधर्मो योगाभ्यासजनितो धर्मविशेषः श्रुतिपुराणादिप्रमाणकः। सोऽपि द्विविधः युक्तयुञ्जानरूपयोगिद्वैविध्यात्। तत्र योगाभ्यासवशीकृतमानसः समाधिसमासादितविविधसिद्धिर्युक्त इत्युच्यते अयमेव विशिष्टयोगवत्त्वाद्वियुक्त इत्यप्युच्यते। युञ्जानो विषयव्यावृत्तमानसो ध्यानसहकारान्निखिलपदार्थानां साक्षात्कर्ता, एतादृशयुञ्जानमभिप्रेत्यैवेदं सूत्रम्॥ ११॥

(भाष्यम्) परीक्षितं लौकिकं प्रत्यक्षम्। अलौकिकमिदानी परीक्ष्यते। तत्र लोकसामान्यमतीतमलौकिकम्। किच प्रत्यक्षं लोकसामान्यमतीतम्? यत्खल्वार्षं विज्ञानं योगसमाधिजाद्धर्मादुत्पद्यते। तत्र यदाश्रया शास्त्रप्रवृत्तिर्यस्य तत्त्वज्ञानेनापवर्गः यदाश्रयश्चैहिकामुष्मिको व्यवहारकलापः, सोऽयमात्मा न प्रत्यक्षो लोके। अत आत्मनि तावदार्षं विज्ञानमाह—* आत्मन्यात्ममनसोः संयोगविशेषादात्मप्रत्यक्षम्। योऽयमात्ममनसोः संयोगविशेषो योगसमाधिकारितस्तस्मादात्मन्यात्मप्रत्यक्षं भवत्यलौकिकम्। एतच्चात्मनः प्रत्यक्षं न करणव्यपाश्रयम्, आत्मनि ह्यसौ भवतीति। तच्चैतत्, 'तदा द्रष्टुः स्वरूपेऽवस्थानं, स्वार्थसंयमात्पुरुषज्ञानाम्' इति तन्त्रान्तरसमाचारात् प्रतिपत्तव्यम्। अथाप्येतदुक्तम्। न च पुरुषप्रत्ययेन बुद्धिसत्त्वात्मना पुरुषो दृश्यते, पुरुष एव प्रत्ययं स्वात्मावलम्बनं पश्यतीति। विज्ञातारमरे केन विजानीयादिति चार्षं विज्ञानं करणसव्यपेक्षमात्मनः प्रत्यक्षमाक्षिपति। यच्च मनसैवानुद्रष्टव्यमिति, तत्खल्वात्ममनसोर्योगस्य

प्रथमं येयमपेक्षा तद्विषयम्। अथाप्येतदुक्तम्। मनसा तु प्रसन्नेनेत्यादि। प्रसादश्च मनसः संस्कारो योगसमाधिनिमित्त इति। यन्मनसा न मनुते इति चार्षं विज्ञानमुत्प्रेक्षितव्यम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहातीत्यादयो निगमा अपि बुभुत्सितव्या इति ॥ ११ ॥

## तथा द्रव्यान्तरेषु प्रत्यक्षम् ॥ १२ ॥

( उप० ) तत्किमात्मन्येव युक्तानां ज्ञानं, तत्कुतः सार्वज्ञ्यमित्यत आह—तथेति। ज्ञानमुत्पद्यत इति प्रकरणायातम्, तथेति योगजधर्मानुगृहीतेनैव मनसा, द्रव्यान्तरेषु चतुर्ष्वणुषु मनसि वायुदिक्कालाकाशेषु, द्रव्यपदेन तद्गतगुणकर्मसामान्यानां विशेषपदार्थस्य समवायस्याप्रत्यक्षगतस्यापि गुरुत्वस्थितिस्थापकादेरात्मगतस्यापि जीवनयोनियत्ननिर्विकल्पकभावनाधर्माधर्मादेः संग्रहः। सामग्र्या योगजधर्मोपग्रहस्य तुल्यत्वात्, अन्यथा सार्वज्ञ्यमुक्तं न भवेत् ॥ १२ ॥

( विवृ० ) ननु योगजधर्मेणात्ममात्रस्य साक्षात्कारोपगमे योगिनः सर्वज्ञत्वमनुपपन्नमत आह—तथेति। उक्तयोगजधर्मसन्निकर्षान्नात्ममात्रे प्रत्यक्षं किंतु द्रव्यान्तरेषु पृथिव्यादिष्वपि प्रत्यक्षं भवतीत्यर्थः ॥ १२ ॥

( भाष्यम् ) यथैतदात्मनः प्रत्यक्षम्—*तथा द्रव्यान्तरेषु प्रत्यक्षम्। योगसमाधिजाद्धर्मादुत्पद्यते। द्विविधाः खलु योगिनो भवन्ति संप्रज्ञातसमाधयोऽसंप्रज्ञातसमाधयश्च। तत्रैके धारणाप्रत्याहारसव्यपेक्षसमाधयोऽसमाहितान्तःकरणाः, अपरे चोपसंहृतसमाधयो येषां निर्बीजः समाधिः। स हि समाध्युपसंहार इति ॥ १२ ॥

## असमाहितान्तःकरणा उपसंहृतसमाधयस्तेषां च ॥ १३ ॥

( उप० ) युक्तानां प्रत्यक्षं ज्ञानमभिधायेदानीं वियुक्तानामाह—असमाहितेति। असमाहितान्तःकरणा इत्यस्यैव व्याख्यानमुपसंहृतसमाधय इति। यद्वा कथमसमाहितान्तःकरणा इत्यत आह—उपसंहृतसमाधय इति। उपसंहृतो दूरीकृतः समाधिर्निदिध्यासनात्मको यैस्ते तथा। ते हि समाधिप्रभावाद्विकरणधर्माः अणिमाद्याः शरीरसिद्धीर्दूरश्रवणाद्याश्चेन्द्रियसिद्धीराप्तवन्तः समाधावप्यलंप्रत्ययमासादयन्तः 'तावदेवास्य चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इत्यादिश्रुतिसमधिगतकृत्यान्तराभावाः भोगमात्रस्य कर्तव्यतामाकलय्य तेषु तेषु प्रदेशेषु द्वीपोपद्वीपादिषु तेन तेन जन्मना तुरङ्गमातङ्गविहङ्गभुजङ्गादिना देवर्षिमानुषभावेन च

पूर्वोपात्तान् कर्माशयानुपभुञ्जहे तावत्प्राप्तैव निरपाया भूमिरित्याकलयन्तः सकलमर्थजातं योगजधर्मबलोपबृंहितेन्द्रियशक्तयो व्यवहितं विप्रकृष्टं च प्रत्यक्षीकुर्वन्ति ॥ १३ ॥

( विवृ० ) युञ्जानस्य प्रत्यक्षमुक्त्वा युक्तस्य तदाह—असमाहितेति । असमाहितान्तःकरणाः असमाहितं समाधिरहितमन्तःकरणं येषां ते तथा । उपसंहृतः समापितः सफलीकृतः समाधिर्यैस्ते समाधेः फलं विविधाः सिद्धयस्ता येषामुत्पन्नास्तादृशाः ये युक्तास्तेषामपि आत्मनामन्येषां द्रव्याणां च प्रत्यक्षं भवतीति समुदितार्थः । युञ्जानस्य प्रत्यक्षे ध्यानापेक्षा, युक्तस्य प्रत्यक्षे तु ध्यानात्मकसमाध्यपेक्षा नास्तीति भावः ॥ १३ ॥

( भाष्यम् ) तत्र केषामेतत्प्रत्यक्षम् ? उभयेषामित्याह——*असमाहितान्तःकरणा उपसंहृतसमाधयस्तेषां च । ये खल्वसमाहितान्तःकरणाः ये चोपसंहृतसमाधयस्तेषामुभयेषामप्येतत्प्रत्यक्षमिति ॥ १३ ॥

तत्समवायात्कर्मगुणेषु ॥ १४ ॥

( उप० ) ननु न तावत्तेषु मानसं ज्ञानं मनसो बहिरस्वातन्त्र्यात् । नापि बहिरिन्द्रियजन्यम्, तेषां संबद्धवर्तमानार्थग्राहित्वात्, यथायोगं रूपोद्भवादिसापेक्षत्वात्, आलोकादिसव्यपेक्षत्वाच्चेत्याशङ्क्य केषुचित्पदार्थेषु प्रत्यासत्तिमुपपादयन्नाह—तदिति । प्रत्यक्षज्ञानं जायते इति शेषः । भौतिकानीन्द्रियाणि यदि सन्निकर्षमपेक्षन्ते तदा परमाण्वाकाशदिक्कालसमवेतेषु गुणसामान्येषु स्वमनःसंयोगिसमवायादितरद्रव्येषु च कायव्यूहोपभोगार्थोपगृहीतनानापण्डमनःसंयोगात् तत्संयुक्तसमवायात्तत्तद्द्रव्यगुणादिषु ज्ञानमुत्पद्यते । एतच्चोपपत्तिसौकर्यमनुरुध्योक्तम् । वस्तुतो बाह्येन्द्रियेषु मनसि च योगज एव धर्मः प्रत्यासत्तिस्तत एव सर्वानुपपत्तिशान्तेः अगस्त्यस्य समुद्रपानं दण्डकारण्यनिर्माणं चात्र दृष्टान्तः ॥ १४ ॥

( विवृ० ) ननु द्रव्याणां प्रत्यक्षसंभवेऽपि सर्वज्ञत्वं योगिनोऽनुपपन्नमेव गुणादीनामज्ञानादत आह—तत्समवायादिति । तस्य योगजधर्मसहकृतमनःसंयोगस्य, समवायात् युक्तयुञ्जानयोः कर्मसु गुणेषु च प्रत्यक्षमुत्पद्यते इत्यर्थः । अचिन्त्यो हि योगजधर्मप्रभावः, यद्बलेनागस्त्यमुनिः पारावारं पपौ सौभरिश्च कायव्यूहं परिगृहीतवान्, वशिष्ठश्च दिलीपस्य सुरभिशापं ज्ञातवान्, तस्य योगजधर्मस्य पदार्थसार्थसाक्षात्कारसंपादनं नासंभावनीयमिति । कर्मगुणेत्युपलक्षणं सामान्यादिकमपि बोध्यम् ।

एवं सामान्यलक्षणाज्ञानलक्षणारूपालौकिकप्रत्यासत्तिजन्यं प्रत्यक्षमप्यूहनीयम् ॥ १४ ॥

( भाष्यम् ) द्रव्यसमवायात्कर्मगुणेषूभयेषां प्रत्यक्षमुत्पद्यते योगसमाधिजाद्धर्मादिति ॥ १४ ॥

आत्मसमवायादात्मगुणेषु ॥ १५ ॥

( उप० ) तत् किं स्वकीयबुद्ध्यादिष्वपि मनसो द्रव्यान्तरसंयुक्तसमवाय एव प्रत्यासत्तिः, नेत्याह—आत्मेति । योगिनां प्रत्यक्षं ज्ञानमुत्पद्यते इति प्रकृतम्, आत्मसमवेतानां तु बुद्ध्यादीनां संयुक्तसमवायादेव प्रत्यक्षं ज्ञानमुत्पद्यतेऽस्मदादीनामिवेति न तत्र सन्निकर्षान्तरापेक्षेत्यर्थः । तत्रेन्द्रियार्थसन्निकर्षोत्पन्नमव्यभिचारिज्ञानं लौकिकप्रत्यक्षम्, अर्थजं वा, साक्षात्त्वजातियोगि ज्ञानं प्रत्यक्षमिति लौकिकालौकिकसाधारणम्॥१५॥

इति श्रीशाकरे वैशेषिकसूत्रोपस्कारे नवमाध्यायस्याद्यमाह्निकम् ।

( विवृ० ) तत् किं योगिनां लौकिकप्रत्यक्षं न भवतीत्यत आह—आत्मसमवायादिति । आत्मसमवायान्मनःसंयुक्तात्मसमवायात् आत्मगुणेपु स्वात्मवृत्तिसुखादिगुणेषु योगिनां लौकिकमपि प्रत्यक्षं भवति तत्सामग्र्या वृत्तत्वादिति समुदितनिष्कर्षः ॥ १५ ॥

इति श्रीजयनारायणतर्कपञ्चाननभट्टाचार्यप्रणीताया कणादसूत्रविवृतौ नवमाध्यायस्य प्रथममाह्निकम् ।

(भाष्यम् ) प्रत्यक्षमुत्पद्यते योगसमाधिजाद्धर्मादिति प्रकृतम् । तदेवमलौकिके प्रत्यक्षे न लौकिकहेतूनामस्त्यपेक्षेति । आचार्यप्रवृत्तिर्ज्ञापयति, नास्त्यन्यः पदार्थो द्रव्यगुणकर्मभ्य इति । तथा सामान्यलक्षणाज्ञानलक्षणे च सन्निकर्षाविति । कस्मात्—अवचनात् । यद्यभविष्यदिदमिवावक्ष्यत्, अवचनान्नास्तीति । न वै खलु भोः कश्चित्प्रत्येति, अतीतानागतं प्रदेशान्तरस्थं च द्रव्यमुपलभे इति दृष्टसामान्यात्तु भवत्युपलब्धिस्तत्समानस्य वस्त्वन्तरस्य । न त्वेतत्प्रत्यक्षमिति । यश्च प्रतिजानीते, यदि सामान्यलक्षणा नास्ति धूमे वह्निव्यभिचारसंशयो न स्यात्प्रसिद्धधूमे वह्निसंबन्धावगमाद्धूमान्तरस्य चानवगतेरिति । तस्याप्येतद्वक्तव्यम् । यश्चायं वह्निसंबन्धोऽवगम्यते, तस्य व्यभिचारसंशयः सामान्यधर्मदर्शनादुत्पद्यते । कश्चिद्धि संबन्धो व्यभिचारी विपरीतः कश्चित्, संबन्धश्चायं न च विशेषदर्शनमस्तीति । सकलवह्निधूमोपस्थितावपि तत्संबन्धस्यावगतौ न हेतुरस्ति । न चागृह्यमाणे धर्मिणि संशय उपपद्यते इति । अवगतौ वा

दृष्टसमानयोगक्षेमो नियतसंबन्ध एवावगम्येतेति न संशयः स्यादिति। ज्ञानलक्षणाऽप्येतेन व्याख्याता । सुरभिचन्दनमिति विद्यमानस्य क्रमस्याग्रहणाद्यौगपद्याभिमान इति ॥ १५ ॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये नवमस्याध्यायस्य प्रथममाह्निकम् ।

---

# नवमाध्याये द्वितीयाह्निकम् ।

## अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम् ॥ १ ॥

(उप०) तदेवं पूर्वाह्निके योगिप्रत्यक्षमयोगिप्रत्यक्षं च कारणतः स्वरूपतो लक्षणतश्च निरूपितम्। प्रमाणं द्विविधं प्रत्यक्षं लैङ्गिकं चेति यद्विभक्तं तत्र लैङ्गिकमिदानी निरूपयितुमुपक्रमते—अस्येदमिति। ज्ञानमिति प्रकृतम्, लिङ्गाज्जातं लैङ्गिकं व्याप्तिविशिष्टः पक्षधर्मो लिङ्गम् । तत्र व्याप्तिरुक्ता, यत्सिषाधयिषाविरोधिप्रमाणाभावो यत्र स तं प्रति पक्षः । तादृशं प्रमाणं साधकं बाधकं च तदुभयाभाववतः पक्षत्वात् । नहि साधके बाधके वा प्रमाणे सति कस्यचित्संशयः सिषाधयिषा वा, अतएव संदिग्धसाध्यधर्मा धर्मी सिषाधयिषितसाध्यधर्मा धर्मी वा पक्ष इति प्राञ्चः । उत्पाद्यसाध्यवत्तानिर्णयानिवर्त्यसंशयोत्पत्तिप्रतिबन्धकमानत्वावच्छिन्नाभावो यत्र स पक्ष इति जीवनाथमिश्राः । सिषाधयिषाविरहसहकृतसाधकमानाभावो यत्र स पक्ष इति केचित् । एतन्मते तु बाधस्थलेऽपि पक्षता, तदेतदनुमानमयूखेऽन्वेष्टव्यम् । तदेतस्य पक्षस्य धर्मो लिङ्गमित्युक्तं भवति । लिङ्गं च दृष्टमनुमितं श्रुतं वा यदनुभवरूपं ज्ञानं जनयति तल्लैङ्गिकम् । तदुक्तम् 'अनुमेयेन संबद्धं प्रसिद्धं च तदन्विते । तदभावे तु नास्त्येव तल्लिङ्गमनुमापकम्' इति । एतेन लिङ्गमेवानुमितिकरणं न तु तस्य परामर्शः तस्य निर्व्यापारत्वेनाकरणत्वात् । लिङ्गस्य तु स एव व्यापारः । यत्र धूमादेरतीतत्वमनागतत्वं वा तत्र कथमनुमितिरिति चेन्न, साध्यस्याप्यतीतानागतत्वयोस्तत्रानुमानात् । तत्रैव प्रतिबन्धादतीतत्वमनागतत्वं वर्तमानत्वं वा धूमादेर्यत्र न निश्चितं तत्र कथमनुमितिरिति चेत्, न कथञ्चित्, तत्र साध्यस्यापि संदेहात्, पूर्वापरदिनयोः सत्त्वनिश्चये मध्यदिने तु

संदेहे कथमनुमितिरिति चेत्; तद्दिनावच्छिन्नधूमादिना तद्दिनावच्छिन्नवह्न्यादेरनुमानात्। तथैव व्याप्तेः कारणत्वावधारणात्। धूलीपटलात् कथं धूमभ्रमादनुमितिरिति चेद्व्याप्तत्वेन ज्ञातस्यैव लिङ्गत्वात्, ज्ञानस्य च याथार्थ्यायाथार्थ्याभ्यामनुमितेस्ताद्रूप्यात्। अन्यथा तवापि कथं तत्र परामर्शः करणं स्यात्, अतीन्द्रियलिङ्गस्थले परामर्शस्य तदजन्यतया कथं तद्व्यापारत्वमिति चेत्तत्सत्तानिर्वाहकत्वरूपक्षैमिकसाधनतायास्तत्र व्यापारत्वघटकत्वादन्यथा समवायस्य श्रवणादेर्व्यापारत्वानुपपत्तेरिति। कार्याल्लिङ्गात् धूमालोकादेरग्न्याद्यनुमानं, कारणादपि यथा बधिरस्य भेरीदण्डसंयोगविशेषात् शब्दानुमानम्, यथा वा धार्मिकस्य यथाविधियागस्नानाद्यनुष्ठानाद्धर्मस्वर्गाद्यनुमानम्, यथाविधिकारीर्याद्यनुष्ठानाद्वा वर्षानुमानम्, पयःपूर्णनद्यादौ खन्यमानप्रवाहाद्वा जलनिःसरणानुमानम्, उपरिवृष्टिदर्शनाद्वा नदीवृद्ध्यनुमानम्, स चायं कार्यकारणभावलक्षण एकसंबन्धः प्रकारद्वयेनोक्तः। संयोगिनः शरीरस्य दर्शनात्त्वगिन्द्रियानुमानम्, विरोधिनो विस्फुर्जतोऽहेर्दर्शनाज्झाटाद्यन्तरितनकुलानुमानम्, समवायिना जलौष्ण्येन तत्संबद्धतेजोऽनुमानम्॥१॥

(विवृ०) इदानीमनुमितिरूपां बुद्धिं परीक्षितुमारभते—अस्येदमिति। लिङ्गेन व्याप्तिपक्षधर्मताविशिष्टेन जनितं ज्ञानं लैङ्गिकं प्रयोजकत्वं प्रयोज्यत्वं वा तृतीयार्थः। व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमिति तु फलितार्थः। नच परामर्शप्रत्यक्षमपि परामर्शजन्यमिति तत्रातिव्याप्तिः वह्निसाध्यकपरामर्शोपादाने आलोकादिविधेयकानुमितावव्याप्तिश्चाति वाच्यं तादृशज्ञानवृत्तिप्रत्यक्षासमवेतजातिमत्त्वस्यानुमितिलक्षणत्वे तात्पर्यात्। स्मृतिव्यावृत्त्यर्थं ज्ञाने जन्यान्तविशेषणम्। नच परामर्शजन्यस्मृत्यात्मकज्ञानमादाय तद्दोषतादवस्थ्यमिति वाच्यं व्याप्तिविशिष्टपक्षधर्मतानिश्चयत्वमात्रावच्छिन्नजनकतानिरूपितजन्यत्वस्य निवेशनीयत्वात्, स्मृतिजनकतावच्छेदककोटौ उपेक्षान्यत्वस्याधिकस्य सत्त्वेन तादृशजनकतायास्तादृशनिश्चयत्वमात्रावच्छिन्नत्वाभावात्। नच तादृशजन्यत्वमपेक्ष्य स्मृत्यन्यत्वमेव लाघवान्निवेशयितुमुचितमिति वाच्यं यथासन्निवेशे वैयर्थ्याभावात्स्मृत्यन्यत्वघटितस्य लक्षणान्तरत्वादिति, यद्वा जन्यान्तं परिचायकं निवेशस्तु यत्किंचिदनुमितिव्यक्तेस्तद्व्यक्तित्वेनेति संक्षेपः। व्याप्तिः पूर्वमुक्ता, पक्षधर्मता च पक्षतावद्धर्मिवृत्तिता, पक्षता च प्राचां मते साध्यनिश्चयनिवर्त्यसंशयरूपा, तस्य विशेष्यतासंबन्धेन पर्वतादौ सत्त्वम्,

आचार्यमते सिषाधयिषा पक्षता, तस्याश्च विषयताविशेषसंबन्धेन पक्षनिष्ठत्वम्, चिन्तामणिकृन्मते सिषाधयिषाविरहविशिष्टसिद्ध्यभाव एव पक्षता, तस्य च स्वप्रतियोगिविशेष्यत्वसंबन्धेन पर्वतादिवृत्तित्वम् , अनुमितिहेतुता तु पक्षताया आत्मनिष्ठप्रत्यासत्त्यैवेत्यवधेयम् । एतादृशपक्षतायास्तु धर्म्यंशे परिचायकतयैव निवेशो नतु विशेषणतयेति संक्षेपः । तदेतत् लैङ्गिकं ज्ञानं त्रिविधं पूर्ववत्, शेषवत्, सामान्यतोदृष्टं चेति । तत्र पूर्वं कारणं तद्वत् तल्लिङ्गकम् , शेषः कार्यं तद्वत्तल्लिङ्गकम्, सामान्यतोदृष्टं कार्यकारणभिन्नलिङ्गकमिति गौतमीयोक्तमेवाह—अस्येदमिति । अस्य साध्यस्य इदं साधनं कार्यमिति व्यवहारो यत्र भवति अर्थात्कार्यलिङ्गकं यथा धूमादिलिङ्गेन वह्न्यादेरनुमानम्, अस्येदं कारणमिति कारणलिङ्गकं यथा मेघोन्नतिविशेषेण वृष्टेरनुमानम्, कार्यकारणभिन्नलिङ्गकरूपं यत्सामान्यतो दृष्टं तद्विविधं, यथा लोहसंयोगिना मुसलविशेषलिङ्गेन उलूखलादौ संयोगेन लोहस्यानुमानम्, तथा नकुलविरोधिस्फूर्जदहिविशेषदर्शने गुल्माद्यन्तरितनकुलस्यानुमानम् । एवं वह्न्यनुयोगिकसमवायप्रतियोगिरूपवह्निसमवाय्युष्णस्पर्शेन भर्जनकपालादौ वह्न्यादेरनुमानमिति ॥ १ ॥

(भाष्यम्) परीक्षितं प्रत्यक्षम् । लैङ्गिकमिदानी परीक्ष्यते—*अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम् । एकार्थसमवायि चेति चार्थः । अथाप्येकार्थसमवाय्यपि समवाय्येव भवतीति तेनैव तस्य ग्रहणम् । कार्येण कारणस्य कारणेन कार्यस्य संयोगिना संयोगिनः विरोधिना विरोधिनः समवायिना समवायिन एकार्थसमवायिना चैकार्थसमवायिनो भवत्यनुमानमिति । कार्येण कारणमनुमीयते पूर्वोदकविपरीतमुदकं नद्याः पश्यन्ननुमिनोति भूता वृष्टिरिति । कारणेन कार्यमनुमीयते मेघोन्नतिविशेषं पश्यन्ननुमिनोति भविष्यति वृष्टिरिति । अन्यदुदाहृतं पुरस्तादिति । तदेतल्लैङ्गिकम् । लिङ्गात् खल्वेतदुत्पद्यते । कि पुनर्लिङ्गं येन लिङ्ग्यते ज्ञायते तल्लिङ्गम् । कार्यमुपलभ्य कारणमनुमिनोति कारणं चोपलभ्य कार्यमिति ॥ १ ॥

**अस्येदं कार्यकारणसंबन्धश्चावयवाद्भवति ॥ २ ॥**

( उप० ) नन्वव्यापकमिदं परिसंख्यानम्, नहि चन्द्रोदयेन समुद्रजलवृद्धेः जलप्रसादेनागस्त्योदयस्य कुमुदप्रकाशेन चन्द्रोदयस्य चतुर्दशनक्षत्रोदयेनापरचतुर्दशनक्षत्रास्तमयस्य रसेन रूपस्य रूपविशेषेण वा

रसविशेषस्यानुमानमनेन संगृह्यते इत्यत आह–अस्येदमिति । अस्येदमित्येतावदेव प्रयोजकं भवतीति, अस्य साधनस्य धूमादेरिदं साध्यं वह्न्यादि यद्वाऽस्य व्यापकस्य वह्न्यादेरिदं व्याप्यं धूमादि । तथाच व्याप्यत्वग्रहमात्रं तन्त्रं, न तु कार्यकारणभावादिरपि। ननु पूर्वसूत्रे तर्हि परिसंख्यानमतन्त्रमत आह–कार्यकारणसंबन्ध इति । अनेन चोक्तं संबन्धान्तरमप्युपलक्षयति संबन्धपदे च विषयिलक्षणा तेन संबन्ध इति संबन्धोपन्यास इत्यर्थः । कुतस्तदुपन्यास इत्यत आह–अवयवादेकदेशादुदाहरणमात्रात् ल्यब्लोपे पञ्चमी । तेनोदाहरणमनुरुध्य कार्यकारणभावादेः संबन्धस्योपन्यास इह दर्शने सांख्यादिदर्शने च भवतीत्यर्थः । एवं च स्वाभाविकसंबन्धशालित्वं व्याप्यत्वम्, स्वाभाविकत्वं चानौपाधिकत्वम्, तच्च प्रत्यक्षाणां केषांचित् साध्याव्यापकत्वनिश्चयात्, केषांचित् साधनव्यापकत्वनिश्चयादेवानुपाधित्वं ज्ञेयम् । अतीन्द्रियाणां च प्रमाणसिद्धानां केषांचिदुभयव्यापकत्वमुभयाव्यापकत्वं साधनमात्रव्यापकत्वं साध्यमात्राव्यापकत्वं वा । तत्राद्ये साधनव्यापकत्वात्, द्वितीये साध्याव्यापकत्वात्, चतुर्थेऽपि साधनव्यापकत्वादेवानुपाधित्वं निश्चेयम्, तृतीयेऽपि व्यापकस्य तन्मात्रव्यापकत्वानुपपत्तिरितरस्य तु कथं तन्मात्रव्यापकत्वमित्यत्र तर्कोऽनुसंधेय इति तुल्ययोगक्षेमत्वादिनाऽनुपाधित्वमध्यवसेयम् । भविष्यति कश्चिदत्रोपाधिरिति शङ्कापिशाची सकलविधिनिषेधव्यवहारानास्कन्दतीत्यनादेयेत्यनौपाधिकत्वनिश्चयसंभवात्। उपाधिलक्षणं व्याप्तिलक्षणं चोक्तम् । तच्चानुमानं द्विविधं स्वार्थं परार्थं च । तत्र स्वार्थं स्वयमेव व्याप्तिपक्षधर्मतयोरनुसंधानात् । परार्थं च परोदीरितन्यायजन्यव्याप्तिपक्षधर्मताज्ञानात् । न्यायश्च तृतीयलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकं वाक्यम् । तदवयवाश्च पञ्च, तत्रावयवत्वं तृतीयलिङ्गपरमर्शप्रयोजकशाब्दज्ञानजनकशब्दज्ञानजनकवाक्यत्वम्, तानि च वाक्यानि प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि, तत्र प्रतिज्ञा उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकं न्यायावयववाक्यम् । हेतुश्च प्रकृतसाधनगतपञ्चम्यन्तो न्यायावयवः । उदाहरणं तु प्रकृतसाध्यसाधनाविनाभावप्रतिपादको न्यायावयवः । उपनयश्चाविनाभावविशिष्टस्य हेतोः पक्षवैशिष्ट्यप्रतिपादको न्यायावयवः, निगमनं तु पक्षे प्रकृतसाध्यवैशिष्ट्यप्रतिपादको न्यायावयवः । एवं च प्रवर्तते न्यायः, शब्दोऽनित्यः, कृतकत्वात्, यद्यत्कृतकं तदनित्यम्, अनित्यत्वव्याप्यकृतकत्व-

वांश्चायं, तस्मादनित्यः। एतेषामेव प्रतिज्ञापदेशनिदर्शनानुसंधानप्रत्याम्नाया इत्यन्वर्था वैशेषिकाणा संज्ञाः। अत्र च वादजल्पवितण्डानां प्रवृत्तिप्रकारच्छलजातिनिग्रहस्थानलक्षणानि च वादिविनोदेऽन्वेष्टव्यानि॥ २॥

( विवृ० ) ननूक्तानुमानानां सामान्यतो दृष्टत्वे पृथिवीत्वादिना द्रव्यत्वानुमानं पद्मस्य विकासेन दिनस्यानुमानं कुमुदविकासेन रजन्या अनुमानं रसादिना गुरुत्वाद्यनुमानं च कुत्रान्तर्भविष्यतीत्यत आह—अस्येदमिति। अस्य व्यापकस्य साध्यस्य इदं साधनं व्याप्यमिति ज्ञानाल्लैङ्गिकं भवति, कार्यकारणाभ्यां सहितः संबन्धः कार्यकारणसंबन्धः संबन्धपदमपि मत्वर्थीयाच्प्रत्ययेन संबन्धिबोधकम्। अवयवात्प्रतीकाल्लैङ्गिकविशेषात् लैङ्गिकविशेषमधिकृत्य लिङ्गं भवतीति समुदितार्थः। तथाच कार्यं यत्र लिङ्गं तच्छेषवत्, कारणं यत्र लिङ्गं तत्पूर्ववत्, संबन्धिकार्यकारणभिन्नं साध्यस्य यथाकथंचित्संबन्धविशिष्टं यत्र लिङ्गं तत् सामान्यतोदृष्टम्, इत्युक्तानुमानानां सामान्यतोदृष्ट एवान्तर्भाव इति भावः। ये तु केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदेनानुमानस्य त्रैविध्यं वर्णयन्ति ते त्विदं सूत्रद्वयमन्यथैव व्याचक्षते, तद्व्याख्यानं तु ग्रन्थगौरवभयान्नोद्भावितमस्माभिः॥ २॥

( भाष्यम् ) एवं शेषेषु—*अस्येदं कार्यकारणसंबन्धश्चावयवाद्भवति। यदस्येदमिति लैङ्गिकं यच्च कार्यकारणसंबन्धस्तद्द्वयमवयवाद्भवति। कः पुनरवयवः? यस्तन्त्रान्तरेऽनुशिष्यते, प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः। साध्यनिर्देशः प्रतिज्ञा। उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः। तथा वैधर्म्यात्। साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम्। तद्विपर्ययाद्वा विपरीतम्। उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः। हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम्। त इमे तन्त्रान्तरानुशिष्टा अवयवाः निदर्शनम्। पृथिव्यादिकं कारणवदिति प्रतिज्ञा। उत्पत्तिधर्मकत्वादिति हेतुः। उत्पत्तिधर्मकं स्थाल्यादि द्रव्यं कारणवत् दृष्टमित्युदाहरणम्। तथाचोत्पत्तिधर्मकं पृथिव्यादिकमित्युपनयः। तस्मादुत्पत्तिधर्मकत्वात्कारणवत्पृथिव्यादिकमिति निगमनम्। वैधर्म्योक्ते च हेतौ। पृथिव्यादिकं कारणवत्। उत्पत्तिधर्मकत्वात्। अनुत्पत्तिधर्मकमात्मद्रव्यमकारणवत् दृष्टम्। न च तथा अनुत्पत्तिधर्मकं पृथिव्यादिकम्। तस्मादुत्पत्तिधर्मकत्वात्पृथिव्यादिकं कारणवदिति। कार्यकारणसंबन्धः खल्वपि। शरावोदञ्चनादिकं मृत्कारणकम्। तदनुविधानात्। वह्न्यनु-

विधायी पाको वह्निकारणको दृष्टः । तथाच मृदमनुविधत्ते शरावोदञ्चनादिकम् । तस्मात्तदनुविधानान्मृत्कारणकमिति । अथापि खलु कार्यं कारणेन संबध्यते तदुत्पत्तिकत्वात् । सुवर्णोत्पत्तिकं कुण्डलादि सुवर्णेन संबध्यमानं दृष्टम् । तथाच कारणोत्पत्तिकं कार्यम् । तस्मात्कारणोत्पत्तिकत्वात्कारणेन संबध्यते कार्यमिति । एवं वैधर्म्योक्तेऽपि वाच्यम् । सोऽयमस्येदमित्यनुमानेऽन्तर्भूतः कार्यकारणसंबन्धो वैजात्यात्पृथगभिधत्ते भगवान् सूत्रकारः । सुखेन खल्वेतच्छिष्याः प्रतिपद्येरन्निति । अथापि खलु कार्यकारणसंबन्धोऽवयवाद्भवति । अवयवनमवयवः । सोऽयमन्वयो व्यतिरेकसहकृतस्तत्र हेतुरिति । अथापि खल्ववयवे कारणे कार्यस्य संबन्धः समवायो नत्वन्यत्र । कपाले हि घटः समवैति न कुलालादौ इति । तदेतदनुमानमनेकशाखं बहुपरिकरं तन्त्रान्तरसमाचारात्प्रतिपत्तव्यमिति ॥ २ ॥

**एतेन शाब्दं व्याख्यातम् ॥ ३ ॥**

( उप० ) प्रमाणान्तराणि लैङ्गिकेऽन्तर्भावयितुं प्रकरणान्तरमारभते— एतेनेति । शाब्दं शब्दकरणकं ज्ञानमिदमिति यन्नैयायिकादीनामभिमतं तदप्येतेन लैङ्गिकत्वेन लिङ्गप्रभवत्वेनैव व्याख्यातं यथा व्याप्तिपक्षधर्मताप्रतिसंधानापेक्षं लैङ्गिकं तथा शाब्दमपि । तथाहि—एते पदार्थाः मिथः संसर्गवन्तः आकाङ्क्षादिमद्भिः पदैः स्मारितत्वात्, गामभ्याजेति पदार्थसार्थवत् । अत्र हि आकाङ्क्षादिमत्पदकदम्बस्मारितत्वं पदार्थानां मिथःसंसर्गवत्त्वव्याप्यं गृहीत्वैव संसर्गवत्त्वमनुमिनोति किं कल्पनीयप्रमाणभावेन शब्देन, ननु नदीतीरे पञ्च फलानि सन्तीत्यनाप्तवाक्ये व्यभिचारान्नेदमनुमानमिति चेन्न, आप्तोक्तत्वेनापि विशेषणात्, आप्तत्वं हि—प्रकृतवाक्यार्थगोचरयथार्थज्ञानवत्त्वं नत्वप्रतारकत्वमात्रं, तच्च वाक्यार्थप्रतीतेः पूर्वं दुर्ग्रहमिति चेन्न । शब्दप्रामाण्यवादिभिरपि व्यभिचारिशब्दव्यावर्तकस्याप्तोक्तत्वस्य ग्राह्यत्वेनाभिमतत्वात्, तेषां प्रामाण्यग्रहणार्थं तदपेक्षा शाब्दं तु ज्ञानं तद्ग्रहमन्तरेणाप्युपपद्यते तव तु यादृशं लिङ्गं तादृशग्रहणमावश्यकं व्याप्यं त्वाप्तोक्तत्वविशिष्टमिति चेन्न, अयमत्राभ्रान्त इति सामान्यतो ग्रहणसंभवात् । नन्वत्रेति प्रकृतसंसर्गे इत्येव पर्यवस्यति तथाच पूर्वमशक्यमेव तद्ग्रहणमिति चेन्न । प्रकरणसमभिव्याहारादिमाहात्म्यात्सामान्यत आप्तत्वनिश्चयसंभवेन लिङ्गनिश्चयसंभवात् । कदाचित्तत्र विसंवादेऽपि वाष्पादौ धूमधर्मेणेवानुमानप्रवृत्तेः । नन्वेते पदार्थाः संसृष्टा एवेति

१ भवत्विति पाठः ।

वा साध्यम्, संभावितसंसर्गा इति वा, नाद्यः अनाप्तोक्ते व्यभिचारात्। न द्वितीयः योग्यतामात्रसिद्धावपि संसर्गानिश्चयान्निष्कम्पप्रवृत्त्यनुपपत्तेः, योग्यतायाश्च पूर्वमेव हेतुविशेषणत्वेन ज्ञातत्वात् किमनुमानेनेति चेन्न। नियमस्यैव साध्यत्वात् आप्तोक्तत्वेन विशेषणाच्च न व्यभिचार इत्युक्तत्वात्। नन्वाकाङ्क्षा श्रोतरि तदुत्पाद्यसंसर्गावगमप्रागभावः स च स्वरूपसन्नेव हेतुस्तज्ज्ञाने च संसर्गज्ञानस्य पूर्वमेव भावादनुमानवैयर्थ्यमिति चेन्न। नहि संसर्गावगमप्रागभावमात्रमाकाङ्क्षां ब्रूमः। किं तर्हि स्मारिततदाक्षिप्ताविनाभावविशिष्टम्, तथाच विशेषणांशज्ञानादेवाकाङ्क्षाया ज्ञानात्, तर्हि तावदेवाकाङ्क्षाऽस्त्विति चेन्न विमलं जलं नद्याः कच्छे महिषश्चरतीत्यत्रापि नदीकच्छयोरविनाभावसत्त्वेनान्वयबोधापत्तेः नीलमुत्पलमित्यत्र नीलोत्पलयोरविनाभावेऽपि तदाक्षिप्तयोर्द्रव्यगुणयोरविनाभावसंभवात्। यद्वा पदस्मारितगोचरा जिज्ञासैवाकाङ्क्षा अभिधानापर्यवसानं वा। तथापि तज्ज्ञानमावश्यकं ज्ञायमानकारणे ज्ञानोपयुक्तव्यभिचारिवैलक्षण्याद्व्याप्तिवत्। अत एवानन्वयनिश्चयविरहो वा, बाधकप्रमाणाभावो वा, सजातीये दर्शनं वा, इतरपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावाप्रतियोगित्वप्रमाविशेष्यत्वं वा योग्यताऽस्तु तज्ज्ञामावश्यक आसत्तेरप्यव्यवधानेन पदार्थस्मरणरूपाया ज्ञानं तन्त्रम्। संसर्गे च संसृज्यमानविशेषादेव विशेष इति नानभिमतविशेषसिद्धिः। यद्वा एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षायोग्यतासत्तिमत्पदकदम्बत्वाद्गामभ्याजेति पदकदम्बवदित्यनुमानात् ज्ञानावच्छेदकतयाभिमतविशेषसिद्धिः। यत्तु एतानि पदानि स्मारितार्थसंसर्गवन्तीति साध्यम्, तत्पदानां पदार्थसंसर्गवत्त्वं बाधितमित्युपेक्षणीयम्। न च लिङ्गतया संसर्गज्ञापकत्वमेव पदानां संसर्गवत्त्वम्, तस्यानुमानात्पूर्वमसिद्धत्वेन व्याप्तेरग्रहात्। केचिच्चेष्टा प्रमाणान्तरमिति वदन्ति, तत्रोच्यते चेष्टा हि द्विविधा कृतसमयाकृतसमया च। तत्र कृतसमया अभिप्रायस्थं शब्दं स्मारयति न तु संसर्गप्रमामपि जनयति लिपिवत्। स्मृत्यारूढः शब्द एव तत्र प्रमाणं शब्दस्य च लिङ्गत्वमुक्तं न च शब्दस्मरणं चेष्टाया अवान्तरव्यापारः, चेष्टामन्तरेणापि शब्दादर्थप्रत्ययात् व्यापारत्वे तु चेष्टानैयत्यापत्तेः। नन्वेवं कथमेडमूकस्य चेष्टाधीनो व्यवहारस्तस्य तत्र समयग्रहाभावादिति चेन्न। तस्य चेष्टातः कथमर्थेऽपि संप्रत्यय इति चिन्तनीयत्वात्तस्यार्थेऽपि सङ्गतिग्रहाभावात्, व्यवहारस्तु तस्याविनाभावग्र-

हात्करितुरगयोरिव कशाङ्कुशाभिघातात्तत्तद्व्यवहारपाटवोपपत्तेः। अकृतसमया तु या कृत्यान्वयिनी, सा प्रयोजकाभिप्रायं स्मारयन्ती प्रयोज्यं प्रवर्तयति, न तु कुत्रचित्प्रमां जनयति, यथा शङ्खध्वनौ त्वया गन्तव्यमिति श्रुतशङ्खध्वनिः प्रतिष्ठते, तथा यदा मया तर्जन्यूर्ध्वीक्रियते तदा त्वयाऽसौ ताडनीय इति तदा ताडयति, न तु किंचित् प्रमिणोति। ज्ञप्त्यन्वयिनी त्वकृतसमया यथा दशानामङ्गुलीनामूर्ध्वकरणेन दश संख्या मुद्राणां पुराणानां वा त्वया ज्ञातव्येति कारकप्रधाना, हस्ताकुञ्चनदर्शनात्त्वया समागन्तव्यमिति क्रियाप्रधाना, तथाचानया चेष्टया पदार्था एव स्वतन्त्राः परं स्मार्यन्ते न तु तेषां परस्परमन्वयोऽपि बोध्यते, तद्बोधककर्तृकर्मादिविभक्तिवत् प्रकृते चेष्टैकदेशानां नियतानामभावात्। तर्हि संसर्गबोधमन्तरेण चेष्टातः कथं प्रवृत्तिनिवृत्ती इति चेत्संशयप्रतिभयोरन्यतरस्मादिति गृहाण। तस्मान्न चेष्टाऽपि प्रमाणमिति ॥ ३ ॥

(विवृ०) शाब्दबोधश्चात्रैवान्तर्भवतीत्याह—एतेनेति। एतेन लैङ्गिकज्ञानकथनेन शाब्दं शब्दज्ञानजन्यज्ञानमपि व्याख्यातं कथितमित्यर्थः। नैयायिकप्रभृतिभिरन्वयबोधनामकं प्रत्यक्षानुमितिभिन्नमनुभवरूपं ज्ञानं मन्यते, वैशेषिकमते तु न तदङ्गीकारः। पदज्ञानस्थले पदार्थसंसर्गस्यानुमितिरेव भवति तथाहि गौरस्तीति वाक्यश्रवणानन्तरं गौरस्तितावान् स्वधर्मिकास्तित्वान्वयबोधानुकूलाकाङ्क्षाश्रयपदस्मारितत्वात् घटवत्। अस्तिपदसमभिव्याहृतगौःपदस्मारितत्वाद्वा चक्षुर्वदित्यनुमानमेव नतु शब्दजन्यो विलक्षणो बोधः। पदानामेकवाक्यतापन्नत्वरूपसमभिव्याहृतत्वनिश्चयं विना न्यायनयेऽप्यन्वयबोधस्यानुत्पत्त्या पूर्वं तस्यावश्यकत्वात्। नच विनष्टे भाविनि वा घटचक्षुरादौ व्यभिचारः, स्वार्थानुमाने स्वरूपसतस्तस्याकिंचित्करत्वात्। एकविधव्यभिचारग्रहसत्त्वेऽपि अन्यविधव्याप्तिनिश्चयस्य संभवाच्च समानप्रकारकस्यैव व्यभिचारग्रहस्य व्याप्तिधीविरोधित्वात्। अथवा गौःपदमस्तित्ववद्गोगोचरज्ञानपूर्वकम् अस्तिपदसाकाङ्क्षगौःपदत्वात्। यन्नैवं तन्नैवं यथाकाशमित्येवं पदपक्षकानुमानमिति। यद्वा सामान्यत एवानुमानं, तथाहि—एते पदार्थाः परस्परं संसर्गवन्तः आकाङ्क्षादिमत्पदस्मारितत्वाद्दण्डेन गामभ्याजेति पदार्थसार्थवत्, किं वा एतानि पदानि स्मारितपदार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्पदकदम्बत्वात् 'दण्डेन गामभ्याज' इति पदकदम्बवदित्येवानुमानम्। नच

१ प्रतीतयोरिति लिखितपुस्तकपाठः।

व्याप्तिज्ञानविरहस्थले कथं तादृशानुमितिरिति वाच्यं, तत्र विशिष्टबोधस्यानङ्गीकारात् । तावत्पदार्थस्मृतितः परस्परं संसर्गावगाह्यलौकिकमानसप्रत्यक्षात्मकविशिष्टबोधसंभवाच्च ।एतेन चेष्टाऽपि व्याख्यातेति संक्षेपः।।३।।

(भाष्यम्) प्रत्यक्षलैङ्गिकव्याख्यानेन शाब्दं व्याख्यातमिति । यद्वै प्रत्यक्षेणोपलभते लिङ्गाच्चानुमिनोति परानेतद्बोधयितुं भूतदयया शब्दं प्रयुङ्क्ते । शब्दाच्च योऽर्थः प्रतीयते सोऽयं प्रत्यक्षानुमानाभ्यामवगत इति शब्दात्प्रतीयमानेऽर्थे प्रत्यक्षमनुमानं वा प्रमाणं न शब्दः । योऽप्यलौकिकोऽर्थस्तत्राप्यार्षं विज्ञानं हेतुरिति । अथापि शाब्दं विज्ञानं न शब्दस्य प्रमाणभावमपेक्षते इति कुत एतत्प्रतिपत्तव्यम्? विप्रलम्भकवाक्यादर्थोपलब्धेः । विप्रलम्भकवाक्यमेतादिति जानानोऽप्यर्थमुपलभते । उत्तरकालं यदि तत्र प्रमाणं किञ्चिदुपलभते, तथ्यमेतदिति प्रतिपद्यते । विपर्यये विरोधे च विपर्यय इति । विमर्शविपर्ययोपपत्तेश्च । शब्दादर्थमुपलभमानस्य यदसौ ब्रवीति तत्प्रमाणादुपलब्धं न वेति विमर्शः, यदयमाह मिथ्यैतदिति विपर्ययश्चोपपद्यते । विमर्शविपर्ययोपपत्तेः प्रतिपद्यामहे, न शब्दस्य प्रमाणभावापेक्षा शब्दादर्थोपलब्धिरिति । तदेवमाप्तोपदेशो न प्रमाणम्, अथाप्तोपदेशः प्रमाणं, नैव तत्र विमर्शविपर्ययावुपपद्येते । अनाप्तवाक्याच्चार्थोपलब्धिः । प्रत्यक्षं चैतन्न शक्यमपह्नोतुमिति । अथापि खल्वयं जिज्ञासितमर्थमाप्तोपदेशाच्छ्रुतमनुमानेन जिज्ञासते अनुमानेन ज्ञातं च प्रत्यक्षतो दिदृक्षते इति प्रत्यात्मं व्यवस्थितो नियमः । स खल्वयमाप्तोपदेशं न प्रत्येति, अतोऽनुमानेन जिज्ञासते । तदपि परोक्षमिति प्रत्यक्षतो दिदृक्षते इति । यदि शब्दः प्रमाणं तत्रायमप्रत्ययो नोपपद्यते निर्दोषप्रमाणभावादिति । नहि लिङ्गादुपलब्धौ विमर्शविपर्ययाप्रत्ययाः प्रक्रमन्ते । संवादार्थमिति चेल्लिङ्गादुपलब्धौ तत्प्रसङ्गः । अथाप्ययमाप्तो देशं प्रत्येति संवादार्थं त्वनुमानेन जिज्ञासते इति चेत्, लिङ्गादुपलब्धावपि शब्देन जिज्ञासाप्रसङ्गः विशेषो वा वक्तव्य इति । श्रोतव्यो मन्तव्य इति च श्रुतस्य मननमृषिरभिधत्ते । अथाप्येतदुक्तम् । आप्तोपदेशस्य प्रत्यक्षानुमानाभ्यां प्रतिसंधानादिति । योऽपि प्रतिजानीते, आप्तेन दृष्टोऽनुमितो वाऽर्थः परत्र स्वबोधसंक्रान्तये शब्देनोपदिश्यते शब्दात्तदर्थविषया वृत्तिः श्रोतुरागम इति । सोऽप्येवं वाच्यः । यथार्थोपलब्धिसाधनं च प्रमाणं मन्यते । अयथार्था चोपलब्धिः खल्वपि शब्दादुत्पद्यते । तस्मात्संशयविपर्ययसाधन-

वन्नासौ प्रमाणम् । प्रमाणादुपलब्धो ह्यर्थस्तथाभूतो भवतीति । प्रत्यक्षलैङ्गिकयोरपि यदयथार्थोपलब्धिसाधनं न तत्प्रमाणं, यच्च प्रमाणं न तदयथार्थोपलब्धिसाधनम् । सोऽयं प्रमातुरपराधो न प्रमाणस्य निमित्तान्तरकारितश्च प्रत्यक्षलैङ्गिकयोरुपप्लवः, न त्वेतच्छब्दे संभवति । रूपान्तराभावात् । यदेवास्य रूपं यथार्थोपलब्धिसाधनस्य तदेव विपरीतस्यापीति । तस्मादुपलब्धिसाधनमात्रं न प्रमाणम् । अथोपलब्धिसाधनमात्रं प्रमाणं, आप्तोपदेशः प्रमाणमित्येतन्नोपपद्यते । न ह्यनाप्तोपदेशो नोपलब्धिं साधयतीति । संज्ञादीनां च प्रमाणान्तरभावप्रसङ्गः । यदि यदुपलब्धिसाधनं तत्प्रमाणं, संज्ञादीनामपि प्रमाणान्तरभावः प्रसज्यते । संज्ञादयोऽपि साधयन्त्युपलब्धिमिति तस्माल्लिप्यादिवच्छब्दोऽपि न प्रमाणान्तरमिति । प्रमाणान्तरोपलब्धार्थप्रज्ञापनमिति चेत्, समानम् । अथापि प्रमाणावगतार्थप्रज्ञापनमात्रं प्रयोजनं संज्ञादीनामिति नैतेषां प्रमाणान्तरभाव इति चेत्, शब्दस्यापि तदेव प्रयोजनमिति शब्दोऽपि न प्रमाणान्तरमिति । स्वयं हि ज्ञातमर्थं परान् प्रतिपादयितुकामेन शब्दः प्रयुज्यते इति । अथापि खल्वेवमसौ पुरुषो वेद इति शब्दात्प्रतिपद्यते न त्वेवमसावर्थ इति । तत्र प्रयोक्तुर्विज्ञानं तेनानुमीयते इत्यनुमितौ हेतुः शब्दः । तच्च विज्ञानं यदि प्रामाणिकं तदा संवादः व्यवहारश्च ततः प्रवर्तते, विपर्यये विपर्यय इति । आप्ताः खल्वधिगतमेव तत्त्वतोऽर्थमुपदिशन्तीत्याप्तोपदेशस्य प्रामाण्याभिमान इति । अपूर्वा ह्युपलब्धिः प्रत्यक्षानुमानाभ्यामुत्पद्यते, न त्वेवं शब्दात् । नियमतो ह्युपलब्धेऽर्थे तस्य व्यापार इति । एतेनैतिह्यं व्याख्यातम् । इति होचुरित्यैतिह्यं अनिर्दिष्टप्रवक्तृकं प्रवादमात्रमिति । अथाप्येतल्लैङ्गिकं संयोग्यादिकात् लिङ्गादुत्पद्यते चेत्, संयोग्यादिकमर्थान्तरमर्थान्तरस्यापदेश इत्येतन्नोपपद्यते । लिङ्गं खल्वेतत्स्यात् । अथापदेशोऽयं तन्निमित्तं विज्ञानं लैङ्गिकमिति नोपपद्यते । आपदेशिकं हि तदैतत्स्यात् ॥ ३ ॥

**हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम् ॥ ४ ॥**

( उप० ) ननु शब्दः कथं लिङ्गं शब्दस्यापदेशस्वभावत्वेन लिङ्गभिन्नत्वादित्याशङ्क्याह—हेतुरिति । अपदिश्यते कथ्यतेऽनेनार्थ इत्यपदेशः शब्दः, स च हेतुलिङ्गपर्याय एव, प्रमाणमिति लिङ्गविषया प्रमाकरणमित्यर्थः । एवं करणशब्दोऽपि लैङ्गिकज्ञानकरणे लिङ्ग एव वर्तते । द्वयी हि करणगतिः, किंचित्सन्निकर्षाधीनप्रवृत्ति, किंचिच्चाविनाभावबलप्रवृत्ति,

१ प्रमाण इति पाठः ।

शब्दस्य तु अर्थेन न सन्निकर्षो नाप्यविनाभाव इति कथमर्थं गमयेत्, संकेताद्गमयतीति चेत् संकेतो हि पदार्थे न तु तत्संसर्गे, तत्रापि संकेत इति चेन्न तस्यानेकविधत्वेन संकेतविषयभावानुपपत्तेः । पदार्थसंकेतबलादेव वाक्यार्थोऽपि भासते इति चेन्न, अन्यसंकेतेनान्योपस्थितावतिप्रसङ्गात् । शब्दस्मारितसंसर्गत्वेन नियम इति चेत् तथाचैतन्नियमबलेनानुमानस्यैव लब्धावसरत्वात् । संकेतस्यापि इच्छामात्रत्वेनातिप्रसक्तत्वात्, ईश्वरेच्छा नातिप्रसक्तेति चेन्न तदिच्छामन्तरेणापि गङ्गादिपदात्तीराद्युपस्थितेरित्यलं नैयायिकेषु धृष्टतयेति ॥ ४ ॥

( विवृ० ) ननु शब्दस्यापदेशपदवाच्यस्य कथं लिङ्गत्वमपदेशस्य स्वरूपाच्छादनरूपतयाऽनुमित्यजनकत्वादिति तटस्थाशङ्कां निरस्यति—हेतुरिति । अपदेशशब्दो यद्यपि स्वरूपाच्छादने वर्तते तथापि अपदिश्यते कथ्यतेऽनेनेतिव्युत्पत्या शब्देऽपि स वर्तते, शब्दश्च लिङ्गविधया लैङ्गिकज्ञान एव हेतुरिति, अनुमितिप्रमितिकरणं च शब्दोऽपि, एवं लिङ्गविधया करणत्वमपि शब्दे वर्तते । तथाच हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरं एते शब्दा एकस्य लिङ्गस्य बोधकाः नतु स्वरूपाच्छादनमात्रबोधकाः स्वरूपाच्छादनस्याननुमापकत्वेऽपि शब्दस्यानुमापकत्वे न काचिदनुपपत्तिरित्याशङ्कितुर्भ्रान्तिर्महतीति भावः ॥ ४ ॥

( भाष्यम् ) उपपद्यते इत्याह । कथम्? यस्मात्—*हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम् । हीयते गम्यतेऽनेनेति हेतुः । सोऽयमपदेशः, तेन ह्यपदिश्यते इति । तदेव लिङ्गं लिङ्ग्यते ज्ञायतेऽनेनेति । तच्च प्रमाणं, प्रमीयतेऽनेनेति । तदेव करणं, साधकतमं भवत्यनुमिताविति । सेयं सामान्याभिधायिनः शब्दाद्विशेषप्रतिपत्तिरिति । तदेतत्सर्वमनर्थान्तरं न त्वेषामर्थभेद इति ॥ ४ ॥

## अस्येदमिति-बुद्ध्यपेक्षितत्वात् ॥ ५ ॥

( उप० ) उपमानादीनामपि पराभिमतानामविनाभावबलप्रवृत्तिकानां लैङ्गिक एवान्तर्भाव इति प्रतिपादयितुमाह—अस्येदमिति । उपमानार्थापत्तिसंभवाभावानामिति शेषः । अस्य व्यापकस्य इदं व्याप्यमित्याकारा या बुद्धिः सा जनकत्वेनापेक्षिता येषां ते तदपेक्षितास्तस्य भावस्तदपेक्षितत्वं तस्मादित्यर्थः । आहिताग्निपाठात् क्तान्तेन बहुव्रीहिः । तारकादिपाठादितज् वा, तत्रोपमानं तावदनुमानमेव शब्दद्वारा । तथाहि गोसदृशो

गवय इति वाक्यं तावदारण्यकेन कीदृक् गवय इति नागरिकजिज्ञासायामभिधीयते तत्र यो गोसदृशः स गवयशब्दवाच्य इति सामानाधिकरण्यबलादतिदेशवाक्यश्रवणसमनन्तरमेव परिच्छिनत्ति वनं गतस्तु तादृशं पिण्डमुपलभ्यायमसौ गवयशब्दवाच्य इति प्रतिसंधत्ते, अतिदेशवाक्यश्रवणसमये गवयत्वं प्रवृत्तिनिमित्तं न ज्ञातमतः कथं संज्ञापरिच्छेद इति चेत् लक्षणया तत्प्रतीतिसंभवात् गोसदृशो गवय इति वाक्येऽन्वयानुपपत्तिविरहात्कथं लक्षणेति चेत्तात्पर्यानुपपत्तेः सत्त्वात् । नहि व्युत्पित्सुं प्रति गोसादृश्यस्य सखण्डस्य प्रवृत्तिनिमित्तत्वेनोपदर्शनमुचितं तस्मादखण्डजातिविशेषे तात्पर्यमस्येति लक्षणासंभवात् । यद्वा गवयशब्दो गवयवाचकः असति वृत्त्यन्तरे शिष्टैस्तत्र प्रयुज्यमानत्वात् । असति वृत्त्यन्तरे यः शब्दो यत्र शिष्टैः प्रयुज्यते स तस्य वाचको यथा गोशब्दो गोरित्यनुमानादेव गवयसंज्ञां परिच्छिनत्ति, तर्कश्च यस्त्वयोपमानसहकारी वाच्यः स वरमनुमाने क्लृप्तप्रमाणभावेऽस्तु किं कल्पनीयप्रमाणभावेनोपमानेनेति । अनुमानमयूखे विस्तरोऽत्रान्वेष्टव्यः । अर्थापत्तिरप्यनुमानमेव तथाहि—दृष्टार्थापत्तिस्तावज्जीवतश्चैत्रस्य गृहासत्त्वेन दृढतरप्रमाणावधृतेन बहिःसत्त्वं कल्पयति, तत्रोपपाद्योपपादकयोर्व्याप्यव्यापकभावावधारणाधीनैव बहिःसत्त्वप्रतीतिः, भवति हि जीवतो गृहासत्त्वं बहिःसत्त्वेन सहचरितं बहिःसत्त्वं विना जीवतो गृहासत्त्वमनुपपन्नमिति वा ज्ञानम्, तत्राद्येऽन्वयव्याप्ति(प्ते ?)रेवान्त्ये तु व्यतिरेकव्याप्तेरेव ग्रह इति । व्याप्तिरस्ति न तस्य ग्रहणमिहोपयुज्यत इति चेत् व्याप्तिग्रहणमन्तरेणार्थापत्त्या भासानवकाशात्, स्वरूपसत्या व्याप्त्या वस्तुतो यदुपपादकं तस्यैव कल्पना स्यादिति दिक् । संशयकरणिकाया विरोधकरणिकायाश्चानुमानान्तर्भाव ऊहनीयः । विरोधस्यापि सहानवस्थाननियमलक्षणस्य व्याप्तिघटितत्वात् । श्रुतार्थापत्तिरप्यनुमितानुमानं 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यनेन वाक्येन पीनत्वमनुमितं तेन च पीनत्वेन रात्रिभोजनानुमानम्, देवदत्तो रात्रौ भुङ्क्ते दिवाऽभोजित्वे सति पीनत्वादिति[१] । संभवोऽप्यनुमानमेव, तदुदाहरणं हि संभवति खार्यां द्रोणः, संभवति द्रोणे आढकम्, संभवति सहस्रे शतमित्यादि । तत्रेयं खारी द्रोणवती तद्घटितत्वात्, यद्येन घटितं तत्तेन तद्वत् यथाऽवयववान् घटः । एवमन्यदप्यूह्यम् । यत्तु संभवति

१ पीनत्वासभवादिति मु पु पाठ । पीनत्वान्मतवादिति लिखितपु पाठ । उभयविधस्याप्ययुक्तत्वाद्युक्तो विद्वद्भिरूहनीय. ।

ब्राह्मणे विद्या, संभवति क्षत्रिये शौर्यमित्यादि, तत्प्रमाणमेव न भवति अनिश्चायकत्वात् । अभावोऽपि न मानान्तरं कार्येण कारणानुमानवत् कार्याभावेन कारणाभावानुमानस्य व्याप्तिमूलकत्वेनानुमान एवान्तर्भावात् । भट्टमतं तु भूतलादावभावग्राहकं प्रमाणमनुपलम्भाख्यं, तत्क्वचित् प्रत्यक्षे क्वचिच्चानुमानेऽन्तर्भूतं चक्षुरादिनैवाभावग्रहात्, न चेन्द्रियमधिकरणग्रह एवोपक्षीणम्, अभावग्रहपर्यन्तं तद्व्यापारसत्त्वात् । ऐतिह्यमविज्ञातप्रवक्तृकं प्रवादपारम्पर्यम्, इतिहेतिनिपातसमुदायः पुरावृत्ते वर्तते, तस्य भाव ऐतिह्यं, तद्यदि बाधितार्थं न भवति तदा शब्दान्तर्निवेशादनुमानम् । यदिह वटे यक्षो मधूकतरौ गौरीत्यादि तद्यद्याप्तोक्तं तदा पूर्ववत्, अनाप्तोक्तं चेत्तदा न प्रमाणम्, तदेवं प्रत्यक्षमनुमानं चेति सिद्धं द्वयमेव प्रमाणमिति ॥ ५ ॥

( विवृ० ) उपमानादेरप्यनुमान एवान्तर्भाव इति प्रतिपादयति—अस्येति । अस्य व्यापकस्य साध्यस्य इदं साधनं व्याप्यमिति बुद्धेर्याऽपेक्षा सा जाता येषां तत्त्वात्, व्याप्तिज्ञानसापेक्षत्वादिति तु फलितार्थः । उपमानार्थापत्तिसंभवैतिह्यस्थलीयबुद्धीनां लैङ्गिकत्वमिति शेषः । तत्रोपमानजन्या बुद्धिस्तावत् ग्रामीणस्य प्राथमिकगवयचक्षुःसंयोगानन्तरमयं गोसदृश इति प्रात्यक्षिकं ज्ञानं ततो गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणं तत एतज्जातीयो गवयपदवाच्य इति या बुद्धिरुदेति सोपमितिरिति न्यायमतानुसारिणः । काणादमते तु साऽनुमितिरेव गोसादृश्यलिङ्गेन गवयपदवाच्यत्वव्याप्यतया गृहीतेन गवयपदवाच्यत्वस्यानुमितेरेव तदानी जननात् । व्याप्तिधीविरहदशायां च न भवत्येव गवयपदवाच्यत्वधीरिति । अथवा गवयप्रत्यक्षानन्तरं गवयपदं गवयत्वप्रवृत्तिनिमित्तकम्, असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम्, यद्वा गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादित्यनुमानेन पक्षधर्मताबलाद्गवयत्वप्रवृत्तिनिमित्तकत्वं भासते इति । मीमांसका अर्थापत्तिं प्रमाणान्तरं मन्यन्ते तथाहि—यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतं जीविनो गृहासत्त्वं च प्रत्यक्षादवगतम् । तत्र शतवर्षजीवित्वान्यथानुपपत्त्या बहिःसत्वं कल्प्यते । तदनुमानेन गतार्थत्वान्नेष्यते । तथाहि जीवित्वस्य बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतं तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधात् बहिःसत्त्वमनुमितौ भासते एवं 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यादौ पीनत्वस्य भोजनव्याप्यत्वावग-

माद्भोजनं सिद्ध्यत् दिवाभोजनबाधे रात्रिभोजनं सिध्यति। एवं संभवै-तिह्ययोरपि प्रमाणान्तरत्वं मन्यन्ते पौराणिकाः। तथाहि संभवो भूयःसह-चाराधीनज्ञानं यथा संभवति ब्राह्मणे विद्या संभवति सहस्रे शतमत्र च व्याप्तिर्नापेक्षितेति तेषामाशयः। एवमैतिह्यम्, इतिहोचुरित्यनेन प्रकारेण यदुच्यते, तद्धि अनिर्दिष्टप्रवक्तृकं परंपरागतं वाक्यम्—यथा 'इह वटे यक्षः' इत्यादि। तस्याप्तोक्तत्वानिश्चयान्न शब्देऽन्तर्भाव इति पौराणिकानाम-भिसंधिः। तदेतन्मतं न समीचीनम्, ऐतिह्यस्य शब्दरूपतयाऽनुमान एवान्तर्भावात्। संभवोऽपि व्याप्तिसापेक्षोऽनुमान एवान्तर्भवति, तन्निर-पेक्षस्तु प्रमाणमेव न, तदुक्तं गौतमीये 'शब्द ऐतिह्यानर्थान्तरभावाद-नुमानेऽर्थापत्तिसंभवाभावानामनर्थान्तरभावाच्चाप्रतिषेधः' इति। भट्टमते वेदान्तमते चानुपलब्धेरपि प्रमाणान्तरत्वमस्ति तया चाभावग्रहो भवतीति तन्मतमपि न मनोरमम्। अनुपलब्धिस्थले इन्द्रियसंबद्धविशेषणता-प्रत्यासत्त्या प्रत्यक्षमेव भवतीति तत्र चानुपलब्धेः कारणत्वं न विप्रति-पद्यामहे प्रमाणान्तरत्वं तु तस्या न युक्तिपदवीं स्पृशतीति संक्षेपः॥ ५॥

(भाष्यम्) कस्मात्—*अस्येदमिति बुद्ध्यपेक्षितत्वात्। अस्येदं कार्यं कारणमित्यादिवदस्य ज्ञापकस्येदं ज्ञाप्यमस्यापदेशस्येदमपदेश्यमस्य लिङ्गस्येदं लिङ्ग्यमस्य प्रमाणस्येदं प्रमेयमस्य करणस्येदं कार्यमिति बुद्धिः सर्वत्रापे-क्षते। द्वयोः संबन्धदर्शनं सर्वत्रापेक्षितमिति शब्दान्तरमात्रं न त्वर्थान्तर-मिति। अथापि खल्वस्येदमिति बुद्ध्यपेक्षितत्वादुपमानादयो न प्रमाणा-न्तरमिति। तत्रोपमानं सादृश्यप्रतिपत्तिहेतुर्न प्रमाणान्तरम्। यदा द्वौ भावौ पश्यति सादृश्यमनयोः प्रत्यक्षमुपलभते। प्रमाणान्तरभावे वा साधर्म्यप्रतिपत्तिहेतुवद्वैधर्म्यप्रतिपत्तिहेतोस्तत्त्वप्रसङ्गः। यच्च गोसदृशो गवय इत्यारण्यकात् श्रुतवतोऽरण्यं गतस्य गवयं पश्यतस्तत्र गोसादृश्य-ज्ञानं तदपि प्रत्यक्षम्। तस्यैव परतो गवि गवयसादृश्यप्रतिपत्तिः प्रत्यक्षमनुमानं वा। यच्च तत्र गवयपदसंकेतग्रहणं तदप्यनुमानम्। गोसा-दृश्यमुपलभ्य खलु तत्र गवयशब्दस्य संकेतमनुमिनोति। तत्र गवयशब्द-प्रयोगो हि संकेतनिमित्त इति। एवमर्थापत्तिरप्यनुमानम्। अर्थादापत्तिः प्रसङ्गः। दिवाऽभुञ्जानस्य भोजनकार्यं पीनत्वमुपलभ्य रात्रिभोजनमनु-मिनोति। जीवतो देशसंयोगाव्यभिचाराद्गृहेऽनवस्थितस्य बहिरवस्थानम-नुमीयते। संभवो नाम समुदायसमुदायिनोः समुदायेनेतरस्य ग्रहणं तच्चानुमानम्। द्रोणस्य सत्ताग्रहणात् यदाढकस्य सत्ता गृह्यते, तत्खलु

द्रोणं प्रत्याढकस्य समुदायिभावात्। चतुर्गुणितो ह्याढको द्रोण इति। अभावो विरोधी, अभूतं भूतस्य भूतमभूतस्य भूतोभूतस्य। तदनुमानमित्युक्तम्। तदेवं परीक्षितं लैङ्गिकम् ॥ ५ ॥

आत्ममनसोः संयोगविशेषात्संस्काराच्च स्मृतिः ॥ ६ ॥

( उप० ) लैङ्गिकं व्याख्याय इदानी प्रकरणान्तरमारभते—आत्ममनसोरिति। उत्पद्यत इति शेषः। संयोगविशेषः प्रणिधानादिसंनिधानम्, एतस्मादसमवायिकारणादात्मनि समवायिनि स्मृतिर्विद्याविशेष उत्पद्यते, निमित्तकारणमाह संस्कारादिति। चकारेण व्यापारी पूर्वानुभवः समुच्चीयते। अनुभवयाथार्थ्यायाथार्थ्यमियमनुविधत्ते, रज्जुं भुजङ्गतयोपलभ्य पलायितस्य तथैव स्मृतेः। न च सततं स्मृतिप्रसङ्गः, संस्कारोद्बोधाधीनत्वात्, तदुक्तं प्रशस्तदेवपादैः ' लिङ्गदर्शनेच्छानुस्मरणाद्यपेक्षादात्ममनसोः संयोगविशेषात् पट्वभ्यासादरप्रत्ययजनिताच्च संस्काराद्दृष्टश्रुतानुभूतेषु शेषानुव्यवसायस्मरणेच्छाद्वेषहेतुरतीतविषया स्मृति. ' इति। आर्षं ज्ञानं सूत्रकृता पृथङ्न लक्षितं योगिप्रत्यक्षान्तर्भावितम्। पदार्थप्रदेशाख्ये तु प्रकरणे तदुक्तं, तद्यथा ' आम्नायविधातॄणामृषीणामतीतानागतवर्तमानेष्वतीन्द्रियेष्वर्थेषु धर्मादिषु ग्रन्थोपनिबद्धेषु लिङ्गाद्यनपेक्षादात्ममनसोः संयोगाद्धर्मविशेषाच्च प्रातिभं ज्ञानं यदुत्पद्यते तदार्षम् ' इति। तच्च कदाचिल्लौकिकानामपि भवति यथा कन्यका वदति श्वो मे भ्राताऽऽगन्तेति, हृदयं मे कथयतीति ॥ ६ ॥

( विवृ० ) द्विविधामनुभूतिरूपा बुद्धिं परीक्ष्य स्मृतिरूपा बुद्धिं परीक्षितुमारभते—आत्ममनसोरिति। आत्ममनसोः संयोगविशेषात् सुस्मूर्षादिसहितादात्मनःसंयोगात् संस्कारात् समानाकारकात् भावनाख्यात्, चकारादुद्बोधकाच्च स्मृतिर्भवति। तत्र च उपेक्षानात्मकनिश्चयः करणं, संस्कारो व्यापारः, उद्बोधकास्तत्सहकारिणः, आत्ममनःसंयोगोऽसमवायिकारणं सुस्मूर्षारूपप्रणिधानादिकं निमित्तकारणमित्यर्थः ॥६॥

( भाष्यम् ) अथेदानीं स्मृतिः परीक्ष्यते। सा चेयम्—*आत्ममनसोः संयोगविशेषात्संस्काराच्च स्मृतिः। उत्पद्यते। आत्ममनसोर्यः संयोगविशेषस्तस्मात् संस्काराच्च प्राचीनादिति। कोऽसौ विशेषः निमित्तविशेषव्यपाश्रय इति। तच्चैतत्, प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसंबन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्य इति तत्रान्तरसमाचारा-

प्रतिपत्तव्यमिति । यथा खल्वात्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिः ॥ ६ ॥

**तथा स्वप्नः ॥ ७ ॥**

( उप० ) तदेवं चतुर्विधां विद्यां व्युत्पाद्य इदानीमविद्यां व्युत्पादयितुमर्हति, तत्र संशयविपर्ययौ प्रसङ्गात्पूर्वमेव निरूपितौ, स्वप्नं निरूपयितुमाह—तथेति । यथात्ममनसोः संयोगविशेषात्संस्काराच्च स्मृतिस्तथा स्वप्नज्ञानमपीत्यर्थः । उपरतेन्द्रियग्रामस्य प्रलीनमनस्कस्य इन्द्रियद्वारेणेव यदनुभवनं मानसम्, तत् स्वप्नज्ञानम् । तच्च त्रिविधं किंचित्संस्कारपाटवात्कामी क्रुद्धो वा यमर्थमादृतश्चिन्तयन् स्वपिति तस्य तस्यामवस्थायां प्रत्यक्षाकारं ज्ञानं पुराणादिश्रवणजनितसंस्कारवशाज्जायते कर्णार्जुनीयं युद्धमिदमित्याकारम् । किंचिद्धातूनां वातपित्तश्लेष्मणां दोषात् । तत्र वातदोषादाकाशगमन-वसुन्धरापर्यटन-व्याघ्रादिभयपलायनादीनि पश्यति, पित्तोपचयदोषमहिम्ना वह्निप्रवेश-वह्निज्वालालिङ्गन-कनकपर्वत-विद्युल्लता-विस्फुरणदिग्दाहादिकं पश्यति, श्लेष्मदोषप्राबल्यात्तु समुद्रसंतरणनदीमज्जन-धारासारवर्षण-रजतपर्वतादि पश्यति । अदृष्टवशादपि तज्जन्मानुभूतेषु जन्मान्तरानुभूते वा सिद्धोपप्लुतान्तःकरणस्य यज्ज्ञानमुत्पद्यते तत्र शुभावेदकं धर्माद्गजारोहण-पर्वतारोहण-छत्रलाभ-पायसभक्षण-राजसंदर्शनादिविषयकम्, अधर्मात्तु तैलाभ्यञ्जनान्धकूपपतनोष्ट्रारोहण-पङ्कमज्जन-स्वविवाहदर्शनादिविषयकं स्वप्नज्ञानमुत्पद्यते । त्रयाणां मिलितानामेवात्र कारणत्वं गुणप्रधानभावमाश्रित्यायं विभागो द्रष्टव्यः ॥ ७ ॥

( विवृ० ) स्मृतौ यथा संस्कारः कारणं तथा स्वप्नसंज्ञकमानसज्ञानेऽपीत्याह—तथेति । तथा आत्ममनःसंयोगविशेषात् पूर्वानुभवजनितसंस्काराच्च स्वप्नो मानसज्ञानविशेषो भवति, अत्र संयोगे विशेषो मेध्यामनःसंयोगात्मकदोषविशिष्टत्वम् । अत एव तदानीं भ्रम एव भवति, पूर्वानुभवश्च ऐहिको जन्मान्तरीयो वा, नच नलादेर्दमयन्त्यादिदर्शनमुषादेरनिरुद्धादिदर्शनं पुराणादिप्रसिद्धं कथं संगच्छते तज्जन्मन्यननुभवात् जन्मान्तरे च विषयस्याजातत्वेनानुभवासंभवाच्चेति वाच्यम् । संसारस्यानादितया कल्पान्तरानुभूततत्तद्विषयसंस्कारेण तत्तद्विषयस्वप्नसंभवात् । नच 'अदृष्टमप्यर्थमदृष्टवैभवात्करोति सुप्तिर्जनदर्शनातिथिम्' इति श्रीहर्षवाक्यस्यासङ्गतिरिति वाच्यम् । तत्रादृष्टपदस्य तज्जन्मादृष्टार्थकत्वात् तत्र किंचित्स्वप्नज्ञानं वातदोषाधीनमाकाशगमनादिविषयकम्,

किंचिच्च पित्तदोषाधीनं विद्युद्दर्शनादिविषयकम् किंचित्तु श्लेष्मदोषाधीनं नदीमज्जनादिविषयकम् । तत्र कानिचिज्ज्ञानानि शुभसूचकानि, कानिचिच्चाशुभसूचकानि । तदुक्तम्—'आरोहणं गोवृषकुञ्जराणां प्रासादशैलाग्रवनस्पतीनाम् । आरुह्य नौकां प्रतिगृह्य वीणां भुक्त्वा रुदित्वा ध्रुवमर्थलाभ.' इति । 'कृष्णाम्बरधरा नारी कृष्णगन्धानुलेपना । उपगूहति यं स्वप्ने तस्य मृत्युर्न संशय.' इत्यादि च । अत्रच मानसं ज्ञानं ज्ञानलक्षणरूपालौकिकसन्निकर्षाद्भवति स्मरणं च संस्कारादिति विशेषः ॥ ७ ॥

( भाष्यम् ) तथैवात्ममनसोः संयोगविशेषात्संस्काराच्च स्वप्नोनाम विज्ञानमुत्पद्यते । कः पुनरत्र विशेषः ? आगन्तुकनिद्रादोष इत्याह । वातपित्तश्लेष्मणां दोषात्खल्वपि स्वप्नो भवति । वातदोषात्खल्वयं सुप्त आकाशे विचरति वसुन्धरां पर्यटति व्याघ्रादिभ्यो वा बिभेति । पित्तदोषात्प्रविशत्यग्निं आलिङ्गति ज्वालां काञ्चनपर्वतविद्युत्स्फुरणादिकं चोपलभते । श्लेष्मदोषात्संतरति सरिदर्णवं पश्यति धारासंपातं शिलोच्चयं च राजतमिति । एवं शेषेषु वाच्यम् । संस्कारः खल्वप्यत्र हेतुर्नह्यन्धः स्वप्नेषु किंचित्पश्यतीति । सोऽयं स्वप्नो न स्मृतिः । कस्मात् पृथगुपदेशात् । जाग्रत्खल्वयं पुरुषो यत् किंचन पश्यति शृणोति जिघ्रति स्पृशति रसयति वा, तत्कारितसंस्कारवशान्मनसि करणविलये सत्यात्ममनःसंयोगविशेषादन्तर्नाडीपु निद्रादोषोपनीतं तथाविधमेव प्रतीतिशरीरं विषयं पश्यति शृणोति जिघ्रति स्पृशति रसयति चेति । सुप्तोऽहमद्य रथमपूर्वमद्राक्षं शब्दांश्च मनोरमानश्रृणवं अस्पाक्षं च मन्दं समीरणं दिव्यानजिघ्रं च सुमनसो गन्धानभ्यवाहरं च स्वादूनि भोजनानीत्येवं ह्युत्थितः परामृशति इति ॥ ७ ॥

## स्वप्नान्तिकम् ॥ ८ ॥

( उप० ) ननु यज्ज्ञानं स्वप्नमध्ये तु स्वप्नज्ञानानुभूतस्यैवाथस्य स्मृतिरूपं जायते तत्र स्वप्नत्वं न वर्तते स्वप्नस्यानुभवरूपत्वात्, तथाच कस्मात्कारणात्तदुत्पत्तिरित्यत आह—स्वप्नान्तिकमिति । तथेति पूर्वसूत्रादनुवर्तते तेनात्ममनसोः संयोगविशेषात्संस्काराच्च यथा स्वप्नस्तथा स्वप्नान्तिकमपीत्यर्थः । एतावानेव विशेषो यत्स्वप्नज्ञानं पूर्वानुभवजनितात्संस्कारात्, स्वप्नान्तिकं तु तत्कालोत्पन्नानुभवजनितसंस्कारादेव । तदुक्तं प्रशस्तदेवाचार्यैः 'अतीतज्ञानप्रत्यवेक्षणात् स्मृतिरेव' इति । उक्तं च वृत्तिकारैः 'अनुभूतवस्तुस्फुरणार्थतया न स्मरणादर्थान्तरं स्वप्नज्ञानम्' इति । स्वप्नमध्ये

प्रमाभूतं यज्ज्ञानं तत्स्वप्रान्तिकमिति केचित्। यथा शय्यायां शयानोऽस्मीत्यादि ॥ ८ ॥

(विवृ०) स्वप्नान्तिकसंज्ञकेऽपि ज्ञाने एतदेव कारणमित्याह—स्वप्नान्तिकमिति। तथेत्यस्य पूर्वसूत्रस्थस्यात्रानुषङ्गो बोध्यः। तथाच स्वप्नज्ञानं यथात्ममन.संयोगविशेषसंस्कारोभयजन्यं तथा स्वप्रान्तिकाख्यं ज्ञानमपीत्यर्थः। इदं च ज्ञानं स्वप्नावस्थाजातानुभवजनितसंस्कारेण जायते किंतु स्मृत्यात्मकम्, न मानसमिति विशेषः ॥ ८ ॥

(भाष्यम्) यथा खलु स्वप्नः तथा—*स्वप्रान्तिकम्। स्वप्नस्यान्तिकं स्वप्रान्तिकम्। तदेतत्सौषुप्तं विज्ञानम्। जागरितस्थान. स्वप्नस्थानः सुषुप्तस्थानो हि पुरुषो भवतीति। तत्रात्मनि मनसो लयाद्योऽयमात्ममनसोः संयोगविशेपस्तस्मादेतदुत्पद्यते। सुखं खल्विदानीं पुरुषोऽनुभवति। सुखमहमस्वाप्सं न किंचिदवेदिषमिति ह्युत्थितः परामृशति। सोऽयं सुषुप्तिनिमित्तं संस्कारविशेषो न स्मृतिस्वप्नहेतुरिति ॥ ८ ॥

धर्माच्च ॥ ९ ॥

(उप०) स्वप्नस्वप्रान्तिकयोः कारणं समुच्चिनोति—धर्माच्चेति। अधर्मसमुच्चयार्थश्चकारः। कृतव्याख्यानमेतत् ॥ ९ ॥

(विवृ०) स्वप्नास्वप्रान्तिकयोरदृष्टमप्यसाधारणं कारणमित्याह—धर्माच्चेति। चकारादधर्मस्य संग्रहः। केचित्तु संस्कारं विनैव धर्मादिमात्रादपि किंचित्स्वप्नादिकं जायते इति प्रतिपादनायेदं सूत्रम्, अत एव पूर्वोक्तश्रीहर्षकाव्यमपि साधु संगच्छते इत्याहुः ॥ ९ ॥

(भाष्यम्) तच्चैतत्स्वप्रान्तिकं नैतावतो निमित्तादुत्पद्यते किंतु—*धर्माच्च। धर्मोऽपि तत्र हेतुः। तदानीं खल्वयमात्मा परेणात्मना संपद्य स्वेन रूपेणाभिसंपद्यते इति। स्वप्न. खल्वपि धर्मादधर्माच्चोत्पद्यते। तत्र धर्माद्गजारोहणादिकमधर्मादन्धकूपपतनादिकमात्मनः पश्यतीति ॥ ९ ॥

इन्द्रियदोषात् संस्कारदोषाच्चाविद्या ॥ १० ॥

(उप०) इदानीं विपर्ययमधिकृत्याह—इन्द्रियदोषादिति। अविद्येति सामान्यवाच्यपि पदं विपर्यये वर्तते प्रकरणात्, संशयस्वप्नानध्यवसायानामुक्तत्वात्। तत्रेन्द्रियदोषो वातपित्ताद्यभिभवकृतमपाटवम्, संस्कारदोषो विशेषादर्शनसाहित्यं तदधीनं हि मिथ्याज्ञानं जायते ॥ १० ॥

(विवृ०) प्रकारान्तरेणापि बुद्धिर्द्विविधा प्रमाऽप्रमा चेति। तत्रा-

प्रमायाः कारणमाह—इन्द्रियदोषादिति । इन्द्रियदोषः काचादिः, संस्कार-दोषो भ्रमानुभवजातत्वादिः, चकाराद्दूरत्वादिरूपाणामसाद्भिङ्गपरामर्शादि-रूपाणा च दोषाणां संग्रहः । तथाचाविद्यायामप्रमायां दोषः कारणं, दोपस्तु पित्तदूरत्वादिरूपो नानाविध इत्यर्थः ॥ १० ॥

( भाष्यम् ) अथापि खल्वविद्या च विद्या चेति द्विविधा बुद्धिः, तयोः खलु—*इन्द्रियदोषात्संस्कारदोषाच्चाविद्या । इन्द्रियदोषादन्यथा भूतमन्य-थोपलभते । संस्कारदोषादन्यथाभूतमन्यथा स्मरति । यच्चान्यथाभूत-स्यान्यथाऽनुमानं तदपीन्द्रियदोषादिति । सेयमविद्या । अथापि खल्वि-न्द्रियस्य मनसो रजस्तमोऽतिशयनिमित्ताद्दोषात्संस्कारदोषाच्च मिथ्या-ज्ञानप्रभवाद्भवत्यविद्या अतस्मिंस्तद्बुद्धिरनात्मन्यात्मबुद्धिरभये भयबुद्धिर-सुखे सुखबुद्धिरत्राणे त्राणबुद्धिरित्यादि यथाविषयं वेदितव्यम् । सेयं कार्यभूता भवत्यविद्येति ॥ १० ॥

## तद्दुष्टज्ञानम् ॥ ११ ॥

( उप० ) अविद्यासामान्यलक्षणमाह—तदिति । तदित्यव्ययपदं सर्व-नामसमानार्थकमविद्यां परामृशति । साऽविद्या, दुष्टज्ञानं व्यभिचारि-ज्ञानमतस्मिंस्तदिति ज्ञानं व्यधिकरणप्रकारावच्छिन्नं विशेष्यावृत्तिप्रका-रकमिति यावत् । दोषश्च ज्ञानस्यानिश्चयरूपत्वमपि, तेनैककोटिसत्त्वेऽपि संशयो दुष्ट एवानवधारणात्मकत्वात् । तदनेन संशयविपर्ययस्वप्नानध्य-वसायानां चतुर्णामप्युपग्रहः ॥ ११ ॥

( विवृ० ) अविद्याया लक्षणमाह—तदिति । सर्वनामसमानार्थकं तदित्यव्ययं नातस्तेनाविद्यापरामर्शानुपपत्तिः, दोषजन्यं ज्ञानं सा अवि-द्येति अविद्यालक्षणम्, अत्र दोषाणामन्यतमत्वेन निवेशः । उपलक्षणमेतत् तदभाववति तत्प्रकारकं विशेष्यावृत्तिप्रकारकं वा ज्ञानमित्यप्यविद्याल-क्षणं द्रष्टव्यम् ॥ ११ ॥

( भाष्यम् ) सेयमविद्या दुष्टज्ञानमिति ॥ ११ ॥

## अदुष्टं विद्या ॥ १२ ॥

( उप० ) ज्ञानमित्यनुवर्तते अदुष्टमदुष्टेन्द्रियजन्यं यत्र यदस्ति तत्र तदनुभवो वा समानाधिकरणप्रकारानुभवो वा विशेष्यावृत्त्यप्रकारकानु-भवो वा विद्येत्यर्थः । तच्चाध्यक्षं लैङ्गिकं च द्वयमेव ॥ १२ ॥

( विवृ० ) प्रमालक्षणमाह—अदुष्टमिति । दोषानधीनं ज्ञानं प्रमेति

प्रमालक्षणं भ्रमसामान्यभिन्नज्ञानं प्रमेत्यपि लक्षणं द्रष्टव्यम् । आंशिकप्रमाया अलक्ष्यत्वमेव, तद्वति तत्प्रकारकं ज्ञानं तत्प्रमेति विशेषलक्षणम्, एतच्च ' रङ्गरजतयोरिमे रजते ' इत्याद्यांशिकप्रमासाधारणम्, स्मृतिव्यावृत्तप्रमालक्षणे च अनुभवत्वं निवेशनीयमित्यन्यत्र विस्तरः ॥ १२ ॥

( भाष्यम् ) यत्पुनरदुष्टं ज्ञानं दुष्टज्ञानं विरुणद्धि सेयं विद्या । विद्या खल्वविद्याविपर्ययेण वेदितव्येति ॥ १२ ॥

## आर्षं सिद्धदर्शनं च धर्मेभ्यः ॥ १३ ॥

( उप० ) नन्वार्षमपि ज्ञानं समानाधिकरणप्रकारकमेव । तच्च नेन्द्रियजन्यमसंनिकृष्टार्थगोचरत्वात् । न लैङ्गिकं लिङ्गानुसंधानमन्तरेण जायमानत्वात् । तथा चैतत्करणं तृतीयं प्रमाणमायातमत आह—आर्षमिति । ऋषीणां गालवप्रभृतीनां यदतीतानागतविषयकं ज्ञानं तदार्षम्, यच्च सिद्धानां मन्त्रौषधिगुटिकाञ्जनादिना व्यवहितविप्रकृष्टार्थगोचरज्ञानं प्रति सिद्धिगतानां यद्दर्शनं तदुभयं धर्मेभ्यो यथार्थसाक्षात्कारिज्ञानं जायते, तद्योगिप्रत्यक्षेऽन्तर्भावान्न विद्यान्तरमिति वृत्तिकृतः । आर्षं ज्ञानं चतुर्थी विद्यैव सा च ऋषीणां लौकिकानां च भवति, तच्च मानसप्रत्यक्षमेव उत्प्रेक्षासहकृतेन मनसा जनितं नयनस्पन्दनादि–लिङ्गजनितं[1] वा, प्राग्भवीयसंस्काराधीनैवात्र व्याप्तिधीः, स्तनपानेष्टसाधनताव्याप्तिग्रहवत् । प्रशस्ताचार्यास्तु सिद्धदर्शनं न ज्ञानान्तरमित्याहुः । तथाहि यदि सिद्धानां गुटिकाञ्जनादिसिद्धनिमित्तप्रभवं व्यवहितविप्रकृष्टविषयं तदुच्यते तदा प्रत्यक्षमेव, यदि तु दिव्यान्तरिक्षभौमानां ग्रहनक्षत्रसंचारादिनिमित्ताधीनं तदा तल्लैङ्गिकमेव तथा सहचारदर्शनेन व्याप्तिपरिच्छेदादिति॥१३॥

इति श्रीशाकरे वैशेषिकसूत्रोपस्कारे नवमाध्यायस्य द्वितीयमाह्निकम् ।

( विवृ० ) ननु योगिनां ज्ञानं कथमविद्या न भवति दूरत्वादिरूपविषयदोषस्य तत्रापि संभवादत आह–आर्षमिति । आर्षमृषीणां योगजधर्मेण जनितं यत् सिद्धदर्शनं सिद्धानां सतां सर्वेषां वस्तूनां दर्शनं तद्धर्मेभ्यो जायते नतु तत्राधर्मः कारणमिति न तत्कदाचिदपि भ्रमरूपं, भ्रमं प्रति अधर्मस्य हेतुत्वात् । योगिनां ज्ञानं तु धर्ममात्राधीनं प्रमारूपमेव भवति । दूरत्वादेर्विषयदोषस्य तत्र भ्रमत्वासंपादकत्वात् । दोषाणां भ्रमजनकत्वमधर्मसहकारेणैवेति हृदयम् । केचित्तु सिद्धेन मन्त्राद्यभिमन्त्रितेन

---

१ नियमसदर्शनादिलिङ्गजनित वेति पाठ ।

गुटिकाञ्जनविशेषादिना यद्दर्शनं भवति तदपि आर्षवत् धर्मेभ्य एव भवति । अतएव रघुवंशे 'अतीन्द्रियेष्वप्युपपन्नदर्शनो बभूव भावेषु दिलीपनन्दनः' इत्यादिकमपि साधु संगच्छते । तथाच तादृशज्ञानमपि धर्ममात्राधीनतया प्रमारूपमेव भवतीति भाव इति व्याचक्षते ।। १३ ।।

इति श्रीजयनारायणतर्कपञ्चानन-भट्टाचार्य-प्रणीताया कणादसूत्रविवृतौ नवमाध्यायस्य द्वितियमाह्निकम् ।

( भाष्यम् ) आम्नायविधातॄणामृषीणामतीतानागतवर्तमानेष्वतीन्द्रियेष्वर्थेषु धर्मादिषु च योगसमाधिनिमित्तं यदार्षं विज्ञानं प्रातिभं नामोत्पद्यते, यच्चाञ्जनादिसिद्धानामतीन्द्रियेष्वर्थेषु ज्ञानमुत्पद्यते, तदेतद्धर्मेभ्य उत्पद्यते इति । अथापि खल्वार्षं यत्समाधिसिद्धानां दर्शनमविद्योपमर्दकमुत्पद्यते, धर्मेभ्यस्तदुपपद्यते इति । तच्चैतत् 'योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः' इति तन्त्रान्तरसमाचारात्प्रतिपत्तव्यमिति ।। १३ ।।

इति चन्द्रकान्तीये वैशेषिकभाष्ये नवमस्याध्यायस्य द्वितीयमाह्निकम् ।

समाप्तश्चायं नवमोऽध्यायः ।

---

# दशमाध्याये प्रथमाह्निकम् ।

**इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः।।१।।**

( उप० ) आत्मगुणानां कारणतो भेदव्युत्पादनं दशमाध्यायार्थः । तत्र 'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्' इति गौतमीये प्रमेयविभागसूत्रे सुखस्यानभिधानाद्दुःखाभिन्नमेव सुखमिति भ्रमनिरासार्थं सुखदुःखयोरेव प्रथमं भेदमाह—इष्टानिष्टेति । सुखदुःखयोर्मिथः परस्परमर्थान्तरभावो भेदो वैजात्यमिति यावत् । कुत इत्यत आह—इष्टानिष्टकारणविशेषात् इष्टं इष्यमाणं स्रक्चन्दनवनितादि, अनिष्टमनिष्यमाणमहिकण्टकादि, तद्रूपं यत्कारणं तस्य विशेषाद्भेदात्कारणवैजात्याधीनं कार्यवैजात्यमावश्यकं यतः, भेदकान्तरमाह विरोधात् सहावस्थानलक्षणात् । नह्येकस्मिन्नात्मन्येकदा सुखदुःखयोरनुभवः । चकारादनयोः कार्यभेदं भेदकं समुच्चिनोति । तथाहि अनुग्रहाभिष्वङ्गनयनप्रसादादि सुखस्य, दैन्यमुखमालिन्यादि दुःखस्य कार्यमिति ततोऽप्यनयोर्भेदः । तदुक्तं प्रशस्ताचार्यैः 'अनुग्रहलक्षणं सुखं स्रगाद्यभिप्रेतविषयसांनिध्ये सति इष्टोपलब्धीन्द्रियार्थसंनिकर्षाद्धर्माद्यपे-

क्षादात्ममनसोः संयोगाद्यदनुग्रहाभिष्वङ्गनयनादिप्रसादजनकमुत्पद्यते तत्सुखम्' इति। तदिदमतीतेषु स्रक्चन्दनादिषु स्मृतिजमनागतेषु संकल्पजम्। गौतमीये सूत्रे सुखापरिगणनं वैराग्याय सुखमपि दुःखत्वेन भावयतो वैराग्यं स्यादेतदर्थमिति ॥ १ ॥

(विवृ०) जगन्मोहनपादब्जपरागनिकरं परम्।
स्मारं स्मारं पुरः पूरं तरेयं विघ्नवारिधेः ॥

क्रमप्राप्ते सुखदुःखे परीचिक्षिषुस्तयोर्भेदं तावाद्व्यवस्थापयति–इष्टानिष्टेति। गौतमीयेन 'दुःखविकल्पे सुखाभिमानाच्च' इति सूत्रेण दुःखस्य सुखाभिमानविषयत्वमुक्तं, तेनापाततो दुःखमेव सुखं नतु तद्भिन्नं गुणान्तरमितिबोधो भवति तद्भ्रमनिरासार्थमयमारम्भः। सुखदुःखयोरर्थान्तरभावो नैकत्त्वम्, इष्टं स्रक्चन्दनवनितादिकम्, अनिष्टमहिकण्टकवैरिपूतिगन्धादिकम्, तद्रूपं यत्कारणं तस्य विशेषात् वैलक्षण्यात् मिथः परस्परविरोधात् एकात्मनि युगपदनुत्पद्यमानत्वाच्च। नहि विजातीयकारणकयोर्विरुद्धयोर्वाऽभेदः संभावनापदवीमधिरोहति, गौतमीयं सूत्रं तु सुखं दुःखत्वेन भावनीयं वैराग्यार्थमित्येतत्परमिति। वस्तुतः सर्वजनसंवेदनसिद्धं सुखं दुःखं वाऽपह्नोतुं न शक्नोति गीर्वाणगुरुरपीति संक्षेपः ॥ १ ॥

(भाष्यम्) परीक्षिता बुद्धिः सुखदुःखयोरिदानी परीक्षाक्रमः। तत्र, दुःखविकल्पे सुखाभिमानाच्चेति तन्त्रान्तरसमाचारात्सुखदुःखयोर्मिथोऽर्थान्तरभावो न प्राप्नोतीत्यत आह—*इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः। इष्टकारणकं सुखमनिष्टकारणकं दुःखं न चैते सह भवत इत्यनयोः परस्परमर्थान्तरभावः। स्रगाद्यभिप्रेतविषयनिमित्तमनुग्रहलक्षणं सुखं विपरीतं दुःखमिति। कार्यं मुखप्रसादादि सुखस्य विपरीतं दुःखस्येति। तन्त्रान्तरसमाचारश्च विषयप्रभवं दुःखानुषक्तं सुखं दुःखमिति भावयवतो वैराग्यं स्यादिति ॥ १ ॥

## संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः ॥ २ ॥

(उप०) नन्वास्तां सुखदुःखे परस्परं भिन्ने ज्ञानादभिन्ने स्यातां स्मृत्यनुभववदित्यत आह–संशयेति। सुखदुःखयोर्ज्ञानान्तरत्वे ज्ञानभिन्नत्वे संशयनिर्णयाभ्यन्तरत्वाभावो हेतुर्लिङ्गमित्यर्थः। तदयमर्थः सुखं दुःखं वा ज्ञानं भवत् संशयरूपं वा स्यान्निर्णयरूपं वा? नाद्यः कोटिद्वयानुल्लेखित्वात्।

न द्वितीयः एककोट्यनुल्लेखित्वात्। तथाच यावद्विशेषबाधात् सामान्यबाधः, द्वावेव हि ज्ञानस्य विशेषौ संशयत्वं निर्णयत्वं च, तदुभयं च सुखे दुःखे च बाधितमिति ज्ञानत्वमपि तत्र बाधितम्, चकारादनुभवबाधं समुच्चिनोति सुखदुःखयोरहं सुखी दुःखीति मानसोऽनुभवो न त्वहं जाने संदेह्मि निश्चिनोमीत्याकारोऽनुभव इति ॥ २ ॥

( विवृ० ) ननु सुखदुःखे ज्ञानविशेषावेव यथैन्द्रियकलैङ्गिके नतु भिद्येते तत इत्यत आह—संशयेति । सुखदुःखयोर्ज्ञानान्तरत्वे ज्ञानगुणभिन्नत्वे संशयनिर्णयान्तराभावः संशयनिश्चयान्तर्गतत्वाभावो हेतुः । ज्ञानगुणो हि द्विविधः संदेहो निश्चयश्चेति। नहि तयोरन्यतरस्मिन्नपि सुखं दुःखं वाऽन्तर्भवितुमर्हति, नहि सुखं दुःखं वा विरुद्धकोटिद्वयप्रकारकं येन तयोः संदेहत्वं संभाव्येत, नापि तदभावाप्रकारकं सत्तत्प्रकारकं येन निर्णयत्वं संभावनीयमिति, ज्ञानस्य तृतीयप्रकारस्तु शशविषाणायमानः, नातस्तत्र सुखं दुःखं वा प्रवेष्टुमीष्टे इति ॥ २ ॥

( भाष्यम् ) यस्तु ज्ञानविशेषभावमनयोः प्रतिजानीते, तस्यैतत्—*संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः । उपलब्धिभेदश्चेति चार्थः सुखं दुखं च न संशयस्यान्तरे भवति न निर्णयस्य । सोऽयमनयोर्ज्ञानादन्यत्वे हेतुः । कस्मात्कल्पान्तरानुपपत्तेः । उपलब्धिभेदः खल्वपि । सुख्यहं दुःख्यहमित्युपलब्धिः सुखदुःखयोर्जानामीत्यादिका च ज्ञानस्येति । उपलब्धिभेदाच्चार्थभेद इति । अनोकहमुपलभे महीरुहमुपलभे इति संज्ञाभेदमात्रं न त्वर्थभेद इति । इतश्च प्रतिपद्यामहे सुखदुःखे न ज्ञानप्रभेदाविति ॥२॥

## तयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्याम् ॥ ३ ॥

( उप० ) भेदकान्तरमाह—तयोरिति । तयोः संशयनिर्णययोर्निष्पत्तिरुत्पत्तिः प्रत्यक्षाल्लिङ्गाच्च । सुखं दुःखं वा न प्रत्यक्षसामग्रीजन्यं न वा लिङ्गजन्यम् । चतुर्विधं हि सुखं—वैषयिकं मानोरथिकमाभिमानिकमाभ्यासिकं च । तत्र त्रयाणामिन्द्रियसंनिकर्षप्रभवत्वं नास्त्येव । प्रथममिन्द्रियार्थसन्निकर्षजत्वाज्ज्ञानं स्यादिति चेन्न । सामग्र्येकदेशस्य, कार्यस्य साजात्यानापादकत्वात् । अन्यथा दिक्कालसाधारण्येन सकलकार्यैकजात्यापत्तेः। किंच इन्द्रियार्थसन्निकर्षानुत्पद्यमानं सुखं निर्विकल्पकं वा स्यात् सविकल्पकं वा। नाद्यः अतीन्द्रियत्वप्रसङ्गात् । न द्वितीयः विशेष्यविशेषणभावेन द्वयोरनाकलनरूपत्वात् । किंच सुखदुःखयोरवश्यसंवेद्यत्वाज्ज्ञान-

म्यावश्यसंवेद्यत्वेऽनवस्थाप्रसङ्गात्, लैङ्गिकमिति लिङ्गमेव वैषयिकंवत्[1] । वृत्तिकृतस्तु तयोर्ज्ञानसुखयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्यां प्रत्यक्षलैङ्गिक-ज्ञानव्याख्यानाभ्यां व्याख्याता, प्रत्यक्षं ज्ञानमिन्द्रियजम्, लैङ्गिकं तु लिङ्गजम्, सुखादिकं तु नैतादृशमिति व्याचक्रुः ॥ ३ ॥

( विवृ० ) ननु यथा निर्विकल्पकं ज्ञानं न संशयो नापि निश्चयस्तथा सुखदुःखेऽपि स्यातामत आह—तयोरिति । तयोः सुखदुःखयोर्निष्पत्तिः सिद्धिः प्रत्यक्षलैङ्गिकाभ्याम् । स्वात्मनि सुखदुःखे प्रत्यक्षसिद्धे परात्मनि नयनप्रसादादिना सुखस्य, मुखमालिन्यादिना दुःखस्यानुमानं भवति तथाच तयोर्निर्विकल्पकज्ञानरूपत्वे प्रत्यक्षानुपपत्तिः मुखप्रसादमालिन्या-दिलिङ्गकानुमितिविषयत्वानुपपत्तिश्चातो ज्ञानान्तर्गतत्वं न सुखदुःखयो-रिति भावः ॥ ३ ॥

( भाष्यम् ) यतः—*तयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्याम् । संशयो निर्णयश्च प्रत्यक्षानुमानाभ्यां निष्पद्यते न त्वेवं सुखं न दुःखं, विषयो-पयोगादिकं हि तत्र हेतुरिति । प्रत्यक्षात्तावत्स्थाणुपुरुषयोः समानं धर्म-मारोहपरिणाहौ पश्यन् संशेते किमयं स्थाणुराहोस्वित्पुरुष इति, विशेषं चोपलभमानो निर्णयति स्थाणुरयं पुरुषोऽयमिति । अनुमानात्खल्वपि । गर्जितान्मेघमनुमाय संशेते वृष्टिर्भविष्यति आहोस्विन्नेति । मेघोन्नतिविशेषं चानुमाय निर्णयति भविष्यति वृष्टिरिति । अथापि खल्वेते सुखदुःखे प्रत्यक्षानुमानाभ्यां निष्पद्येते । अभिप्रेतं हि विषयं प्रत्यक्षमुपलभमान-स्यानुमिमानस्य च सुखं निष्पद्यते । विपर्ययेण दुःखमिति । यदि ज्ञान-प्रभेदावेते प्रत्यक्षलैङ्गिकाभ्यामनयोर्निष्पत्तिर्नोपपद्यते । नहि तत एव तयोर्निष्पत्तिरिति ॥ ३ ॥

## अभूदित्यपि ॥ ४ ॥

( उप० ) लैङ्गिकज्ञानात्सुखादेः प्रकारभेदाधीनं भेदमाह—अभूदिति । इतिशब्दः प्रकारे, अपिशब्दो भविष्यतीत्याकारान्तरसमुच्चये । तथाच पर्वते वह्निरभूद्भविष्यति वेति लैङ्गिकज्ञानेऽतीतादिः प्रकारो दृश्यते । न चैवंप्रकारं सुखं दुःखं वा उत्पद्यमानमुपलब्धम् ॥ ४ ॥

( विवृ० ) भेदकान्तरमपि दर्शयति—अभूदिति । पर्वते वह्निरभूत पर्वते वह्निरस्ति पर्वते वह्निर्भविष्यतीत्याद्याकारा अपि ज्ञानस्य, ज्ञानसुखयोर्भेदकाः, ज्ञानं हि अतीतानागतवर्तमानविषयकं भवति । नहि सुखस्य

---

[1] वैनयिकवदिति लि. पु. पाठः ।

दुःखस्य वा कोऽपि विद्यते विषयः, अतः सविषयकत्वनिर्विषयकत्वरूप-विरुद्धधर्माध्यासान्न ज्ञानाभेदः सुखादीनामिति भावः ॥ ४ ॥

( भाष्यम् ) भविष्यतीत्यप्यर्थः । पूर्वोदकविपरीतमुदकं नद्याः पश्यन्न-नुमिनोति वृष्टिरभूदिति । मेघोन्नतिविशेषेणानुमीयते भविष्यति वृष्टिरिति ४

**सति च कार्यादर्शनात् ॥ ५ ॥**

( उप० ) भेदकान्तरं समुच्चिनोति—सतीति । सति इन्द्रियार्थसंनि-कर्षे सति च व्याप्तिपक्षधर्मतादिप्रतिसंधाने कार्यस्य सुखस्य दुःखस्य वाऽदर्शनान्न प्रत्यक्षमात्रं सुखं दुःखं वा न लैङ्गिकमात्रं वा । तदयमर्थः—ज्ञानसामान्यं तावत्सुखदुःखे न भवत इत्युक्तम् । ज्ञानविशेषः प्रत्यक्षज्ञानं वा भवेदनुमितिरूपं वा ? नाद्यः इन्द्रियार्थसंनिकर्षे स्रक्चन्दनादिप्रत्यक्षे सुख-त्वानुभवाभावात् । न द्वितीयः चन्दनाद्यनुमितौ वह्न्याद्यनुमितौ वा सुखत्व-दुःखत्वान्यतराननुभवात् । एवं प्रत्यक्षविशेषेऽनुमितिविशेषे वा सुखदुःख-त्वयोरननुभवान्न तद्विशेषोऽपीति ॥ ५ ॥

( विवृ० ) इतोऽपि सुखदुःखे भिद्येते ज्ञानादित्याह—सतीति । सति ज्ञानकारणे सति, कार्ययोः सुखदुःखयोः, अदर्शनात् अननुभवात्, न सुखदुःखयोर्ज्ञानान्तर्भावः, प्रत्यक्षसामग्र्यामनुमितिसामग्र्यां च सत्यां प्रत्यक्षमनुमितिर्वा भवति । तत्र घटं पश्यामि वह्निमनुमिनोमीत्याद्यनुभवो भवति, नत्वहं सुखी दुःखी वेति सुखं दुःखं वा नैव भवितुमर्हति ज्ञान-विशेष इति भावः ॥ ५ ॥

( भाष्यम् )—*सति च । वर्तमाने च विषये ज्ञानमुत्पद्यते । तदेवं त्रैका-ल्यविषयं ज्ञानं न त्वेवं सुखदुःखे इति । अथापि खल्वर्थाकारनिर्भासं ज्ञानं न त्वेवं सुखदुःखे इति । एतेन स्मृत्यन्यत्वं व्याख्यातम् ।—*कार्यादर्शनात् । विषयेन्द्रियसंनिकर्षे अस्त्येदमिति बोधे सत्यपि कार्यं सुखं दुःखं च न दृ-श्यते । ज्ञानप्रभेदौ चेदेते, दृश्येयातामिति । अथापि खलु प्रत्यक्षे लैङ्गिके च सत्यपि सुखदुःखयोर्यत्कार्यं मुखप्रसादमुखमालिन्यलक्षणं तन्न दृश्यते । ज्ञानप्रभेदौ चेदेते यदेतत्तस्मिन् सति कार्यस्यादर्शनं तन्नोपपद्यते इति ॥५॥

**एकार्थसमवायिकारणान्तरेषु दृष्टत्वात् ॥ ६ ॥**

( उप० ) भेदकान्तरमाह—एकार्थेति । सुखदुःखयोरिति शेषः । सुखं प्रति एकार्थसमवेतानि असाधारणकारणानि, धर्मः, सुखे रागः, सुख-

१ कार्यादर्शनादिति पृथक्सूत्रं चन्द्रकान्तमते । २ एकार्थेत्यादि दृष्टत्वादेकदेश इतीत्यन्त-मेकमेव सूत्रं चन्द्रकान्तमते ।

कारणेच्छा, तदुपादानयत्न, स्रक्चन्दनादिज्ञानम्। दुःखं प्रति तु अधर्मः, अनिष्टकण्टकादिज्ञानम्, एषु एकार्थसमवायिषु कारणेषु दृष्टत्वादित्यर्थः। ज्ञानं तु निर्विकल्पकमेकार्थसमवेतमसाधारणकारणं नापेक्षत एव, सविकल्पकं त्वपेक्षते विशेषणज्ञानं, तत्तु कारणान्तरं स्वविजातीयं कारणं न भवति, मनःसंयोगस्तु साधारणत्वादविवक्षितः। यद्यपि स्मृतिः संस्कारमसाधारणमपेक्षते तथापि तद्भेदः स्फुटसिद्ध एवेत्यनुभवमादाय भेदचिन्तनात्। लैङ्गिके यद्यपि व्याप्तिस्मृतिपक्षधर्मतादिज्ञानापेक्षा तथाप्यन्तरशब्देनैव तद्व्युदास.। तदयं प्रमाणार्थः सुखदुःखे अनुभवभिन्ने स्वसमानाधिकरणस्वजातीयासाधारणकारणजन्यत्वात्स्मृतिवदाद्यशब्दवच्च ॥ ६ ॥

( विवृ० ) निर्विकल्पकाद्विशेषकान्तरमाह–एकार्थेति। एकार्थसमवायिकारणान्तरेषु स्वसमानाधिकरणविजातीयकारणेषु सत्सु दृष्टत्वात्सुखदुःखयोरिति शेषः। तथाच सुखं धर्मसुखरागसुखकारणेच्छासुखकारणोपादानगोचरप्रयत्नरूपान् स्वसमानाधिकरणविजातीयगुणान्, दुःखं चाधर्मकण्टकादिज्ञानरूपान् अपेक्षते। निर्विकल्पकश्च विषयेन्द्रियसंनिकर्षादेव जायते न स्वसमानाधिकरणासाधारणकारणमपेक्षते, मनःसंयोगादृष्टादिकं तु तत्र साधारणकारणमेव। एवं च सुखं दुःखं वा कथं निर्विकल्पकज्ञानान्तर्भूतं भवितुमर्हति कारणवैषम्यादित्यर्थः ॥ ६ ॥

( भाष्यम् ) एकस्मिन्नर्थे समवयन्ति यानि कारणान्तराणि तेषु सत्सु सुखदुःखयोर्दृष्टत्वान्नैते ज्ञानप्रभेदाविति। एकदेशे च दृष्टत्वान्न ज्ञानप्रभेदाविति। अन्यत्कारणं सुखस्य अन्यद्दुःखस्य अन्यत्प्रत्यक्षस्य अन्यल्लैङ्गिकस्य अन्यत्खल्वपि स्मृतेरिति। रागादिभ्यः सुखमुत्पद्यते द्वेषादिभ्यो दुःखम् इन्द्रियार्थसंनिकर्षात्प्रत्यक्षम् अस्येदमितिज्ञानाल्लैङ्गिकं संस्कारात्स्मृतिरिति। अथापि खलु येन प्रदेशेन सुखं दुःखं चावच्छिद्यते, तस्मिन् प्रदेशे एकस्मिन्नर्थे समवायि यत्कारणान्तरं चन्दनकण्टकादिसंभेदः, तत्र दृष्टत्वात्सुखदुःखयोरर्थान्तरभाव इति। पादे वेदना सुखं शिरसीति प्रादेशिके सुखदुःखे, न त्वेवं ज्ञानमिति। तदेवं कारणभेदात्प्रकारभेदाच्च भेद इति। अनुकूलप्रतिकूलतया प्रत्यात्मवेदनीये चैते न शक्ये अपह्नोतुम्। न चैतान्निह्नुवानः क्वचिदभ्यनुज्ञां लब्धुमर्हतीति ॥ ६ ॥

**एकदेश इत्येकस्मिन् शिरः पृष्ठमुदरं मर्माणि तद्विशेषस्तद्विशेषेभ्यः ७॥**

( उप० ) ननु यदि कारणभेदाधीनो ज्ञानात्सुखदुःखयोः सुखाच्च

दुःखस्य स्तम्भकुम्भादिवदेव परस्परं भेदः तदा शरीरस्य तदवयवानां च शिरःपादपृष्ठोदरादीनां न परस्परं भेदः स्यात् । तत्र हि परमाणुद्व्यणुकादीनां लोहितरेतसोर्वा कारणानामविशेषादित्यत आह—एकदेश इति । एकदेश इति अवयवे इत्यर्थः, एकस्मिन्निति शरीरे इत्यर्थः । शिर इत्येकदेशः उदरं पृष्ठं मर्माणि च स्नायुप्रभृतीनि, तेषां विशेषो वैजात्यम, तद्विशेषेभ्यस्तत्कारणविशेषेभ्यः, तत्रापि कारणवैजात्यादेव वैजात्यं नहि यज्जातीयं शिरःसमवायिकारणं तज्जातीयमेवोदरपृष्ठादेरपि, तन्तुकपालाद्युपादानवैजात्यात् पटघटादौ वैजात्यवत्, तत्रापि वैजात्यसंभवात् । तन्तुकपालादेरपि अंशुशर्करादिवैजात्यात् । एवं तत्र तत्राप्यन्वेष्टव्यम् । परमाणूनां साधारण्येऽपि स्वस्वोपादानवैजात्यस्य सर्वत्र वैजात्यप्रयोजकत्वात् द्रव्यत्वेन तूपादानसाजात्यं न वैजात्यप्रयोजकमिति दिक् ॥ ७ ॥

इति श्रीशाकरे वैशेषिकसूत्रोपस्कारे दशमाध्यायस्य प्रथममाह्निकम् ।

( विवृ० ) ननु यदि कारणावैलक्षण्यात्कार्याभेदस्तदा देहस्य तदवयवानां करचरणशिरःपृष्ठोदरादीनां चाभेदप्रसङ्गः सर्वत्रैकविधयोः शुक्रशोणितयोर्हेतुत्वादित्यत आह—एकदेश इति । एकस्मिन् देहे एकदेशे अवयवे शिरः, पृष्ठम्, उदरं, मर्माणीति व्यवहारविशेषा भवन्तीति पूरणीयम् । इतिकारश्च मर्माणीत्यनन्तरं योजनीयः । तथाच व्यवहाराणां वैलक्षण्यात् व्यवहर्तव्यानामपि वैलक्षण्यमावश्यकं तद्विशेषः व्यवहर्तव्यानां शिरःप्रभृतीनां वैलक्षण्यं च तद्विशेषेभ्यस्तेषां कारणानां ये विशेषास्तेभ्य एव । इत्थं च घटपटादीनामिव शिरःप्रभृतीनामवयवानामपि स्वस्वसमवायिकारणवैजात्यादेव वैजात्यं समवायिकारणवैजात्यमपि तत्समवायिकारणवैजात्यप्रयोज्यमेवं क्रमेण त्रसरेणुवैजात्यपर्यन्तं वाच्यम् । द्व्यणुकवैजात्यं तु तत्तद्विजातीयकार्यजनकतावच्छेदकतया सिद्धम् । एवमसमवायिकारणसंयोगवैजात्यादपि केषांचिद्वैजात्यं द्रष्टव्यमधिकमन्यत्रानुसंधेयमिति ॥ ७ ॥

इति श्रीजयनारायणतर्कपञ्चाननभट्टाचार्यप्रणीतायां कणादसूत्रविवृतौ दशमाध्यायस्याद्यमाह्निकम् ।

( भाष्यम् ) यदि कारणभेदात् कार्यभेदः, लोहितरेतसोः कारणयोरविशेषादेकस्मिन् शरीरे अवयवभेदो न प्राप्नोति, ततश्चोपलब्धिभेदो नोपपद्यते इत्यत आह—*एकस्मिन् शिरः पृष्ठमुदरं मर्माणि तद्विशेषस्तद्विशेषेभ्यः । एकस्मिन् शरीरे यदेतच्छिरः पृष्ठमुदरं मर्माणि इत्युपलब्धिभेदः यश्च तस्मिन्नेव मर्मणि एतत् हृदयमियं बस्तिरित्युपलब्धिविशे-

षस्तदेतत्सर्वं कारणविशेषेभ्य एवोत्पद्यते । लोहितरेतसोरविशेषेऽपि अवान्तरविशेषात्कार्यविशेषः ततश्चोपलब्धिभेद इति । संयोगविशेषः परिणामविशेषश्चोत्प्रेक्षितव्य इति । कार्यं हि कारणात्मनाऽवतिष्ठते इति यत्र यस्यावस्थानं ततस्तस्योत्पत्तिरिति सर्वत्र विशेषप्रतिपत्तिरिति ॥ ७ ॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये दशमस्याध्यायस्याद्यमाह्निकम् ।

# दशमाध्याये द्वितीयाह्निकम् ।

## कारणमिति द्रव्ये कार्यसमवायात् ॥ १ ॥

(उप०) इदानीं प्रसङ्गतस्त्रयाणां कारणानां विशेषविवेचनमारभते—कारणमिति । कारणं समवायिकारणमिदमिति प्रतीतिप्रयोगौ द्रव्ये द्रष्टव्यौ । कुत एवमत आह कार्यसमवायात्कार्याणि द्रव्यगुणकर्माणि तत्रैव समवयन्ति यतः ॥ १ ॥

(विवृ०) प्रसङ्गात् कारणनिरूपणमारभते—कारणमिति । कारणमिति समवायिकारणमिति व्यवहारो द्रव्य एव भवति कार्यसमवायात्समवायेन कार्याश्रयत्वात् । नहि कार्यस्य कस्यापि समवायेनाधारता द्रव्यभिन्नेषु पदार्थेषु विद्यते येन तत्रापि तद्व्यवहारः प्रसज्येतेत्यर्थः । अन्यथासिद्धिशून्यत्वे सति नियतपूर्ववर्तित्वं कारणत्वमिति कारणसामान्यलक्षणम् । कारणं त्रिविधं समवायिकारणासमवायिकारणनिमित्तकारणभेदात् । तत्र समवायसंबन्धेन तत्कार्याश्रयत्वं तत्समवायिकारणत्वं, समवायेन कार्याश्रयत्वं तु सामान्यतः समवायिकारणत्वम्, तच्च द्रव्य एव नान्यत्रेति भावः ॥ १ ॥

(भाष्यम्) ननु खलु भोः कारणमिति कुत्रेयं प्रतिपत्तिः यद्भेदात्कार्यभेदः इति कारणमिति द्रव्यगुणकर्मणामविशेष इत्येतदिदानीं परीक्ष्यते—*कारणमिति द्रव्ये कार्यसमवायात् । कारणमिति द्रव्ये भवति प्रतिपत्तिः। कस्मात्? कार्यसमवायात् । तत्र खलु कार्यं समवैति ॥ १ ॥

## संयोगाद्वा ॥ २ ॥

(उप०) तत्किं समवायिकारणत्वमात्रं द्रव्याणामत आह—संयोगादिति । पटोत्पत्तौ तन्तूनां समवायिकारणत्ववन्निमित्तकारणत्वमपि, तुरीतन्तुसंयोगस्यापि पटकारणत्वात्तत्संयोगद्वारा तुर्यास्तन्तोश्च पट-

निमित्तकारणत्वमपि। वाकारः समुच्चय तुरीतन्तुसंयोगं प्रति तन्तोः समवायिकारणत्वेऽपि पटं प्रति तद्द्वारा निमित्तकारणत्वात् ॥ २ ॥

( विवृ० ) न केवलं द्रव्यस्य समवायिकारणत्वं कार्यसमवायितया किंतु असमवायिकारणाश्रयतयाऽपीत्याह—संयोगेति । संयोगादसमवायिकारणसंयोगाश्रयत्वाद्वा द्रव्ये समवायिकारणमिति व्यवहार इत्यर्थः । अत्र संयोगपदमसमवायिकारणमात्रोपलक्षकम्, नह्यसमवायिकारणाश्रयत्वं द्रव्यादन्यस्मिन्नस्ति येनातिप्रसक्तिः संभावनीया असमवायिकारणत्वस्य गुणकर्ममात्रवृत्तित्वात् । नच घटरूपस्यासमवायिकारणं यत्कपालरूपं तदाश्रयत्वस्य कपाले सत्वाद्धटरूपस्य समवायिकारणं कपालमिति व्यवहारः स्यात्, न स्याच्च घटो घटरूपस्य समवायिकारणमिति व्यवहार इति वाच्यम् । कारणताघटकसंबन्धेनासमवायिकारणाश्रयत्वस्यैव तादृशव्यवहारनिर्वाहकत्वात् कपालरूपस्य स्वसमवायिसमवायसंबन्धेनैव कार्यजनकत्वात् तादृशसंबन्धेन तस्य कपालेऽसत्त्वात् घटे सत्त्वाच्च । नच कापालीयगुणकर्मसामान्येष्वपि तादृशसंबन्धेन तदीयरूपस्य विद्यमानत्वात्तेषु तादृशव्यवहारप्रसङ्ग इति वाच्यम्, असमवायिकारणाश्रयद्रव्यत्वस्यैव समवायिकारणव्यवहारनियामकत्वोपगमात् । वस्तुतः समवायिकारणमिति सामान्यव्यवहारनियामकसमवायिकारणसंयोगाद्याश्रयत्वमित्येवैतत्सूत्रेण सूचितं नतु विशेषव्यवहारनियामकं तदित्येव तत्त्वम् । अत एव त्रितन्तुकपटरूपस्य समवायिकारणं पञ्चतन्तुकः पट इति व्यवहारः स्यात् तदसमवायिकारणस्य तन्तुरूपस्य स्वसमवायिसमवायसंबन्धेन पञ्चतन्तुकपटेऽपि सत्त्वात् । न स्याच्च शैलः श्येनशैलसंयोगस्य समवायिकारणमिति व्यवहारस्तदसमवायिकारणस्य कर्मणः शैलेऽसत्त्वादिति पूर्वपक्षोऽपि निरस्त इति संक्षेपः ॥ २ ॥

( भाष्यम् ) योऽयमवयवसंयोगः कार्यस्योत्पत्तिहेतुः स खलु द्रव्ये वर्तते । द्रव्याणां खल्वयं संयोग इति द्रव्ये तदाश्रये कारणमिति प्रतिपत्तिरिति । अथापि खल्वेक एवोपश्लेषो निमित्तभेदाद्व्यपदेशभेदं भजते इति कार्यसमवायात्संयोगाद्वा द्रव्यं कारणमित्यभिधत्ते ॥ २ ॥

## कारणे समवायात् कर्माणि ॥ ३ ॥

( उप० ) कर्माणि यादृशकारणत्वं तदाह—कारण इति । असमवायिकारणानीति शेषः । असमवायिकारणत्वं च कार्यकारणभावसंबन्ध्ये-

कार्थसमवेतकारणत्वं तच्च कार्यैकार्थसमवायात्कारणैकार्थसमवायाद्वा। तत्राद्या लघ्वी द्वितीया महतीति वैशेषिकपरिभाषा, तत्र कया प्रत्यासत्त्या संयोगविभागसंस्कारान् प्रति कर्मणामसमवायिकारणत्वमित्यत आह—कारणे समवायात्। कारणे संयोगादिसमवायिकारणे समवायात्। तथाच कार्यैकार्थसमवायलक्षणया लघ्व्या प्रत्यासत्त्या संयोगादौ कर्मणोऽसमवायिकारणत्वमित्यर्थः॥ ३॥

(विवृ०) असमवायिकारणव्यवहारः कुत्र भवतीत्याकाङ्क्षायामाह—कारण इति। कर्माणि असमवायिकारणानीति व्यवहारः कारणे संयोगविभागवेगस्थितिस्थापकानां समवायिकारणे समवायात् समवायसंबन्धेन सत्त्वात्। तथाच समवायस्वसमवायिसमवायान्यतरसंबन्धेन समवायिकारणप्रत्यासन्नत्वे सति कारणत्वमेवासमवायिकारणत्वम्। तत्र संयोगादीनामसमवायिकारणे कर्मणि समवायसंबन्धेन तत्समवायिकारणप्रत्यासन्नत्वादसमवायिकारणव्यवहारः। नच इच्छादिकार्याणां ज्ञानादिकारणेऽसमवायिकारणव्यवहारापत्तिः, सामान्यलक्षणे आत्मविशेषगुणभिन्नत्वस्य विशेषणयित्वात्। नच तुरीतन्तुसंयोगस्य पटासवायिकारणत्वापत्तिः एवं वेगादीनामभिघाताद्यसमवायिकारणत्वापत्तिरिति वाच्यं, पटासमवायिकारणलक्षणे तुरीतन्तुसंयोगभिन्नत्वस्याभिघाताद्यसमवायिकारणलक्षणे वेगादिभिन्नत्वस्य चानायत्या विशेषणीयत्वात्। तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं प्रति वेगादिकं वेगस्पन्दादिकं प्रत्यसमवायिकारणं भवत्येवेति तत्तल्लक्षणे तत्तद्भिन्नत्वं न देयमेवेति संक्षेपः॥ ३॥

(भाष्यम्) द्रव्यं तावत्कारणमुक्तम्। तत्र समवायात् कर्माणि कारणानि। अवयवकर्मणा खल्वमीषां संयोगस्ततो द्रव्यस्योत्पत्तिरिति। तच्चैतदवयवकर्म संयोगद्वारा द्रव्योत्पत्तौ निमित्तम्। अव्यवधानेन त्वमीषां नास्ति हेतुत्वमिति न द्रव्याणां कर्म व्यतिरेकादित्युक्तम्। संयोगविभागवेगेषु च कर्माणि कारणानि। कस्मात्? कारणे समवायात्। संयोगादीनां यत्कारणं द्रव्यं तत्र खल्वेतानि समवयन्तीति॥ ३॥

**तथा रूपे कारणैकार्थसमवायाच्च॥ ४॥**

(उप०) रूपादीनां गुणानामवयववर्तिनामवयविगुणादिषु कीदृशी कारणतेत्यपेक्षायामाह—तथेति। रूप इति रूपरसगन्धस्पर्शसंख्यापरि-

---

१ कारणेत्यादि पृथक्सूत्रं चन्द्रकान्तमते।

माणपृथक्त्वगुरुत्वद्रवत्वस्नेहाद्युपलक्षयति, तथेत्यसमवायिकारणत्वमतिदिशति, कारणैकार्थसमवायादिति । अवयविरूपादीनां समवायिकारणं यदवयवि तेन सहैकार्थसमवायेन महत्या प्रत्यासत्त्याऽवयविरूपादिकमारभते । तद्यथा कपालरूपादि घटे रूपादिकमारभते इति सर्वत्र द्रष्टव्यम् । चकारादमीषां क्वचिन्निमित्तत्वमपि समुच्चिनोति ॥ ४ ॥

( विवृ० ) अवयवरूपादीनामवयविरूपादिकं प्रति परंपरयैवासमवायिकारणत्वमित्याह—तथेति । रूपेऽवयवगतरूपादिषु कारणैकार्थसमवायात् स्वसमवायिसमवायरूपप्रत्यासत्तितः तथा अवयविगतरूपादीनामसमवायिकारणत्वव्यवहार इत्यर्थः । कपालरूपादिकं स्वसमवायिसमवायसंबन्धेन घटाद्यवयविनि समवायिकारणे वर्तमानं घटरूपाद्यसमवायिकारणं भवति । तत्र परंपरासंबन्धस्थलेऽसमवायिकारणतायां महतीति वैशेषिकाणां परिभाषा साक्षात्संबन्धस्थले च लघ्वीति परिभाषेति संक्षेपः ॥ ४ ॥

( भाष्यम् ) द्रव्यकर्मणोः कारणमित्यविशेषः परीक्षितः, गुणानामिदानीं परीक्ष्यते । यथा कर्मसु कारणमिति प्रतिपत्तिः—*तथा रूपे । कारणमिति प्रतिपत्तिरिति । कारणरूपं खलु कार्यरूपे हेतुः । कस्मात्—*कारणैकार्थसमवायाच्च । उपलब्धेश्चेति चार्थः । कार्यरूपे तावदवयविद्रव्यं कारणं तेन च कारणेनावयविद्रव्येणैकस्मिन्नर्थे अवयवे रूपं समवैति । अवयविरूपहेतुरवयविद्रव्यमवयवरूपं चावयवे समवैतीति । उपलब्धेः खल्वपि । शुक्लेभ्यस्तन्तुभ्यः शुक्लः पट उत्पद्यमान उपलभ्यते लोहितेभ्यो लोहितो न विपरीत इति । अतो विज्ञायते कारणरूपं कार्यरूपे हेतुरिति । निदर्शनं चेदं गुणान्तराणामपि हेतुत्वमुत्प्रेक्षितव्यमिति ॥ ४ ॥

## कारणसमवायात्संयोगः पटस्य ॥ ५ ॥

( उप० ) द्रव्यारम्भे संयोगस्यासमवायिकारणस्य लघ्वी प्रत्यासत्तिमाह—कारणेति । कारणे समवायिकारणे समवायात् संयोगोऽपि पटादौ कार्ये कार्यैकार्थसमवायलक्षणया प्रत्यासत्त्याऽसमवायिकारणमित्यर्थः । पटपदेन कार्यद्रव्यमात्रमुपलक्षयति यदि त्ववयवावयवसंयोगोऽपि पटादेरसमवायिकारणं तदा कारणैकार्थसमवायोऽपीति कश्चित् ॥ ५ ॥

( विवृ० ) द्रव्ये संयोगस्याऽपि साक्षात्संबन्धेनैवासमवायिकारणत्वमित्याह—कारणेति । समवायिकारणे तन्तौ समवायेनैव तन्त्वोः संयोगो वर्तते इति पटं प्रति साक्षात्संबन्धेनैवासमवायिकारणमित्यर्थः ॥ ५ ॥

( भाष्यम् ) तत्रोदाहरणम्,—*कारणसमवायात्संयोगः पटस्य । तन्तूनां परस्परं संयोगः पटस्य कारणम् । कस्मात् ? कारणेषु समवायात्। तन्तवो हि कारणं पटस्य, तत्र खलु संयोगः समवैतीति ॥ ५ ॥

## कारणकारणसमवायाच्च ॥ ६ ॥

( उप० ) संयोगस्य क्वचिन्महत्यापि प्रत्यासत्त्या कारणत्वमित्याह—कारणेति । तूलपिण्डावयवे वर्तमानः प्रचयाख्यः संयोगस्तूलकपिण्डे महत्त्वमारभते तत्र कारणैकार्थसमवायः प्रत्यासत्तिरित्यर्थः ॥ ६ ॥

( विवृ० ) संयोगस्य क्वचित्कार्ये परंपरयाप्यसमवायिकारणत्वमस्तीत्याह—कारणेति । कारणस्य समवायिकारणस्य कारणे समवायिकारणे समवायात्समवायसंबन्धेन वर्तमानत्वात्संयोगः क्वचिदसमवायिकारणं भवति । यथा तूलकपिण्डमहत्परिमाणरूपकार्ये तदवयवगतः शिथिलाख्यसंयोग इति ॥ ६ ॥

( भाष्यम् ) संयोगः कारणमिति प्रकृतम् । कारणस्य यत्कारणं तत्र समवायाच्च संयोगः कारणमिति । द्वाभ्यां तूलपिण्डाभ्यां प्रचिताभ्यामारब्धे तूलपिण्डे यन्महत्त्वमुत्पद्यते, तत्र खलु तूलपिण्डद्वयसंयोगः प्रचयाभिधानः कारणम् । तत्र तूलपिण्डो महत्त्वकारणं तूलपिण्डकारणं च तूलपिण्डावयवः, तत्र खल्वयं संयोगः समवैतीति ॥ ६ ॥

## संयुक्तसमवायादग्नेर्वैशेषिकम् ॥ ७ ॥

(उप०)एवं समवायिनिरूपितां कारणतां निरूप्य निमित्तकारणतां निरूपयितुं प्रकरणान्तरमारभते—संयुक्तेति । अग्नेर्वैशेषिकं विशेषगुणमौष्ण्यं संयुक्तसमवायात् पाकजेषु निमित्तकारणम् । उपलक्षणं चैतत्, ज्ञानं प्रति सर्वेषां निमित्तकारणत्वं, बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनानां निमित्तकारणत्वमेव । सुखादीनां भेदप्रतिपादनाय प्रपञ्चोऽयं द्रष्टव्यः ॥ ७ ॥

( विवृ० ) निमित्तकारणतां निरूपयति—संयुक्तेति । अग्नेर्वैशेषिकं विशेषगुणात्मकमौष्ण्यं संयुक्तसमवायात् पाकजरूपादौ निमित्तकारणम् । तथाच पाकजं प्रति स्वाश्रयसंयोगसंबन्धेन उष्णस्पर्शो निमित्तकारणम् । समवायिकारणासमवायिकारणभिन्नं कारणं निमित्तकारणमिति सामान्यलक्षणं बोध्यम् । अवशिष्टानां परीक्षा उक्तदिशैव कर्तव्येति मुनीनामभिप्रायः, नातस्तेषां न्यूनतेति ॥ ७ ॥

( भाष्यम् ) यदेतदौष्ण्यं नामाग्नेर्विशेषो गुणः सोऽयं संयुक्तसमवायेन कारणं भवति पाकजरूपरसादिष्विति । औष्ण्यं खल्वग्नौ समवैति अग्निश्च संयुज्यते पाकजरूपाद्याश्रयेण द्रव्येणेति । अथापि खल्वग्नेर्लोहितरूपस्य यन्निमित्तविशेषप्रभवं नीलादिरूपमुत्पद्यते, तदेतत्संयुक्तसमवायादुत्पद्यते । द्रव्यविशेषैः संयुज्यमाने खल्वग्नौ शौक्ल्यलौहित्ययोरवजयात्कृष्णं रूपमभिव्यज्यते । तत्खल्वग्नौ समवैतीति । तदाश्रयेण चाग्निना संयुक्तं यद्द्रव्यान्तरं तत्र तमवायात्तत्कारितमग्नैर्नीलादि रूपान्तरमिति । यश्चापरो द्रव्यगुणकर्मणामविशेषः स परीक्षितः पुरस्तात् । इच्छाद्वेषप्रयत्नाश्चेति । सोऽयं द्रव्यादीनां तत्त्वज्ञानार्थं प्रपञ्चः ॥ ७ ॥

**दृष्टानां दृष्टप्रयोजनानां दृष्टाभावे प्रयोगोऽभ्युदयाय ॥ ८ ॥**

( उप० ) इदानीमाम्नायप्रामाण्यं द्रढयितुमुक्तमेवार्थमाह—दृष्टानामिति । दृष्टानां प्रमाणत उपलब्धानां कर्मणां यागदानस्नानादीनां दृष्टप्रयोजनानां दृष्टमुपदिष्टं प्रयोजनं येषां तथाहि 'स्वर्गकामो यजेत'। 'अग्निहोत्रं जुहुयात् स्वर्गकामः'—इत्यादौ विधिसमभिव्याहृतमेव फलम्। क्वचिदार्थवादिकं यथा 'य एता रात्रीरधीयीत तस्य पितरो घृतकुल्या मधुकुल्याः क्षरन्ति' इत्यादौ । क्वचिच्चौपादानिकम्, यथा 'विश्वजिता यजेत' इत्यादौ । अत्र हि न विधिसमभिव्याहृतं नार्थवादोपस्थितमित्यौपादानिकं काल्पनिकं स्वर्गस्यैव स्वत. सुन्दरस्य फलस्य कल्पनीयत्वात् । तथाचाशुतरविनाशिनामेतेषां कर्मणां चिरभाविने फलाय कारणत्वमनुपपद्यमानमत एतेषां प्रयोगोऽनुष्ठानमभ्युदयायापूर्वायेत्यर्थः । ननु श्रुतिप्रामाण्ये सति स्यादेवं तदेव तु दुर्लभं, नहि मीमांसकानामिव नित्यनिर्दोषत्वेन श्रुतिप्रामाण्यं त्वयेष्यते पौरुषेयत्वेनाभ्युपगमात् । पुरुषस्य च भ्रमप्रमादविप्रलिप्सादिसंभवादत आह—दृष्टाभाव इति । दृष्टं पुरुषान्तरेऽस्मदादौ भ्रमप्रमादविप्रलिप्सादिकं पुरुषदूषणं तदभावे सतीत्यर्थः । क्षितिकर्तृत्वेन वेदवक्तृत्वेन वाऽनुमितस्य पुरुषधौरेयस्य निर्दोषत्वेनैवोपस्थितेः । तथाच तद्वचसां न निरभिधेयता न विपरीताभिधेयता न निष्प्रयोजनाभिधेयता, भूतेन्द्रियमनसां दोषाद्भ्रमप्रमादकरणापाटवादिप्रयुक्ता एता वचसामविशुद्धयः संभाव्यन्ते। न चेश्वरवचसि तासां संभवः। तदुक्तम् । 'रागाज्ञानादिभिर्वक्ता ग्रस्तत्वादनृतं वदेत् । ते चेश्वरे न विद्यन्ते स ब्रूयात् कथमन्यथा' इति ॥ ८ ॥

( विवृ० ) तदेवं पदार्था निरूपिताः साधर्म्यं वैधर्म्यं च निरूपितम्,

कर्मभिः शुद्धचित्तानामेवैतच्छास्त्रान्मननं भवति नाशुद्धचित्तानाम् । कर्मणां चित्तशुद्धिजनकत्वं च विविदिषन्तीति श्रुत्योक्तं, तत्पूर्वोक्तमपि दार्ढ्यार्थं पुनराह—दृष्टानामिति । दृष्टानां विधिदृष्टानां दृष्टप्रयोजनानां दृष्टं विध्यर्थवादादिना ज्ञातं प्रयोजनं येषां तथाविधानां कर्मणां यज्ञदान-तपःप्रभृतीनां प्रयोगोऽनुष्ठानं दृष्टानां तत्तत्कर्मफलानामभावे तत्तत्फल-कामनाविरहादसंभवे अभ्युदयाय चित्तशुद्धिप्रयुक्तविविदिषात्मकफलाय भवति । तथाच—'स्वर्गकामोऽश्वमेधेन यजेत' इत्यादिविधिविहितानां स्वर्गाद्यात्मकप्रतिनियतप्रयोजनानां कर्मणां निष्कामेन कृतानां न स्वर्गा-दिफलजनकत्वं किंतु चित्तशुद्ध्याद्यात्मकफलजनकत्वमेव 'विविदिषन्ति' इत्यादिश्रुतेः 'कषाये कर्मभिः पक्के ततो ज्ञानं प्रजायते' इत्यादिस्मृते-रिति भावः ॥ ८ ॥

( भाष्यम् ) तत्त्वज्ञानकारणं चानुश्रविकं कर्मेत्याह—*दृष्टानां दृष्ट-प्रयोजनानां दृष्टाभावे प्रयोगोऽभ्युदयाय । अभ्युदयस्तत्त्वज्ञानम् । आम्नायदृष्टानामाम्नायदृष्टप्रयोजनानां कर्मणामाम्नायदृष्टं प्रयोजनं यदा न भवति, तदा खल्वमीषां प्रयोगोऽनुष्ठानं भवत्यभ्युदयाय । अनवरतं संस-रन् खल्वयं पुरुषः पुनः पुनस्तीव्रेण प्रतिकूलवेदनीयेन तापेनोपतप्यमा-नोऽपगतस्वस्तिभावः सुखलवोपभोगाय दुःखज्वालाऽऽलिङ्गनमनिच्छन् दोषमनिशं संसारेषु भूयांसमनुभवन् कर्मफलेषु विरज्यते, विरक्तस्तानि न कामयते, अकामयमानस्तु न तत्फलमधिगच्छति । कस्मात्? कामनो-पबन्धेनोपदेशात् । तदानी च तेषामनुष्ठाने कल्मषोपक्षयात्तत्त्वज्ञानमुत्प-द्यते इति । विविदिषन्ति यज्ञेनेत्यार्षं विज्ञानमत्रोत्प्रेक्षितव्यमिति ॥ ८ ॥

## तद्वचनादाम्नायस्य प्रामाण्यमिति ॥ ९ ॥

( उप० ) ननु तेनेश्वरेण वेदः प्रणीत इत्यत्रैव विप्रतिपत्तिरत आह—तद्वचनादिति । इतिः शास्त्रपरिसमाप्तौ । तद्वचनात्तेनेश्वरेण वचनात् प्रणय-नादाम्नायस्य वेदस्य प्रामाण्यम् । तथाहि वेदास्तावत् पौरुषेयो वाक्यत्वा-दिति साधितं, न चास्मदादयस्तेषां सहस्रशाखावच्छिन्नानां वक्तारः संभा-व्यन्ते अतीन्द्रियार्थत्वात्, न चातीन्द्रियार्थदर्शिनोऽस्मदादयः । किचा-प्तोक्ता वेदा महाजनपरिगृहीतत्वात्, यन्नाप्तोक्तं न तन्महाजनपरिगृहीतं, महाजनपरिगृहीतं चेदं तस्मादाप्तोक्तम् । स्वतन्त्रपुरुषप्रणीतत्वं चाप्तोक्तत्वम्, महाजनपरिगृहीतत्वं च सर्वदर्शनान्तःपातिपुरुषानुष्ठीयमानार्थत्वम् । कचित्

फलाभावः कर्मकर्तृसाधनवैगुण्यादित्युक्तम्, कर्तृस्मरणाभावान्नैवमिति चेन्न, 'तस्मात्तपस्तेपानाच्चत्वारो वेदा अजायन्त' इत्यादिना कर्तृस्मरणादिति । अर्थवादत्वादप्रमाणमिदमिति चेन्न । कर्तृस्मरणस्य सर्वस्यार्थवादत्वात् । ननु तद्वचनादित्येवासिद्धमिति चेन्न । तेनेश्वरेण प्रणयनादित्यत्रेश्वरस्य वाऽसिद्धिस्तत्कृतं प्रणयनं वाऽसिद्धम्? नाद्यः ईश्वरस्य पूर्वमेव साधितत्वात् । तत्प्रणीतत्वं च स्वतन्त्रपुरुषप्रणीतत्वादेव सिद्धम् । न त्वस्मदादीना सहस्रशाखवेदप्रणयने स्वातन्त्र्यं संभवतीत्युक्तत्वात् । किंच प्रमाया गुणजन्यत्वेन वैदिकप्रमाया अपि गुणजन्यत्वमावश्यकं, तत्र च गुणो वक्तृयथार्थवाक्यार्थज्ञानमेव वाच्यस्तथाच तादृश एव वेदे वक्ता, यः स्वर्गापूर्वादिविषयकसाक्षात्कारवान्, तादृशश्च नेश्वरादन्य इति सुष्ठु॥९॥

अकृत भवानीतनयो भवनाथसुतो भवार्चने निरतः ।
एतं कणादसूत्रोपस्कारं शंकरः श्रीमान् ॥ १ ॥
श्लाघास्पदं यद्यपि नेतरेषामियं कृतिः स्यादुपहासयोग्या ।
तथापि शिष्यैर्गुरुगौरवेण परःसहस्रैः समुपासनीया ॥ २ ॥

इति महामहोपाध्यायमिश्रभवनाथात्मजमिश्रश्रीशंकरकृते वैशेषिकसूत्रोपस्कारे दशमाध्यायस्य द्वितीयाह्निकम् ।

(विवृ०) ननु श्रुतेः प्रामाण्यं चेत्तदा तदुक्तकर्मणामपि सफलत्वं भवेत्, श्रुतेः प्रामाण्यं चाद्यापि संदिग्धमित्याशङ्कायां पूर्वोक्तमपि दार्ढ्यार्थमादरार्थं च पुनराह—तद्वचनादिति । इतिकारः शास्त्रसमाप्तिसूचकः । सूत्रमिदं व्याख्यातं प्रथमाध्याये ॥ ९ ॥

इति श्रीजयनारायणतर्कपञ्चाननभट्टाचार्यप्रणीतायां कणादसूत्रविवृतौ दशमाध्यायस्य द्वितीयमाह्निकम् ।

(भाष्यम्) तस्मात्—*तद्वचनादाम्नायस्य प्रामाण्यमिति । प्रमाणगम्यस्यार्थस्य वचनं कथमप्रमाणं स्यादिति । अथापि खलु तेषां द्रव्यादीनां तन्त्रार्थानां वचनात्प्रामाण्यमाम्नायस्य । प्रमाणगम्यो हि तन्त्रार्थ इति । त इमे द्रव्यादयः पदार्था उद्दिष्टा लक्षिताः परीक्षिताश्चेति ॥ ९ ॥

इति चन्द्रकान्तीये वैशेषिकभाष्ये दशमस्याध्यायस्य द्वितीयमाह्निकम् ।

समाप्तश्चायं दशमोऽध्यायः ।

---

इति वैशेषिकदर्शनम् ।

# श्रीजयनारायणभट्टाचार्यप्रणीतः

# संक्षेपतः शास्त्रार्थसंग्रहः ।

वैशेषिकमते पदार्थः सप्तविधः, द्रव्यगुणकर्मसामान्यविशेषसमवायाभाव-भेदात् । शक्तिसंख्यासादृश्यादयो नातिरिक्ताः पदार्थाः । वह्निरिव मण्याद्यभावोऽपि दाहादौ हेतुरतो मण्यादिसन्निधाने वह्नेर्न दाहः । वह्नौ दाहानुकूलानन्तशक्तितत्प्रागभाववत्प्रध्वंसकल्पनायां गौरवात् । संख्यापि द्रव्य-गता गुणप्रभेद एव । एकं रूपं द्वे रूपे त्रीणि रूपाणीत्यादिव्यवहारविषयैकत्वादिकं तु बुद्धिविशेषरूपमेव, सादृश्यमपि तद्भिन्नत्वे सति तद्गतभूयो-धर्मवत्त्वम् । पदार्थविभाजकाः सप्त द्रव्यत्वगुणत्वकर्मत्वसामान्यत्वविशेषत्वसमवायत्वाभावत्वानि, तत्र द्रव्यत्व-गुणत्व-कर्मत्वानि जातयः, नित्यत्वे सत्यनेकसमवेतत्वं सामान्यत्वम्, सद्भिन्नत्वे सत्येकमात्रसमवेतत्वं विशेषत्वम्, नित्यसंबन्धत्वं समवायत्वम्, द्रव्यादिषट्कभिन्नत्वमभावत्वम् । द्रव्याणि नव, क्षितिजलतेजोवाय्वाकाशकालदिगात्ममनांसि । तत्र सावयवानि द्रव्याण्यनित्यानि, निरवयवाणि तु नित्यानि, तत्र कार्यस्य, संयोगस्य, विभागस्य वा समवायिकारणतावच्छेदकतया द्रव्यत्वजातिसिद्धिः, अन्धकारस्तु तेजोविशेषसामान्याभाव एव, नतु द्रव्यान्तरम्, तत्र गुणक्रियादिबुद्धिर्भ्रान्तिरेव, द्रव्यविभाजकानि नव पृथिवीत्वजलत्वतेजस्त्ववायुत्वाकाशत्वकालत्वदिक्त्वात्मत्वमनस्त्वानि, तेष्वपि आकाशत्व-कालत्वदिक्त्वानि न जातयः तदितराणि षट् जातयः । तत्र गन्धसमवायिकारणतावच्छेदकतया पृथिवीत्वजातिः सिद्ध्यति, पृथिवी रूपरसगन्धस्पर्शसंख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्ववेगस्थिति-स्थापकगुणवती, तत्र नीलशुक्लपीतरक्तहरितकपिशचित्रात्मकानि सप्त रूपाणि वर्तन्ते । कषायमधुरलवणकटुतिक्ताम्लभेदेन षड्विधो रसः पृथिव्याम् । गन्धस्तु तत्र सौरभासौरभभेदेन द्विविधः, पाषाणेऽप्यनुत्कटो गन्धोऽस्त्येव तद्भस्मनि गन्धोपलब्धेस्तदुपादानोपादेयत्वेन पाषाणस्य पृथिवीत्वं तेन च गन्धानुमानात्, स्पर्शोऽप्यनुष्णाशीतः क्वचित् पाकजः क्वचित् कारणगुणजनितश्च । पृथिवी द्विविधा नित्यानित्यभेदात्, तत्र परमाणुरूपा नित्या तदन्याऽवयवयोगिन्यनित्या, साऽपि त्रिविधा शरी-

रेन्द्रियविषयभेदात् । तत्र शरीरं जरायुजाण्डजस्वेदजोद्भिज्जभेदाच्चतुर्विधम् । जरायुजः मनुष्यपश्वाद्याः, अण्डजाः पक्षिसर्पाद्याः, स्वेदजा दंशमशकाद्याः, उद्भिज्जास्तरुगुल्माद्याः, घ्राणेन्द्रियं पार्थिवम्, विषयास्तु द्व्यणुकादिब्रह्माण्डपर्यन्ताः । तत्र द्वाभ्यां परमाणुभ्यां द्व्यणुकं त्रिभिर्द्व्यणुकैस्त्रसरेणुरित्यादिक्रमेणावयविनामुत्पत्तिः ॥ १ ॥

जन्यस्नेहसमवायिकारणतावच्छेदकतया जलत्वजातिसिद्धिः, रूपरसस्पर्शसंख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वगुरुत्वद्रवत्वस्नेहवेगा जलस्य गुणाः । तत्र रूपं शुक्लमेव, कालिन्दीजलादौ नीलत्वप्रतीतिस्तु भ्रान्तिरेव तस्यैव वियति विक्षिप्तस्य धवलिमोपलब्धेः । रसस्तु मधुर एव हरीतक्यादिभक्षणानन्तरं रसनेन्द्रियेण जलमाधुर्योपलब्धेः जम्बीररसादौ अम्लरसोपलब्धिस्तु आश्रयौपाधिकी, स्पर्शश्च शीत एव तेजःसंयोगात्तत्रौष्ण्यप्रतीतिर्भ्रान्तिरेव, द्रवत्वं तु तत्र सांसिद्धिकम् । जलमपि नित्यानित्यभेदाद्विविधं, परमाणुरूपं नित्यम्, द्व्यणुकादिरूपमनित्यम्, तदपि त्रिविधं शरीरेद्रियविषयभेदात् । तत्र जलीयशरीरमयोनिजं वरुणलोके प्रसिद्धम्, जलीयमिन्द्रियं तु रसनम्, विषयास्तु हिमकरकाकासारसरित्सागरादयः हिमकरकादेरुत्पत्तिस्तु विलक्षणदिव्यतेजःसंयोगात् । नच हिमकरकयोः काठिन्यान्न जलत्वम्, ऊष्मणा विलीनयोस्तयोर्जलत्वस्य प्रत्यक्षसिद्धत्वात्, यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्त्या हिमकरकयोर्जलोपादानकत्वसिद्धौ जलत्वसिद्धेरिति । मुक्तावलीकारस्तु अदृष्टविशेषेण तत्र द्रवत्वप्रतिरोधः, काठिन्यप्रत्ययस्तु भ्रान्त एवेत्याह । तत्र दृढतरसंयोग एव काठिन्यम्, परन्तु दिव्यतेजसा प्रतिरुद्धं द्रवत्वमभिभूतं तिष्ठतीत्येके । केचित्तु दिव्यतेजोऽनुप्रवेशाद्द्रवत्वं तत्र नश्यति ऊष्मसंयोगेन दिव्यतेजःसंयोगविगमे पुनर्द्रवत्वमुत्पद्यते इत्याहुः । तैलादावपि जलस्य द्रवत्वं प्रकृष्टस्नेहत्वाद्वह्नेरानुकूल्यमिति, घृष्टचन्दनादौ तु शैत्योपलब्धिश्चन्दनान्तर्वर्तिशीततरसलिलस्यैव, एवं बाष्पादावपि तत्संयुक्तसूक्ष्मजलस्यैव शैत्योपलब्धिरिति संक्षेपः ॥ २ ॥

जन्योष्णस्पर्शसमवायिकारणतावच्छेदकतया तेजस्त्वजातिसिद्धिः, उष्णत्वं च स्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसिद्धः, तेजस्त्वं जातिः परमाणावप्यस्ति 'नित्यस्य स्वरूपयोग्यस्य फलावश्यंभावः' इति नियमस्याप्रयोजकत्वात्, चन्द्रकिरणादौ तदन्तःपातिजलस्पर्शेनाभिभवान्मरकल-

किरणादौ पार्थिवस्पर्शनाभिभवाच्चक्षुरादौ चानुद्भूतत्वादुष्णस्पर्शस्य नोपलब्धिः । तेजसि रूपस्पर्शसंख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्ववेगा गुणाः सन्ति, तत्र भास्वरशुक्लरूपमेव तेजसि, वह्नौ मरकतकिरणादौ च पार्थिवरूपेणाभिभवात् शुक्लरूपानुपलब्धिः, वह्न्यादीनां प्रत्यक्षं तु पार्थिवरूपोपलब्ध्या भवति शङ्खस्येव पित्तपीतिम्ना, केचित्तु वह्न्यादेः शुक्लरूपं नाभिभूतं किंतु तस्य शुक्लत्वमेवाभिभूतमित्याहुः । द्रवत्वं तु नैमित्तिकं सुवर्णादौ तेजसि । तेजोऽपि द्विविधं नित्यमनित्यं च, तत्र परमाणुरूपं नित्यं द्व्यणुकादिरूपं त्वनित्यम्, अनित्यं तेजस्त्रिविधं शरीरेन्द्रियविषयभेदात् । तत्र तैजसं शरीरमयोनिजमेव सूर्यलोकादौ प्रसिद्धम्, तैजसमिन्द्रियं नयनम्, विषयो वह्निसुवर्णादिः, सुवर्णस्य तेजस्त्वे मानं च सुवर्णं तैजसमसति प्रतिबन्धके अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानजन्यद्रवत्वात् । यन्नैवं तन्नैवं यथा पृथिवीत्यनुमानम्, नचेदमप्रयोजकं पृथिवीद्रवत्वस्य जन्यजलद्रवत्वस्य चाग्निसंयोगनाश्यत्वात्, नच पीतिमगुरुत्वाश्रयस्य पार्थिवस्यापि तदानी द्रुतत्वात् तत्र व्यभिचार इति वाच्यं जलमध्यस्थमसीक्षोदवत्तस्याद्रुतत्वात् । केचित्तु अग्निसंयोगे पीतिमगुरुत्वाश्रयो विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः अत्यन्ताग्निसंयोगेऽपि पूर्वरूपविजातीयरूपानधिकरणपार्थिवत्वात् जलमध्यस्थपीतपटवदिति तादृशद्रवद्रव्यस्य च पृथिवीजलभिन्नस्य तेजस्त्वसिद्धिरित्याहुः ॥ ३ ॥

जन्यविजातीयस्पर्शसमवायिकारणतावच्छेदकं वायुत्वं जातिविशेषः । वायौ नव गुणाः स्पर्शसंख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वापरत्ववेगा वर्तन्ते, वायोरपाकजानुष्णाशीतस्पर्शेन, विलक्षणशब्देन, तृणतूलादीनां धृत्या, शाखादीनां कम्पेन च वायोरनुमानं भवति उद्भूतरूपाभावाच्च न प्रत्यक्षमिति प्राञ्चः । नव्यास्तु उद्भूतरूपस्य चाक्षुषं प्रत्येव हेतुत्वाद्वायोः स्पार्शनप्रत्यक्षं भवत्येव तत्रोद्भूतस्पर्शस्य हेतुत्वादित्याहुः । वायुर्द्विविधो नित्योऽनित्यश्च, परमाणुरूपो नित्यस्तदन्योऽनित्यः, सोऽपि त्रिविधः शरीरेन्द्रियविषयभेदात् । वायवीयं शरीरमयोनिजमेव पिशाचादीनाम्, शरीरव्यापकं वायवीयमिन्द्रियं त्वक् वायवीयो विषयस्तु प्राणादिमहावायुपर्यन्तः प्राणस्त्वेक एव हृदादिनानास्थानवशान्मुखनिर्गमादिनानाक्रियावशाच्च नाना संज्ञा लभते ॥ ४ ॥

शब्दाश्रयत्वमाकाशत्वम् । आकाशस्य षड्गुणाः संख्याद्याः पञ्च शब्दश्चेति, आकाश एकोऽपि उपाधेः कर्णशष्कुल्या भेदाद्भिन्नं श्रोत्रात्मक-

मिन्द्रियं भवतीति । प्रथमं तावच्छब्दो विशेषगुणः चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात् स्पर्शवदित्यनुमानम्, ततः शब्दो द्रव्यसमवेतो गुणत्वात् संयोगवदित्यनुमानेन शब्दस्य द्रव्यसमवेतत्वे सिद्धे शब्दो न स्पर्शवद्विशेषगुणः अपाकजत्वे सत्यकारणगुणपूर्वकप्रत्यक्षत्वात् सुखवत्, पाकजरूपादौ व्यभिचारवारणाय सत्यन्तम्, पीलुपाकवादिमते तु सत्यन्तं न देयमेव, पटरूपादौ व्यभिचारवारणायाकारणगुणपूर्वकेति, जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति, शब्दो न दिक्कालमनोगुणो विशेषगुणत्वात्, नात्मविशेषगुणः बहिरिन्द्रियग्राह्यत्वात् रूपवत्, इत्थं च शब्दाधिकरणं नवमद्रव्यं गगननामकं सिद्ध्यतीति, नच वाय्ववयवेषु सूक्ष्मशब्दक्रमेण वायौ कारणगुणपूर्वकः शब्द उत्पद्यतामिति वाच्यम्, अयावद्द्रव्यभावित्वेन वायुविशेषगुणत्वाभावसिद्धेः। अयावद्द्रव्यभावित्वं च स्वाश्रयनाशजन्यनाशप्रतियोगियद्यत्तद्भिन्नत्वम्, तच्चाशुविनाशिनि शब्दे निराबाधमेव, अत्र व्यतिरेकेण वायुस्पर्शो दृष्टान्तो ज्ञेय इति संक्षेपः ॥ ५ ॥

द्रव्यात्मकः कालो नित्य एकश्च, तत्र संख्याद्याः पञ्चगुणाः सन्ति, स च कालिकेन जगतामाश्रयः, एवं जन्यमात्रं प्रति निमित्तकारणं कालिकपरत्वापरत्वासमवायिकारणसंयोगानुयोगी च, तादृशसंयोगाधारतया महाकालस्य सिद्धिः एवमिदानीं घट इति ज्ञाने सूर्यक्रियारूपैतत्काले घटस्याधारता भासते, सा च न साक्षात्संबन्धेन, बाधितत्वात्, किंतु स्वसंयुक्तसंयोगितपनाश्रितत्वसंबन्धेन, घटादिना संयुक्तः कालस्तत्संयोगी तपनस्तदाश्रितत्वं तत्क्रियायामस्तीति घटादेः सूर्यक्रियायां वर्तमानस्य परंपरासंबन्धस्य घटकः कालोऽवश्यं स्वीकार्यः, वस्तुतस्तु तत्र कालिकसंबन्धावच्छिन्नाधारतैव भासते सूर्यक्रियाया अपि कालत्वात् । 'कलनात् सर्वभूतानां स कालः परिकीर्तितः' इत्याद्यागमस्तु काले प्रमाणमिति ध्येयम्, काल एकोऽप्युपाधिभेदात्क्षणलवमुहूर्तयामादिव्यवहारविषयः, उपाधिश्च क्षणव्यवहारे स्वजन्यविभागप्रागभावावच्छिन्नं कर्म पूर्वसंयोगावच्छिन्नविभागो वा, पूर्वसंयोगनाशावच्छिन्न उत्तरसंयोगप्रागभावो वा, उत्तरसंयोगावच्छिन्नं कर्म वा, स्ववृत्तिध्वंसप्रतियोग्यनाधारः शब्दो वा, तादृशश्चान्त्यशब्द एव, महाप्रलये क्षणव्यवहारस्तु चरमध्वंसेनोपपादनीयः, मुहूर्तयामादिव्यवहारस्तु तत्तत्क्षणकूटैरिति संक्षेपः ॥ ६ ॥

दैशिकपरत्वापरत्वरूपदूरत्वान्तिकत्वासमवायिकारणसंयोगानुयोगितया दिक् सिध्यति, तस्यां संख्याद्याः पञ्च गुणाः सन्ति, तस्या एकस्या अपि तत्तदुपाधिभेदेन प्राच्यादिव्यवहारनियामकत्वम्, यस्य पुरुषस्य उदयगिरिसंनिहिता या दिक् सा तस्य प्राची, उदयगिरिव्यवहिता च प्रतीची, एवं तत्पुरुषीयसुमेरुसन्निहिता दिगुदीची, तद्व्यवहिता त्ववाची, 'सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः' इति नियमात् । एवमुदयगिरिसंनिहिता मेरुसंनिहिता चैशानीत्यादिक्रमेण विदिशोऽपि निरूपणीया इति संक्षेपः ॥ ७ ॥

सुखादिसमवायिकारणतावच्छेदकतयात्मत्वं जातिः सिध्यति, सा चेश्वरेऽस्त्येवादृष्टरूपकारणविरहात्तु न तत्र सुखाद्युत्पत्तिः, केचित्तु आत्मपदशक्यतावच्छेदकतया सा जातिः सिध्यतीत्याहुः । अन्ये तु सा जातिरीश्वरे नास्त्येव प्रमाणाभावात्, ज्ञानवत्त्वेन जीवेश्वरयोर्विभागान्न दशमद्रव्यत्वमीशस्येति वदन्ति । संसार्यात्मनि बुद्ध्यादिषट्कं संख्यादिपञ्चकं धर्माधर्मौ भावनाख्यसंस्कारश्चेति चतुर्दश गुणाः सन्ति, ईश्वरे च संख्यादिपञ्चकं बुद्धीच्छायत्नाश्चेत्यष्टौ गुणा वर्तन्ते ॥ ८ ॥

कुठारादीनां छिदादिकरणानां कर्तारमन्तरेण फलानुपधानं दृष्टम्, एवं चक्षुरादीनां ज्ञानकरणानां फलोपधानमपि कर्तारमन्तरेण नोपपद्यते इत्यतिरिक्तः कर्ता संसार्यात्मा कल्प्यते । चार्वाकास्तु देह एवात्मेति चैतन्यं तस्यैव धर्मः स एव कर्ता चक्षुरादिप्रेरक इत्याहुस्तन्न मनोरमम्, तथा सति बाल्ये विलोकितस्य यौवने स्थाविरे वा स्मरणानुपपत्तेः यथा चैत्रदृष्टं मैत्रो न स्मरति, न च बाल्ययौवनवार्धकेषु शरीरमेकमेवेति वाच्यं परिमाणभेदेन द्रव्यभेदस्यावश्यकत्वात्, न च कारणेनानुभूतस्य कार्येण स्मरणं स्यात्, मातृदृष्टानां पुत्रेण स्मरणप्रसङ्गात्, एवं शरीरस्य चैतन्ये बालकस्य स्तनपानादौ वानरशिशूनां गर्भनिःसरणदशायां शाखावलम्बने प्रवृत्तिर्न स्यात्, तत्कारणस्य इष्टसाधनताज्ञानस्य तदानीमसंभवात् । मन्मते तु जन्मान्तरानुभूतेष्टसाधनतायास्तदानीं स्मरणादेव प्रवृत्तिः । न च जन्मान्तरानुभूतानामन्येषामपि कथं न स्मरणम् । उद्बोधकाभावात्, अत्र त्वगत्या जीवनादृष्टमेवोद्बोधकं कल्प्यते, इत्थं च संसारस्यानादितया आत्मनोऽप्यनादित्वसिद्धौ अनादिभावस्य नाशासंभवान्नित्यत्वं सिद्ध्यतीति, मनसि ज्ञानाद्यङ्गीकारे तत्प्रत्यक्षानुपपत्तेर्मनसि महत्त्वाभावात् । वेदान्तिनस्तु नित्यविज्ञानमेवात्मा 'अविनाशी वारे-

ऽयमात्मा ' ' सत्यं ज्ञानमनन्तं ब्रह्म ' इति श्रुतेरित्याहुस्तन्न मनोरमम्, नित्यविज्ञानस्य जगद्विषयत्वे सर्वज्ञत्वापत्तेः यत्किंचिद्विषयत्वे विनिगमकाभावात् ज्ञानत्वव्याघातात् ' सत्यं ज्ञानम् ' इत्यादिश्रुतिश्चेश्वरपरा न जीवेषु प्रमाणभावमावहति, न च जीवेश्वरयोर्न भेद इति वाच्यं ज्ञानाज्ञानसुखित्वदुःखित्वादिभिर्जीवानां परस्परं भेदसिद्धौ ईश्वराभेदस्यासंभवदुक्तिकत्वात्, अन्यथा बन्धमोक्षव्यवस्था व्याहन्येत । न च ' तत्त्वमसि ' इत्यादिश्रुतिरेव जीवेश्वरयोरभेदे मानमिति वाच्यं तस्या ईश्वराभेदेनेश्वरीयत्वप्रतिपादकतया स्तुत्यर्थवादत्वेन अभेदभावनारूपयोगविशेषे आत्मसाक्षात्कारोपाधिके यत्नः करणीय इत्येतावन्मात्रपरत्वात् । न च संसारदशायां जीवेश्वरयोर्भेदेऽपि मुक्तिदशायामभेदो जायते इति वाच्यं भेदस्य नित्यत्वेन नाशायोगात्, तन्नाशेऽपि पूर्वावस्थितव्यक्तिद्वयावस्थानस्यानिवारणाच्च । नच तदानीं द्वित्वस्यापि नाशाद्व्यक्तिद्वयावस्थानं न संभवतीति वाच्यं, तव निर्धर्मके ब्रह्मणि सत्यत्वाभावेऽपि सत्यं स्वरूपं तदित्यस्येव द्वित्वाभावेऽपि द्वयात्मकौ तावित्यस्य सुवचत्वात् । नच मिथ्यात्वाभावोऽधिकरणस्वरूपो ब्रह्मणि सत्यत्वमित्यस्माकं नाद्वैतभङ्गो न वा सत्यव्यवहारस्यानुपपत्तिरिति वाच्यम् । एकत्वाभावस्य व्यक्तिद्वयात्मकस्य द्वित्वस्वरूपतया द्वयव्यवहारसंपादकताया अप्यस्माभिरङ्गीकर्तव्यत्वात् । प्रत्येकमेकत्वेऽपि क्षितिजलयोर्न गन्ध इतिवदुभयं नैकमित्यस्य सर्वजनसिद्धत्वात्, नच 'ब्रह्मविद् ब्रह्मैव भवति' इतिश्रुतेस्तदानीमभेदः सिध्यतीति वाच्यं तस्या निर्दुःखत्वादिना ज्ञानिनामीश्वरसाम्यस्य बोधकत्वात् । संपदाधिक्ये पुरोहितोऽयं राजा संवृत्त इति लौकिकाभेदबोधकवाक्ये साम्यपरत्वस्य दृष्टत्वात्, तथा 'विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति श्रुत्या साम्यस्य स्पष्टतया प्रतिपादनाच्च । अतएव 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षम्' इत्यादिश्रुतेः 'द्वे ब्रह्मणी वेदितव्ये' । इत्यादिश्रुतेश्च भेदबोधकाया नासङ्गतिरिति श्रुतियुक्त्यनुभवसिद्धं द्वैतमपलपन्तो वेदान्तिनो भियं ह्रियं च त्यक्तवन्तः ॥ ९ ॥

ईश्वरोऽपि न ज्ञानसुखाद्यात्मकः किंतु ज्ञानाद्याश्रयः ' नित्यं विज्ञानमानन्दं ब्रह्म ' इत्यादिश्रुतौ विज्ञानपदस्य विशिष्टं ज्ञानं यत्रेति व्युत्पत्त्या ज्ञानाश्रयबोधकत्वात् ' यः सर्वज्ञः ' इति श्रुत्यनुरोधात्, आनन्दमित्यस्यापि मत्वर्थीयाच्प्रत्ययेनानन्दवादित्यर्थः, अन्यथा नपुंसकत्वानुपपत्तेः । आनन्दोऽपि दुःखाभावे उपचर्यते, भाराद्यपगमे सुखी

संवृत्तोऽहमितिवद्दुःखाभावेन सुखित्वप्रत्ययात्, नित्यज्ञानवत् नित्यं सुखं वा ईश्वरे स्वीकार्यं सुखविशिष्टस्य नित्यत्वबोधकश्रुत्या विशेषणस्य सुखस्यापि नित्यत्वप्रतिपादनात्, नतु ईश्वरः सुखाभिन्नः 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कदाचन' इत्यत्र भेदस्य स्पष्टतया प्रतिपादनादित्यलं पल्लवितेन ॥ १० ॥

एतेन योगाचाराणां क्षणिकविज्ञानात्मवादोऽपि निरस्तः सर्वेषां सार्वज्ञ्यापत्तेः सुषुप्तिदशायामपि विषयावभासप्रसङ्गात् अद्य जातबालकस्य स्तनपानादौ प्रवृत्त्यनुपपत्तेश्च ॥ ११ ॥

सांख्यास्तु प्रकृतिः कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेपः किंतु चेतनः । चेतनोऽहं करोमीति बुद्धिगतचैतन्याभिमानान्यथानुपपत्तेश्चेतनकल्पनं प्रकृतेश्च प्रथमः परिणामो बुद्धिः तस्याः महत्तत्वम्, अन्तःकरणं चेति संज्ञाद्वयमपि, तत्संसर्गिणि पुरुषे तद्गतदुःखस्य प्रतिबिम्बः पुरुषस्य संसारः, विवेकख्यातिसंज्ञकेन तत्त्वज्ञानेन बुद्धौ तिरोभूतायां प्रतिबिम्बितदुःखनिवृत्तिरेव पुरुषस्यापवर्गः बुद्धौ स्वच्छायामैन्द्रियप्रणालिकया विषयसंबन्धो ज्ञानाख्यो बुद्धेः परिणामविशेषः, सा च बुद्धिरंशद्वयवती, तत्र ममेदं कर्तव्यमित्यत्र मदंशः पुरुषोपरागः बुद्धेः स्वच्छतया चेतनप्रतिबिम्बादतात्विकः दर्पणस्येव मुखोपरागः, इदमिति विषयोपराग इन्द्रियप्रणालिकया परिणामविशेषस्तात्विकः, निःश्वासाभिहतदर्पणस्येव मलिनिमा, कर्तव्यमिति व्यापारावेशस्तदुभयायत्तः ज्ञानेन पुरुषस्यातात्विकः संबन्धो दर्पणमलिम्नेव मुखस्योपलब्धिरुच्यते ज्ञानवत्सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा अपि बुद्धेरेव, कृतिसामानाधिकरण्येन प्रतीतेः । नच बुद्धिश्चेतना, परिणामित्वात् । बुद्धेः परिणामोऽहंकारतत्त्वम्, अहंकारतत्त्वस्य परिणामः पञ्च तन्मात्राणि एकादशेन्द्रियाणि च, तन्मात्राणां परिणामाः पञ्च महाभूतानीत्याहुःस्तदपि न समीचीनं चेतनोऽहं करोमीति चैतन्यस्य कृतिसामानाधिकरण्यप्रतीतेः । न च सा चैतन्यांशे भ्रान्तिरूपा, तदंशे कृत्यंशे वेत्येकशेषस्य कर्तुमशक्यत्वात्, अन्यथा बुद्धेर्नित्यत्वे पुरुषस्य मोक्षाभावप्रसङ्गः, अनित्यत्वे तत्पूर्वमसंसारापत्तिः, नचाचेतनायाः प्रकृतेः कार्यत्वाद्बुद्धेर्न चैतन्यं कार्यकारणयोस्तादात्म्यादिति वाच्यं कर्तुर्जन्यत्वस्यासिद्धेरन्यथा बालस्य स्तनपाने प्रवृत्त्यनुपपत्तेः, तस्मात्कर्तुरनादित्वमनायत्त्योपेयम्, अनादेर्भावस्य नाशासंभवादविनाशित्वमिति किं प्रकृत्यादिकल्पनेन । नच—

'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्ताऽहमिति मन्यते ॥'

इति गीतावचनविरोध इति वाच्यं प्रकृतेर्मूलकारणस्यादृष्टस्य गुणैरदृष्टजन्यैर्गुणैरिच्छादिभिः कर्ताऽहं कर्ताहमेवेत्यस्य तदर्थत्वात् ।

'तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।'

इत्यादि वचनेनायमर्थोऽग्रेप्रकटीकृतो भगवतेत्यलमनल्पजल्पनेन ॥ १२ ॥

विशेषगुणयोगादात्मनो लौकिकं मानसं भवति, तद्वतस्य बुद्ध्यादिषट्कस्यापि लौकिकमानसविषयत्वम्, आत्मन एकत्वसंख्याऽपि मनोग्राह्येति शंकरमिश्राः, आत्मन एकत्वं परममहत्परिमाणं च द्वयमपि मनोग्राह्यमिति सिद्धान्तमञ्जर्यामाचार्यचूडामणयः, तात्पर्यटीकाकृतां वाचस्पतिमिश्राणां मतेऽपि तदुभयं मनोग्राह्यम्, परात्मनां न प्रत्यक्षं किंतु चेष्टयाऽनुमितिरेवेति संक्षेपः ॥ १३ ॥

ईश्वरात्मनि तु संख्यादिपञ्चकं बुद्धीच्छायत्नाश्च वर्तन्ते, तस्य बुद्धीच्छायत्नास्तु नित्याः सर्वविषयकाश्च, तत्रेश्वरे प्रमाणं तु क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वाद्घटादिवदित्याद्यनुमानम्, नच कर्त्रजन्यत्वसाधकेन शरीराजन्यत्वेन सत्प्रतिपक्ष इति वाच्यं तस्याप्रयोजकत्वात्, मम तु कर्तृत्वेन कार्यत्वेन कार्यकारणभाव एवानुकूलतर्कसंपादक इति एवं 'द्यावाभूमी जनयन् देव एकः । विश्वस्य कर्ता भुवनस्य गोप्ता' इत्याद्यागमा अपीश्वरे प्रमाणमिति संक्षेपः ॥ १४ ॥

मानसप्रत्यक्षकरणतावच्छेदकतया मनस्त्वं जातिः सिद्ध्यति, मनसि संख्यादिसप्तकं वेगश्चेत्यष्टौ गुणाः सन्ति सुखसाक्षात्कारः सकरणको जन्यसाक्षात्कारत्वात् चाक्षुषवदित्यनुमानेन मनसः सिद्धिः । चाक्षुषरासनादीनामेककालोत्पत्तिरूपं यौगपद्यं नास्तीत्यनुभवसिद्धम्, तत्र विषयसन्निकर्षादौ सत्यपि यत्संबन्धादेकमिन्द्रियं ज्ञानं जनयति नापरम्, तदणुरूपं मनः स्वीकार्यम्, मनसो महत्परिमाणस्वीकारे तेन सह युगपन्नानेन्द्रियाणां संबन्धसंभवात् चाक्षुषरासनादीनां यौगपद्यापत्तेः । न च दीर्घशष्कुलीभक्षणादौ नानाऽवधानभाजां च कथमेकदा नानेन्द्रियजन्यं ज्ञानमिति वाच्यं मनसोऽतिलाघवात् त्वरया नानेन्द्रियसंबन्धात् नानाज्ञानोत्पत्तेः उत्पलपत्रशतव्यतिभेद इव तत्रापि यौगपद्यप्रत्ययस्य भ्रमरूपत्वात्, न च मनसः संकोचदशायामयौगपद्यं विकासदशायां च

यौगपद्यं भवतीति वाच्यमनन्तावयवतन्नाशतत्प्रागभावादिकल्पने गौरवात् लाघवान्निरवयवस्यैकैकस्य मनस एकैकशरीरे कल्पनादिति, कायव्यूहस्थले अदृष्टविशेषोपगृहीतनानापण्डमनोभिरेव तत्तद्भोगनिर्वाहात्, एवं छिन्न-वृश्चिकादिखण्डद्वयेऽपि बोध्यमिति संक्षेपः ॥ १५ ॥

इति द्रव्यपदार्थनिरूपणम् ।

गुणाश्चतुर्विंशतिसंख्यकाः रूपरसगन्धस्पर्शसंख्यापरिमितिपृथक्त्वसं-योगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्का-रधर्माधर्मशब्दरूपाः । द्रव्यकर्मभिन्नसामान्यवान्निष्ठकारणताच्छेदकतया गुणत्वं जातिः सिध्यति, गुणविभाजकानि रूपत्वरसत्वादीनि चतुर्विंश-तिर्जातयः संस्कारत्वस्य जातित्वं तु सूक्तिकारैर्न मन्यते, रूपरसगन्धस्पर्श-परत्वापरत्वगुरुत्वद्रवत्वस्नेहवेगा मूर्तगुणाः, बुद्ध्यादयः षट् धर्माधर्मभाव-नाशब्दाश्चामूर्तगुणाः संख्यादयस्तु पञ्च उभयगुणाः, संयोगविभाग-द्वित्वादिसंख्याद्विपृथक्त्वादिपृथक्त्वानि चानेकाश्रितगुणास्तद्भिन्नगुणास्तु एकैकमात्रवृत्तयः, रूपरसगन्धस्पर्शा बुद्ध्यादयः षट् धर्माधर्मभावना-शब्दाश्च विशेषगुणाः । संख्यादयः सप्त नैमित्तिकद्रवत्वगुरुत्ववेगाश्च सामान्यगुणाः, स्थितिस्थापकस्तु क्षितिमात्रवृत्तिरितिमते स विशेषगुणः, मतान्तरे तु सामान्यगुण एव, संख्यादयः सप्त द्रवत्वस्नेहवेगाश्च द्वीन्द्रिय-ग्राह्याः, रूपरसगन्धस्पर्शशब्दाः बाह्यैकैकेन्द्रियग्राह्याः गुरुत्वजीवनयोनि-यत्नस्थितिस्थापकसंस्कारनिर्विकल्पकज्ञानानुद्भूतरूपरसगन्धस्पर्शभावना-धर्माधर्मा अतीन्द्रियाः, बुद्ध्यादिषट्कं धर्माधर्मभावनाशब्दाश्चाकारणगु-णोत्पन्नाः । अपाकजा रूपरसगन्धस्पर्शाः सांसिद्धिकद्रवत्वं स्नेहवेगगुरुत्वै-कत्वैकपृथक्त्वपरिमाणस्थितिस्थापकाश्च कारणगुणोत्पन्नाः, संयोगवि-भागवेगाः कर्मजाः, रूपरसगन्धानुष्णस्पर्शपरिमाणैकत्वैकपृथक्त्वस्नेहस्थि-तिस्थापकसांसिद्धिकद्रवत्वशब्देषु असमवायिकारणत्वम्, आत्मविशेषगु-णेषु निमित्तकारणत्वमात्रं गुरुत्वोष्णस्पर्शवेगद्रवत्वसंयोगविभागेषु नि-मित्तकारणत्वमसमवायिकारणत्वं च तिष्ठति, आत्मविशेषगुणसंयोगवि-भागा अव्याप्यवृत्तयः ॥ १६ ॥

रूपत्वजातिः प्रत्यक्षसिद्धा, शुक्लनीलरक्तपीतहरितकपिशाचित्रभेदेन रूपं सप्तविधमिति तर्कामृते जगदीशः । नानाविधमिति विश्वनाथः । रूपशब्दोल्लेखिनी प्रतीतिर्नास्ति, नीलोवर्ण इति वर्णपदोल्लेखिन्येवेति, केचित्, रूपं क्षितिजलतेजःसु वर्तते तत्र क्षितौ नीलादिकं सर्वप्रकारम्,

जले शुक्लमात्रम्, तेजसि भास्वरशुक्लमात्रम्, उद्भूतानुद्भूतभेदादपि रूपं द्विविधम्, तत्र भर्जनकपालस्थवह्न्यादौ ग्रीष्मोष्मचक्षुरादौ चानुद्भूतरूपम्, उद्भूतरूपं तु घटपटादौ, बहिर्द्रव्यप्रत्यक्षे उद्भूतरूपं कारणम् एवं तद्गतगुणकर्मसामान्यानां चाक्षुषप्रत्यक्षेऽपि तदेव परंपरया कारणमिति प्राञ्चः, नव्यास्तु द्रव्यादिचाक्षुषं प्रत्येवोद्भूतरूपं कारणम्, स्पार्शनप्रत्यक्षे तु उद्भूतस्पर्शः कारणम्, अत एव वायोर्न चाक्षुषं किंतु स्पार्शनं भवत्येव प्रभाया उद्भूतस्पर्शाभावान्न स्पार्शनं किंतु चाक्षुषं भवत्येव, बहिर्द्रव्यप्रत्यक्षे तु आत्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वं तन्त्रमित्याहुः। एकैका एव नीलादिव्यक्तयो यावन्नीलद्रव्यादिगता नित्या इति केचित्। नीलो नष्ट इत्यादिप्रतीतेर्नीलनीलतरनीलतमादिप्रतीतेश्चानुपपत्तेस्तन्मतं न समीचीनम्। शुक्लनीलरक्तैस्त्रिभिस्तन्तुभिरारब्धे पटे चित्रं रूपमुत्पद्यते, तस्य नीरूपत्वे प्रत्यक्षानुपपत्तेरेतेन विजातीयस्पर्शवदवयवारब्धावयविनि चित्रस्पर्शोऽपि व्याख्यात इति प्राञ्चः सिद्धान्तरहस्ये मथुरानाथोऽप्येवमेवाह, अन्येतु नानारूपवदवयवारब्धावयविनि अव्याप्यवृत्तीनि नानारूपाण्येवोत्पद्यन्ते व्याप्यवृत्तिजातीयानामव्याप्यवृत्तित्वस्वीकारे क्षत्यभावात्, अतएव—

> 'लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः।
> श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते॥'

इत्यादिस्मृतिरपि साधु संगच्छते, एतेन स्पर्शोऽपि व्याख्यात इत्याहुः। रूपं जलतेजःपरमाणुषु नित्यमन्यदनित्यम्। पार्थिवपरमाणौ पाकाद्रूपनाशः॥ १७॥

रसत्वजातिः प्रत्यक्षसिद्धा, रसः क्षितिजलयोरेवास्ति, स च षड्विधः कषायमधुरलवणकटुतिक्ताम्लभेदात्, जले तु मधुर एव रसः हरीतक्यादिकं तद्व्यञ्जकम्, नानारसवदवयवारब्धावयविनि कोऽपि रसो न भवति तत्रावयवगतानामेव रसानामुपलब्धिः, रसस्तु रसनेन्द्रियमात्रेण गृह्यते, अनुद्भूतरसस्त्वतीन्द्रियः॥ १८॥

गन्धत्वजातिरपि प्रत्यक्षसिद्धा, गन्धो द्विविधः सौरभासौरभभेदात्, गन्धस्तु नित्यो नास्ति, अयं तु घ्राणेन्द्रियमात्रग्राह्यः, अनुत्कटो गन्धः पाषाणादावतीन्द्रियः, गन्धः पृथिव्यामेव वर्तते॥ १९॥

स्पर्शत्वजातिरपि प्रत्यक्षसिद्धा, स्पर्शः क्षितिजलतेजोवायूनां गुणः। स च त्रिविधः शीत उष्ण अनुष्णाशीतश्चेति। तत्र शीतस्पर्शो जले,

तेजसि उष्णस्पर्शः, पृथिवीपवनयोरनुष्णाशीतस्पर्शः, तत्रापि पृथिव्यां पाकजोऽपि, वायौ तु अपाकजो विजातीय एव स्पर्शः । जलतेजोवायुपरमाणुषु अयं नित्यः, अन्यत्र द्रव्येऽनित्यः, कठिनसुकुमारस्पर्शौ पृथिव्यामेव, काठिन्यादिकं तु संयोगविशेषः स च हिमकरकादावपीति केचित्, अन्ये तु काठिन्यादिकं न संयोगविशेषः चक्षुर्ग्राह्यत्वापत्तेः, किं तु स्पर्शविशेष एव, हिमकरकादौ काठिन्यप्रतीतिस्तु भ्रान्तिरूपैवेत्याहुः । स्पर्शोऽप्यनुद्भूतोऽतीन्द्रियः प्रभादौ बोध्यः ॥ २० ॥

रूपरसगन्धस्पर्शाः पृथिव्यामेव पाकजाः, तत्रापि परमाणावेव पाक इति पीलुपाकवादिनो वैशेषिकाः । तेषामयमभिप्रायः, अवयविनाऽवष्टब्धेषु अवयवेषु पाको न संभवति, किंतु विजातीयवह्निसंयोगेन नष्टेषु अवयविषु स्वतन्त्रेषु परमाणुषु पाकः, पुनश्च विजातीयवह्निसंयोगेन पक्वपरमाणुसंयोगात् द्व्यणुकादिक्रमेण महावयविपर्यन्तानामुत्पत्तिः । वह्नेर्वेगातिशयात्पूर्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्चेति, अत्र नवक्षणादिप्रक्रियाऽन्यत्र द्रष्टव्या ग्रन्थगौरवभिया परित्यक्ता ॥ २१ ॥

न्यायानुसारिणः पिठरपाकवादिनस्तु अवयविनां सच्छिद्रत्वाद्वह्नेः सूक्ष्मावयवैरन्तःप्रविष्टैरवयवेष्ववष्टब्धेष्वपि पाको न विरुध्यते वैशेषिकमतेऽनन्तावयवादिकल्पने गौरवं सोऽयं घट इत्यादिप्रत्यभिज्ञाविरोधश्च स्यात्, यत्र तु पाकानन्तरं न प्रत्यभिज्ञा तत्रावयविनाशोऽपि स्वीक्रियते इत्याहुः ॥ २२ ॥

गणनव्यवहारकारणं संख्या, सा च नवस्वेव द्रव्येषु वर्तते तत्र नित्यगतमेकत्वं नित्यम्, अनित्यगतं त्वनित्यम्, द्वित्वाद्याः परार्द्धपर्यन्ताः संख्या अपेक्षाबुद्धिजन्या अपेक्षाबुद्धिनाशनाश्या व्यासज्यवृत्तयश्च, अनेकैकत्वबुद्धिरपेक्षाबुद्धिः सा क्षणत्रयं तिष्ठति, आदावपेक्षाबुद्धिस्ततो द्वित्वोत्पत्तिस्ततो द्वित्वनिर्विकल्पकं ततो द्वित्वविशिष्टप्रत्यक्षं भवति, निर्विकल्पककाले अपेक्षाबुद्धेर्नाशे तत्परक्षणे द्वित्वनाशाद्विशिष्टप्रत्यक्षानुपपत्तेः कालान्तरे तद्द्वित्वस्य प्रत्यक्षाभावाद्द्वित्वोत्पादिकाया अपेक्षाबुद्धेर्नाशस्यैव द्वित्वनाशकत्वं कल्प्यते, अत एव तत्पुरुषीयापेक्षाबुद्धिजन्यं तत्पुरुषेणैव गृह्यते इति कल्प्यते, स्वर्गाद्यकालीनपरमाण्वादिगतद्वित्वस्य जनिकाऽपेक्षाबुद्धिरीश्वरस्य ब्रह्माण्डान्तरवर्तियोगिनां वा, एवमतीन्द्रियान्तरेऽपि ज्ञेयम्, अत्रानियतैकत्वबुद्धिस्थाने त्रित्वादाभिन्ना बहुत्व-

संख्योत्पद्यते इति कन्दलीकारः । आचार्यास्तु त्रित्वत्वादिव्यापिका बहुत्वत्वजातिः तथाच त्रित्वादिकमेव बहुत्वम्, सेनावनादौ चोत्पन्ने त्रित्वादौ त्रित्वत्वाद्यग्रहो दोषात् इत्थंच इतो बहुकेयं सेनेति प्रतीतिरुपपद्यते बहुत्वस्य संख्यान्तरत्वे तत्तारतम्याभावादित्याहुः ॥ २३ ॥

परिमितिव्यवहारासाधारणकारणं परिमाणम्, तच्च सर्वद्रव्यगतं नित्ये नित्यमनित्येऽनित्यम्, तच्चतुर्विधमणु महत् दीर्घं ह्रस्वं चेति । अनित्यं त्रिविधं संख्याजन्यं परिमाणजन्यं प्रचयजन्यं च, द्व्यणुकपरिमाणं प्रति परमाणुगतं द्वित्वं त्रसरेणुपरिमाणे च द्व्यणुकगतं त्रित्वं कारणम्, तूलकपरिमाणविशेषे प्रचयाख्यशिथिलसंयोगः कारणम्, घटादिपरिमाणे कपालादिपरिमाणं कारणम्, आश्रयनाशः परिमाणनाशे हेतुः अवयवोपचयापचयस्थलेऽसमवायिकारणनाशात् पूर्वद्रव्यनाशस्ततस्तत्परिमाणनाश इति, पूर्वपटादिसत्त्वे तदवयवे न पटाद्यन्तरोत्पत्तिसंभवः मूर्तयोः समानदेशताविरोधात् एकदा नानाद्रव्यवत्त्वस्यानुपलब्धिबाधितत्वाच्च क्वचित्पूर्वावयविप्रत्यभिज्ञानं तु साजात्यविषयकं सैवेयं दीपकलिकेतिवदित्यधिकमन्यत्रानुसंधेयम् ॥ २४ ॥

पृथगितिप्रतीत्यसाधारणकारणं पृथक्त्वम्, तच्च सर्वेषु द्रव्येषु तिष्ठति, नित्यद्रव्यगतैकपृथक्त्वं नित्यम्, अनित्यगतं त्वाश्रयनाशनाश्यम् द्विपृथक्त्वादिकमपेक्षाबुद्धिजन्यं तन्नाशनाश्यम्, घटात् पृथक् घटो नेत्यादिप्रतीत्योर्वैलक्षण्यादन्योन्याभावेन नास्य चरितार्थता, यदर्थकयोगे पञ्चमी सोऽर्थो नञर्थभेदाद्भिन्नो गुणान्तरमन्यथा घटो नेत्यत्रापि पञ्चम्यापत्तेरिति संक्षेपः ॥ २५ ॥

संयोगः सर्वद्रव्यवृत्तिर्गुणः, स त्रिविधः अन्यतरकर्मजोभयकर्मजसंयोगजभेदात् । तत्र श्येनशैलादिसंयोगः प्रथमः, मेषयोः संयोगो द्वितीयः, कपालतरुसंयोगजन्यो घटतरुसंयोगस्तृतीयः, क्रियाजन्यसंयोगोऽपि द्विविधः अभिघातनोदनभेदात्, तत्र शब्दहेतुः संयोग आदिमः, तदहेतुर्द्वितीय इति संक्षेपः ॥ २६ ॥

विभागोऽपि नवद्रव्यवृत्तिर्विभक्तप्रत्ययासाधारणकारणम्, सोऽपि त्रिविधः, एकक्रियाजन्योभयक्रियाजन्यविभागजन्यभेदात् । तत्राद्यः श्येनशैलाद्योर्द्वितीयो मेषयोः, तृतीयस्तु कारणमात्रविभागजन्यकारणाकारणविभागजन्यभेदात् द्विविधः । तत्राद्यो यथा प्रथमं कपाले कर्म, ततः

कपालद्वयविभागः ततो घटारम्भकसंयोगनाशः, ततो घटनाशस्ततस्तेन कपालविभागेन कपालस्य देशान्तरविभागो जन्यते, ततो देशान्तरसंयोगनाशः ततः उत्तरदेशसंयोगः ततः कर्मनाश इति । न च देशान्तरविभागे तत्कर्म कारणम्, आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकस्य कर्मणोऽनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वासंभवात्, अन्यथा विकसत्कमलकुड्मलभङ्गप्रसङ्गात् । नच घटनाशात्पूर्वं कथं देशान्तरविभागो न जायते इति वाच्यम्, आरम्भकसंयोगप्रतिद्वन्द्विविभागवतोऽवयवस्य सति द्रव्ये देशान्तरविभागासंभवात् । द्वितीयो यथा—यत्र हस्तक्रियया हस्ततरुविभागस्ततस्तज्जनितः शरीरतरुविभागः तत्र शरीरतरुविभागे व्यधिकरणहस्तक्रिया न कारणम्, शरीरे तु तदानीं क्रिया नास्ति अवयविक्रियाया यावदवयवक्रियानियतत्वात् । तस्मात्तत्र कारणाकारणविभागेन कार्याकार्यविभागो जन्यत इति । अयं विभक्तोऽस्मादिति प्रत्ययसिद्धो विभागो न संयोगनाशेनान्यथासिद्ध इति संक्षेपः ॥ २७ ॥

परापरव्यवहारासाधारणकारणे परत्वापरत्वे, तेच क्षित्यप्तेजोवायुमनःसु तिष्ठतः । ते च द्विविधे दैशिके कालिके च, तत्र दैशिकपरत्वे सूर्यसंयोगभूयस्त्वज्ञानं हेतु, दैशिकापरत्वं प्रति सूर्यसंयोगाल्पत्वज्ञानं हेतुः, अत्रावधित्वार्थकद्वितीयापेक्षा, यथा पाटलिपुत्रात्काशीमपेक्ष्यप्रयागः परः, पाटलिपुत्रात्कुरुक्षेत्रमपेक्ष्य प्रयागोऽपर इति व्यवहारः, एवं तदुभयं प्रति तदुभयाश्रये दिक्संयोगोऽसमवायिकारणम्, कालिकपरत्वापरत्वे प्रति तदाश्रये कालसंयोगोऽसमवायिकारणम्, एते तु प्राणिभिन्ने न तिष्ठत इति बहवः, यस्य सूर्यपरिस्पन्दापेक्षया यस्य सूर्यपरिस्पन्दोऽधिकः स ज्येष्ठस्तत्र परत्वम्, यस्य च न्यूनः स कनिष्ठस्तत्रापरत्वम् , एते तु जन्यद्रव्य एवेति विश्वनाथः, तथा सूर्यक्रियापूर्वोत्पन्नत्वज्ञानं परत्वस्य कारणम्, तदनन्तरोत्पन्नत्वज्ञानमपरत्वस्य कारणम् तादृशापेक्षाबुद्धिनाशात् परत्वापरत्वयोर्नाश इति संक्षेपः ॥ २८ ॥

बुद्धिरात्मनि तिष्ठति सा द्विविधा अनुभूतिस्मृतिभेदात्, अनुभूतिरपि काणादमते द्विविधा प्रत्यक्षलैङ्गिकभेदात् । प्रत्यक्षमपि षड्विधं घ्राणजरासनचाक्षुषस्पार्शनश्रावणमानसभेदात्, तत्र च घ्राणजं गन्धस्य तद्गतजातीनां च भवति, रसस्य तद्गतजातीनां च रासनम्, उद्भूतरूपतदधिकरणद्रव्ययोग्यवृत्तिसंख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वापरत्वस्नेहवेगद्रवत्वक्रियाजातीनां चाक्षुषप्रत्यक्षं भवति ॥ २९ ॥

उद्भूतरूपतद्गतजातिभिन्नानां चक्षुर्ग्राह्याणामुद्भूतस्पर्शस्य तद्गतजातीना च स्पार्शनप्रत्यक्षं भवति, नव्यानां मते वायोरपि, वल्लभाचार्यमते गुरुत्वस्यापि, बहिर्द्रव्यप्रत्यक्षं प्रति रूपस्य कारणत्वान्नीरूपस्य द्रव्यस्य स्पार्शनमपि न भवतीति प्राञ्चः, स्पार्शनप्रत्यक्षे उद्भूतस्पर्शोऽपि हेतुर्नातः प्रभायास्तद्गतगुणादीनां च स्पार्शनम् ॥ ३० ॥

श्रावणप्रत्यक्षं शब्दस्य तद्गतजातीनां च भवति ॥ ३१ ॥

बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नानां तद्गतजातीनां च मानसं प्रत्यक्षं भवति आत्मनस्तद्गतजातीनां च विशेषगुणयोगेनैव, अहं सुखीत्याद्येव प्रत्यक्षं नत्वहमिति, आत्मगतैकत्वपरममहत्परिमाणयोरपि मानसं भवतीति तात्पर्यटीकाकृतः, निर्विकल्पकज्ञानजीवनयोनियत्नयोर्न लौकिकं मानसमस्ति तयोरतीन्द्रियत्वात् ॥ ३२ ॥

अत्र यदिन्द्रियस्य ग्राह्यं यत्, तत्संसर्गाभावतदनुयोगिकभेदावपि तदिन्द्रियग्राह्यौ, प्रत्यक्षमात्रे महत्परिमाणं हेतुर्नातः परमाणुद्व्यणुकयोस्तद्गुणादेर्वा प्रत्यक्षम्, तत्रापि द्रव्यप्रत्यक्षे समवायसंबन्धेन द्रव्यसमवेतप्रत्यक्षे स्वसमवायिसमवायसंबन्धेन, द्रव्यसमवेतसमवेतप्रत्यक्षे स्वसमवायिसमवेतसमवायसंबन्धेन महत्त्वस्य हेतुता बोध्या। एवमन्यत्राप्यूह्यम्। षड्विधप्रत्यक्षे इन्द्रियं करणम्, तदपि षड्विधं घ्राणरसनचक्षुस्त्वक्श्रोत्रमनोभेदात्, इन्द्रियत्वं तु अखण्डोपाधिरिति न्यायसूत्रवृत्तिकारः, शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वमित्यन्ये, प्रत्यक्षं फलम्, तल्लक्षणं तु (इन्द्रियार्थसंनिकर्षजन्यज्ञानत्वं ?) साक्षात्कारत्वजातिविशिष्टत्वं वा, अत्र व्यापारो विषयेन्द्रियसंबन्धः, सोऽपि षड्विधः संयोगसंयुक्तसमवायसंयुक्तसमवेतसमवायकर्णविवरावच्छिन्नसमवायसमवेतसमवायविशेषणताभेदात्, तत्र संयोगेन द्रव्यस्य, संयुक्तसमवायेन द्रव्यसमवेतानाम्, संयुक्तसमवेतसमवायेन द्रव्यसमवेतसमवेतानां गुणकर्मगतजातीनाम्, कर्णविवरावच्छिन्नसमवायेन शब्दानाम्, समवेतसमवायेन शब्दगतजातीनाम्, विशेषणतया अभावानां प्रत्यक्षं भवति, विशेषणताऽपि संयुक्तविशेषणता—संयुक्तसमवेतविशेषणता-संयुक्तसमवेतसमवेतविशेषणता-श्रोत्रावच्छिन्नविशेषणता—श्रोत्रावच्छिन्नसमवेतविशेषणता—विशेषणविशेषणतादिभेदेन नानाविधा, तथाच द्रव्य-तत्समवेततत्समवेतवृत्तीनामभावानामाकाशगतस्य शब्दाभावस्य शब्दवृत्तीनां कत्वाद्यभावानामभाववृत्ती-

नामभावानां च प्रत्यक्षं भवतीति । यत्र घटस्य मध्यदेशावच्छेदेनालोकसंयोगो बहिर्देशावच्छेदेन च चक्षुःसंयोगस्तत्र घटादेस्तद्गतगुणकर्मसामान्यानां तद्गताभावानां च प्रत्यक्षं न भवतीत्यतश्चाक्षुषप्रत्यक्षकारणतावच्छेदककोटौ चक्षुःसंयोगांशे आलोकसंयोगावच्छिन्नत्वं निवेशनीयम्, एवमुद्भूतरूपावच्छिन्नत्वं महत्त्वावच्छिन्नत्वं च चक्षुःसंयोगे निवेशनीयं, तेन परमाणौ चक्षु.संयोगदशायां तद्गतायाः सत्तायाः तदीयरूपगतस्य नीलत्वादिसामान्यस्य च न चाक्षुषम्, न वा वायौ चक्षुःसंयोगदशायां तद्गतायाः सत्तायाः तत्स्पर्शगतगुणत्वादिसामान्यस्य च चाक्षुषम्, प्राञ्चस्तु अभावप्रत्यक्षे योग्यानुपलब्धिः कारणम् । सा च, अत्र यदि प्रतियोगी स्यात्तदा उपलभ्येतेत्याकारकतर्कसहकृता प्रतियोगिग्रहाभावात्मिका, अतो नान्धकारादौ घटाभावादिचाक्षुषं तत्र तादृशतर्कस्यासंभवादित्याहुः । प्रत्यक्षं लौकिकालौकिकभेदेनापि द्विविधम्, तत्रालौकिकसन्निकर्षजन्यं यत्प्रत्यक्षं तदलौकिकम्, अलौकिकसन्निकर्षश्च त्रिविधः सामान्यलक्षणाज्ञानलक्षणायोगजधर्मभेदात्, तत्र सामान्यलक्षणा घटत्वादिसामान्यज्ञानं तेन निखिलतदाश्रयस्यालौकिकं प्रत्यक्षं भवति, ज्ञानलक्षणासन्निकर्षेण तु रज्ज्वादौ सर्पत्वादिप्रकारकं प्रत्यक्षम्, अन्यथा सर्पत्वादेस्तदानीमसन्निकृष्टतया भ्रमे तद्भानानुपपत्तेः । एवं सुरभिचन्दनमितिचाक्षुषे सौरभत्वादेरपि ज्ञानलक्षणयैव भानम्, योगजधर्मस्तु द्विविधः युक्तयुञ्जानयोगिद्वैविध्यात् तत्र योगाभ्यासवशीकृतमानससमाधिसमासादितविविधसिद्धिर्युक्त इत्युच्यते तस्य ध्यानं विनैव सर्वेषु पदार्थेषु सदा प्रत्यक्षम्, युञ्जानस्तु विषयव्यावृत्तमानस., तस्य तु ध्यानसहकारेणैव सर्वत्र प्रत्यक्षं भवतीति संक्षेपः ॥ ३३ ॥

लैङ्गिकमनुमितिरूपं यज्ज्ञानं तत्र व्याप्तिज्ञानं करणम्, परामर्शो व्यापारः । व्याप्तिस्तु साध्यवदन्यावृत्तित्वरूपा स्वव्यापकसाध्यसामानाधिकरण्यरूपा वा, व्यतिरेकव्याप्तिस्तु साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपा, तत्र व्याप्तिप्रत्यक्षे व्यभिचारज्ञानाभावः सहचारज्ञानं च हेतुः तत्र व्याप्तिज्ञानं वह्निव्याप्यो धूम इत्याद्याकारकम्, परामर्शस्तु वह्निव्याप्यधुमवान् पर्वत इत्याद्याकारकं ज्ञानम्, पक्षताऽपि अनुमितौ हेतुः, सा च सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपा, तेन पक्षे साध्यनिश्चयदशायां सिषाधयिषामन्तरेण नानुमितिः, एवमनुमित्साविरहविशिष्टप्रत्यक्षसामग्री अनुमितौ कामिनीजिज्ञासादिवत् पृथक् प्रतिबन्धिका, एवं प्रत्य-

क्षेच्छाविरहविशिष्टानुमितिसामग्री भिन्नविषयकप्रत्यक्षे प्रतिबन्धिकेत्यन्यत्र विस्तरः ॥ ३४ ॥

अनुमितितत्कारणज्ञानान्यतरविरोधिज्ञानविषयो हेतुदोषस्तद्वान् हेतुर्दुष्टः, स च हेत्वाभास इत्युच्यते, स तु पञ्चविधः सव्यभिचारविरुद्धासिद्धसत्प्रतिपक्षबाधितभेदात्, तत्र सव्यभिचारस्त्रिविधः साधारणासाधारणानुपसंहारिभेदात्, तत्र सपक्षविपक्षवृत्तिर्हेतुः साधारणः यथा द्रव्यं सत्त्वादित्यादि, सपक्षविपक्षव्यावृत्तो हेतुरसाधारणः यथा शब्दोऽनित्यः शब्दत्वादित्यादिः, केवलान्वयिपक्षकोऽनुपसंहारी सर्वमनित्यं प्रमेयत्वादित्यादिः ॥ ३५ ॥

साध्यवदवृत्तिर्हेतुर्विरुद्धः गोत्ववान् अश्वत्वादित्यादौ, असिद्धस्त्रिविधः आश्रयासिद्धस्वरूपासिद्धव्याप्यत्वासिद्धभेदात्, यत्र पक्षोऽसिद्धस्तत्र पक्षासिद्धिः काञ्चनमयपर्वतो वह्निमानित्यादौ, यत्र पक्षो न हेतुमान् तत्र स्वरूपासिद्धिः ह्रदो द्रव्यं धूमादित्यादौ, यत्र व्यर्थविशेषणघटितो हेतुस्तत्र व्याप्यत्वासिद्धिः वह्निमान् नीलधूमादित्यादौ, यत्र पक्षे साध्यपरामर्शस्तदभावपरामर्शश्च वर्तते स सत्प्रतिपक्षित इति प्राञ्चः, साध्याभावव्याप्यवत्पक्षादिः सत्प्रतिपक्षस्तत्रत्यो हेतुः सत्प्रतिपक्षित इति तु नव्याः, साध्याभाववत्पक्षादिर्बाधस्तत्रत्योहेतुर्बाधितः उत्पत्तिकालावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादौ, केचिद्वैशेषिकानुयायिनः सव्यभिचारविरुद्धासिद्धास्त्रय एव हेत्वाभासा इत्याहुः, 'अनध्यवसितोऽपि षष्ठो हेत्वाभास इति केचित्, यथाहुः साध्यासाधकः पक्ष एव वर्त्तमानो हेतुरनध्यवसित इति। तस्यासाधारणादिषु यथासंभवमन्तर्भावान्न पञ्चभ्योऽतिरेक इति' इति तु वरदराजेन तार्किकरक्षाव्याख्याने उक्तम् ॥ ३६ ॥

वरदराजेनानुमानस्य त्रैविध्यमप्युक्तं केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात्, तत्रेदं वाच्यं ज्ञेयत्वादित्यादिकं केवलान्वयि, पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादित्यादिकं केवलव्यतिरेकि, वह्निमान् धूमादित्यादिकमन्वयव्यतिरेकीति ॥ ३७ ॥

स्वार्थपरार्थभेदेनापि द्विविधमनुमानं तत्र परार्थं न्यायसाध्यम्, न्यायश्च पञ्चावयवात्मकवाक्यव्यूहः, प्रतिज्ञाहेतूदाहरणोपनयनिगमनानीति पञ्चावयवाः, पर्वतो वह्निमानित्यादिवाक्यं प्रतिज्ञा, धूमादित्यादिकं हेतुः, यो यो धूमवान् स वह्निमान् यथा महानसमित्यादिकमुदाहरणम्, व-

ह्निव्याप्यधूमवानयमित्यादिकमुपनयवाक्यम्, तस्माद्वह्निमानित्यादिकं निगमनवाक्यमित्यन्यत्र विस्तरः ॥ ३८ ॥

उपमितिशाब्दबोधयोरनुमितावन्तर्भावस्तत्प्रकारस्तु पूर्वं प्रपञ्चित इति विरम्यते ॥ ३९ ॥

स्मृतिस्तु पूर्वानुभवजनितसंस्काराधीनो ज्ञानविशेषः, तत्र उपेक्षानात्मकनिश्चयः करणम्, भावनाख्यसंस्कारो व्यापारः ॥ ४० ॥

ज्ञानसामान्यं प्रति त्वङ्मनःसंयोगो हेतुर्नातः सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेस्तत्संबन्धेनात्मनश्च मानसप्रत्यक्षम्, तदानीं पुरीतति वर्तमानस्य मनसस्त्वचा सह संयोगाभावात्, न च रासनादिकाले त्वङ्मनःसंयोगसत्त्वे ज्ञानयौगपद्यापत्तिरिति वाच्यम्, अनायत्या रासनादिसामग्र्याः स्पार्शनं प्रति प्रतिबन्धकत्वस्य स्वीकरणीयत्वात्, पक्षधरमिश्रास्तु सुषुप्तिदशायामुक्तप्रत्यक्षवारणाय चर्ममनःसंयोगस्य ज्ञानसामान्यं प्रति हेतुत्वमिति न पूर्वोक्तप्रतिबन्धकताकल्पनमित्याहुः ॥ ४१ ॥

विद्याऽविद्याभेदेनापि बुद्धिर्द्विविधा, तत्र विद्या प्रमा भ्रमसामान्यभिन्नं ज्ञानम्, अविद्या अप्रमा तदभाववति तत्प्रकारकं ज्ञानम्, अविद्याऽपि द्विविधा संशयविपर्यासभेदात्, तत्रैकधर्मिणि विरुद्धभावाभावप्रकारकज्ञानं संशयः, सच साधारणधर्मज्ञानजन्यासाधारणधर्मज्ञानजन्यविप्रतिपत्तिवाक्यज्ञानजन्यभेदात्त्रिविधः, विपर्यासो निश्चयात्मको भ्रमः, देहे आत्मनोऽभेदनिश्चयः गौरोऽहमित्यादिः, पीतः शङ्ख इत्यादिश्च, तत्राविद्यायां दोषः कारणम्, स तु पित्तदूरत्वादिरूपो नानाविधः, प्रमायां तु गुणः कारणम्, तत्र विशेषणवता विशेष्येण सन्निकर्षः प्रत्यक्षे गुणः, साध्यविशिष्टपक्षे परामर्शोऽनुमितौ गुण इति, प्रमात्वं स्वतोग्राह्यमिति गुरुभट्टमुरारिमिश्राः, तन्न सम्यक्, तथा सति प्रमात्वस्य संशयानुपपत्तेः, किंतु इदं ज्ञानं प्रमा संवादिप्रवृत्तिजनकत्वादित्याद्यनुमानं प्रमात्वग्राहकमिति संक्षेपः ॥ ४२ ॥

सुखं तु सर्वेषामभिलाषविषयः धर्मेण जायते, तत्रैहिकं सुखं दुःखानुविद्धम्, पारत्रिकं स्वर्गसुखं तु न दुःखावच्छेदकशरीरावच्छिन्नमिति विशेषः ॥ ४३ ॥

दुःखं तु सर्वेषां द्वेषविषयः अधर्मेण जायते, नारकिणां यद्दुःखं तन्न सुखावच्छेदकशरीरावच्छिन्नमिति विशेषः ॥ ४४ ॥

इच्छा द्विविधा फलेच्छा उपायेच्छा च । तत्र फलं सुखं दुःखनिवृत्तिश्च, तत्र फलेच्छां प्रति फलज्ञानं कारणम्, उपायो भोजनौषधपानादिः तद्विषयिणीच्छा तु इष्टस्य सुखदुःखनिवृत्त्यन्यतरस्य साधनताज्ञानजन्या, एवं तदुपायादावपि तत्साधानताज्ञानादिच्छा भवति, प्रवृत्तिहेतुरिच्छा चिकीर्षा सा च कृतिसाध्यत्वप्रकारकेच्छा तत्र च कृतिसाध्यताज्ञानम्, इष्टसाधनताज्ञानम्, बलवद्विष्टसाधनत्वज्ञानाभावश्च कारणम्, अतो न समुद्रलङ्घनवृथापर्यटनादौ चिकीर्षा न वा मधुविषसंपृक्तान्नभोजने क्षुधातुराणां चिकीर्षा, केचित्तु बलवद्विष्टासाधनत्वज्ञानं चिकीर्षा हेतुरित्याहुः ॥ ४५ ॥

दुःखद्वेषे दुःखज्ञानं दुःखोपायद्वेषे तु दुःखसाधनताज्ञानं कारणम्, बलवदिष्टसाधनताज्ञानं च द्वेषस्य प्रतिबन्धकं तेन नान्तरीयकदुःखजनके पाकादौ न द्वेष इति ॥ ४६ ॥

प्रयत्नस्त्रिविधः प्रवृत्तिनिवृत्तिजीवनयोनिभेदात् तत्र प्रवृत्तिं प्रति चिकीर्षा कृतिसाध्यत्वज्ञानमिष्टसाधनताज्ञानमुपादानप्रत्यक्षं च हेतुः, निवृत्ति प्रति द्विष्टसाधनताज्ञानं द्वेषश्च कारणम्, जीवनयोनियत्नस्तु जीवनादृष्टजन्यः शरीरे प्राणसंचारे कारणम्, स तु अतीन्द्रियः, स क्षणिक इति केचित्, ज्ञानेच्छाकृतिद्वेषाः सविषयका इति बहवः । भावनाख्यसंस्कारोऽपि सविषयक इत्यन्ये इति संक्षेपः ॥ ४७ ॥

गुरुत्वं क्षितिजलयोस्तिष्ठति, तच्च अतीन्द्रियम्, तन्नित्ये नित्यम्, अनित्येऽनित्यम्, आद्यपतनक्रियायां तदसमवायिकारणम्, द्वितीयपतनादौ तु वेगस्यासमवायिकारणत्वमिति, वल्लभाचार्यमतेऽस्य स्पार्शनप्रत्यक्षं भवतीति ॥ ४८ ॥

द्रवत्वं क्षितिजलतेजःसु तिष्ठति, तद्द्विधं सांसिद्धिकं नैमित्तिकं च, तत्राद्यं जल एव, वह्निसंयोगादिनिमित्तादुत्पन्नं नैमित्तिकं तु घृतादिपृथिवीषु सुवर्णादितेजःसु च, जलपरमाणौ द्रवत्वं नित्यं तद्भिन्नेऽनित्यम्, स्यन्दनाख्यकर्मणि द्रवत्वमसमवायिकारणम्, सक्तुकादीनां संयोगविशेषे पिण्डीकरणाख्ये स्नेहसहितं द्रवत्वं निमित्तकारणमतो द्रुतसुवर्णादिना हिमकरकादिना च न सक्तुकादीनां संग्रहः ॥ ४९ ॥

स्नेहस्तु जल एव वर्तते, परमाणौ स नित्यः अन्यत्र त्वनित्यः, तैलान्तर्वर्तिनि जले प्रकृष्टस्नेहो वर्तते । अतस्तज्जलं न वह्नेः प्रतिकूलम्, अप-

कृष्टस्नेहयुक्तस्यैव वह्निनाशकत्वमिति, स्निग्धं जलमिति प्रतीतिसिद्धोऽयं गुणो द्रवत्वेन नान्यथासिद्धः, हिमकरकादौ द्रवत्वानुपलम्भेऽपि स्नेहस्योपलम्भात् द्रवत्ववति सुवर्णादावनुपलम्भाच्चेति ॥ ५० ॥

संस्कारस्त्रिविधः वेगस्थितिस्थापकभावनाभेदात्। तत्र वेगः क्षितिजलतेजोवायुमनःसु तिष्ठति। स्थितिस्थापकः क्षितौ, केषांचिन्मते पृथिव्यादिचतुष्के स वर्तते, भावनाख्यसंस्कारस्तु जीवात्मनि जायते, नित्यः संस्कारो नास्ति। वेगस्तावद्द्विविधः कर्मजवेगजभेदात्, तत्र शरादौ नोदनजनितेन कर्मणा वेगो जन्यते तेन च पूर्वकर्मनाशादुत्तरं कर्म, एवमुत्तरोत्तरमपि, वेगं विना कर्मणः कर्मप्रतिबन्धकत्वात् पूर्वकर्मनाश उत्तरकर्मोत्पत्तिश्च न स्यात्। यत्र वेगवता कपालेन जनिते घटे वेगो जन्यते स वेगजो वेग इति। स्थितिस्थापकसंस्कारस्त्वतीन्द्रियः आकृष्टशाखादीनां परित्यागे यत्पूर्वदेशगमनं तत्र स्थितिस्थापको हेतुरिति। भावनाख्यसंस्कारस्तु उपेक्षानात्मकनिश्चयेन जन्यते, स्मरणे प्रत्यभिज्ञायां चायं हेतुः, अयमपि संस्कारोऽतीन्द्रियश्चरमफलनाश्यः क्वचित् रोगादिनाश्यः क्वचित् कालनाश्यश्च, केचित्तु समानविषयकं स्मरणमेव संस्कारनाशकमत एव 'जायते च पुनः पुनः स्मरणाद्दृढतरसंस्कारः' इति दीधितिरपि साधु संगच्छते इत्याहुः ॥ ५१ ॥

धर्मोऽपि जीवे तिष्ठति सर्वेषामैहिकपारत्रिकाणां सुखानामसाधारणकारणम्, यागदानादिक्रियाव्यापारतया स कल्प्यते, अन्यथा कर्मणामाशुविनाशित्वात् व्यापारान्तराभावाच्च कालान्तरभाविफलजनकत्वं न स्यात् ननु ध्वंस एव कर्मणां व्यापारोऽस्तु, नच प्रतियोगितद्ध्वंसयोरेकत्राजनकत्वम्, सर्वत्र तथात्वे मानाभावात्, नच कर्मणामविच्छिन्ना फलधारा स्यात् ध्वंसस्याविनाशित्वादिति वाच्यं कालविशेषस्य सहकारित्वोपगमादिति चेन्न गङ्गास्नानादिस्थलेऽनन्तजलसंयोगध्वंसानां व्यापारत्वकल्पनामपेक्ष्यापूर्वस्यैकस्य लाघवेन कल्पयितुमुचितत्वात् धर्मादीनां 'धर्मः क्षरति कीर्तनात्' इत्याद्यागमसिद्धत्वाच्चेति संक्षेपः। धर्मो नित्यो नास्ति, अयमतीन्द्रियो मिथ्याज्ञानजन्यवासनाजन्यश्च नातस्तत्त्वज्ञानिनां यागादिना धर्मोत्पत्तिः, एवमयं कर्मनाशाजलस्पर्शादिनाश्य इति ॥ ५२ ॥

अधर्मस्तु निषिद्धकर्मणा जन्यते, दुःखानामसाधारणकारणं जीववृत्तिः प्रायश्चित्तादिना नाश्यते, अयमप्यतीन्द्रियो नित्यो वासनाजन्यश्चेति,

प्रारब्धानां धर्माधर्माणां भोगादेव क्षयः, तदितरेषां तु तत्वज्ञानादपि नाशः, तत्तच्छरीरभोगजनकं यत् कर्म तत् प्रारब्धमुच्यते तदभिप्रायकमेव 'नाभुक्तं क्षीयते कर्म' इति गीतावचनं वेदितव्यमिति ॥ ५३ ॥

शब्द आकाशे तिष्ठति, स द्विविधो ध्वनिवर्णभेदात्, ध्वन्यात्मकशब्दस्तु भेरीदण्डाद्यभिघातजन्यः, वर्णश्च कण्ठताल्वभिघातादिजन्यः, सोऽपि स्वरव्यञ्जनभेदाद्द्विविधः स्वरा अकारादयः षोडश, कादयो व्यञ्जनसंज्ञकाश्चतुस्त्रिंशत्, शब्दस्तु श्रोत्रोत्पन्नो गृह्यते श्रवणेन्द्रियेण, तदुत्पत्तिस्तु वीचितरङ्गन्यायेन भवति तथाहि आद्यशब्दस्य बहिर्देशादिगवच्छिन्नोऽन्यः शब्दस्तेन शब्देन जन्यते तेन चापरस्तद्व्यापक एवं क्रमेण श्रोत्रोत्पन्नो गृह्यते इति । केषांचिन्मते कदम्बगोलकन्यायात् शब्दोत्पत्तिस्तथाहि आद्यशब्दाद्दशसु दिक्षु दश शब्दा उत्पद्यन्ते ततश्चान्ये दश शब्दा उत्पद्यन्ते इति, एतन्मतं तु बहुशब्दकल्पनागौरवग्रस्तमिति । क उत्पन्नः को विनष्ट इत्युत्पादविनाशप्रतीतिः शब्दस्यानित्यत्वात्, तत्र उत्तरशब्देन पूर्वशब्दस्य नाशः, अन्त्यशब्दस्तूपान्त्यशब्दनाश्यः क्षणिक इति वदन्ति । नच सोऽयं क इति प्रत्यभिज्ञाबलाच्छब्दस्य नित्यत्वमिति वाच्यं प्रत्यभिज्ञायाः साजात्यविषयकत्वात् यदेवौषधं मया कृतं तदेव चैत्रेणापि कृतमित्यादिवदित्यन्यत्र विस्तरः ॥ ५४ ॥

इति गुणनिरूपणम् ।

कर्म पञ्चविधमुत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनभेदात्, कर्मत्वजातिः प्रत्यक्षसिद्धा, एवमुत्क्षेपणत्वादिकमपि, भ्रमणरेचनस्यन्दनोर्ध्वज्वलनतिर्यग्गमनान्यपि गमन एवान्तर्भवन्ति इति न विभागन्यूनतेति । कर्म क्षित्यादिचतुष्के मनसि तिष्ठति, इदं च स्वजन्योत्तरसंयोगेन नाश्यते नित्यं कर्म नास्तीति संक्षेपः ॥ ५५ ॥

इति कर्मनिरूपणम् ।

सामान्यं द्रव्यादित्रिके तिष्ठति नित्यं च, तच्च द्विविधं परापरभेदात्, परत्वमधिकदेशवृत्तित्वमपरत्वमल्पदेशवृत्तित्वं सर्वजात्यपेक्षयाऽधिकदेशवृत्तित्वात् सत्तायाः परत्वम्, द्रव्यत्वपृथिवीत्वादीनां तु परत्वमपरत्वं च, चैत्रत्वादिजातेरपरत्वमेव । जातिबाधकानि आचार्यैरुक्तानि यथा ।

'व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः ।
रूपहानिरसंबन्धो जातिबाधकसंग्रहः ॥' इति ।

एकव्यक्तिकत्वादाकाशत्वादिकं न जातिः, तुल्यव्यक्तिकत्वात् घटत्वं कलशत्वं च न जातिद्वयम्, संकीर्णत्वाद्भूतत्वं मूर्तत्वं च न जातिः, अनवस्थाभयात् सामान्यत्वं न जातिः, व्यावृत्तस्वभावस्य विशेषपदार्थस्य रूपहानिः स्यादतो विशेषत्वं न जातिः समवायसंबन्धाभावात् समवायो न जातिः ॥ ५६ ॥

इति सामान्यनिरूपणम् ।

सद्भिन्नत्वे सत्येकमात्रसमवेतत्वं विशेषत्वम् । एकाश्रितगुणकर्मवारणाय सत्यन्तम्, सामान्यवारणाय विशेष्यदलम्, घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात् परस्परं भेदः परमाणूनां च परस्परं भेदको विशेष एव, स तु स्वत एव व्यावृत्तस्तत्र विशेषान्तरापेक्षा नास्तीति, विशेषश्च नित्यद्रव्येषु तिष्ठति नित्यश्चेति संक्षेपः । विशेषपदार्थस्तु दर्शनान्तरकारैर्न मन्यते, अत एवास्य दर्शनस्य विशेषदर्शनेति संज्ञा, एतन्मतानुयायिनामपि वैशेषिकेतिसंज्ञा यौगिकी ॥ ५७ ॥

इति विशेषपदार्थनिरूपणम् ।

अवयवावयविनोर्गुणिगुणिनोः क्रियाक्रियावतोर्जातिजातिमतोर्नित्यद्रव्यविशेषयोश्च संबन्धः समवायः, स च लाघवादेक एव सिद्धः तत्रानुमानं प्रमाणं तथाहि गुणक्रियादिविशिष्टबुद्धिर्विशेष्यविशेषणसंबन्धविषया विशिष्टबुद्धित्वाद्दण्डीपुरुष इति विशिष्टबुद्धिवत्, न च स्वरूपसंबन्धेनार्थान्तरमिति वाच्यम्, अनन्तस्वरूपाणां संबन्धत्वकल्पने गौरवाल्लाघवादेकस्य समवायस्य सिद्धिः, वायौ रूपसमवायस्य सत्त्वेऽपि रूपाभावान्न वायू रूपवानिति प्रतीतिरिति, समवायश्च विशेषणतासंबन्धेन द्रव्यादिपञ्चके तिष्ठति, अयमतीन्द्रियः नित्यत्वे सति चेतनान्यभावत्वात्, कालादिवदित्यनुमानात् समवायस्यातीन्द्रियत्वसिद्धिरिति वैशेषिकाः ॥ ५८ ॥

इति समवायनिरूपणम् ।

अभावो द्विविधः संसर्गाभावान्योन्याभावभेदात्, संसर्गाभावोऽपि त्रिविधः प्रागभावध्वंसात्यन्ताभावभेदात्, द्रव्यादिषट्कभिन्नत्वमभावत्वम् भेदभिन्नाभावत्वं संसर्गाभावत्वम्, तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वम्, विनाश्यभावत्वं प्रागभावत्वम्, जन्याभावत्वं ध्वंसत्वम्, सदातनसंसर्गाभावत्वमत्यन्ताभावत्वम्, ध्वंसत्वादिकमख-

ण्डोपाधिरिति केचित्। अभावस्तु विशेषणतासंबन्धेन तिष्ठति। अभावानामधिकरणात्मकत्वमिति मीमांसकाः तन्न, तथा सति घटाभाववद्भूतलमित्याधाराधेयभावावगाहिप्रतीत्यनुपपत्तेस्तत्तच्छब्दरसगन्धाद्यभावानां प्रत्यक्षानुपपत्तेश्च तत्तदधिकरणानां तत्तदिन्द्रियाग्राह्यत्वात्, यत्र भूतले घटादिकमपसारितं पुनरानीतं च तत्र घटकालस्य संबन्धाघटकत्वात् न घटकाले घटात्यन्ताभावबुद्धिः, तत्तत्कालीनभूतलादिस्वरूपस्यैव तत्तदभावसंबन्धत्वोपगमात्। तत्रोत्पादविनाशशाली सामयिकनामा चतुर्थोऽयं संसर्गाभाव इति केचिदित्यन्यत्र विस्तरः॥ ५९॥

इत्यभावपदार्थनिरूपणम्।

एतेषु सप्तसु पदार्थेष्वेव गोतमोक्ताः षोडशपदार्था अन्तर्भवन्ति, तथाहि इन्द्रियरूपं प्रत्यक्षप्रमाणं द्रव्य एवान्तर्भवति, व्याप्तिज्ञानसादृश्यज्ञानपदरूपाणि अनुमानोपमानशब्दप्रमाणानि गुणे, आत्मशरीरेन्द्रियमनोरूपाणि प्रमेयाणि द्रव्ये, रूपादयोऽर्था गुणे, बुद्धिर्गुणे, प्रवृत्तिर्यत्नगुणे, रागद्वेषभ्रमात्मकमोहरूपा दोषा गुणे, शरीरसंयोगरूपप्रेत्यभावश्च गुणे सुखदुःखभोगात्मकं फलं गुणे, दुःखं गुणे, आत्यन्तिकदुःखध्वंसरूपापवर्गोऽभावेऽन्तर्भवति। संशयाख्यज्ञानविशेषो गुण एव, प्रवृत्तिहेत्विच्छाविषयरूपं प्रयोजनं यथायथं द्रव्यगुणकर्माभावपदार्थेषु अन्तर्भवति, साध्यसाधनोभयसाध्याभावसाधनाभावद्वयोरन्यतरवत्त्वेन वादिप्रतिवाद्युभयनिश्चयविषयरूपो दृष्टान्तो यथायथं द्रव्यादिषु अन्तर्भवति, शास्त्रितार्थनिश्चयरूपः सिद्धान्तो गुणपदार्थः शब्दविशेषात्मका अवयवा गुणेष्वन्तर्भवन्ति, आपत्त्याख्यमानसज्ञानविशेषात्मकस्तर्को गुणपदार्थः निर्णयो ज्ञानविशेषो गुण एव, वाक्यविशेषरूपाः वादजल्पवितण्डा गुण एवान्तर्भवन्ति, दुष्टहेतुरूपा हेत्वाभासा यथायथं द्रव्यादिष्वन्तर्भवन्ति, छलजात्योर्वाक्यविशेषरूपतया गुणत्वमेव, प्रतिज्ञाहानिप्रतिज्ञान्तरप्रतिज्ञाविरोधप्रतिज्ञासंन्यासहेत्वन्तरार्थान्तरनिरर्थकाविज्ञातार्थापार्थकाप्राप्तकालन्यूनाधिकपुनरुक्तानां निग्रहस्थानानां शब्दरूपतया गुणेऽन्तर्भावः अननुभाषणाज्ञानाप्रतिभाविक्षेपाणामभावेऽन्तर्भावः। मतानुज्ञाया वाक्यरूपतया गुणेऽन्तर्भावः, पर्यनुयोज्योपेक्षणस्याभावेऽन्तर्भावः, निरनुयोज्यानुयोगस्य वाक्यरूपतया गुणेऽन्तर्भावः, सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गस्यापसिद्धांतस्य गुणेऽन्तर्भावः, हेत्वाभासाख्यनिग्रहस्थानस्य दुष्टहेतुरूपत्वे

यथायथं द्रव्यादिष्वन्तर्भावः, दोषोद्भावनरूपत्वे तु गुण एवान्तर्भाव इति संक्षेपः ॥ ६० ॥

तुतातभट्टमतानुयायिनस्तु द्रव्यगुणकर्मसामान्यरूपाश्चत्वार एव पदार्था इति वदन्ति । द्रव्यगुणकर्मसामान्यसंख्यासमवायसादृश्यशक्तयोऽष्टौ पदार्था इति गुरवः ॥ ६१ ॥

दीधितिकृतस्तु पदार्थतत्त्वनिरूपणाख्ये प्रकरणे कतिपयान् कणादमहर्षिप्रोक्तान् पदार्थान् खण्डयन्तिस्म । तदनुक्तान् कतिपयानतिरिक्तानङ्गीकृतवन्तश्च, तदिह संक्षेपेण प्रदर्श्यते । दिक्कालौ नेश्वरादतिरिक्तौ, प्राच्यां घट इदानीं घट इत्यादिव्यवहारस्य ईश्वरात्मकविभुविषयकत्वेनैवोपपत्तेः, नच तयोर्भिन्नविषयकत्वमनुभवसिद्धमिति वाच्यं तथा सति प्राच्यां घटः प्रतीच्यां घटः इदानीं घटः तदानीं घट इत्यादेरपि भिन्नभिन्नविषयकत्वानुभवात् कालदिशोरपि बहुत्वाङ्गीकारप्रसङ्गात् , तथाच उपाधिभेदादेकया दिशा एकेन कालेन च यथा भवतां बहूनां व्यवहाराणामुपपत्तिस्तथाऽस्माकमपि एकेनेश्वरेणागमानुमानाभ्यां सिद्धेन सर्वेषामेव तादृशव्यवहाराणामुपाधिभेदादुपपत्तिः संभवति, सूर्यक्रियादौ स्वसंयुक्तेश्वरसंयोगितपनाश्रितत्वादिसंबन्धेन घटादेः सत्त्वसंभवेन तत्संबन्धघटकतयाऽप्यतिरिक्तकालाद्यसिद्धेः । अथवा क्षणा एवातिरिक्ताः इदानीमित्यादिव्यवहारविषयाः, विभागप्रागभावावच्छिन्नकर्मणः क्षणत्वासंभवात् भाविकर्मान्तरजन्यविभागान्तरप्रागभावावच्छिन्नस्य कर्मणः क्षणचतुष्टयादिस्थायित्वेन तादृशस्योपाधित्वासंभवात्, नच विभागे स्वजन्यत्वं विवक्षणीयम्, स्वत्वाननुगमादननुगमापत्तेः, विभागजननादिदशामुपाध्यन्तरस्य वाच्यतया तावताप्यननुगमाच्च, एवं चोपाधीनामतिरिक्ताना क्षणिकपदार्थस्वरूपाणां क्षणानामवश्याभ्युपेयतया तैरेव तादृशाः सर्वे व्यवहारा उपपादनीयाः किमतिरिक्तेन कालेनेति ॥ ६२ ॥

एवं शब्दनिमित्तकारणत्वेन क्लृप्तस्येश्वरस्यैव शब्दसमवायिकारणत्वं कल्पनीयं किमतिरिक्ताकाशकल्पनेन, नच जीवात्मगतादृष्टस्य शब्दकारणत्वात् जीवात्मनामपि शब्दनिमित्तकारणत्वेन विनिगमनाभाव इति वाच्यम्, अदृष्टस्य शब्दहेतुत्वेऽपि तदाश्रयस्य तद्धेतुत्वे प्रमाणाभावात् , अस्मदादेः शब्दाधिकरणत्वेऽहं शब्दवानित्यादिप्रत्ययापत्तेश्च, एवं तत्तत्कर्णविवराद्युपाधिभेदेनेश्वरस्यैव श्रोत्रेन्द्रियत्वं नतु तदनुरोधेनाकाशः कल्पनीयः ॥ ६३ ॥

मनोऽपि त्रसरेण्वात्मकं भूतमेव, अदृष्टविशेषस्य प्रतिबन्धकतया च न ज्ञानयौगपद्यमन्यथा तवापि रासनादिकाले स्पार्शनवारणासंभवात् ॥६४॥

परमाणुद्व्यणुकयोर्मानाभावः त्रुटावेव विश्रामात्। त्रसरेणुः सावयवश्चाक्षुषद्रव्यत्वात् घटवत्, त्रसरेणोरवयवाः सावयवा महदवयवत्वात् कपालवदित्यादेरप्रयोजकत्वात्, अन्यथा तादृशरीत्याऽनवस्थितावयवपरंपरासिद्धिप्रसङ्गात्, नचाणुपरिमाणासत्त्वेऽणुव्यवहारानुपपत्तिरतस्तत् परिमाणं तदधिकरणद्रव्यं चावश्यमेवाङ्गीकार्यमिति वाच्यं, तदपेक्षयाऽपकृष्टपरिमाणवत्त्वस्यैव तदपेक्षयाऽणुत्वव्यवहारस्य विषयत्वात्, अन्यथा नारिकेलादामलकमणु इत्यादिव्यवहारः कथं स्यादिति ॥ ६५ ॥

ईश्वरे किमपि परिमाणं नास्ति, द्रव्यत्वस्य परिमाणव्याप्यत्वासिद्ध्या द्रव्यत्वेन हेतुना त्रुटित्वादेरिव परिमाणस्यापि नेश्वरे सिद्धिरिति ॥६६॥

एवमनुद्भूता गन्धरसरूपस्पर्शा अपि न सन्ति, तथा सति मूर्ताभावस्येव रूपाद्यभावस्याप्ययोग्यप्रतियोगिकत्वेनायोग्यतया वायौ रूपं नास्तीति प्रत्यक्षस्यानुपपत्तेः। नच समवेतद्रव्यं प्रति स्पर्शवत्त्वेन समवायिकारणत्वात् चक्षुराद्यवयवानामनुद्भूतस्पर्श आवश्यक इति वाच्यमतीन्द्रियानन्तस्पर्शकोटिकल्पनामपेक्ष्य लाघवान्मूर्तत्वेनैव द्रव्यसमवायिकारणतायाः कल्पयितुमुचितत्वात्, मूर्तत्वं तु स्पन्दसमवायिकारणतावच्छेदकतया सिद्धं जातिविशेषः। नच भूतत्वेन संकीर्णत्वान्मूर्तत्वं न जातिरिति वाच्यं मूर्तत्वभूतत्वयोर्घटत्वकलशत्वयोरिवाभिन्नत्वात्, नचेदं भूतं मूर्त्तं चेति सह प्रयोगस्यानुपपत्तिः, तत्र भूतपदस्य मूर्तपदस्य वा तत्पदवाच्ये लाक्षणिकत्वात्, समवेतेन्द्रियग्राह्यगुणवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमेव भूतत्वमित्यपि केचित्, नच मूर्तत्वेन द्रव्यसमवायिकारणत्वेऽन्त्यावयविना घटादिनाऽपि द्रव्यान्तरस्यारम्भप्रसङ्ग इति वाच्यं तत्रासमवायिकारणस्य संयोगविशेषस्याभावेन द्रव्यान्तरारम्भासंभवात्। अन्यथा स्पर्शवत्त्वेन हेतुतामतेऽपि तद्दोषस्यानिरासादिति ॥ ६७ ॥

एवं पृथक्त्वमपि न गुणान्तरम्, अन्योन्याभावेनैवायमस्मात् पृथगिति व्यवहारोपपत्तेः, नचान्योन्याभावस्य सावधित्वाभावात् सावधित्वविषयकतादृशव्यवहारस्य कथं तेनोपपत्तिरिति वाच्यं तादृशव्यवहारस्य सावधिविषयकत्वे प्रमाणाभावात्, नचैवं घटः पटान्नेत्यपि प्रयोगापत्तिः अन्यारादित्यादिसूत्रस्थान्यपदस्य तदर्थकपरतया पृथक्शब्दसमभिव्याहार इव

नञ्समभिव्याहारेऽपि पञ्चम्याः संभवादिति वाच्यं, तत्सूत्रस्थान्यशब्दस्य तदर्थकशब्दविशेषपरतया नञस्तदन्तर्भावासंभवात्, नच 'अन्य इत्यर्थग्रहणमितरग्रहणं प्रपञ्चार्थम्' इतिसिद्धान्तकौमुदीविरोध इति वाच्यं तस्या अपि आकृतिगणविशेषे तात्पर्यात्। नच 'पृथग्विनानानाभिस्तृतीयान्यतरस्याम्' इतिसूत्रे पृथक्शब्दग्रहणं निरर्थकमिति वाच्यं तृतीयाद्वितीयार्थमेव तत्सूत्रे तच्छब्दग्रहणात्। वस्तुतस्तु नञोऽन्यार्थकत्वमेव नास्ति तस्य भेदमात्रार्थकत्वात् पृथग्विनेतिसूत्रे पृथक्शब्दस्य असाहित्यार्थकस्यापि योगे पञ्चम्यर्थं पृथक्शब्दस्य ग्रहणमतएव 'दुनोति चन्द्रात् पृथगप्यनङ्गः' इत्यादिप्रयोगोऽपि साधु संगच्छते, यद्वा पृथक्शब्दस्य भेदमात्रार्थकत्वेन अन्यार्थत्वाभावात् पृथग्विनेतिसूत्रे पृथक्शब्दग्रहणम्, अव्ययनिपातातिरिक्तनामार्थयोर्भेदान्वयासंभवेऽपि पृथक्शब्दस्याव्ययतया अयमस्मात् पृथगित्यत्र भेदान्वयसंभवादिति संक्षेपः ॥ ६८ ॥

एवं परत्वापरत्वे अपि न गुणान्तरे बहुतराल्पतरसंयुक्तसंयोगात्मकविप्रकृष्टत्वसन्निकृष्टत्वाभ्यां तत्प्रागभावाधिकरणक्षणोत्पत्तिकत्वतदधिकरणक्षणवृत्तिप्रागभावप्रतियोगित्वरूपाभ्यां ज्येष्ठत्वकनिष्ठत्वाभ्यां च द्विविधपरापरव्यवहारोपपत्तेः, तत्र विप्रकृष्टत्वसन्निकृष्टत्वे तदन्यतरशून्यं तृतीयमपेक्षेते, प्रयागतः काशीविप्रकृष्टा मथुरा, मथुरातः काशीसन्निकृष्टः प्रयाग इत्यादिव्यवहारात्, ज्येष्ठत्वकनिष्ठत्वे तु परस्पराश्रयमात्रमपेक्षेते लक्ष्मणाज्ज्येष्ठो रामः रामात्कनिष्ठो लक्ष्मण इत्यादिव्यवहारादिति ॥६९॥

एवं विशेषोऽपि न पदार्थान्तरम्, नित्यानां द्रव्याणां स्वतोव्यावृत्तत्वस्वीकारेणैवोपपत्तेः । ननु योगिनोऽतिरिक्तं विशेषपदार्थं प्रत्यक्षत एव पश्यन्तीति चेदेवं तर्हि सशपथमेव योगिनः पृच्छयन्तां किमेतेऽतिरिक्तं विशेषपदार्थं पश्यन्ति न वेति ॥ ७० ॥

अव्याप्यवृत्ति रूपादिकमपि स्वीकार्यं पक्के घटे रक्तं रूपमन्तर्नास्ति किंतु बहिरेवेतिप्रतीतेः भग्ने तस्मिन् अन्तःश्यामत्वस्य प्रत्यक्षत एवोपलब्धेः । ननु व्याप्यवृत्तिवृत्ते रूपत्वादिजातेरव्याप्यवृत्तिवृत्तित्वं न संभवति सविषयकान्यव्याप्यवृत्तिवृत्तिजातिरव्याप्यवृत्त्यवृत्तित्वनियमादिति चेन्न तादृशनियमस्याप्रामाणिकत्वात् । अतएव—

'लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ।
श्वेतः खुरविषाणाभ्या स नीलो वृष उच्यते ॥'

इति स्मृतिरपि साधु संगच्छते, एवं च चित्रमपि रूपं नातिरिक्तं

विजातीयरूपसमानाधिकरणरूपेणैव चित्रव्यवहारोपपत्तेः । नीलादेर्नीलाद्यतिरिक्तरूपाजनकत्वेन चित्ररूपोत्पादासंभवाच्च । स्पर्शोऽपि चाव्याप्यवृत्तिः अन्यथा सुकुमारकठिनाभ्यामवयवाभ्यामारब्धेऽवयविनि सुकुमारावयवावच्छेदेन त्वक्संयोगे काठिन्यस्याप्युपलम्भप्रसङ्गः, नच सुकुमारत्वकठिनत्वे संयोगविशेषौ, चाक्षुषत्वप्रसङ्गात् । रसोऽपि चाव्याप्यवृत्तिः अन्यथा तिक्तमधुराभ्यामवयवाभ्यामारब्धेऽवयविनि तिक्तावयवावच्छेदेन रसनसंयोगे माधुर्योपलम्भप्रसङ्गः, नीरस एव वाऽवयवी, तत्रावयवरसानामेवोपलब्धेः, एतेन गन्धोऽपि व्याख्यातः ॥ ७१ ॥

कर्मापि चाव्याप्यवृत्ति चलन्तीषु सर्वासु शाखासु निश्चलमूले तरौ चलतीतिप्रत्ययात् । ननु शाखा एव चलन्ति न पुनर्वृक्ष इत्यपि प्रत्ययोऽस्तीति चेत्तस्य सर्वावयवावच्छेदेन चलनाभावो विषयः न पुनः सर्वथैव चलनाभावः, उक्तप्रत्ययविरोधात्, अतएव सदाकम्पोऽश्वत्थवृक्ष इति प्रसिद्धिरपीति ॥ ७२ ॥

अथ द्वाभ्यां त्रिभिर्वा नीलावयवैर्यत्रावयवी आरभ्यते तत्रावयविनि तत्तदवयवावच्छेदेन नानानीलं कथं नोत्पद्यते तत्तदवयवगतरूपाणां भिन्नत्वादिति चेत् यथा घटादिसन्निकर्षस्य घटादिसाक्षात्कारजनकत्वेऽपि घटपटमठेषु सन्निकृष्टेषु घटपटमठान् विषयीकृत्यैकमेव प्रत्यक्षं जायते एवं वह्निपरामर्शस्य वह्न्यनुमितिमात्रजनकत्वेऽपि यत्र वह्नेरालोकस्य च परामर्शद्वयं वर्तते तत्र वह्न्यालोकोभयविषयिणी एकैव समूहालम्बनानुमितिस्तथा तत्तदवयवरूपैर्मिलित्वा एकमेव व्यापकं रूपमुत्पाद्यते तत्र न कोऽपि विरोधः ॥ ७३ ॥

एवमेकत्वसंख्याया असमवायिकारणं नास्ति भावकार्यमात्रस्यासमवायिकारणजन्यत्वे मानाभावात् ॥ ७४ ॥

द्रव्यनाशं प्रति असमवायिकारणनाश एव कारणं नतु समवायिकारणनाशः, तस्याक्लृप्तत्वात् नित्यसमवेतद्रव्यनाशे असमवायिकारणनाशस्य हेतुतायाः क्लृप्तत्वात् समवायिकारणनाशस्थले च असमवायिकारणनाशानन्तरमेवावयविनाशः कार्यकारणभावान्तरकल्पनामपेक्ष्य क्षणविलम्बकल्पनाया एव लघीयस्त्वादिति ॥ ७५ ॥

द्रव्यस्पार्शनप्रत्यक्षे स्पर्शवत्त्वमेव प्रयोजकं नतूद्भूतरूपवत्त्वमपि, अत एव शीतो वायुरिति स्पार्शनभ्रमोऽपि साधु संगच्छते । त्रसरेणोः स्पार्शनाभावे तु प्रकृष्टपरिमाणमपि द्रव्यस्पार्शनप्रयोजकं वाच्यम्, रूपस्य प्रयोज-

कत्वे त्वक्सन्निकर्षानन्तरं वायुर्वातीति सार्वलौकिकप्रत्यक्षानुपपत्तेर्गौरवाच्च। एकः फूत्कारः द्वौ फूत्कारौ त्रयः फूत्कारा इत्याद्याकारकं वायुगतसंख्याप्रत्यक्षं तु भवत्येव,कचिच्च वायुसंख्याया अग्रहो दोषात्। द्रव्यचाक्षुषप्रत्यक्षे तु रूपमेव प्रयोजकं नतु स्पर्शवत्त्वं मानाभावात् उद्भूतस्पर्शशून्यायाः प्रभायाश्चाक्षुषे व्यभिचाराच्च । समवेतेन्द्रियजन्यद्रव्यप्रत्यक्षे तु आत्मासमवेतरसगन्धशब्दजातीतरयोग्यधर्मसमवायित्वं प्रयोजकम्, सुखादिकमादायात्मनस्तादृशप्रत्यक्षवारणायात्मासमवेतेति, शब्दवत ईश्वरस्य तादृशप्रत्यक्षवारणाय शब्देतरेति, योग्यरसवतो रसनगतपित्तद्रव्यस्य त्रसरेणोर्व्यावृत्त्यर्थं रसेतरेति, वायूपनीतसुरभिभागस्य त्रसरेणोर्वारणाय गन्धेतरेति, पृथिवीत्वादिमादाय तद्दोषतादवस्थ्यवारणाय जातीतरेति, नित्यज्ञानमादायेश्वरस्य तादृशप्रत्यक्षवारणाय योग्येति, नच नित्यज्ञानस्यात्मासमवेतत्वाभावाद्योग्येति विशेषणं किमर्थमिति वाच्यं सुखादिसमवायिकारणतावच्छेदकतया सिद्धाया आत्मत्वजातेरीश्वरावृत्तित्वेन नित्यज्ञानादेरात्मासमवेतत्वसत्त्वात्, आत्मासमवेतत्वं विहाय सविषयकधर्मासामानाधिकरण्यनिवेशे तु शब्देतरत्वं नोपादेयम्, पिशाचारम्भकसंयोगादिवारणार्थं तु योग्यत्वं निवेशनीयमिति। अस्मदादीनां परिमाणशून्यत्वं नयनसंसृष्टपित्तद्रव्यस्य परिमाणवत्त्वं च यद्यङ्गीक्रियते तदा तादृशप्रत्यक्षे परिमाणवत्त्वमेव प्रयोजकम्, वायूपनीतसुरभिभागादेः परिमाणानङ्गीकरात्।अथवा नयनसंसृष्टपित्तद्रव्यस्य परिमाणानङ्गीकारेऽपि परिमाणवत्त्वं न तादृशप्रत्यक्षव्यभिचारि, तादृशद्रव्यस्य रूपानङ्गीकारेण प्रत्यक्षानङ्गीकारात्। नच तद्गतपीतरूपस्यैव शङ्खादावारोपात्मकं पीतः शङ्ख इति ज्ञानं जायते तत्तस्य रूपशून्यत्वे कथमुपपद्यते इति वाच्यं वस्त्वन्तरदृष्टस्य स्मृतस्य पीतरूपस्यैव दोषवशाच्छङ्खादावारोपोपपत्तेः अन्यथा चैत्रीयनयनसंसृष्टपित्तद्रव्यस्य पीतिमा मैत्रेण कथं न गृह्यते । द्रव्यप्रत्यक्षसामान्ये तु शब्दरसगन्धजातीतरयोग्यधर्मसमवायित्वं तन्त्रम्, नच रसनगतपित्तद्रव्यवायूपनीतसुरभिभागयोः कथमप्यक्षमिति वाच्यम्। असिद्धेः तयो रूपविरहेण चाक्षुषस्य स्पर्शाभावेन च स्पार्शनस्यासंभवात्, नच रसनघ्राणाभ्यां तयोर्ग्रह इति वाच्यं तयोर्द्रव्यग्रहणासामर्थ्यात्॥ ७६ ॥

एवं घटत्वत्वादिना घटत्वादेरभावस्यापि न प्रत्यक्षं घटत्वत्वस्य घटेतरावृत्तित्वघटितस्य घटेतरातीन्द्रियघटितत्वेनातीन्द्रियत्वात्, एवं जाति-

त्वस्यापि नित्यानेकसमवेतत्वात्मकत्वेन अतीन्द्रियत्वात् तद्रूपावच्छिन्नाभावोऽपि न प्रत्यक्षविषयः ॥ ७७ ॥

सत्ता च न द्रव्यगुणकर्मवृत्तिरेका प्रत्यक्षसिद्धा जातिः, धर्मादीनामतीन्द्रियत्वेन तत्र प्रत्यक्षायोगात् सामान्यादावपि सद्व्यवहाराच्च । न च सत्ताजात्यनङ्गीकारे घटः सन्नित्यादिव्यवहारस्यानुपपत्तिरिति वाच्यं वर्तमानत्वस्य तद्व्यवहारविषयत्वात् । ननु सच्छब्दस्य शक्यतावच्छेदकं किमिति चेत् भावत्वमिति गृहाण, भावत्वं चाभावान्यत्वम्, अभावत्वं चानुगतप्रत्ययसिद्धमखण्डोपाधिः अथवा भावत्वमेवाखण्डोपाधिः । नच भावत्वं सदिति व्यवहारः कथमुपपद्यते इति वाच्यं ज्ञेयत्वं ज्ञेयं घटाभावो घटाभाववानित्यादिवत् स्वस्मिन् स्ववृत्तित्वाङ्गीकारेण तदुपपत्तेः ॥ ७८ ॥

एवं गुणत्वमपि न रूपादिचतुर्विंशतावेका प्रत्यक्षसिद्धा जातिः, अतीन्द्रियेषु प्रत्यक्षायोगात् तुरगादेरुत्कृष्टगतिमत्वे ब्राह्मणादेश्च द्वेषाद्यभावेऽपि गुणवानयमश्वः सगुणोऽयं ब्राह्मण इत्यादिव्यवहाराच्च । न च द्रव्यकर्मान्यसामान्यवद्वृत्तिकारणतात्वेनानुगतीकृतानां रूपादिनिष्ठकारणतानामवच्छेदकतया गुणत्वजातिः सेत्स्यतीति वाच्यं, कार्यतावच्छेदकस्य एकस्य विरहेऽपि येनकेनापि रूपेण कारणत्वान्यनुगमय्य जातिकल्पने द्रव्यकर्मरूपभिन्नसामान्यवद्वृत्तिकारणतावच्छेदकतया त्रयोविंशतिगुणवृत्तिजातेरपि सिद्धिप्रसङ्गात् रूपद्रव्येतरसामान्यवद्वृत्तिकारणतावच्छेदकतया उक्तयुक्त्या सिद्धेन जात्यन्तरेण संकरप्रसङ्गाच्च ॥ ७९ ॥

एवं प्रत्यक्षानुमित्यादिसाधारणमनुभवत्वं न जातिः, अनुमित्यादावनुभवव्यवहारस्य स्मृत्यन्यज्ञानत्वमेव विषयः । जातिस्त्वनुभवत्वं साक्षात्कारित्वमेव साक्षात्कारिणि ज्ञान एव तत्प्रत्ययात् । सुखाद्यनुमित्यादिज्ञाने सत्यपि सुखमनुभवामीति प्रत्ययाभावात् इति ॥ ८० ॥

एवं घटाभावाभावोऽपि न घटस्वरूपः किंत्वतिरिक्त एव, घटाभावो नास्तीत्यबाधिताभावत्वप्रत्ययात् । नचैवं तृतीयतुरीयाभावादीनामतिरिक्तत्वेऽनवस्थेति वाच्यम्, एकस्यैव घटाभावस्य स्वाभावाभावरूपत्वे विरोधाभावात् ॥ ८१ ॥

भेदसामान्यभेदस्तु भावत्वं संसर्गाभावत्वमित्युभयस्वरूपमेव तस्यातिरिक्तत्वेऽनवस्थापातात् ॥ ८२ ॥

ध्वंसस्य प्रागभावो न प्रतियोगितत्प्रागभावात्मकः, न वा प्रागभावस्य ध्वंसः प्रतियोगितद्ध्वंसस्वरूपः, घटादेः सत्त्वकाले तस्य ध्वंसप्राग-

भावौ न स्त इत्यबाधिताभावत्वप्रत्ययात् । प्रागभाव एवापारमार्थिक इत्यन्ये ॥ ८३ ॥

सोऽयं देवदत्त इत्यादिप्रत्यभिज्ञायां च तत्तासंस्कार एव हेतुः तत्प्रकारकप्रत्यक्षं प्रति तद्विषयकत्वेन संस्कारसाधारणेन ज्ञानलक्षणायाः कारणत्वात्, नच प्रत्यभिज्ञायाः संस्कारजन्यत्वे स्मृतित्वापत्तिः संस्कारजन्यज्ञानत्वस्य स्मृतित्वप्रयोजकत्वादिति वाच्यं, प्रयोजकत्वस्य व्यापकतारूपत्वे विरोधाभावात् । नच व्याप्यत्वमेव प्रयोजकत्वम्, मानाभावेन तस्य व्यापत्वस्यासिद्धेः, परंतूद्बोधकासमभिव्याहारस्थले स्मृतिप्रतिबन्धकसमभिव्याहारस्थले च संस्कारात् प्रत्यभिज्ञाया अनुत्पादेन तत्तास्मृतिरेव तद्धेतुरिति मन्तव्यम् ॥ ८४ ॥

अयं स्थाणुर्न वेत्यादिवाक्यश्रवणस्थले शाब्दबोधात्मक एव संशयो जायते पदाधीनायाः धर्म्युपस्थितेः कोटिद्वयोपस्थितेश्च तदुभयविरोधज्ञानसंशयात्मकयोग्यताज्ञानादिसमभिव्याहृतायाः शाब्दसामग्र्याः सत्त्वान् । "समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः" इति सूत्रं प्रणयतो महर्षेरपि संमतमिदम् । एवमेकधर्मिकनानाविरुद्धधर्मप्रकारकज्ञानत्वरूपं संशयत्वं कोटिद्वयोपस्थितिप्रभृतिसामग्रीसमाजाधीनं न कस्यापि कार्यतावच्छेदकं यथा नीलघटत्वम् । एवं संशयत्वशून्यज्ञानत्वरूपं निश्चयत्वमपि नीलत्वशून्यघटत्ववन्न कार्यतावच्छेदकम् ॥ ८५ ॥

एवं स्वत्वमपि पदार्थान्तरम् । यथेष्टविनियोगयोग्यत्वं तदिति चेत्तर्हि को विनियोगः । भक्षणादिकमिति चेन्न परकीयेऽप्यन्नादौ तत्संभवात्, शास्त्रसिद्धं तत्तथेति चेत् किं तच्छास्त्रम्, परस्वं नाददीतेत्यादिकमिति चेत् स्वत्वाप्रतीतौ कथं तस्य प्रवृत्तिः, तस्मात् स्वत्वमतिरिक्तमेव, तत्र प्रमाणं च परस्वं नाददीतेत्यादिकं शास्त्रमेव । तच्च प्रतिग्रहोपादानक्रयपित्रादिमरणैर्जन्यते, नाश्यते च दानादिभिः, कारणानामेकशक्तिमत्त्वात् कार्याणां वैजात्याद्वा कार्यकारणभावनिर्वाह इति दिक् ॥८६॥

एवं शक्तिरप्यतिरिच्यते तृणारणिमणिस्थले वह्निगतजातित्रयकल्पनामपेक्ष्य तेषु फूत्कारनिर्मन्थनरविकिरणसंबन्धानामेकशक्तिमत्त्वेन कारणत्वकल्पनाया एव लघुत्वेन न्याय्यत्वात्, संबन्धत्रितयनिष्ठैकजात्यङ्गीकारे नोदनत्वादिना संकरप्रसङ्गः । यदि चान्वयव्यतिरेकाभ्यां तृणा-

देरपि कारणत्वमिष्यते तदा तेषामप्येकशक्तिमत्त्वेन कारणत्वमस्तु तथापि जातित्रयकल्पनामपेक्ष्य शक्तिद्व(?त्र)यकल्पनैव लाघवेन ज्यायसीति। मण्यादिष्वप्येकजातिस्वीकारे च मणित्वादिना संकरप्रसङ्ग इति ॥ ८७ ॥

एवं शाब्दस्थलेऽपि घटमितिवाक्यघटकपदजन्यपदार्थोपस्थितिघटितसामग्र्यां शक्तिः शाब्दबोधानुकूला स्वीकर्तव्या, नातो घटः कर्मत्वमित्यादिनिराकाङ्क्षवाक्यस्थले तादृशशाब्दबोधः। इदं त्ववधेयम्, अदृष्टदशरथानामिदानींतनाना दशरथादिपदात् केन रूपेणोपस्थितिः दशरथत्वजातेरज्ञातत्वेन तद्रूपेण शक्तिग्रहस्य पदार्थोपस्थितेश्चासंभवात्। एवं पिशाचाद्यतीन्द्रियशक्तपदस्थलेऽपि कीदृशी शक्तिधीः पदार्थोपस्थितिर्वा। अत्र केचित् दशरथपदवाच्यत्वादिनैव दशरथाद्युपस्थितिरिति वदन्ति ॥ ८८ ॥

एवं संख्याऽपि पदार्थान्तरं नतु गुणः, एकं रूपमित्यादिप्रत्ययात्। नचासौ भ्रमः, बाधकाभावात्। एकार्थसमवायप्रत्यासत्त्या तथा प्रत्यय इति चेत् विलक्षणाभ्यां समवायैकार्थसमवायाभ्यामविलक्षणायास्तद्वत्ताप्रतीतेरयोगात्। नच महारजने तदुपरक्तपटादौ च यथाऽविलक्षणा लौहित्यप्रतीतिस्तत्र समवायस्वसमवायिसंयोगयोः संबन्धयोर्वैलक्षण्येऽपि प्रकारस्य लौहित्यस्यावैलक्षण्यात् तथात्रापीति वाच्यं, तथापि घटत्वादौ एकार्थसमवायसंबन्धेन एकत्वस्येव द्वित्वस्यापि सत्त्वेन द्वे घटत्वे इत्यादिप्रत्ययस्य दुर्वारत्वात्। रूपत्वादौ एकार्थसमवायेन द्वित्वाभावात्, रूपत्वरसत्वे द्वे सामान्ये इत्यादिप्रत्ययस्यापलापापत्तेश्च ॥ ८९ ॥

समवायोऽपि च नैको जलादेर्गन्धादिमत्त्वप्रसङ्गात्। परन्तु नानैव, समवायत्वं पुनरनुगतमखण्डोपाधिरिति ॥ ९० ॥

वैशिष्ट्यमपि पदार्थान्तरं रूपादिप्रतीतिनिमित्ततया समवायस्येवाभाववत्ताप्रतीतिनिमित्ततया तस्यापि सिद्धेः, स्वरूपसंबन्धविशेष एव तथाप्रतीतिनिमित्तमिति चेन्न, समवायोच्छेदप्रसङ्गात् तत्रापि स्वरूपसंबन्धस्यैव सुवचत्वात्। एतेन ज्ञानादिविषयतादयो व्याख्याताः ॥ ९१ ॥

कारणत्वं च पदार्थान्तरम्। तच्च कार्यभेदादवच्छेदकभेदाच्च भिद्यते कारणत्वत्वेनाखण्डोपाधिनाऽनुगतं च तत् कारणपदशक्यतावच्छेदकम्, ग्राहकं च तस्य क्वचिदन्वयव्यतिरेकदर्शनसहकृतं प्रत्यक्षं यथा वह्न्यादौ धूमादिकारणत्वस्य। क्वचिच्चागमादिकं यथा यागादौ स्वर्गादिकारणत्वस्य।

एतेन कार्यत्वं व्याख्यातम्, कारणत्वप्रतियोगित्वमेव कार्यत्वमिति चेत् कार्यत्वप्रतियोगित्वमेव कारणत्वमिति किं न रोचयेस्तस्मात् कार्यत्वं कारणत्वं चोभयमेवातिरिक्तमिति वक्तव्यम् । प्रभाकरमते कलञ्जभक्षणाभावे अपूर्वजनकत्वम् 'न कलञ्जं भक्षयेत्' इति निषेधेन बोध्यते नञ्पदानुत्तरवर्तिविभक्त्यर्थेनापि नञर्थान्वयस्य स्थलविशेषे व्युत्पत्तिसिद्धत्वात् । अत एव "अभावाद्भावोत्पत्तिर्नानुपमृद्यप्रादुर्भावात् ।" "तेषां मोहः पापीयान् नामूढस्येतरोत्पत्तेः" इति न्यायसूत्रद्वयं संगच्छते । अनुपमृद्य प्रादुर्भावाभावात् । अमूढस्य मोहशून्यस्य इतरयो रागद्वेषयोरुत्पत्त्यभावादिति सूत्रद्वयार्थ इति कृतं पल्लवितेन । पदार्थतत्त्वनिरूपणग्रन्थस्य शेषे त्रीणि पद्यानि दीधितिकृता लिखितानि । यथा—

> अर्थानां युक्तिसिद्धानां मदुक्तानां प्रयत्नतः ।
> सर्वदर्शनसिद्धान्तविरोधो नैव दूषणम् ॥
> अर्था निरुक्ताः सिद्धान्तविरोधेनापि पण्डिताः ।
> विना विचारं न त्याज्या विचारयत यत्नतः ॥
> सर्वशास्त्रार्थतत्त्वज्ञान् नत्वा नत्वा भवादृशान् ।
> इदं याचे मदुक्तानि विचारयत सादरम् ॥ ९२ ॥

साधर्म्यवैधर्म्ये अपि प्रदर्श्येते—

ज्ञेयत्वादिकं सप्तानां पदार्थानां साधर्म्यम्, अनेकत्वे सति भावत्वं समवायित्वं च द्रव्यादीनां पञ्चानां साधर्म्यम्, द्रव्यादयस्त्रयः सत्तावन्तः गुणादयः षट् निर्गुणा एवं निष्क्रियाः, सामान्यादीनां चतुर्णां सामान्यहीनत्वम् । अणुपरिमाणकालादिगतपरममहत्परिमाणातीन्द्रियसामान्यविशेषपदार्थानां कारणत्वं वैधर्म्यं, तदितरेषां साधर्म्यम् । कारणत्वं चान्यथासिद्धिशून्यत्वे सति नियतपूर्ववर्तित्वम् । तच्च त्रिविधं समवायिकारणत्वासमवायिकारणत्वनिमित्तकारणत्वभेदात्, समवायसंबन्धेन कार्याश्रयत्वं समवायिकारणत्वम्, समवायस्वसमवायिसमवायान्यतरसंबन्धेन समवायिकारणप्रत्यासन्नत्वे सति कारणत्वम् असमवायिकारणत्वम्, उक्तकारणत्वद्वयभिन्नकारणत्वं निमित्तकारणत्वम् । अन्यथासिद्धास्तु पञ्च, कारणतावच्छेदकधर्मः प्रथमोऽन्यथासिद्धः, कारणगतगुणादिधर्मो द्वितीयोऽन्यथासिद्धः, कार्यान्तरकारणं तृतीयः यथा घटादिकार्ये शब्दसमवायिकारणं गगनम्, कारणकारणं चतुर्थान्यथासिद्धः घटादिकार्ये च कुलालजनकादिकः, एतच्चतुष्टयभिन्नं नियतावश्यकपूर्ववर्तिभिन्नं पञ्चमं घटादौ

कार्ये रासभादिकमिति । समवायिकारणत्वं द्रव्यस्य साधर्म्यम्, असमवायिकारणत्वं गुणकर्मभिन्नानां वैधर्म्यम्, कालिकान्यसंबन्धावच्छिन्नवृत्तित्वं नित्यद्रव्याणां वैधर्म्यम्, क्षित्यादीनां नवानां द्रव्यत्ववत्त्वं गुणवत्त्वं च साधर्म्यम्, क्षित्यप्तेजोमरुन्मनसां परत्ववत्त्वमपरत्ववत्त्वमपकृष्टपरिमाणात्मकमूर्तत्ववत्त्वं कर्मवत्त्वं वेगवत्त्वं च साधर्म्यम्, कालाकाशात्मदिशा सर्वमूर्तसंयोगित्वं परममहत्परिमाणवत्त्वं च साधर्म्यम्, क्षित्यप्तेजोवाय्वाकाशानां बहिरिन्द्रियजन्यलौकिकप्रत्यक्षस्वरूपयोग्यविशेषगुणात्मकं भूतत्वं साधर्म्यम्, क्षित्यादीनां चतुर्णां स्पर्शवत्त्वं साधर्म्यम्, क्षित्यादिचतुष्टयभिन्नानां द्रव्यसमवायिकारणत्वं वैधर्म्यम्, आकाशात्मनाम् अव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वं च साधर्म्यम्, क्षित्यप्तेजसां रूपवत्त्वं द्रवत्ववत्त्वं बहिरिन्द्रियजन्यप्रत्यक्षविषयद्रव्यत्वं च साधर्म्यम्, क्षितिजलयोर्गुरुत्ववत्त्वं रसवत्त्वं च साधर्म्यम्, क्षितितेजोभिन्नानां नैमित्तिकद्रवत्वं वैधर्म्यम्, क्षित्यप्तेजोमरुद्व्योमात्मनां विशेषगुणवत्त्वं साधर्म्यम् । यस्य यत् साधर्म्यम् । तदितरेषां तद्वैधर्म्यम्, यस्य यद्वैधर्म्यं तदितरेषां तत् साधर्म्यमिति संक्षेपः ॥ ९३ ॥

इति श्रीजयनारायण-तर्कपञ्चानन-भट्टाचार्यप्रणीतायां कणादसूत्रविवृतौ
शास्त्रार्थसंग्रहः समाप्तः ।

---

## विवृतिकृत्प्रशस्तिः ।

कालीपीठोपकण्ठस्थलमिलितवपुष्टालिगञ्जप्रतीच्या-
मास्ते शस्तैर्द्विजौघैः प्रतितमतनुर्या पुरी पण्डिताढ्या ।
षड्स्वासंज्ञाभिषङ्गाकलितकुलचतुःसागरीरत्नपूर्णैः
सावर्णैः स्थापितोऽभूदतिविमलमतिर्यत्नतस्तत्र पूर्वम् ॥ १ ॥
श्यामसुन्दरनामाऽसौ भक्तिमान् श्यामसुन्दरे ।
वाचस्पतिरिति ख्यातो वाचस्पतिरिवापरः ॥ २ ॥
पाश्चात्यवैदिकश्रेणीलसत्काण्वायनान्वयः ।
तत्रत्यानां पूजनीयो बभूव विजितेन्द्रियः ॥ ३ ॥
तद्भ्रातृजो रामचन्द्रस्तर्कालङ्कारसंज्ञितः ।
पितृव्याद्विविधां विद्यामधीत्य प्रथितोऽभवत् ॥ ४ ॥
तत्सुतः श्रीहरिश्चन्द्रो विद्यासागरसंज्ञकः ।
धर्मशास्त्रे पुराणे च निपुणोऽद्यापि विद्यते ॥ ५ ॥

तद्द्वितीयसुतः श्रीमान् जयनारायणः पुनः ॥
तर्कपञ्चाननाभिख्याविख्यातस्तर्कसंश्रयात् ॥ ६ ॥
बाल्ये व्याकरणादीनि धर्मशास्त्राणि च क्रमात् ।
यस्तातपादपद्मस्य सन्निधानादधीतवान् ॥ ७ ॥
लतायाः प्राणतोषण्याः कारकाद्रामतोषणात् ।
विद्यालङ्कारविख्याताद्योऽलङ्कारमथागमम् ॥ ८ ॥
अस्ति स्वस्तिमदूर्जितार्यनिवहं भूषायमाणं भुवः
कल्क्यातानगरं सुधाब्धिलहरीन्यक्कारिसौधोज्ज्वलम् ।
पारेगङ्गममुष्य चाङ्गमिव या शाखापुरी शालिका
तत्रासीद्बुधवृन्दवन्दितगुणाम्भोधिर्जगन्मोहनः ॥ ९ ॥
तर्कसिद्धान्तनामासाववतीर्णः कलौ युगे ।
गीष्पतिर्मानवी लीलां कर्तुमिच्छन् महीतले ॥ १० ॥
सत्तर्ककर्कशमतेः सहजानुभाव-
वाग्वैभवस्फुरितनिर्जितवादिवृन्दात् ।
यस्तर्कदर्शनमितः स्थिरधीरधीत्य
वादस्फुरद्बुधसमाजसमादृतोऽभूत् ॥ ११ ॥
तथा गुर्जरदेशीयाद्यो नाथूरामशास्त्रिणः ।
वाग्देव्याः पौरुषाद्रूपाद्वेदान्तादीन्यधीतवान् ॥ १२ ॥
कल्क्याताराजधान्यन्तर्विराजत्पाठमन्दिरे ।
दर्शनाध्यापने राज्ञा यः परीक्ष्य नियोजितः ॥ १३ ॥
यो नारिकेलडाङ्गाख्यस्थले लोहाध्वसन्निधौ ।
निवसन् सुधियः शिष्यानध्यापयति संततम् ॥ १४ ॥
यस्य ज्येष्ठः शालिकायां मठे श्रीमधुसूदनः ।
पाठयत्यधुना तर्कं तर्कवागीशविश्रुतः ॥ १५ ॥
शाके दृग्गजशैलसोमविमिते वर्षे ततं भारतं
कानिङ्नामनि राजनीह नयत. संशासति श्रीमति ।
चैत्रे मासि कणादसूत्रविवृतिः सिद्धान्तसंघाकृति-
र्नीता तेन समाप्तिमत्र मुदितो भूयादशेषेश्वरः ॥ १६ ॥
यदत्र स्खलितं किंचित् प्रमादेन भ्रमेण वा ।
मान्या मयि दयावन्तः सन्तः संशोधयन्तु तत् ॥ १७ ॥

समितिर्महतीदानीमासियाखण्डमण्डनी ।
विद्यावारिधिभिः सभ्यैर्भूषिता भाति भूतले ॥ १८ ॥
बहुवागीशसंयोगाद्वियोगात्तमसस्तथा ।
याऽथश्चकार नितराममन्दा देवसंसदम् ॥ १९ ॥
कीर्तिः कवीनां प्राचीनाऽतिजीर्णा यत्प्रभावतः ।
यौवनं पुनरादत्तेऽमरत्वमपि गच्छति ॥ २० ॥
सारान् स्वकीयानादायासियाभूमिर्भयादिव ।
यदालयपुरीभूत्वा शङ्के यां शरणं गता ॥ २१ ॥

तदाज्ञया किल दधती समुद्रतां
तथागता मृतिपदवीसमीपतः ।
कणादभूरतिजरती सरस्वती
कलेवरं पुनरवहन्मनोहरम् ॥ २२ ॥

अत्रैव शिवम् ।



# श्रीचन्द्रकान्ततर्कालंकारभट्टाचार्यप्रणीतः
# संक्षेपतः शास्त्रार्थसंग्रहः

उच्चावचभेदभिन्नानां प्रभूतानां पदार्थानामेकैकशोऽवगतिर्युगसहस्रेणाप्यशक्या । अतस्तान् श्रेणीबद्धान् कृत्वा तेषां ज्ञानसौकर्योपपादनं स्वल्पेन प्रयत्नेन महतः पदार्थराशेर्ज्ञानं च दर्शनशास्त्रस्य प्रयोजनम् । यथा शुक्ल-नील-पीत-हरित-विकलाङ्ग-पूर्णाङ्ग-ह्रस्व-दीर्घादिभेदभिन्नानश्वानश्वत्वेनानुगमय्य तेनैव धर्मेण सर्वेषामनायासेन ज्ञापनं भवति । तदेवं संक्षेपप्रणाल्या ज्ञानविस्तृतिरनेन क्रियते ।

कणादो मुनिर्महेश्वरनियोगप्रसादावधिगम्य शास्त्रमिदं प्रणीतवानिति किंवदन्ती किरणावल्यादावुपलभ्यते । दर्शनमिदं मननादिक्रमेण तत्त्वज्ञानार्थमुपदिष्टम् । अत्र प्रायेण पदार्थतत्त्वमालोचितम् । तत्र द्रव्यगुणकर्मसामान्यविशेषसमवायाख्याः षट्पदार्थाः सूत्रकृतोद्दिष्टाः । एष्वेव सर्वेषां पदार्थानामन्तर्भावः । प्रशस्तपादादीनां वैशेषिकाचार्याणां मते एते षट्पदार्था भावाभिप्रायेणोक्ताः । अभावोऽपि सप्तमो मुनेरभिप्रेतः । तेन सप्तैव पदार्था भवन्ति ।

तत्र क्रियागुणाश्रयः समवायिकारणं द्रव्यम् । तच्च नवविधं, पृथिवी जलं तेजः वायुः आकाशः कालः दिक् आत्मा मनः—इति भेदात् । तत्र, गन्धसमवायिकारणं द्रव्यं पृथिवी । पृथिव्यामेव गन्धः, जलादौ गन्धोपलब्धिः पार्थिवांशौपाधिकी । शुक्लरूपवद्द्रव्यं जलम् । शुक्लमेव रूपं जलस्य । कालिन्दीजलादौ नैल्योपलब्धिराश्रयौपाधिकी । तस्यैव जलस्य वियति विक्षेपे धावल्योपलब्धेः । एवं मधुर एव रसो जलस्य । जम्बीररसादावम्लाद्युपलब्धिराश्रयौपाधिकी । उष्णस्पर्शवद्द्रव्यं तेजः । चन्द्रकिरणादौ जलादिस्पर्शेनाभिभवात्तदग्रहः । अनुष्णाशीत-विलक्षण-स्पर्शवान् वायुः, शब्दसमवायिकारणमाकाशम् । वायुविशेषगुणो हि स्पर्शो यावद्द्रव्यं भवति, शब्दस्तु न यावद्द्रव्यं भवतीति नासौ वायुविशेषगुणः । अतस्तदाश्रयतया आकाशोऽङ्गीकार्यः । ज्येष्ठत्वकनिष्ठत्वादिबुद्धिहेतुः कालः । दूरत्वान्तिकत्वादिबुद्धिहेतुर्दिक् । सोऽयमेक एव पदार्थः कार्यभेदाद्भेदेन व्यपदिश्यते आकाशः कालो दिगिति । प्राञ्चस्तु भेदमेवामीषामाहुः ।

१ अयं च तैर्भाष्यभूमिकायां निबद्धः ।

चैतन्याश्रय आत्मा शरीरस्य तु न चैतन्यं, शरीरकारणेषु परमाणुषु चैतन्ये मानाभावात् । पार्थिवगुणानां कारणगुणपूर्वकत्वाच्च । क्वचित् कार्ये शरीरादौ ज्ञानमुपलभ्यते, क्वचिच्च नोपलभ्यते घटादौ । अतो विशेषहेतुरत्र वाच्यः । शरीरगुणो हि रूपादिः शरीरविशेषाद्विशिष्यते शरीरग्रहणे च गृह्यते, न त्वेवं ज्ञानं, तस्मान्न शरीरस्य चैतन्यम् । एतेनेन्द्रियचैतन्यं प्रत्युक्तम् । मनोऽपि नात्मा । आत्मनः सुखादिप्रत्यक्षकरणं हि तत् । नहि करणमेव कर्ता । यथा हि रूपाद्युपलब्धिः सकरणिका इति तत्करणं चक्षुरादिकं, एवं सुखाद्युपलब्धिरपि सकरणिकेति तत्करणं मनः । अतस्तदरिक्त एवात्मा । न्याये त्वस्मादपि समीचीनतया शरीरेन्द्रियचैतन्यं निराकृतम् । प्राणापाननिमेषोन्मेषसुखदुःखादिभिः अभिमतविषये मनसः प्रेरणेन च देहादिव्यतिरिक्तात्मानुमानम् । संसारदशायामुपाधिभेदादात्मनां भेदः सुखदुःखादिव्यवस्था च । परमार्थतस्त्वेक एवात्मा । तथा चैकस्मिन् प्रदेशे कालभेदेनैवैकस्मिन् काले देशभेदेनापि कायव्यूहादिवद्विरुद्धधर्माध्यासो नासङ्गतः । सोऽयमात्मा अनादिमिथ्याज्ञानवासनया शरीरादिकमेवात्मानं मन्यमानस्तदनुकूले रज्यति द्वेष्टि च प्रतिकूलं, रज्यन् प्रवर्तते, प्रवर्तमानः शुभाशुभानि कर्माणि संचिनोति, ततो जायते, ततो दुःखमनुभवति । पृथिव्यादिभिन्नत्वेनात्मानं यदा तत्त्वतो जानाति, तदा श्रवणमनननिदिध्यासनैर्दृढभूमि गतया तत्त्वज्ञानवासनया मिथ्याज्ञानवासनोपमृद्यते । तदेवं तत्त्वज्ञानेन मिथ्याज्ञानापाये कारणाभावात् रागद्वेषावपय(?पे)तः । एवं तदपायात् प्रवृत्तिरपैति । प्रवृत्त्यपाये जन्मापैति । जन्मापाये दुःखमपैति । सोऽयं मोक्षः । तदेतत् परमं निर्वाणम् । तत्र तत्त्वज्ञानोपदेशार्थं मननार्थं च शास्त्रस्यास्यारम्भः ।

सुखाद्युपलब्धिसाधनं ज्ञानायौगपद्यनियामकं च मनः । युगपदनेकेन्द्रियैरनेकविषयसन्निकर्षे सत्यपि यत्सन्निधिवशादेकेन्द्रियेण ज्ञानं जन्यते यत्सन्निधेरभावाच्चापरैरिन्द्रियैर्ज्ञानं न जन्यते, तन्मनः ज्ञानायौगपद्यनियामकम् । तथा च तत्तदिन्द्रियेण ज्ञानजनने मनसा समं तत्संयोगोऽपि हेतुः । मनस्त्वणुपरिमाणतया न युगपदनेकैरिन्द्रियैः संबध्यते इति न ज्ञानयौगपद्यम् । मनस आशु संचारात् उत्पलशतपत्रव्यतिभेदवत् दीर्घशष्कुलीभक्षणादौ सतोऽपि क्रमस्याग्रहणाज्ज्ञानयौगपद्याभिमान इति ।

अन्धकारस्तु न द्रव्यं, किंतु तेजोऽभावः । तस्य नैल्योपलब्धिराश्रयौपाधिकी । गत्युपलब्धिस्त्वालोकापसारणौपाधिकी ।

पृथिव्यप्तेजोवायुरूपाणि द्रव्याणि द्विविधानि, नित्यानित्यभेदात्। परमाणुरूपाणि नित्यानि, तदन्यान्यनित्यानि। तत्रानित्योऽपि वायुरवान्तरसर्गप्रलयेष्ववस्थानान्नित्य इत्युच्यते। सर्वाणि कार्यद्रव्याणि सावयवानि। तेषामवयवेषु विभज्यमानेषु यतः परं न विभागः संभवति, सोऽयं विभागप्रकर्षपर्यन्तो निरवयवः परमाणुरिति। कारणगुणपूर्वकत्वात् कार्यगुणस्य कार्येषु रूपादिदर्शनात् तत्कारणेषु परमाणुष्वपि रूपादिकमनुमीयते। तत्र पार्थिवपरमाणुषु अग्निसंयोगादपि रूपान्तरोत्पत्तिर्भवति कार्यद्रव्ये तथा दर्शनात्। तस्य च कारणगुणपूर्वकत्वादित्युक्तम्।

पृथिव्यादीनि कार्यद्रव्याणि त्रिविधानि, शरीरेन्द्रियविषयभेदात्। शरीरं द्विविधं योनिजमयोनिजं च। नियतोत्पत्तिस्थानं योनिः, तस्या जातं योनिजम्। तच्चतुर्विधं जरायुजाण्डजस्वेदजोद्भिज्जभेदात्। जरायुजं मनुष्यादीनाम्। अण्डजं पक्ष्यादीनाम्। स्वेदजं मशकादीनाम्। उद्भिज्जं तर्वादीनाम्। अयोनिजं तु मरीच्यादीनाम्। प्राञ्चस्तु स्वेदजादिकमयोनिजमित्याहुः। मनुष्यादिशरीरेष्वबादीनामुपष्टम्भकत्वेऽपि पार्थिवमेव तत्, तद्विशेषगुणस्य गन्धस्याव्यभिचारेणोपलब्धेः। एवं जलीयादिशरीराणि वरुणलोकादिषु ज्ञेयानि। इन्द्रियाणि स्वप्रकृतिभूतविशेषगुणग्राहीणि। तथा च, घ्राणेन्द्रियं पार्थिवं गन्धग्राहकत्वात्। रसनं जलीयं रसग्राहकत्वात्। चक्षुस्तैजसं रूपग्राहकत्वात्। त्वगिन्द्रियं वायवीयं स्पर्शग्राहकत्वात्। कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम्। शरीरेन्द्रियभिन्नं कार्यद्रव्यं विषयः। द्व्यणुकादिर्ब्रह्माण्डान्तो विषयः। हिमकरकादयोऽप्यत्रैव निविशन्ते। हिमादयोऽप्यपां संघात एव। तेजःसंयोगाच्च तेषां विलयनम्।

द्रव्याश्रयी अगुणवान् कर्मभिन्नो गुणः। स चानेकप्रकारः, रूप–रस–गन्ध–स्पर्श–संख्या–परिमाण–पृथक्त्व–संयोग–विभाग–परत्व–अपरत्व–बुद्धि–सुख–दुःख–इच्छा–द्वेष–यत्न–गुरुत्व–लघुत्व–द्रवत्व–स्नेह–संस्कार–धर्म–अधर्म–शब्दादिभेदात्। चक्षुर्ग्राह्यो गुणो रूपम्। तदपि शुक्लादिभेदादनेकविधम्। रसनया ग्राह्यो गुणो रसः। सोऽपि मधुरादिभेदादनेकविधः। घ्राणग्राह्यो गुणो गन्धः। स च सुरभिरसुरभिश्चेति द्विविधः। त्वचा ग्राह्यो गुणः स्पर्शः। स च कठिनसुकुमारादिभेदादनेकविधः। एते रूपरसगन्धस्पर्शाः पार्थिवपरमाणुषु पाकजा अपि भवन्ति। गणनव्यवहारहेतुर्गुणः संख्या। सा चैकत्वादिभेदादनेकविधा।

मानव्यवहारहेतुर्गुणः परिमाणम्। तदप्यनेकविधं, अणुमहदादिभेदात्। परमाणुगतमणुत्वमाकाशादिगतं महत्त्वं च नित्यं, तद्भिन्नमनित्यम्। द्व्यणुकगताणुपरिमाणं प्रति तत्कारणपरमाणुद्वित्वं हेतुः। कारणबहुत्वात्कारणमहत्त्वात् प्रचयाच्च महत्त्वस्योत्पत्तिः। त्रिभिर्द्व्यणुकैरेकस्त्रसरेणुरुत्पद्यते। तत्र यन्महत्त्वं, तत्त्रसरेणुकारणानां द्व्यणुकानां बहुत्वादुत्पद्यते। द्व्यणुकपरिमाणं तु तत्र न हेतुः, तस्याकारणत्वात्। अन्यथा, परिमाणानां सजातीयोत्कृष्टपरिमाणजनकतया महज्जातस्य महत्तरत्ववदणुजातस्याणुतरत्वप्रसङ्गात्। घटादिमहत्परिमाणं प्रति कपालादिमहत्परिमाणं हेतुः। द्वाभ्यां प्रचिताभ्यां तूलपिण्डाभ्यामारब्धे तूलपिण्डान्तरे यः परिमाणोत्कर्षः, तूलपिण्डयोः प्रचयस्तत्र हेतुः। प्रचयश्च शिथिलाख्यः संयोगविशेषः, स च स्वाभिमुखं किंचिदङ्गसंयोगलक्षणः।

पृथक्त्वमसंयोगो वैलक्षण्यमनेकता च। संयोगस्तु अप्राप्तयोः प्राप्तिः। स च त्रिविधः, अन्यतरकर्मजन्य उभयकर्मजन्यः संयोगजन्यश्चेति। तत्र श्येनशैलसंयोगः प्रथमः, तस्य श्येनक्रिययैव जननात्। मेषयोर्मल्लयोर्वा परस्परं संयोग उभयकर्मजन्यः। तृतीयस्तु कपालतरुसंयोगात् तरुकुम्भसंयोग इति। संयोगप्रतिद्वन्द्वी विभागोऽपि पूर्ववत्त्रिविधो बोद्धव्यः। परत्वमपरत्वं च द्विविधं, दैशिककालिकभेदात्। तत्र दैशिकपरत्वापरत्वे दूरत्वान्तिकत्वरूपे। कालिकपरत्वापरत्वे ज्येष्ठत्वकनिष्ठत्वरूपे।

बुद्धिर्द्विविधा, संशयनिश्चयभेदात्। अनवधारणात्मकं ज्ञानं संशयः। स च साधारणधर्मदर्शनादिभ्यो जायते। यथा स्थाणुपुरुषयोः साधारणधर्ममारोहपरिणाहौ पश्यन् विशेषं चाजानानः संशेते स्थाणुर्वा पुरुषो वेति। अवधारणात्मकं ज्ञानं निश्चयः। पुनरपि बुद्धिर्द्विविधा, अप्रमाप्रमाभेदात्। प्रमाभिन्ना बुद्धिरप्रमा। सापि द्विविधा, संशयविपर्ययभेदात्। संशयः पूर्वमुक्तः। विपर्ययो मिथ्याज्ञानमवधारणात्मकं पीतः शङ्ख इत्यादिरूपम्। यथार्थोऽनुभवः प्रमा। साऽपि द्विविधा, प्रत्यक्षानुमितिभेदात्। इन्द्रियजन्यं ज्ञानं प्रत्यक्षम्। तच्चानेकविधं, चक्षुरादीन्द्रियभेदात्। व्याप्तिज्ञानजन्यं ज्ञानमनुमितिः। अनयोरेव उपमित्यादीनां यथायथमन्तभावः। अनुभवस्मरणभेदेनापि बुद्धिर्द्विविधा। तत्रानुभव उक्त एव। स्मृतिस्तु संस्कारजन्यं ज्ञानम्।

सुखःदुखे प्रत्यात्ममनुभवसिद्धौ गुणौ। तथेच्छाद्वेषौ। इच्छा प्रवृत्ति

प्रति, द्वेषश्च निवृत्तिं प्रति हेतुः । यत्नस्त्रिविधः प्रवृत्तिनिवृत्तिजीवनयोनिभेदात् । श्वासप्रश्वासहेतुर्यत्नो जीवनयोनिः । गुरुत्वलघुत्वे परस्परप्रत्यनीकभावापन्नौ गुणौ । द्रवत्वं स्यन्दनहेतुर्गुणः । गुण्डिकापिण्डीकरणहेतुर्गुणविशेषः स्नेहः । संस्कारस्त्रिविधः, वेगभावनास्थितिस्थापकभेदात् । निक्षिप्तशरादौ नोदनविशेषाद्वेगो जन्यते, तेनोत्तराणि कर्माण्युत्पद्यन्ते । न त्वेकमेवेषोः कर्मापतनात् शक्यं वक्तुं, उत्तरसंयोगेन कर्मनाशावश्यकत्वात् । स्मृतिहेतुः संस्कारः, भावनाख्यः । आकृष्टवृक्षशाखादीनां परित्यागे पूर्ववदवस्थानहेतुः संस्कारः स्थितिस्थापकः । धर्माधर्मौ पुण्यपापे । श्रवणेन्द्रियग्राह्यो गुणः शब्दः । स च द्विविधः, ध्वनिवर्णभेदात् । मृदङ्गादिभवो ध्वनिः, कण्ठताल्वाद्यभिघातजन्यो वर्णः । योग्यत्वादेवमेषां विभागः । शक्तिः प्रतिभावमनुगतो धर्मः ।

द्रव्याश्रयी अगुणवान् संयोगविभागेष्वनपेक्षकारणं कर्म । तच्च पञ्चविधं, उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनभेदात् । उर्द्ध्वसंयोगफलकं कर्मोत्क्षेपणम् । अधःसंयोगफलकं कर्मावक्षेपणम् । आरम्भकसंयोगे सत्येवावयवानां परस्परमनारम्भकसंयोगविशेषजनकं कर्माकुञ्चनम् । आकुञ्चितानामवयवानां विभागविशेषजनकं कर्म प्रसारणम् । एतच्चतुष्टयभिन्नं कर्म गमनम् । अत्रैव भ्रमणरेचनादीनां नमनोन्नमनादीनां चान्तर्भावः ।

सामान्यं साधर्म्यमनुवृत्तिहेतुः पदार्थः । व्यावृत्तिहेतुर्विशेषः । तत्र, द्रव्यादित्रिकवृत्ति भावाख्यमन्त्यं सामान्यमनुवृत्तेरेव हेतुत्वात् सामान्यमेव । एकव्यक्तिमात्रवृत्तयः परमाणूनामाकाशादीनां च परस्परं व्यावृत्तिहेतवोऽन्त्या विशेषा व्यावृत्तेरेव हेतुत्वात् विशेषा एव । द्रव्यत्वादिकं तु क्षितित्वाद्यपेक्षयाऽनुवृत्तिहेतुत्वात् सामान्यं, भावापेक्षया व्यावृत्तिहेतुत्वाद्विशेषश्च भवति । तावेतौ सामान्यविशेषौ यथायथं द्रव्यादिष्वन्तर्भवतः । अथवा, एक एव भावस्तेन तेन रूपेण विशिष्यते । द्रव्याणां भावो द्रव्यत्वं गुणानां भावो गुणत्वं कर्मणां भावः कर्मत्वमित्यनुवर्तमान एव भावो व्यावर्तमानैर्द्रव्यादिभिर्विशिष्यते । सोऽयं गुणः, द्रव्यं खल्वयमाश्रयति नापि गुणवान् कर्मभिन्नश्चायमिति ।

अयुतसिद्धानां कार्यकारणादीनामिहेति प्रत्ययहेतुः संबन्धः समवायः । असंबद्धयोर्विद्यमानत्वं युतसिद्धिः । सोऽयमयुतसिद्धानामुपश्लेषः समवायो युतसिद्धानां तु संयोग इति पूर्वोक्तरीत्या गुण एव ।

अभावश्चतुर्विधः, प्रागभावो ध्वंसोऽत्यन्ताभावोऽन्योन्याभावश्चेति । पदार्थस्योत्पत्तेः पूर्वं योऽभावः, स प्रागभावः । उत्पन्नस्य विनाशात् परं योऽभावः स ध्वंसः । यस्त्वेकत्र सतोऽन्यत्राभावः, सोऽत्यन्ताभावः । एकभावस्यान्यभावात्मना योऽभावो घटः पटो न भवतीत्यादिरूपः, सोऽयमन्योन्याभावः । तत्राद्यत्रयस्यासंयोगरूपे पृथक्त्वे, अन्त्यस्य च वैलक्षण्यरूपे तस्मिन्नन्तर्भावः ।

गुणलक्षणस्य सामान्यादिसाधारण्यात्, 'अर्थ इति द्रव्यगुणकर्मसु'—इति सूत्रेण द्रव्यगुणकर्मभ्योऽन्यस्यार्थस्यानङ्गीकारावगतेः, द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानामित्युद्देशसूत्रेऽभावस्याकीर्तनाच्च, द्रव्यगुणकर्मस्वेव सामान्यादीनामन्तर्भावः,—इति व्यक्तमाचार्यस्याभिप्रायोऽवगम्यते । न च द्रव्यगुणकर्मणामर्थत्वं परिभाषामात्रमिति मन्तव्यं, तत्परिभाषायाः कुत्राप्युपयोगादर्शनात् । तदिदं द्रव्याद्यन्तर्भूतानां सामान्यादीनां पृथग्वचनं प्रस्थानभेदार्थम् । यथा न्याये प्रमाणप्रमेययोरन्तर्भूतानां संशयादीनां पृथग्वचनं प्रस्थानभेदार्थं, तद्वदत्रापि । एवमाकाशपरीक्षायां, शब्दाश्रयत्वेनाकाशं सिषाधयिषोः पृथिव्यप्तेजोवाय्वात्ममनसां शब्दाश्रयत्वं निराकृत्य 'परिशेषाल्लिङ्गमाकाशस्य' इति सूत्रयतो महर्षेः कालदिशोराकाशानतिरिक्तत्वे अभिप्रायो लक्ष्यते । इतरथा, अवश्यं तयोरपि शब्दाश्रयत्वं निराकरिष्यत् । तयोः पदार्थान्तरत्वे पृथिव्यादिवत्तयोः शब्दाश्रयत्वनिराकरणमकृत्वा पारिशेष्यादाकाशसाधनानुपपत्तेः । सोऽयं पूर्ववत् प्रस्थानभेदः ।

प्रमायाः करणं प्रमाणम् । तच्च द्विविधं, प्रत्यक्षमनुमानं च । इन्द्रियसन्निकर्षजन्यं ज्ञानं प्रत्यक्षं, तच्च षड्विधं, चाक्षुष–रासन–घ्राण–त्वाच–श्रावण–मानस–भेदात् । रूपादीनां चाक्षुषादिकं पूर्वमुक्तम् । मानसं तु सुखादीनां भवति । द्रव्यप्रत्यक्षे संस्कृतरूपं महत्त्वमनेकद्रव्यवत्त्वं च कारणम् । तथाविधद्रव्ये वर्तमानानां रूपादीनामपि प्रत्यक्षं, न तु परमाण्वादिवृत्तीनाम् । क्षित्यप्तेजांसि प्रत्यक्षाणि द्रव्याणि । अनुमेयान्यन्यानि । रूपसंस्काराभावाद्वाय्वोः, रूपाभावाच्चाकाशादीनां न प्रत्यक्षम् । 'रूपसंस्काराभावाद्वायोरनुपलब्धिः'—इति सूत्राद्वायोरपि रूपमस्ति, संस्कारः परं नास्तीत्याचार्यस्याभिप्रायो लक्ष्यते । अन्यथा रूपाभावादिति कुर्यात् । एवमात्माऽपि न प्रत्यक्षः नीरूपत्वात्, अनेकद्रव्यवत्त्वाभा-

त्वाच्च । द्रव्यप्रत्यक्षे च तयोर्हेतुत्वात् । न च बहिर्द्रव्यप्रत्यक्षे तयोर्हेतुत्वं, मानाभावात् । अत एव 'महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिः'—इति सामान्यतः सूत्रणमाचार्यस्य । 'दृष्टश्चात्मनि लिङ्गे एक एव दृढत्वात् प्रत्यक्षवत्प्रत्ययः'—इति सूत्रेणात्मनि प्रत्यक्षवत् एक एव प्रत्यय उक्तः, न तु प्रत्यक्षमनुमानं चेति द्वौ प्रत्ययौ । 'तत्रात्मा मनश्चाप्रत्यक्षे'—इति सूत्रे व्यक्तमात्मनोऽप्रत्यक्षत्वमुक्तम् । अहं जानामीति प्रत्ययोऽप्यहं गौर इति वद्देहाद्यालम्बन एव । कयाचिद्विवक्षया ज्ञानमपि तत्रैवोपनीयते । स्थूलोऽहं जानामीत्याद्यनुभवस्यान्यथानुपपत्तेः ।

केनचिल्लिङ्गेन कस्यचिदनुमानं लैङ्गिकं, तच्च व्याप्तिज्ञानजन्यं ज्ञानं ( व्याप्तिश्च लिङ्गलिङ्गिनोर्नियतः संबन्धः । ) तच्च लैङ्गिकं द्विविधं, दृष्टलिङ्गमदृष्टलिङ्गं च । लिङ्गलिङ्गिनोः संबन्धो यत्र प्रत्यक्षेण गृह्यते, तद्दृष्टलिङ्गं, विपरीतमदृष्टलिङ्गम् । प्रकारान्तरेण लैङ्गिकं त्रिविधं, पूर्ववत् शेषवत् सामान्यतोदृष्टं च । यत्र कारणेन कार्यमनुमीयते, तत् पूर्ववत् । यथा मेघोन्नतिविशेषेण वृष्ट्यनुमानम् । यत्र कार्येण कारणमनुमीयते, तत् शेषवत् । यथा धूमेन वह्न्यनुमानम् । एतद्द्विविधभिन्नमनुमानं सामान्यतोदृष्टं, यत्र सामान्यतो लिङ्गलिङ्गिनोः संबन्धदर्शनादनुमानं प्रवर्तते । यथा छिदादिक्रियाणां कुठारादिकरणकत्वदर्शनात् ज्ञानक्रियाया अपि करणानुमानम् । पुनश्चानुमानं त्रिविधं, केवलान्वयि केवलव्यतिरेकि अन्वयव्यतिरेकि च । असद्विपक्षं केवलान्वयि । (निश्चितसाध्याभाववान् विपक्षः)। असत्सपक्षं केवलव्यतिरेकि । ( सपक्षो निश्चितसाध्यवान् । ) विद्यमानसपक्षविपक्षं अन्वयव्यतिरेकि । भूयोऽप्यनुमानं द्विविधं, स्वार्थं परार्थं च । तत्र परार्थं न्यायसाध्यम् । न्यायश्च पञ्चावयवोपेतवाक्यविशेषः। अवयवाश्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि । पर्वतो वह्निमान् इति प्रतिज्ञा । धूमादिति हेतुः । यो यो धूमवान् स वह्निमान् यथा महानसं इति उदाहरणम् । वह्निव्याप्यधूमवानयमिति उपनयः । तस्मादयं वह्निमानिति निगमनम् । एतच्च साधर्म्योक्ते हेतौ । वैधर्म्योक्ते खल्वपि । वह्निमान् । धूमात् । यो न वह्निमान् नासौ धूमवान्, यथा ह्रदः । न चायं तथा । तस्मादयं वह्निमान् ।

हेतोराभासाः इति हेत्वाभासाः हेतुदोषा भण्यन्ते । हेतुवदाभासन्ते इति दुष्टहेतवश्च तथोच्यन्ते । त्रय एव हेत्वाभासाः सूत्रकारेणोक्ताः, अप्रसिद्धोऽसन् संदिग्धश्च । अप्रसिद्धोऽगृहीतव्याप्तिको विपरीतव्याप्ति-

कश्च । यत्रानुमीयते सोऽयं पक्षः, तत्राविद्यमानोऽसन् । यस्माद्विषाणी तस्मादश्वः इत्यत्राप्रसिद्धो हेतुः । रासभपिण्डे पक्षीकृते चायमेवासन् । संदिग्धोऽनैकान्तिकः । साध्यमप्येकोऽन्तस्तदभावोऽप्येकोऽन्तः, एकस्मिन्नन्ते वर्तते इत्यैकान्तिकः, विपर्ययादनैकान्तिकः यो द्वयोरप्यन्तयोर्वर्तते इति । यस्माद्विषाणी तस्माद्गौरित्यनैकान्तिकस्योदाहरणम् । न्यायोक्तयोः बाधसत्प्रतिपक्षयोरप्यनैकान्तिकादावेवान्तर्भावः ।

शब्दो न प्रमाणान्तरं, प्रत्यक्षलैङ्गिकपूर्वकत्वात् । स्वयं हि ज्ञातमर्थं परान् प्रतिपादयितुकामेन शब्दः प्रयुज्यते । सोऽयं संज्ञादिवत् तदेव ज्ञापयतीति न प्रमाणान्तरम् । उपमानमपि यथायथं प्रत्यक्षलैङ्गिकयोरन्तर्भवति । तथाहि, दृश्यमानगवये गोसादृश्यज्ञानं तावत्प्रत्यक्षमेव । स्मर्यमाणायां गवि गवयसादृश्यज्ञानमपि प्रत्यक्षमनुमानं वा । यदपि गोसदृशो गवय इत्यारण्यकवाक्यं श्रुतवतो ग्रामीणस्यारण्यं गतस्य गवयपिण्डदर्शने तत्र गवयशब्दस्य सङ्केतग्रहः, तदप्यनुमानमेव । अर्थापत्तिरप्यनुमानेऽन्तर्भवति । तथाहि, जीविनो देवदत्तस्य गृहाभावेन बहिर्भावकल्पनमनुमानमेव । पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र दिवाऽभुञ्जानस्य पीनत्वेन रात्रिभोजनकल्पनमप्यनुमानमेवेति संक्षेपः । धीमद्भिरन्यदवधेयमिति शिवम् ।

हसरसेरपुरवास्तव्यः

**श्रीचन्द्रकान्तशर्म्मा ।**

# वैशेषिकसूत्राणां वर्णानुक्रमणिका.

सूत्रम्. पृष्ठम्.

अ

सूत्रम्. पृष्ठम्.

ग



च



ज



त

**समाप्ता चेयं वैशेषिकसूत्राणां वर्णानुक्रमणिका.**

## 'गुजराती' मुद्रणालयस्थानि क्रय्यसंस्कृतपुस्तकानि ।

### श्रीमद्भगवद्गीता

**Bhagavat-Geeta with 7 commentaries**

१ प्रथमो गुच्छः—आनन्दगिरिकृतटीकासंवलितशांकरभाष्य—जयतीर्थविरचितटीकासंवलितानन्दतीर्थीय (माध्व) भाष्य—रामानुजभाष्य—पुरुषोत्तमजीप्रकाशितामृततरङ्गिणी—नीलकण्ठीसमेता । मञ्जुलैरायसाक्षरैर्मुद्रिता । पृष्ठान्यष्टशतपरिमितानि सुचिक्कणानि । मूल्यम् रू. ६—०—०.

### श्रीमद्भगवद्गीता

**Bhagavat-Geeta with 8 other commentaries**

२ द्वितीयो गुच्छः । प्रथमषट्कम्—निम्बार्कमतानुयायिश्रीकेशवकाश्मीरिभट्टाचार्यपादप्रणीता—'तत्त्वप्रकाशिका' श्रीमधुसूदनसरस्वतीकृता—'गूढार्थदीपिका' श्रीशङ्करानन्दप्रणीता—'तात्पर्यबोधिनी' श्रीधरस्वामिकृता—'सुबोधिनी' श्रीसदानन्दविरचितः—'भावप्रकाशः' श्रीधनपतिसूरिविरचिता—'भाष्योत्कर्षदीपिका' दैवज्ञपण्डितश्रीसूर्यविरचिता—'परमार्थप्रपा' पूर्णप्रज्ञमतानुसारिश्रीराघवेन्द्रकृतः—'अर्थसंग्रहः' इत्येताभिर्व्याख्याभिः सहितायाः श्रीमद्भगवद्गीताया प्रथमादिषडध्यायात्मकं प्रथमं खण्डम् । अत्र श्लोकाः स्थूलतमाक्षरैष्टीकाश्च स्थूलाक्षरैर्मुद्रिता., वृद्धा मा क्लेशिषतेति । पत्रसंख्या सार्धपञ्चशतानि । मूल्यम् रू. ३—१२—०.

द्वितीयो गुच्छः । द्वितीयं षट्कम् । षष्ठादिद्वादशाध्यायान्तम् । तत्त्वप्रकाशिकाद्यष्टटीकोपेतम् । मूल्यम् रु. २—१२—०

**Uttara-Geeta with a commentary**

३ उत्तरगीता—गौडपादीयदीपिकाख्यव्याख्यायुता । भगवत्पादश्रीशंकराचार्याणां परमगुरुभिः श्रीशुकाचार्याणां च शिष्यैः श्रीगौडपादाचार्यैः प्रणीतेयं व्याख्येत्येतावत्कथनमलमस्या महिमानमवगमयितुम् । मू. रू. ०—३—०.

### श्रीमद्वाल्मीकिरामायणम्

**Valmiki Ramayana with 3 well-known commentaries 1st part**

४ बालकाण्डम्—सर्वतन्त्रस्वतन्त्रप्रतिभेन शब्देन्दुशेखरादिनानानिबन्धप्रणेत्रा श्रीमन्नागेशभट्टेन स्वशिष्यस्य सतो जीविकाप्रदातुः शृङ्गवेरपुराधीशस्य वीरमणेः श्रीरामराजस्य नाम्ना प्रणीतया रामायणतिलकाख्यया टीकया, पण्डित-

श्रीवंशीधर–शिवसहायाभ्यां प्रणीतया रामायणशिरोमण्याख्यया टीकया, श्रीगोविन्दराजप्रणीतया भूषणाख्यया टीकया च सह मुद्रयितुमारब्धमस्माभिः श्रीमद्वाल्मीकिरामायणम्। तच्च षड्भिः खण्डैः समापयिष्यामः। तत्रेदं प्रथमं खण्डम्। मूल्यम् रू. ३–०–०.

**Stotra=muktahar containing 256 Stotras**

५ स्तोत्रमुक्ताहारः–अस्मिन् २५६ स्तोत्राणि संगृहीतानि। यद्यपि सन्ति भूरीणि स्तोत्रपुस्तकानि मुद्रितानि भूरिभिस्तथापि न तेष्वियतां स्तोत्ररत्नानां संग्रहः। अस्माभिः पूर्वमसुद्रितानां स्तोत्राणां पुस्तकानि काश्यादिक्षेत्रेभ्यो भूयसा प्रयासेन द्रविणव्ययेन च समासाद्य तेभ्यश्च प्रसादगुणयुक्तानि स्तोत्राणि संकलय्य संशोध्य च तानि भाविकजनानां कृतेऽत्र समावेशितानि तदाशास्महे श्रद्धावन्तो जनाः सफलयिष्यन्ति प्रयत्नमस्माकममुमिति। मूल्यम् रू.०–८–०.

**Samskar Mayukha**

६ संस्कारमयूखः—मीमांसकनीलकण्ठभट्टसुतशंकरभट्टकृत। अत्र संस्काराणां स्वरूपं काल. इतिकर्तव्यता वर्णधर्मा आश्रमधर्माश्च विस्तरतो मूलवचनोपन्यासपुरःसरं निरूपिताः। मूलवचनानि चाप्रतिपत्तिविप्रतिपत्तिसंभावनास्थलेषु क्रमेण पर्यायशब्दप्रदर्शनेन मीमांसकाभिमतन्यायानुसरणेन च व्याख्यातानि। अन्ते कातीयसूत्रानुसारिप्रयोगाश्च दत्ताः। पूर्वं वाराणस्यादिषु मुद्रितोऽप्ययं वर्णपदवाक्यभ्रंशविपर्ययादिदोषप्रचुरतयाऽप्रविभक्तविषयतया च भृशं दुर्बोधो विपरीतबोधकरश्चासीत्। अस्माभिस्तु ग्रन्थकृतैव पुन· शोधितस्य वर्धितस्य चास्य ग्रन्थस्य पुस्तकमासाद्य विषयांश्च प्रविभज्य शोधने च महान्तमायासमास्थाय मुद्रित·। मू. रू. ०–१२–०

**Manu Smriti**

७ मनुस्मृतिः—कुल्लूकभट्टकृतटीकया, ग्रन्थान्तरेषु मनुनाम्नोल्लिखितैरिदानींतनमनुस्मृतिपुस्तकेष्वनुपलभ्यमानैः श्लोकैः, पद्यानां वर्णानुक्रमकोशेन, विषयानुक्रमेण च सहिता। सूक्ष्मेक्षिकया संशोधिता च। मू. रू. १–८–०

**Vidura=Niti with a commentary**

८ विदुरनीतिः–संस्कृतटीकोपेता नीतिशास्त्राभ्यासिनां विद्यार्थिनामतीवोपयोगिनी। मू. रू. ०–४–०.

**Vedanta Rahasya**

९ वेदान्तरहस्यम्–वेदान्तवागीशभट्टाचार्यविरचितम्। अत्राद्वैतमतसिद्धान्तो निरूपितः। उपपत्तिश्च प्रदर्शिता। भाषाऽतिसरला प्रौढा च। मूल्यम् रू. ०–१–०.

**Vishishtadvaita=Mata=Vijaya=Vada**

१० विशिष्टाद्वैतमतविजयवादः–नरहरिपण्डितकृतः। अत्र वि-

शिष्टाद्वैतमते परेषामाक्षेपान्निराकृत्य विशिष्टाद्वैत एवोपनिषदां तात्पर्यं व्यवस्थापितम् । मूल्यम् रू. ०–१–०.

**Kumar Sambhav with 3 known commentaries**

११ कुमारसंभवं महाकाव्यम्–कविवरश्रीकालिदासविरचितमिदं सप्तमसर्गपर्यन्तं मल्लिनाथकृतसंजीविन्या चारित्र्यवर्धनकृतशिशुहितैषिण्या च संवलितं तत आसमाप्ति सीतारामकृतसंजीविन्यालंकृतं सुललितैरायसाक्षरैर्मुद्रितमतीव दर्शनीयमस्ति । मूल्यम् रू. १–४–०.

**Raghuvamsha with a commentary by Mallinatha**

१२ रघुवंशमहाकाव्यम्-श्रीकालिदासकृतम् । मल्लिनाथकृतसंजीविन्याख्यटीकासहितम् । मू. रू.०-१०-०

## कारिकावली

**Karikavalee with Siddhanta-Muktavali and other notes**

१३ सिद्धान्तमुक्तावलीसहिता–न्यायवैशेषिकदर्शनयोर्व्युत्पित्सूनां कृते प्रणीतेषु प्रकरणग्रन्थेषु सिद्धान्तमुक्तावलीसमुद्भासिता कारिकावली मूर्धाभिषिक्तेत्यत्र न विदुषां वैमत्यं किंतु तत्र दीधितिकृदुपसृतया विवेकसरण्या संक्षेपत. सूक्ष्मतमानामर्थानामुपनिबद्धतया प्रायः खिद्यन्ति नव्याश्छात्राः, इति तेषामुपकारायास्माभिः प्रायः सर्वेषु विषमस्थलेष्वतिविस्तृतां सरलां सुबोधां च टिप्पनी पण्डित–जीवरामशास्त्रिभिः कारयित्वा तया सहेयं दृढतरेषु सुचिक्कणेषु पत्रेषु स्थूलाक्षरैर्मुद्रिता । सार्धशताभ्यधिकपत्रयुतामपीमां सर्वसौलभ्यायाल्पीयसा मूल्येन वितरामः । मूल्यम् रू. ०–७–०.

**Vaisheshika Darshana with several commentaries**

१४ वैशेषिकदर्शनम्–श्रीशंकरमिश्रकृत–वैशेषिकसूत्रोपस्कार–जयनारायणतर्कपञ्चाननभट्टाचार्यप्रणीत–विवृति–चन्द्रकान्तभट्टाचार्यप्रणीत–भाष्यसहितम् । मू. रू. २–०–०.

**Vadartha Samgraha**

१५ वादार्थसंग्रहः (प्रथमो भागः)—अत्र शेषकृष्णकृतं स्फोटतत्त्वनिरूपणं, श्रीकृष्णमौनिकृता स्फोटचन्द्रिका, गोडबोलेकृतः प्रातिपदिकसंज्ञावादः, वाक्यवादः, हरियशोमिश्रकृता वाक्यदीपिकेति पञ्च ग्रन्थाः संकलिता. । पण्डितानां प्रौढच्छात्राणां च बहुतरमुपकारकः । मू. रू. ०–६–०

---

**Chandrakanta**

चन्द्रकान्त ( वेदान्त ज्ञानका मुख्यग्रन्थ ) प्रथम भाग. यह वह ग्रन्थ है कि, जो नितान्त निर्भ्रान्त वेदान्त सिद्धान्तका एकांत प्रतिपादक "चन्द्रकान्त" मणि बम्बई प्रान्तके प्रसिद्ध साप्ताहिक 'गुजराथी' पत्रके मुख्य संपादक गुजराती भाषाके सुविख्यात लेखक, अनेक ग्रन्थोंके निर्माता देशभक्त-धुरीण, सारासारविवेक-प्रवीण, वैश्यकुलभूषण श्रीमान् शेठ इच्छाराम सूर्यराम देसाईके शुद्ध हृदयमें देदिप्यमान प्रबोधरत्न-भाण्डागारका चमचमाता हुआ एक अमूल्य रत्न है. किं. रु. २-८.

---

## आरब्धमुद्रणा ग्रन्थाः ।

**Taittiriya-Upanishat**

१६ तैत्तिरीयोपनिषत्-श्रीमच्छंकरभगवत्पादकृतभाष्येणानन्दगिरिकृतटीकायुतेन तैत्तिरीयविद्याप्रकाशेन च सहिता ।

**Mimansa Nyâya Bindu**

१७ मीमांसान्यायबिन्दुः--वैद्यनाथकृतः पूर्वमीमांसाग्रन्थ. ।

**Laghu Shabdendushekhar**

१८ लघुशब्देन्दुशेखरः—परिष्काराटिप्पनीयुतः ।

**Prayashchittendushekhar**

१९ प्रायश्चित्तेन्दुशेखरः--नागेशभट्टकृतः ।

**Maha Bhagavata**

२० महाभागवतम्--देवीपुराणम् ।